व्रतोद्यापनचन्द्रिकायाः संयोजकः संशोधकश्च



शास्त्री तुलजाशंकर धीरजराम पंड्या

सनातनधर्ममार्तंड

जन्म संवत् १९४६ भाद्रपद कृष्ण १३ शनिवार

॥ श्रीगणेशाय नमः ॥

# ॥ प्रास्ताविकं किञ्चित् ॥

महानुभावाः पंडितप्रवराः !

जगन्नियन्तुर्भगवतः कृपया सग्रहमखा नवचंडीशतचण्ड्यादि-प्रयोगसहितेयं " व्रतोद्यापनचन्द्रिका " चन्द्रिकेव भवत्समीपे प्रकटीकृत्य परमानंदमनुभवामि । भारतवर्षीयास्तु धर्मप्राणाः स्वकल्याणार्थं व्रतादिषु श्रद्धावन्तस्तान्याचरन्ति तेन च स्वान् श्रेयोवतो धन्यांश्च मन्यन्ते ॥ एतदर्थं चैतद्विषयकेषु बहुषु ग्रन्थेषु सत्स्वपि केषांचित्प्रेरणया कर्मकारयितॄणां विशेषेणोपयोगी यथा भवेत्तादृशो व्रतादिविषयको ग्रन्थः संयोजनीय इत्ययं ग्रंथो यथाशक्ति संयोजितः। अत्र गणपतिपूजने पुराणोक्तमन्त्रा यथा सर्वदेवोपयोगिनो भवेयुस्तथा क्वचित्क्वचिच्छब्दैः परिवर्तिताः ॥ केचिद् व्याकरणदूषिताः प्रयोगाः संशोधिताः । ब्रह्मादिदेवतानां केचिन्मन्त्रा एकवचनबहुवचनोद्देशेना नुचितास्तेऽपि क्वचित् परिवर्तिताः। अवशिष्टाश्च नूतना विरच्य पद्पञ्चाशत्संख्यया पूरिताः । अधिदेवताप्रत्यधिदेवतादीनां मन्त्रा अपि विशेषेण स्थापिताः॥ दत्तात्रेयराजोपचारपूजनादिविषयोऽपि प्रचलितकालकर्मविशेषतया संयोजितः । प्रायः प्रचलिताप्रचलिताः सर्वेऽपि व्रतोद्यापनप्रयोगाः कर्मकारयितॄणां यथा सुगमतयोपयोगिनः स्युस्तथा संयोजिताः। विशेषेण च नवचंडीशतचण्ड्यादिप्रयोगोऽपि विशेषतया याज्ञिकानां कृते प्रयोजितः । अत्र ब्रह्मादिसर्वतोभद्रमण्डलदेवता-योगिनी–वास्तुदेवता–क्षेत्रपालमंडलदेवतानामपं पात्रासादनस्य च

कोष्टकान्यपि दत्तानि । पात्रासादनप्रयोगस्तु भिन्न भिन्न एव दत्तो यथा सामान्यतयाऽप्युपयोगी भवेत् । विशेषकथनमनुचितमिति याज्ञिकाः स्वयमेवास्य ग्रन्थस्य योग्यतामनुभवेयुश्चेत्साफल्यं ग्रन्थस्य ॥

अत्र मम शरीरस्यास्वास्थ्येन संशोधनविषये दृष्टिदोषेण–सीसकाक्षरसंयोजकानां प्रमादेन–यन्त्रोपरि विशेषेणानुस्वारमात्रादीनां त्रोटनेन च यद्यपि बहूनि स्खलनानि संजातानि किंतु तेषां शुद्धिपत्रकं महदपि दत्तं तर्हि तत्र तत्र स्थाने पूर्वं संशोध्यैव प्रयोगः कारयितव्यः । शुद्धिपत्रके दत्तेऽपि क्वचिदवशिष्टं स्खलनं दृष्टिपथं समागच्छेच्चेत्तदपि स्वयमेव संशोधनीयं चावश्यकं सूचनीयं विद्वद्भिरित्याशासे ॥

अत्र पुनः परमानंदप्रयोजनं त्वेतदेव यन्मया मम ज्योतिषविषयके गुर्जरभाषानुवाद–विवरणसहित–उडुदायप्रदीप–लघुपाराशरी–नाम्नि मुद्रापयित्वा प्रकटीकृते ग्रन्थे प्रस्तावनायां यल्लिखितं तदनुसारेणायं ग्रन्थो मम स्वर्गवासिभ्यो विद्यानिधिभ्यः सुप्रसिद्धकीर्तिभ्यः पञ्च गुरुवर्येभ्य एव सादरं समर्पितवानस्मि । एतत्तु जगदीश्वरस्य कृपा सद्गुरूणां च परमाशिष इति मत्वा जीवनधन्यतां मन्ये । एतेषां लघुजीवनवृत्तान्ता अग्रतो दत्ताः ॥

अन्ततो यदि याज्ञिका हंसनीरक्षीरन्यायेनेमं ग्रन्थमवलोक्य ग्रन्थोपयोगं कुर्युश्चेन्मम प्रयत्नः सफलो भवेदित्युक्त्या भगवन्तं प्रार्थये यद्याज्ञिकानां कृतेऽयं ग्रन्थो परमोपयोगी भूयादिति ॥

| | |
|---|---|
| संवत् २०१४ मार्गशीर्ष | भगवतः सद्गुरूणां च कृपाभिलाषी |
| शुक्ल ११ गीताजयंती | पण्ड्योपाह्व-धीरजरामात्मज–तुलजाशंकरः ॥ |

# स्व. पञ्चगुरुवर्याणां लघुजीवनवृत्तान्ताः

## स्व. वेदमूर्ति श्री. जमीयतराम गिरजाशंकर शुक्ल

भरूच ऐतिहासिक स्थळ छे. ऋषियुगथी एनो इतिहास तेजस्वी छे. वेदविद्यानी अपूर्व सुकीर्ति प्राचीन काळथी एने प्राप्त थएली छे. प्रातःस्मरणीय भगवती नर्मदामातानी अनन्य कृपाथी ए सुरक्षित छे.



स्व. वेदमूर्ति जमीयतराम गिरिजाशङ्कर शुक्ल ( भरुच–गुजरात )

आ शहेरमां वेदविद्यानुरागी श्री. गिरिजाशंकरभाईने त्यां संवत् १९१६ ना भाद्रपद शुक्ल द्वादशीने गुरुवारे जमीयतरामभाईनो जन्म थयो हतो. जेमणे पोतानुं समग्र जीवन गुरुसेवा, जनसेवा अने कर्तव्यपालनमां व्यतीत कर्यु हतुं. भरूचनी ख्याति एमने वरेली. ज्ञानमार्तंडसमा एमणे ज्ञानोपासना पाछळ जीवननां मोघां वर्षो गाळ्यां छे. मात्र छ मासनी वये पिता स्वर्गवासी थयेला. गरीब माताए पुत्रवात्सल्यने लईने सुखदुःख वेठीने पण बाळकना कोड पूरा करेला.

श्री. जमीयतरामभाईना जीवन उपर भगवती सरस्वती मातानां कृपास्मित उतरेलां. एकनिष्ठाथी एमणे गुरुसेवा करेली. सादाई अने संस्कार तेमना प्रिय विषयो हता. नवचोकी उपर सरितातटे आवेली एक मढुलीमां ए रहेता. दक्षिणी गुरुपासे एओए थोडुं वेदाध्ययन करेलु. गुरुदेवना परलोक गमन पछी पंचमहाल जिल्लाना श्रीगौड ब्राह्मण श्री. माणकेश्वर अस्ति जेओ वेदविद्याना लब्धप्रतिष्ठ विद्वान् हता तेमनी पासे प्राचीन रुढि प्रमाणे सेवा करी वेद, कर्मकांड अने धर्मशास्त्रनो पूर्ण अभ्यास कर्यो हतो.

श्रीयुत जमीयतरामभाई संयमी, सदाचारी अने स्वाश्रयी हता. बाल्यकाळथी ज शरीर प्रतिभासंपन्न अने गौरवर्ण हतुं. एमनुं कंठ-

माधुर्य अप्रतिम हतुं. विनय, क्षमा अने पवित्रतानी त्रिवेणी एमना जीवनमां वहाज करती.

भरूचनी 'नर्मदासंस्कृतपाठशाळा'ना पोते आजीवन गुरुपदे रह्या हता. अविश्रांत परिश्रम करी अने एमणे महागुजरातमां वेदविद्याना सेंकडो विद्यार्थीओ तैयार कर्या छे आजे भरूचनी जीवती रहेली वेद-विद्या एमना ज परिश्रमनुं मीठुं फळ छे. में पण संहितानो थोडो अभ्यास एमनी कृपाथी एमनी पासे ज करेलो. भरूचनी औदिच्य ज्ञातिना ए पुरोहित हता. ए अजातशत्रु, मितभाषी अने मधुभाषी होवाथी सर्वेने अत्यंत प्रिय थई पडेला. सौ कोई एमने "गुरुजी" कही संबोधता. प्रमाणिकता अने सत्यता तेमना जीवननी चावीरूप हतां. तेमनुं आखुय जीवन आदर्शरूप, अनुकरणीय अने आदरणीय हतुं. पाठशाळाना परिश्रमने लईने वृद्धावस्थामां इन्द्रियोनी शक्ति घटेली पण आत्मानी शक्ति अलौकिक हती.

भरूचना आ वेदविद्याना भाग्यविधाता शास्त्र अने कर्मकांडना महान् आचार्य सरस्वतिना लाडीला छेवटे संवत् १९९१ ना कार्तिक शुक्ल बीजने शुक्रवारे प्रभातना ११ वागे आ नश्वर संसारने छोडीने पोतानी पाछळ बे सुपुत्रो वेदमूर्ति मणिभाई अने भाईश्री पार्वतीशंकर अने एक सुपुत्रीने मूकी पंचोतेर वर्षनी वये भरूच सहित गुजरातने शोकसागरमां डूबावी पंचत्व पाम्या

तेओना मृत्युदिने पाठशाळाना सुवर्णमहोत्सवनो समारंभ हतो, परंतु पाठशाळानो ए समारंभ संपूर्णरीते उजवाया बाद तेनी संपूर्णतानो शुभसंदेश सांभळ्या पछीज तेमना आत्मानुं विसर्जन थयुं हतुं. आ हतो पाठशाळा प्रत्येनो सद्‌गतनो एकनिष्ठ प्रेम. भरूचमां स्वर्गस्थना मानमां ए प्रसंगे स्वर्गस्थ प्रत्ये पूज्यभाव दर्शावनार अनेक सद्‌गृहस्थोए स्वर्गस्थना आत्मानी शांति ईच्छी तेमने अञ्जलि समर्पित करी हती. सद्‌गतनुं तैलचित्र पाठशाळामां अनावरण करी राखवामां आव्युं छे. कोटिवंदन हो ए दिव्यात्माने !

---

## स्व. शास्त्रीजी विष्णुराम त्रिकमजी दवे–व्याकरणाचार्य.

प. पू. शास्त्रीजी विष्णुरामभाईनो जन्म तापीकिनारे आवेला 'कामरेज' गाममां (सुरत) भार्गवज्ञातिमां त्रिकमजी दवेने त्यां संवत् १९२० ना फागण मासमां थयो हतो नानपणथी एओ बुद्धिशाळी अने संस्कृत भाषाना सेवक हता. एमना कुटुंबना अनेक पुरुषो सारा अधिकारी अने विद्याविनोदी हता एओ गुजरातीनो अभ्यास तथा स्व वामनशास्त्री पासे थोडो संस्कृतनो अभ्यास करी वडोदरा गया अने त्यां थोडो अभ्यास करी पछीथी योग्य उम्मरे काशी संस्कृतनो अभ्यास करवा गया अने त्यां लगभग १२ वर्ष रही स्व. महामहोपाध्याय तात्या शास्त्रीजी के जेओए व्याकरणग्रंथ पर टीका करी छे तथा जे समर्थ विद्वान् हता तेमनी पासे व्याकरण, साहित्य तथा धर्मशास्त्र विगेरेनो अभ्यास कर्यो. बुद्धि तीव्र हती तेथी उत्तम अभ्यास करी गाम आव्या पछी भरूचनी "नर्मदापाठशाळा'मां व्याकरणना अध्यापक तरीके रह्या अने त्यारथी तेमनी विद्यानो चमत्कार सर्वत्र जणावा लाग्यो. धर्मशास्त्रोनी अनेक बाबतोनो शास्त्रार्थ करवामा तेमनो नंबर पहेलो हतो चुस्तसनातनी अने धर्मनी बाबतमा पोते डरे तेम न हता एक राजवीने उपनयन आपवा माटे पोताना आर्थिक स्वार्थना भोगे पण विद्वानोनी भरी सभामां स्पष्ट ना पाडी धर्मनुं परिपालन कर्युं हतु अनेक ठेकाणे तेमणे धार्मिक शास्त्रार्थोमां विजय मेळव्या हता अने ते सुप्रसिद्ध छे



स्व शास्त्रीजी विष्णुराम त्रिकमजी
दवे व्याकरणाचार्य
(कामरेज–सुरत)

अत्यारनी जेम ते समये नास्तिकतानु प्रावल्य न हतु, परतु लोको अनेक धार्मिक बाबतोमां शास्त्रार्थ करावी पंडितोना निर्णय प्रमाणे वर्तता. ए प्रमाणे धर्मशास्त्र द्वार तेमणे वैदिक धर्मनु संरक्षण कर्यु छे. गो या

गोस्वामीश्री देवकीनंदन महाराजनो तेमना उपर अपूर्व भाव हतो. तेमना चि गो. वा वल्लभलालजीने अध्ययन करावबा घणो समय तेओ कामवन रह्या हता अने पछी पाछा भरूच आव्या हता.

आ प्रमाणे भरूचनी पाठशाळामां रही तेमणे अनेक विद्यार्थिओने अभ्यास कराव्यो के जेओ उत्तम जीवन व्यतीत करे छे त्यार पछी केटलोक वखत जतां तेमने स्वतंत्र पाठशाळा काढवानी इच्छा थई अने तेथी तेओ सुरत गया. मारा प. पू. कै. वा. पिताश्रीए मने गुरुशुश्रूषा करी अभ्यास करवा तेमने अर्पण करेलो होवाथी मने पण ते साथे लई गया. १८ दिवस अमे सुरत रह्या पटलामां नडियादथी गो. वा गोस्वामीश्री अनिरुद्धलालजी महाराजनो तार आव्यो अने त्यां नवी पाठशाळा खोली तेना अध्यापक तरीके तेमने बोलाववामां आव्या अमे त्यां गया अने त्यांनी पाठशाळा शरू थई. अनेक विद्यार्थीओए त्यां एमनी पासे अभ्यास कर्यो अने में पण प्राचीन रूढि प्रमाणे एमने त्यांज रही सेवा करी बे वर्ष अभ्यास कर्यो.

त्यारपछी मारा मोटाभाई स्व. बालाशंकरना बोलाववाथी हुं मुंबई आव्यो, अने "देवीदास लल्लुभाई संस्कृतपाठशाळा"मां दाखल थयो के त्यां मारा बीजा गुरुवर्य त्रिभुवन शास्त्रीजी अध्यापक हता ( एमनो लघुवृत्तांत हवे पछी आवशे. )

प. पू. शास्त्रीजीनो विद्याव्यासंग अपूर्व हतो जरूर न पडे तो बे महिने पण तेओ बहार जता नहि. तेमनी सुवानी गादीनी आजुबाजु लगभग संख्याबंध पुस्तको पडेलां होय अने तेनोज निरंतर अभ्यास चाले रात्रे १२ वागे सुए अने रात्रे ३ वागे वांचवा उठे तेमनी विद्या सतेज अने सतेज कोईथी डरवानी वात नहि अने चारित्र्य पूर्ण शुद्ध प्रतिदिन तेओ " कांसोस्मितां " ना संपुट साथे सप्तशतीनो पाठ करता अने महादेवना परम भक्त हता. खावापीवामां अने ओढवा पहेरवामां परम शोखीन. बे वखत पहेरेलो अंगरखो के पाघडी त्रीजी वखत न चाले अने दील्हीनी पासेर तोलनी मोजडी पहेरवा जोइए. शरीरनी प्रतिभा सामो माणस अंजाई जाय तेवी अने ओजस्विनी.

आप्रमाणे नडिआदनी पाठशाळामां केटलोक वखत अध्यापक तरीके रही त्यार पछी डाकोरमां ब्रह्मीभूत शंकराचार्य श्री. माधवतीर्थस्वामीनी पाठशाळामां रह्या, अने त्यारपछी अमदावादनी पाठशाळामां गया. त्यां अनेक विद्यार्थीओने तेमणे अभ्यास कराव्यो के जेओ अत्यारे सारा पंडितो छे. विद्यार्थीओ उपर तेमनी कृपा अपार हती. एकज दृष्टांत आपुं

प्राचीन रुढिप्रमाणे में तेमने त्यां रही सेवा करेली ए दृष्टिए तेमनो मारा उपर अनुपम प्रेम हतो. मारा मुंबई गया पछी " देवीदास पाठशाळामांथी नीकळी हुं लाडुबेटीजीना मंदिरमां दाखल थयो, अने त्यां रही "गोकुळदास तेजपाळ संस्कृत पाठशाळा 'मां स्व शास्त्रीजी जीवराम लल्लुभाई पासे हुं अभ्यास करवा लाग्यो सने १९१२ मां गो. ते. पाठशाला तरफथी काशी गवर्नमेन्ट कॉलेजमां परीक्षा आपवा माटे पाठशाळाना संचालको तरफथी अमने प्रोत्साहन मळ्युं पण शास्त्रीजी जीवरामभाई काशी गएला होवाथी अने अमारे दोढ वर्षनो अभ्यास छ मासमां करवानो होवाथी अभ्यास करवा बाबत मारा ए गुरुवर्य शास्त्रीजीने अमदावाद पत्र लखतां तेमणे मने सप्रेम अमदावाद बोलावी रातना एक वाग्या सुधी पंक्तिओ विगेरे शीखवी अने अंतमां " तुं परीक्षामा उत्तीर्णज थईश माटे निर्भय थईनेज जा. " एम परीक्षामा उत्तीर्ण थवानो अपूर्व आशिर्वाद आप्यो के जेना कृपाप्रसादथी हु परीक्षामां सफळ थयो. आजे ए वातनुं स्मरण करुं छुं त्यारे गुरुना वात्सल्यप्रेमनां हर्षाश्रु आंखोमांथी सरी पड्या शिवाय रही शकतां नथी.

एमनो प्रभाव, एमनी कीर्ति, एमनुं ओजस् अने विद्वत्ता एक अपूर्व विद्वानने शोभावे तेवुं हतु, तेमनी जेटली प्रशंसा करीए तेटली ओछी छे. परतु काळे कोईने छोड्या नथी एटले गुजरातना आवा एक प्रसिद्ध विद्वद्रत्न, पंडितशिरोमणि गुरुवर्य व्याकरणाचार्य शास्त्रीजी विष्णुरामभाई संवत् १९७० ना मार्गशीर्ष शुक्ल अष्टमी शनिवारे "जातस्य हि ध्रुवो मृत्यु " ए भगवद्वाक्यनुं स्मरण करावता भगवद्भजन करता करता स्वर्गवासी थया. तेमने एक पुत्री ब्हेन पार्वती तथा तेनो पुत्र छे.

## स्व. शास्त्रीजी त्रिभुवन धनजी व्यास

स्वर्गवासी प. पू. शास्त्रीजीनो जन्म सौराष्ट्रमां आवेला भोळ गाममां शालावाडी औदिच्य ज्ञातिमां श्रीधनजीभाई व्यासने त्यां थयो हतो.



स्व. शास्त्रीजी त्रिभुवन धनजी व्यास (भोल–सौराष्ट्र)

तेमना पिताजी, तथा तेमना व्यासकुटुंबमां बीजा पण घणा विद्वानो हता अने भोळ दरबारमां तेओनुं उत्तम सन्मान हतुं. शास्त्रीजी नानपणथीज संस्कारी हता, अने तेथी उपनयन संस्कार थया बाद तेमणे केटलोक अभ्यास भोळमांज कर्यो. पछी संस्कृतनो विशेष अभ्यास करवा माटे तेओ काशी गया अने त्यां स्व. महामहोपाध्याय गंगाधर शास्त्रीजी पासे व्याकरण, साहित्य विगेरेनो अभ्यास कर्यो. आम घणां वर्षो काशीमां रही तेमणे अभ्यास कर्यो हतो.

त्यारपछी एमनी मुंबई आववा इच्छा थई. ते वखते तेमना मोटाभाई ब्रह्मीभूत नवलशंकर शास्त्रीजी के जेओ गो. वा. शिघ्रकवि गट्टुलालजीना शिष्य हता अने मुंबई रहेता हता, तेमनी प्रेरणाथी शास्त्रीजी त्रिभुवनभाई मुंबई आव्या, अने स्व. शेठ "देवीदास लल्लुभाई संस्कृतपाठशाळा"मां अध्यापक तरीके रह्या. पाठशाळानुं जीवन एमणे एक ऋषिकुल जेवुं करी मूक्युं हतुं. एमणे आ पाठशाळामां घणा शिष्योने अध्ययन कराव्युं के जेमांना तो आजे सारा पंडितो तरीके प्रसिद्ध छे. हुं पण शिष्य तरीके तेमनो ऋणी छुं. लगभग दोढ वर्ष ते पाठशाळामां रही में एमनी पासे अभ्यासकर्यो हतो.

मुंबईमां अनेक सद्‌गृहस्थोना तेओ माननीय हता. कर्मनिष्ठ पंडित तथा अध्यापक तरीके एमनी ख्याति सारी हती अने निरंतर प्रेमथीज विद्यार्थीओने अभ्यास करावता हता.

एमनुं जीवन शांत, अध्यापनमय, सुव्यवस्थित, धार्मिक तथा वात्सल्यपूर्ण हतुं. आ प्रमाणे अनेक विद्यार्थिओनां जीवनने सफल बनावी पोतानी उत्तरावस्थामां तेओ पोताने गाम भोल गया हता अने शांत येकान्तिक जीवन गाळता हता. एमना मोटाभाई शास्त्रीजी नवल शंकरभाई सांभळवा प्रमाणे उत्तरावस्थामां काशीनिवास करी संन्यस्त लई ब्रह्मस्वरूपने पाम्या हता.

शास्त्रीजी त्रिभुवनभाई पण आ प्रमाणे पोतानुं शांत आध्यात्मिक जीवन गाळतां सं ...... पोतानी पाछळ एक पुत्र तथा एक पुत्रीने मूकी स्वर्गवासी थया हता.

---

## स्व. शास्त्रीजी जीवराम लल्लुभाई रैक्व

प पू. शास्त्रीजी जीवराम लल्लुभाईनो जन्म वडोदरा पासे आवेला वामणगाम (गंभीरा) मां थयो हतो. तेओ ज्ञातिए रैक्व-रायकवाल हता रायकवालज्ञातिमां अनेक समर्थ पंडितो वडोदरा, अमदावाद वगेरे शहेरोमां थयेला छे शास्त्रीजीना पूर्ववृत्तांतनी खबर नथी, परंतु तेओ गुजरातीनो अभ्यास करी योग्य उमरे संस्कृत अभ्यास करवा काशी गयेला अने त्यांनी गवर्नमेन्ट कोलेजना सुप्रसिद्ध महामहोपाध्याय दामोदर शास्त्रीजी पासे व्याकरण विगेरेनो अभ्यास करेलो. लगभग दश बार वर्ष काशीमां अभ्यास करी त्यार पछी मुंबई आवी एओ स्वतन्त्र पंडित तरीके जीवनः यतीत करता हता. तेओ कर्मनिष्ठ हता. त्रिकाल स्नान करी सप्तशतीनो त्रिकाल पाठ करवानो


स्व शास्त्रीजी जीवराम लल्लुभाई (वामणगामा–वडोदरा)

तरीके रह्या अने अध्यात्मरामायण, श्रीधरी गीता, पराशरस्मृति, भर्तृहरिशतक, कामन्दकीय नीतिसार वगेरे पुस्तकोनां भाषांतर कर्या तेम चरक सुश्रुत वगेरेनां भाषांतर पण कर्या.

गुजराती पत्रनी भेट तरीके 'अयोध्यानी बेगम' "नूरजहां" तथा "हेस्टिंग्सनी सोटी" तेमणे लखी छे वळी शास्त्रीजी नथ्थुराम महाशंकरनी साथे मळी मनुस्मृतिनु एक अपूर्व भाषांतर पण एमणे कर्यु छे जे आजे जनसमुदायमा उत्तमोत्तम मनाय छे

राजा भोजनी जेम गो वा शेठ देवकरण नानजी पोताने त्या दरेक रविवारे पंडितोनी सभा भरता अने मासिक आश्रय आपता एमनी पाठशाळामां शास्त्रीजी वैद्यक तथा धर्मशास्त्रना अध्यापक तरीके रह्या. आजे तेमना घणा शिष्यो वैद्यो तथा धर्मशास्त्रज्ञ छे मारो धर्मशास्त्रनो अभ्यास पण गो वा शेठ देवकरण नानजीनी पाठशाळामां एमनी पासेज थयो हतो जे माटे हु तेमनो ऋणी छुं

स्व शेठ प्राणलाल देवकरण नानजी तथा स्व शेठ मनुभाई देवकरण नानजीना तेओ उपनयनसस्कारना गुरु हता. तेओनो एमनो प्रत्ये गुरुतरीकेनो परमपूज्य भाव हतो.

शास्त्रीजी मुबईना एक सारा प्रतिष्ठित पडित हता. तेओ शास्त्रज्ञ, निरभिमान, शात, मलतावडा स्वभावना, आनदी, विनयी तथा ब्राह्मण धर्मनु परिपालन करनार हता विद्यार्थीओ प्रत्येनो तेमना प्रेम पण अपूर्व हतो.

स १९७९ ना फागण सुद ७ ने शुक्रवारे ६१ वर्षनी उमरे शास्त्रीजी वेरावळमा स्वर्गवासी थया. तेमनी पाछळ तेमना बे सुपुत्रो भाई प्रभाशकर तथा गगाधर छे अने तेओ उत्तम रीते पोतानु जीवन व्यतीत करे छे

शास्त्रीजी आ प्रमाणे विद्याव्यासगमाज पोतानु जीवन व्यतीत करता अतमां स्वर्गवासी थया हता

सं. २०१४ मार्गशीर्ष शुक्र ११ गीताजयती

सद्गुरुकृपाभिलाषी
तुलजाशंकरः

## व्रतोद्यापनचन्द्रिकायाः

# अनुक्रमणिका

तेओनो नियम हतो. मुंबईनी केटलीक पाठशाळाना अध्यापको पण तेमनी पासे टीकाग्रंथो भणवा आवता. मुंबईना मोटा सारा सारा सद्गृहस्थो स्व. सर जगमोहनदास वरजीवनदास, स्व. शेठ सर विठ्ठलदास दामोदर ठाकरसी, स्व. शेठ पुरुषोत्तम विश्राम मावजी, हाईकोर्टना भूतपूर्व जज सरचंदावरकर तथा स्व. भाईशंकर नानाभाई सोलिसीटर वगेरेना ए सन्माननीय हता.सर चंदावरकर तथा भाईशंकर भाईने मिताक्षरा वगेरेनो अभ्यास करावता हता. उत्तरावस्थामां तेओ गोकुळदास तेजपाळ संस्कृत पाठशाळामां अध्यापक तरीके जोडाया हता अने एमनाज वखतमां गो. ते. संस्कृत पाठशाळा काशीनी गवर्नमेन्ट कोलेज साथे सन १९११ मां जोडाई, अने त्यारथी अहीं अध्ययन करी गवर्नमेन्ट कोलेजनी परीक्षा आपवानुं शरु थयुं. अमे केटलाक विद्यार्थीओए सने १९१२ मां ए पाठशाळा तरफथीज शास्त्रीजीने नामे काशी गवर्नमेन्ट कोलेजनी परीक्षा आपेली. आजे तो परीक्षाओनां अनेक केन्द्रो खुल्यां छे परंतु ते सर्वनो यश स्व. शास्त्रीजी जीवरामभाई, स्व. भाईशंकरभाई तथा ते समयना गो. ते. सं. पाठशाळाना संचालकोने आभारी छे

शास्त्रीजी त्यार पछी 'काशीमांज मृत्यु पामवुं' ए दृष्टिए काशीनिवास करता हता. एमना अनेक विद्यार्थीओ हता, अने तेमना पर तेमनो अथाग प्रेम हतो. शास्त्रीजी उत्तरावस्थामां पण अद्वैतसिद्धिनो अभ्यास काशीमां करता हता, तेवा विद्याविलासी हता तेमनां मध्यमवयमां बण वखत लग्न थयां हतां, पण पाछळ कंई पण प्रजा हती नहि एटले तेओ आध्यात्मिक जीवन गाळता. अन्तमां स्व शेठ सर विठ्ठलदास दामोदर ठाकरसीने त्यां सप्ताह वांचवा आवेला. सप्ताह समाप्त थया पछी शेठे एकादमास मुंबईमां रहेवा शास्त्रीजीने कह्युं, परंतु तेमना "काशीमां मृत्यु पामवुं" तेवा सत्सिद्धान्तने काशी विश्वनाथ भगवान् शंकर पण समजता हता एटले तेमने प्रेरणा करी एटले शास्त्रीजी "थोडा वखत पछी हुं आवीश" तेम कही मुंबईमां न रहेतां तत्काळ काशी गया अने त्रिजेज दिवसे आ संसारयात्राने संपूर्ण करी काशी

जेवी पवित्र नगरीमां भगवान् काशी विश्वेश्वरनी सान्निध्यमांज कैलासवासी थया.

आ प्रमाणे शास्त्रीजी पोतानुं पवित्र जीवन व्यतीत करतां शंकरनी कृपाथी काशीमां मृत्यु पामवानी पोतानी इच्छा परिपूर्ण करी शिवस्वरूपने पाम्या हवा.

---

## स्व. शास्त्रीजी प्राणजीवन हरिहर पंड्या

स्व. शास्त्रीजीनो जन्म जूनागढमां प्रश्नोरा नागर ज्ञातिना पंड्या हरिहर भीमजीने त्यां सं. १९१९ ना मार्गशीर्ष वद ८ ने दिवसे थयो हतो. तेमना पिताश्री हरिहरभाई धर्मनिष्ट, स्नानसंध्याशील, संतोषी, कुटुंबवत्सल, सुशील तथा हाटकेश्वरना परम भक्त हता. एमना कुटुंबमां महादेवनी भक्ति परम्परागत हती.


स्व. शास्त्रीजी प्राणजीवन हरिहर पंड्या ( जूनागढ—सौराष्ट्र )

शास्त्रीजीने सातमे वर्षे उपनयन संस्कार करवामां आव्यो हतो बाद तेओए गुजरातीनो अभ्यास कर्यो अने त्यारपछी शास्त्री श्रीकरुणाशंकर, शास्त्री श्री हरदत्त तथा पंडित श्रीकमलनयनाचार्यनी पासे उत्तरोत्तर व्याकरण, साहित्य, वेदान्त, पुराण, इतिहास तथा धर्मशास्त्रनो अभ्यास कर्यो. सं. १९४२ मां तेमना पिताजीनो स्वर्गवास थवाथी कुटुंबनो भार तेमने माथे आव्यो एटले तेओ जूनागढनी पाठशालामां बीजा अध्यापक तरीके रह्या.

आ समये जूनागढमां गो. वा. शीघ्रकवि पं. गट्टुलालजी पधार्या हता, अने तेमनो समागम शास्त्रीजीने थतां तेमनी प्रेरणाथी शास्त्रीजी मुंबई आव्या अने 'गुजराती' पत्रना अधिपति स्व. इच्छाराम भाईने मली तेमना प्रेसमां पुस्तकोनां भाषान्तर करवा माटे भाषान्तरकार

## परिशिष्टप्रकरणम्

॥ इत्यनुक्रमणिका ॥



# ॥ श्रीव्रतोद्यापनचन्द्रिका ॥

॥ श्रीगणेशाय नमः ॥

सिद्ध्या बुद्ध्या समेतो गणपतिरथ यः शंकरः शं विधत्ते
लोकानां कल्मषारिमदहनकुशलो यो विभुर्विष्णुनामा ॥
अज्ञानध्वान्तहारी दिनपतिरथ या शक्तिदा चाद्यशक्ति-
र्वन्दे पञ्चस्वरूपं ह्यगुणगुणमयं सच्चिदानन्दभक्त्या ॥ १ ॥
श्रीगणेशं शिवं दुर्गां विष्णुं सूर्यं च शारदाम् ॥
मातापितृगुरून् नत्वा कुर्वे ग्रन्थमिमं लघुम् ॥ २ ॥
राजपिप्पलसंस्थाने गुर्जरे नर्मदातटे ॥
मुम्बापुरीस्थ एवापि " भालोद " ग्रामवास्यहम् ॥ ३ ॥
रुक्मिण्या धैर्यरामस्य तुलजाशंकरः सुतः ॥
पंड्योपाह्वो द्विजो नित्यं ग्रन्थसंशोधने रतः ॥ ४ ॥
विद्वज्जनाननुसृत्य भाक्तनान् विदुषां मुदे ॥
चित्ते सद्भावमाश्रित्य कर्मशुद्ध्यभिलाषकः ॥ ५ ॥
विचार्य किंचिच्च विशोध्य बुद्ध्या पौराणिकीं याज्ञिककर्मसिद्ध्यै ।
कुर्वे व्रतोद्यापनचन्द्रिकां मुदा मकृष्टयोगामुपकारहेतवे ॥ ६ ॥
वैशिष्ट्यं नास्ति मे किंचिद् ग्रन्थकारककर्मणि ॥
विद्वद्भ्यो विदुषामेव ह्यर्प्यते प्रेमपूर्वकम् ॥ ७ ॥

मस्मां धरित्र्यां भूर्लोकसंज्ञितायां सप्तद्वीपमंडितायां क्षीरोदादि-
द्वीपवलयीकृतलक्षयोजनविस्तीर्णे जम्बूद्वीपे स्वर्गस्थितामरा-
गंगादिसरिद्भिः पाविते निखिलजनपावनकर्तृशौनकादिमहा-
वासभूते नैमिषारण्यादियुक्ते मोक्षसाधनभूते भारते वर्षे ।
मिद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य अद्य
द्वितीये परार्धे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे
तितमे कलियुगे कलिप्रथमचरणे भूर्लोके भारतवर्षे भारत-
जम्बूद्वीपे ( रामक्षेत्रे परशुरामाश्रमे दण्डकारण्ये श्रीगोदा-
अमुकदिग्भागे श्रीमल्लवणाब्धेः अमुके तटे ) आर्यावर्ता-
न्तर्वर्त्तैकदेशे अमुके श्रीशालिवाहनशके अमुकनामसंवत्सरे
अमुके श्रीविक्रमवर्षे अमुकनामसंवत्सरे अमुकायने अमुकर्तौ
से अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे
रणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुक-
थते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं
षेण विशिष्टायां शुभपुण्यतिथौ मम अमुकगोत्रोत्पन्नस्य अमुक
सपरिवारस्य आत्मनः शास्त्रोक्तपुराणोक्तपुण्यफलावाप्त्यर्थं
र्याभिवृद्ध्यर्थम् अप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्म्याश्चिरकाल-
र्थं सकलमनईप्सितकामनासंसिद्ध्यर्थं लोके वा सभायां राजद्वारे
यशोविजयलाभादिप्राप्त्यर्थं तथा च मम सभार्यस्य सपुत्रस्य अ-
न्धुवसहितस्य सपशोः समस्तभयव्याधिजरापीडामृत्युपरिहारद्वारा
रोग्यैश्वर्याभिवृद्ध्यर्थं तथा च मम जन्मराशेरखिलकुटुम्बस्य वा

---

कादिमासादिक वक्तव्यम् ॥-शकविगेरे ने मास विगेरे बोलवो ॥

## ॥ अथ श्रीजन्माष्टमीव्रतोद्यापनप्रयोगः ॥

श्रीगणेशाय नमः ॥ कृतमंगलस्नानः कर्ता यजमानः सपत्नीकः धौते वाससी परिधाय चन्दनादिना तिलकं कृत्वा नित्यकर्म संविधाय पूजोपयोगिसंभारान् गृहीत्वा शुभे काले शुभासने प्राङ्मुख उदङ्मुखो वोपविश्य ब्राह्मणद्वारा शांतिसूक्तं पठेत् ॥

शान्तिसूक्तम्——या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः । श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ १ ॥

[ ( किं वर्णयाम तव रूपमचिन्त्यमेतत्किं चातिवीर्यमसुरक्षयकारि भूरि । किं चाहवेषु चरितानि तवातियानि सर्वेषु देव्यसुरदेवगणादिकेषु ॥२॥ हेतुः समस्तजगतां त्रिगुणाऽपि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा । सर्वाश्रयाऽखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥ ३ ॥ यस्याः समस्तसुरतासमुदीरणेन तृप्तिं प्रयान्ति सकलेषु मखेषु देवी ॥ स्वाहाऽसि वै पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्वमत एव जनैः स्वधा च ॥ ४ ॥ ) ]

शान्तिः शान्तिः सुशान्तिर्भवतु ॥

तत आचार्यो यजमानभाले तिलकं कुर्यात् ॥ स्वस्तिस्तु याऽविनाशाख्या धर्मकल्याणवृद्धिदा । विनायकप्रिया नित्यं ताञ्च स्वस्तिं ब्रुवन्तु नः ॥ नारदाद्या ऋषिगणा ये चान्ये च तपोधनाः । भवन्तु यजमानस्य ह्याशीर्वादपरायणाः ॥

ततो यजमानो गुरुपादाभिवन्दनपूर्वकमाचमनप्राणायामौ कुर्यात् ।

तत्रादौ हस्ते दक्षिणासहितं साक्षतं सताम्बूलं फलं गृहीत्वा गुरुपादाभिवन्दनं कुर्यात् ॥

गुरुपादाभिवन्दनम्—ब्रह्मानंदं परमसुखदं केवलं-ज्ञानमूर्तिं द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ॥ एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥
आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजभावयुक्तम् ॥
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥ २ ॥
समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ॥
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥ ३ ॥
आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः ॥
समस्ततीर्थाम्बुपवित्रपाणयः पुनन्तु मां ब्राह्मणपादपांसवः ॥ ४ ॥
नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः
आचार्यसिद्धेश्वरपादुकाभ्यो नमोऽस्तु वै विष्णुपदाम्बुजेभ्यः ॥ ५ ॥

आचमनम्—ह्रीं केशवाय नमः । ह्रीं नारायणाय नमः । ह्रीं माधवाय नमः । ह्रीं गोविन्दाय नमः । इति हस्तं प्रक्षालयेत् ॥

प्राणायामः—ह्रीं नमो भगवते वासुदेवाय ॥ एवं पूरककुम्भकरेचकक्रमेण त्रिवारं प्राणायामं कुर्यात् वा पठेत् ॥ ततः

देवतानमस्काराः—सुमुहूर्तमस्तु ॥ माङ्गल्यमस्तु ॥ श्रीमन्महागणाधिपतये नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । वाणीहिरण्यगर्भाभ्यां नमः । श्रीलक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां नमः । शचीपुरन्दराभ्यां नमः । मातापितृचरणकमलेभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः । एतत्कर्मप्रधानदेवताभ्यो नमः । पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु । "पुण्यं पुण्याहं दीर्घमायुरस्तु" (इत्याचार्यो वदेत्) ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ॥

लंबोदरश्च विकटो विघ्ननाशो विनायकः । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि । विद्यारंभे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥ तदेव लग्नं सुदिनं तदेव तारावलं चन्द्रवलं तदेव । विद्यावलं दैववलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणम्यादौ सर्वकार्यार्थसिद्धये ॥

माणायामस्यां धरित्र्यां भूर्लोकसंज्ञितायां सप्तद्वीपमंडितायां क्षीरोदादिसमुद्रतद्द्वीपवलयीकृतलक्षयोजनविस्तीर्णे जम्बूद्वीपे स्वर्गस्थितामरादिसेवितगंगादिसरिद्भिः पाविते निखिलजनपावनकर्तृशौनकादिमहामुनिनिवासभूते नैमिपारण्यादियुक्ते मोक्षसाधनभूते भारते वर्षे । नैवं (श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य . अद्य ब्रह्मणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भारतवर्षे भारतखण्डे जम्बूद्वीपे ( रामक्षेत्रे परशुरामाश्रमे दण्डकारण्ये श्रीगोदावर्याः अमुकदिग्भागे श्रीमल्लवणाब्धेः अमुके तटे ) आर्यावर्तान्तर्गतब्रह्मावर्तैकदेशे अमुके श्रीशालिवाहनशके अमुकनामसंवत्सरे तथा च अमुके श्रीविक्रमवर्षे अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं गुणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम अमुकगोत्रोत्पन्नस्य अमुकदासस्य सपरिवारस्य /आत्मनः शास्त्रोक्तपुराणोक्तपुण्यफलावाप्त्यर्थं मम ऐश्वर्याभिवृद्ध्यर्थम् अप्राप्तलक्ष्मीप्राप्त्यर्थं, प्राप्तलक्ष्म्याश्चिरकालसंरक्षणार्थं सकलमनईप्सितकामनासंसिद्ध्यर्थं लोके वा सभायां राजद्वारे वा सर्वत्र यशोविजयलाभादिप्राप्त्यर्थं[तथा च मम सभार्यस्य सपुत्रस्य अखिलकुटुंबसहितस्य सपशोः समस्तभयव्याधिजरापीडामृत्युपरिहारद्वारा आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं तथा च\मम जन्मराशेरखिलकुटुम्बस्य वा

१ शकादिमासादिकं वक्तव्यम् ॥-शकविगेरे ने मास विगेरे बोलवां ।

जन्मराशेः सकाशाद्ये केचिद्विरुद्धचतुर्थाष्टमादिस्थानस्थिताः क्रूरग्रहास्तैः सूचितं सूचयिष्यमाणञ्च यत्सर्वारिष्टं तद्विनाशद्वारा सर्वदा) तृतीयैकादशस्थानस्थितवच्छुभफलमाप्त्यर्थं पुत्रपौत्रादिसन्ततेरविच्छिन्नवृद्ध्यर्थम् आदित्यादिनवग्रहानुकूलतासिद्ध्यर्थम् इन्द्रादिदिक्पालप्रसन्नतासिद्ध्यर्थम् आधिदैविकाधिभौतिकाध्यात्मिकत्रिविधतापोपशमनार्थं धर्मार्थकाममोक्षचतुर्विधफलावाप्त्यर्थम् ] श्रीपरमेश्वरप्रीत्यर्थं मयाऽऽचरितस्याचरिष्यमाणस्य जन्माष्टमीव्रतस्य सांगतासिद्ध्यर्थं संपूर्णफलप्राप्त्यर्थम् ( एकरात्र्यधिवासपक्षाश्रयेण ) देशकालाद्यनुसारतो यथाज्ञानेन यथामिलितोपचारैः श्रीकृष्णजन्माष्टमीव्रतोद्यापनाख्यं कर्माहं करिष्ये ॥

पुनः संकल्पः—पुनर्जलं गृहीत्वा ॥ तदङ्गत्वेन तत्रादौ दिग्रक्षणं कलशार्चनं शंखघण्टापूजनं दीपपूजनञ्च निर्विघ्नतासिद्धये गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनमायुष्यमंत्रजपं नान्दीश्राद्धमाचार्यादृत्विग्वरणं सर्वतोभद्रमंडलदेवतास्थापनं प्रधानदेवतास्थापनं पूजनं च करिष्ये ॥

दिग्रक्षणम्—वामहस्ते सर्षपानादाय दक्षिणहस्तेनाच्छाद्य——

अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिता. । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् । सर्वेषामवरोधेन पूजाकर्म समारभे ॥ ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः । स्थानादस्माद्व्रजन्त्वन्यत्स्वीकरोमि भुवं त्विमाम् । भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन । ते सर्वेऽप्यपगच्छन्तु यावत्कर्म करोम्यहम्॥४॥ (एतैर्मन्त्रैः सर्षपान् सर्वदिक्षु विकीर्य छोटिकया तालत्रयेणान्तरिक्षान्भूतानुत्सार्य वामपादेन

भूमिं त्रिवारं ताडयेत् । ततः शरीरशुद्ध्यर्थं वामहस्ते जलं गृहीत्वा दक्षिणहस्तानामिकया नेत्रयोः स्पर्शं कुर्यात् ॥)

भैरवनमस्कारः—तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ इति भैरवं नमस्कृत्यमादित्यमुपतिष्ठेत् ॥

हस्ते गन्धपुष्पाण्यादाय ॥ ध्येयः सदासवितृमंडलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः ॥ केयूरवान मकरकुंडलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ इति सूर्यं गन्धपुष्पैः पूजयेत् ॥

कलशार्चनम्—ततः स्ववामभागे अक्षतपुञ्जोपरि जलपूरितं कलशं संस्थाप्य तत्र "वरुणावाहनम्"॥ गंगे च यमुने चैव गोदावरि सरस्वति । कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरु ॥ ह्रीं अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि ॥

प्रतिष्ठापनं पूजनञ्च—प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता । प्रतिष्ठां ते करोम्यत्र कलशे दैवतैः सह ॥ ह्रीं वरुणाय नमः वरुण सुप्रतिष्ठितो वरदो भव ॥ ततः कलशस्य चतुर्दिक्षु गन्धेन चतुर्देवान् मध्ये वरुणञ्च पूजयेत् । पूर्वे इन्द्राय नमः ॥ दक्षिणे यमाय नमः ॥ पश्चिमे वरुणाय नमः ॥ उत्तरे कुबेराय नमः ॥ कलशमध्ये अपाम्पतये वरुणाय नमः(सर्वोपचारार्थे) गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि॥

[ ( वरुणाय नमः सौभाग्यद्रव्यं सम० ॥ वरु० धूपं सम० । वरु० दीपं सम० । वरु० नैवेद्यं सम० । जलेन संप्रोक्ष्य ग्रासमुद्रया प्राणाय नमः । अपानाय नमः । व्यानाय नमः । उदानाय नमः । समानाय नमः । मध्येपानीयं स० । उत्तरापोशानं स० । हस्तप्रक्षालनं स० । मुखप्र० स० । करो० गन्धं स० । वरु० न० पूगी० ता० स० । वरु० हिरण्यद० स० । वरु० आरा० स० । वरु० मन्त्रपु० सम० )]॥

अनेन पूजनेन वरुणः प्रीयतां नमम ॥

ततोऽनामिकया कलशं स्पृष्ट्वा प्रार्थयेत्—कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः । अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः ॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा । आयान्तु देवपूजार्थं दुरितक्षयकारकाः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति । कावेरि नर्मदे सिन्धो जलेऽस्मिन्सन्निधिं कुरु ॥ ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे । तेन सत्येन मे देव तीर्थं देहि दिवाकर ॥ अङ्कुशमुद्रया सूर्यमण्डलात्सर्वाणि तीर्थान्यावाह्य । वं इति धेनुमुद्रया अमृतीकृत्य । हुँ इति कवचेनावगुण्ठ्य । मत्स्यमुद्रयाऽऽच्छाद्य । वं वरुणाय नमः इत्यनेनाष्टवारमभिमन्त्र्य "प्रार्थयेत्"—

नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय ॥ सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते ॥ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक ॥ पूजनं क्रियते यावत्तावत्त्वं सन्निधो भव ॥ इति संप्रार्थ्य वामहस्ते तस्मादुदकादुदकं गृहीत्वा दक्षिणहस्तेन स्वात्मानं सम्प्रोक्षेत्—अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ " पुनर्जलंगृहीत्वा "—पूजाद्रव्याणि भूमिश्च प्रोक्षयेत् ॥ अपवित्र० शुचिः ॥

शंखपूजनम्—शंखं जलेन प्रक्षाल्य " शंखस्यदेवतायै नमः " इति गन्धाक्षतपुष्पैः संपूज्य प्रार्थयेत् ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ॥ नमितः सर्वदेवैश्च पाञ्चजन्य नमोस्तु ते ॥ पाञ्चजन्याय विद्महे पावमानाय धीमहि । तन्नः शंखः प्रचोदयात् ॥ इति ॥

घण्टापूजनम्—आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ॥ घण्टानादं प्रकुर्वीत पश्चाद् घण्टां प्रपूजयेत् ॥ ह्रीं घण्टास्थिताय गरुडाय नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥ घण्टामुद्रां प्रदर्शयेत् ॥

दीपपूजनम्—( घृतदीपं प्रज्वाल्य निर्वातस्थले निधाय–) "दीपस्थदेवतायै नमः" सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० । इति संपूज्य प्रार्थयेत् ॥ भो दीप देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् । यावत्कर्मसमाप्तिः स्यात्तावदत्र स्थिरो भव ॥ "जलं गृहीत्वा" अनेन पूजनेन दीपस्थदेवता प्रीयतां न मम ॥

---

## ॥ अथ गणपतिपूजनम् ॥

तत्रादौ रक्तवस्त्राच्छ्रते भद्रपीठे गोधूमराशिं कृत्वा तदुपरि अग्न्युत्तारणादिपूर्विकां सुवर्णादिमयीं गणेशस्य मूर्तिं पूगीफलेषु सिद्धिबुद्धिहित गणपतिं वा संस्थाप्य पूजयेत् ॥

तत्रादौ न्यासान् कुर्यात् ॥ तद्यथा ॥ सुमुखाय नमः वामहस्ते ॥ णाधिपाय० दक्षिणहस्ते ॥ उमापुत्राय० वामपादे ॥ गजाननाय० दक्षिपादे ॥ लंबोदराय० वामजानौ ॥ हरसूनवे० दक्षिणजानौ ॥ गजकर्णाय० ामकट्याम् ॥ वक्रतुंडाय० दक्षिणकट्याम् ॥ गुहाग्रजाय० नाभौ ॥ कदंताय० हृदये ॥ विकटाय० वामबाहुमूले ॥ विनायकाय० दक्षिण ाहुमूले ॥ कपिलाय० मुखे ॥ गजदंताय० दंतपङ्क्तौ ॥ विघ्नराजाय० ामनेत्रे ॥ वटवे० दक्षिणनेत्रे ॥ सुराग्रगण्याय० ललाटे ॥ हेरवाय० ोरसि ॥ महागणपतये० सर्वांगे ॥ इति देहन्यासान् कृत्वा हस्ते दूर्वांकुरान्गृहीत्वा देव स्पृष्ट्वा देवन्यासान् कुर्यात् ॥

ध्यानम्—श्वेताङ्गं श्वेतवस्त्रं सितकुसुमगणैः पूजितं श्वेतगन्धैः ीराब्धौ रत्नदीपैः सुरनरतिलकं रत्नसिंहासनस्थम् ॥ दोर्भिः पाशाङ्कुशाब्जाभयवरदयुतं चंद्रमौलिं त्रिनेत्रं ध्याये शान्त्यर्थमीशं गणपतिमलं श्रीसमेतं प्रसन्नम् ॥ सिद्धिबुद्धिसहितमहागणपतये नमः गणपतिं ्यायामि ॥

आवाहनम्—हे हेरम्ब त्वमेह्येहि ह्यम्बिकात्र्यम्बकात्मज । सिद्धिबुद्धियुतोऽध्यक्ष लक्षलाभपितः प्रभो ॥ नागास्य नागहारस्त्वं

गणनाथ चतुर्भुज । भूषितः स्वायुधैर्दिव्यैः पाशांकुशपरश्वधैः ॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः ॥ इहागत्य गृहाण त्वं पूजां क्रतुं च रक्ष मे ॥ सिद्धिबुद्धिसहितमहागणपतये नमः सिद्धिबुद्धिसहितं महागणपतिम् आवाहयामि ॥

प्रतिष्ठापनम्—प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ॥ प्रतिष्ठां ते करोम्यत्र मण्डले दैवतैः सह ॥ सिद्धिबुद्धिसहितमहागणपते सुप्रतिष्ठितो वरदो भव ॥

आसनम्--रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं परम् । आसनं च मया दत्तं गृहाण कृपया शुभम् ॥ सिद्धिबु० स० महागणपतये नमः आसनं समर्पयामि ॥

पाद्यम्--उष्णोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् । पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥ सिद्धिबु० महाग० नमः पाद्यं सम० ॥

अर्घ्यम्--रौप्यपात्रे स्थितं तोयं गन्धपुष्पफलान्वितम् । सहिरण्यं ददाम्यर्घ्यं गृहाण निर्मलं शुभम् ॥ सि० बु० स० महागणपतये नमः अर्घ्यं समर्पयामि ॥

आचमनीयम्—सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् । आचामार्थं मया दत्तं गृहाण कृपयोत्तमम् ॥ सि० बु० स० महागणपतये नमः आचमनीयं सम० ॥ ततः पञ्चामृतस्नानम् ॥

पयःस्नानम्—कामधेनुसमुद्भूतं सर्वेषां जीवनं परम् । पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥ सि० बु० स० महागणपतये नमः पयःस्नानं सम० । पयःस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

दधिस्नानम्—पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् । दध्यानीतं मया प्रीत्या स्नानार्थं प्रतिगृह्यताम् ॥ सि० बु० स०

महागणपतये नमः दधिस्नानं सम० । दधिस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० ॥

घृतस्नानम्—नवनीतसमुत्पन्नं सर्वसन्तोपकारकम् । घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥ सि० स० महागणपतये नमः घृतस्नानं सम० । घृतस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धो० स्ना० आचमनीयं सम० ॥

मधुस्नानम्—तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु । तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ सिद्धिबु० स० महाग० नमः मधुस्नानं समर्पयामि । मधुस्नानान्ते शुद्धो० सम० । शुद्धोदकस्नानान्ते आच० सम० ॥

शर्करास्नानम्—इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका । मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ सिद्धि० स० महाग० नमः शर्करास्नानं सम०। शर्करा० शुद्धो० सम०।शुद्धोद० आच० सम०॥

( पञ्चामृतस्नानम्—( एकतन्त्रेण )—" पयो दधि घृतं चैव मधु च शर्करा तथा ॥ स्नानार्थं ते प्रयच्छामि गृहाण त्वं प्रसीद मे ॥ सिद्धिबु० स० महागणपतये नमः एकतन्त्रेण पंचामृतस्नानं सम० ॥ )

गन्धोदकस्नानम्—मलयाचलसम्भूतं चन्दनागरुसंयुतम् । गन्धोदकं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ सि० स० महाग० नमः गन्धोदकस्नानं सम० । गन्धोदकस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं सम० ॥

उद्वर्तनस्नानम्—नानासुगन्धिद्रव्यं च चन्दनं रजनीयुतम् । उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ सिद्धि० स० महाग० नमः उद्वर्तनस्नानं सम० । उद्वर्तनस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥ पञ्चामृताङ्गपूजनत्वेन सर्वो-

पचारार्थे गन्धाक्षतपुष्पाणि सम० । अनेन पूर्वाराधनेन सि० स० महागo प्रीयतां न मम ॥ ततो निर्माल्यमुत्तरे विसृज्य पुनः गन्धाक्षतपुष्पैरभ्यर्च्य गन्धमिश्रितैर्जलैरभिषेकं कुर्यात् ॥

अभिषेकः–गणपतिस्तोत्रम्––प्रणम्य शिरसा देवं गौरीपुत्रं विनायकम् । भक्तावासं स्मरेन्नित्यमायुःकामार्थसिद्धये ॥ १ ॥ प्रथमं वक्रतुण्डञ्च ह्येकदन्तं द्वितीयकम् ॥ तृतीयं कृष्णपिङ्गाक्षं गजवक्त्रं चतुर्थकम् ॥ २ ॥ लम्बोदरं पञ्चमं च षष्ठं विकटमेव च ॥ सप्तमं विघ्नराजं च धूम्रवर्णं तथाष्टमम् ॥ ३ ॥ नवमं भालचन्द्रं च दशमं तु विनायकम् । एकादशं गणपतिं द्वादशं तु गजाननम् ॥ ४ ॥ द्वादशैतानि नामानि त्रिसन्ध्यं यः पठेन्नरः । न च विघ्नभयं तस्य सर्वसिद्धिकरं परम् ॥ ५ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थी लभते पुत्रान्मोक्षार्थी लभते गतिम् ॥ ६ ॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत् ॥ संवत्सरेण सिद्धिञ्च लभते नात्र संशयः ॥ ७ ॥ अष्टभ्यो ब्राह्मणेभ्यश्च लिखित्वा यः समर्पयेत् । तस्य विद्या भवेत्सर्वा गणेशस्य प्रसादतः ॥ ८ ॥ इति नारदपुराणे सङ्कटनाशनं गणपतिस्तोत्रम् ॥

## ॥ अथ गणपत्यथर्वशीर्षम् ॥

( ॐ ह्रीं श्रीः ) ॥ नमस्ते गणपतये ॥ त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्त्तासि । त्वमेव केवलं धर्तासि । त्वमेव केवलं हर्तासि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्मासि नित्यम् ॥ १ ॥ ऋतं वच्मि सत्यं वच्मि ॥ २ ॥ अव त्वं माम् अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् ।

द्विजानां गृहेऽभिषेकः कार्यश्चेदनेन गणपत्यथर्वशीर्षेण कार्यः ॥

अव पश्चात्तात् । अव पुरस्तात् । अवोत्तरात्तात् । अव दक्षिणात्तात् ।
अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात्
॥ ३ ॥ त्वं वाङ्मयस्त्वं चिन्मयः ॥ त्वमानंदमयस्त्वं ब्रह्ममयः ।
त्वं सच्चिदानंदाद्वितीयोसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो
विज्ञानमयोसि ॥ ४ ॥ सर्वं जगदिदं त्वत्तो जायते ॥ सर्वं जगदिदं
त्वत्तास्तिष्ठति । सर्वं जगदिदं त्वयि लयमेष्यति ॥ सर्वं जगदिदं त्वयि
प्रत्येति । त्वं भूमिरापोऽनलोऽनिलो नभः । त्वं चत्वारि वाक्पदानि
॥ ५ ॥ त्वं गुणत्रयातीतः । त्वमवस्थात्रयातीतः । त्वं देहत्रयातीतः ।
त्वं कालत्रयातीतः । त्वं मूलाधारस्थितोऽसि नित्यम् । त्वं शक्ति-
त्रयात्मकः । त्वां योगिनो ध्यायन्ति नित्यम् । त्वं ब्रह्मा त्वं
विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चंद्रमास्त्वं ब्रह्म-
भूर्भुवः स्वरोम् ॥ ६ ॥ गणादीन् पूर्वमुच्चार्य वर्णादींस्तदनन्तरम् ॥
अनुस्वार परतरः अर्धेन्दुलसितम् । तारेण रुद्धम् । एतत्तव मनुस्वरूपम् ।
गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् ।
बिंदुरुत्तररूपम् । नादः संधानम् । स ऽहिता संधिः ॥ सैषा गणेशविद्या ।
गणक ऋषिः । निचृद्गायत्रीछंदः । गणपतिर्देवता । ॐ गं गणपतये
नमः ॥ ७ ॥ एकदन्ताय विद्महे वक्रतुंडाय धीमहि । तन्नो दंती
प्रचोदयात् ॥ ८ ॥ एकदन्तं चतुर्हस्तं पाशमंकुशधारिणम् ॥ रदं च
वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ रक्तं लंबोदरं शूर्पकर्णकं रक्त-
वाससम् ॥ रक्तगंधानुलिप्तांगं रक्तपुष्पैः सुपूजितम् ॥ भक्तानुकंपिनं
देवं जगत्कारणमच्युतम् ॥ आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषा-
त्परम् ॥ एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ ९ ॥
नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लंबो-

द्रायैकदन्ताय विघ्ननाशिने शिवसुताय श्रीवरदमूर्त्तये नमः ॥ १० ॥ एतदथर्वशीर्षं योऽधीते स ब्रह्मभूताय कल्पते ॥ स सर्वतः सुखमेधते ॥ स सर्वविघ्नैर्न बाध्यते । स पंचमहापापात्प्रमुच्यते ॥ सायमधीयानो दिवसकृतं पापं नाशयति ॥ प्रातरधीयानो रात्रिकृतं पापं नाशयति ॥ सायं प्रातः प्रयुंजानो अपापो भवति ॥ सर्वत्राधीयानोऽपविघ्नो भवति ॥ धर्मार्थकाममोक्षं च विंदति ॥ इदमथर्वशीर्षमशिष्याय न देयम् ॥ यो यदि मोहाद्दास्यति स पापीयान् भवति ॥ सहस्रावर्तनात् यं यं काममधीते तं तमनेन साधयेत् ॥ ११ ॥ अनेन गणपतिमभिषिंचति स वाग्मी भवति ॥ चतुर्थ्यामनश्नञ्जपति स विद्यावान् भवति । इत्यथर्वणवाक्यम् । ब्रह्माद्यावरणं विद्यान्न बिभेति कदाचनेति ॥ १२ ॥ यो दूर्वांकुरैर्यजति स वैश्रवणोपमो भवति ॥ यो लाजैर्यजति स यशोवान्भवति स मेधावान् भवति । यो मोदकसहस्रेण यजति स वाञ्छितफलमवाप्नोति ॥ यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते । अष्टौ ब्राह्मणान् सम्यक् ग्राहयित्वा सूर्यवर्चस्वी भवति ॥ सूर्यग्रहे महानद्यां प्रतिमासन्निधौ वा जप्त्वा सिद्धमन्त्रो भवति ॥ महाविघ्नात्प्रमुच्यते ॥ महादोषात्प्रमुच्यते । महापापात्प्रमुच्यते । स सर्वविद्भवति स सर्वविद्भवति य एवं वेद ॥ १३ ॥ इत्युपनिषत् ॥ ॐ शांतिः ॥

अमृताभिषेकोऽस्तु । सिद्धि० महाग० अभिषेकस्नानं सम० ॥

शुद्धोदकस्नानम्—गंगादिसर्वतीर्थेभ्यो मया प्रार्थनया हृतम् । तोयमेतत्सुखस्पर्शं स्नानार्थं प्रतिगृह्यताम् ॥ सिद्धिबुद्धिसहितमहागणपतये नमः शुद्धोदकस्नानं सम० । आचमनीयं समर्पयामि ॥

ततो गणपतिं वस्त्रेण प्रोञ्छयित्वा पीठोपरि निदध्यात् ॥

वस्त्रोपवस्त्रे—सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे । मयोपपादिते तुभ्यं गृह्येतां वाससी त्वया ॥ सिद्धि० महागण० वस्त्रोपवस्त्रे सम० ॥ वस्त्रोपवस्त्रान्ते आचमनीयं सम० ॥

उपवीतम्—नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं मया दत्तं गृहाण परमेश्वर ॥ सिद्धि० स० महागण० नमः यज्ञोपवीतं समर्प० । यज्ञोपवीतान्ते आचमनीयं सम० ॥

गन्धः—श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं मया दत्तं पूजनाय प्रगृह्यताम् ॥ सिद्धि० स० महाग० न० गन्धं सम० ॥

अक्षताः—अक्षतास्तंडुलाः शुभ्राः कुङ्कुमाक्ताः सुशोभनाः । मया निवेदिता भक्त्या तान् गृहाण कृपां कुरु ॥ सिद्धि० स० महागणपतये नमः अक्षतान्समर्पयामि ॥

पुष्पाणि—माल्यादीनि सुगन्धीनि मालत्यादीनि वै मया । आनीतानि सुपुष्पाणि गृह्यन्तां पूजनाय ते ॥ सिद्धि० महागणपतये नमः पुष्पाणि समर्पयामि ॥

दूर्वाङ्कुराः—दूर्वा ह्यमृतसम्पन्ना शतमूला शताङ्कुरा । शतं पातकसंहन्त्री शतमायुष्यवर्धिनी ॥ सिद्धि० स० महागणपतये नमः दूर्वाङ्कुरान् समर्पयामि ॥

[ "अथाङ्गपूजा" ह्रीं गणेश्वराय नमः पादौ पूजयामि । ह्रीं विघ्नराजाय० जानुनी पूजयामि । ह्रीं आखुवाहनाय० ऊरू पूजयामि । ह्रीं हेरम्बाय० कटी पूजयामि । ह्रीं कामारिसूनवे० नाभिं पूजयामि । ह्रीं लम्बोदराय० उदरं पूजयामि । ह्रीं गौरीसुताय० स्तनौ पूजयामि । ह्रीं गणनायकाय० हृदयं पूजयामि । ह्रीं स्थूलकण्ठाय० कण्ठं पूजयामि । ह्रीं स्कन्दाग्रजाय० स्कन्धौ पूजयामि । ह्रीं पाशहस्ताय० हस्तौ पूजयामि । ह्रीं गजवक्त्राय० वक्त्रं पूजयामि । ह्रीं विघ्नहर्त्रे० ललाटं पूजयामि । ह्रीं सर्वेश्वराय० शिरः पूजयामि । ह्रीं गणाधिपाय० सर्वाङ्गं पूजयामि ॥

त्रिनेत्रं पाशं चैवाङ्कुशाढ्यं वरदमभयदं बाहुभिर्धारयन्तम् ॥ शक्त्या युक्तं गजास्यं पृथुतरजठरं नागयज्ञोपवीतं देवं चन्द्रार्धचूडं सकलभयहरं विघ्नराजं नमामि ॥ सिद्धिबुद्धिसहितमहागण० नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥

प्रदक्षिणा—यानि कानि च पापानि जन्मान्तरकृतानि च । तानि सर्वाणि नश्यन्ति प्रदक्षिणं पदे पदे ॥ पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादि फलं ददाति ॥ तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥ सिद्धिबुद्धिसहितमहागणपतये नमः प्रदक्षिणां सम० ॥ ततो विशेषार्घं दद्यात् ॥

विशेषार्घः—(ताम्रपात्रे जलं गृहीत्वा तत्र चन्दनाक्षतपुष्पाणि द्रव्यञ्च निक्षिप्य तदुपरि नारिकेलञ्च निधाय तत्पात्रं हस्तद्वये धारयेत् ॥) रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तानामभयङ्कर्ता त्राता भव भवार्णवात् ॥ द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥ अनेन सफलार्घेण फलदोऽस्तु सदा मम ॥ सिद्धि० महागणपतये नमः विशेषार्घं सम० ॥

प्रार्थना—त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति वरप्रदेति । विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव ॥ भक्तार्तिनाशनपराय गणेश्वराय सर्वेश्वराय सुखदाय सुरेश्वराय । विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते ॥ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपाय ते नमः । विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे । भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ॥ लम्बोदर

नमस्तुभ्यं सततं मोदकप्रिय। निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥

अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम्॥ तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वर॥ यत्पूजितं मया देव परिपूर्णं तदस्तु मे॥ गतं पापं गतं दुःखं गतं दारिद्र्यमेव च॥ आगता सुखसंपत्तिः पुण्याच्च तव दर्शनात्॥ यदक्षरं पदभ्रष्टं मात्राहीनं च यद्भवेत् तत्सर्वं क्षम्यतां देव प्रसीद परमेश्वर॥ कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतिस्वभावात्॥ करोमि यद्यत्सकलं परस्मै गणाधिपायेति समर्पयामि॥

सिद्धि० महागण० न० प्रार्थनापूर्वकं नमस्कारान् सम०॥

"हस्ते जलं गृहीत्वा"। अनेन यथामिलितोपचारैः कृतपूजनेन सिद्धिबुद्धिसहितः साङ्गः सपरिवारः श्रीमहागणपतिः प्रीयतां न मम॥

॥ इति गणपतिपूजनप्रयोगः॥

---

## ॥ अथ पुण्याहवाचनप्रयोगः॥

स्वपुरतः शुद्धायां भूमौ पञ्चवर्णैः श्वेतैस्तन्दुलैर्वाऽष्टदलं कार्यम्॥

भूमिं स्पृशेत्—विश्वाधाराऽसि धरणि शेषनागोपरि स्थिता॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना॥ तत्र भूमौ–

यवप्रक्षेपः[1]—यवोऽसि धान्यराजस्त्वं सर्वोत्पत्तिकरः शुभः॥ प्राणिनां जीवनोपायस्त्वां भूमौ स्थापयाम्यहम्॥

कलशस्थापनम्—हेमरूप्यादिसंम्भूतं ताम्रजं सुदृढं नवम्। अच्छिद्रं धौतकल्माषं कलशं स्थापयाम्यहम्॥

---

१ यवाभावेऽक्षतान् स्थापयेत्।

कलशे जलपूरणम्—जीवनं सर्वजीवानां पावनं पावनात्परम् । बीजं सर्वौषधीनां च तज्जलं पूरयाम्यहम् ॥

गन्धप्रक्षेपः—केशरागरुकङ्कोलघनसारसमन्वितम् । मृगनाभियुतं गन्धं कलशे प्रक्षिपाम्यहम् ॥

धान्यप्रक्षेपः—धान्यौषधी मनुष्याणां जीवनं परमं स्मृतम् ॥ बलप्रदां तु सर्वेषां कलशे प्रक्षिपाम्यहम् ॥

सर्वौषधीप्रक्षेपः—ओषध्यः सर्ववृक्षाणां तृणगुल्मलतास्तु याः । दूर्वासर्षपसंयुक्ताः कलशे ताः क्षिपाम्यहम् ॥

दूर्वाप्रक्षेपः—दूर्वां ह्यमृतसम्पन्नां शतमूलां शताङ्कुराम् । शतं पातकसंहर्त्रीं कलशे प्रक्षिपाम्यहम् ॥

पञ्चपल्लवप्रक्षेपः—अश्वत्थोदुम्बरप्लक्षचूतन्यग्रोधपल्लवाः । पञ्चैतान् पल्लवानस्मिन्कलशे स्थापयाम्यहम् ॥

सप्तमृत्प्रक्षेपः—अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद् ह्रदात् । राजस्थानाच्च गोष्ठाच्च मृदमानीय निक्षिपे ॥

फलप्रक्षेपः—पूगीफलमिदं दिव्यं पवित्रं पापनाशनम् । पुत्रपौत्रादिफलदं कलशे प्रक्षिपाम्यहम् ।

पञ्चरत्नप्रक्षेपः—कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्चरत्नानि कलशे प्रक्षिपाम्यहम् ॥

हिरण्यप्रक्षेपः—हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः । अनन्तपुण्यफलदं कलशे प्रक्षिपाम्यहम् ॥

( रक्तसूत्रेण ( वस्त्रेण वा ) कलशं वेष्टयेत् ॥ )

कलशवेष्टनम्--सूत्रं कार्पाससम्भूतं ब्रह्मणा निर्मितं पुरा । येन बद्धं जगत्तेन कलशं वेष्टयाम्यहम् ॥ ( कलशोपरि- )

पूर्णपात्रम्—विधानं सर्ववस्तूनां सर्वकार्यार्थसाधनम् ॥ सम्पूर्णः कलशो येन पात्रं तत्कलशोपरि ॥

( यजमानो हस्तेऽक्षतानादाय तत्र वरुणमावाहयेत् ॥ )

वरुणावाहनम्—आवाहयामि देवेशं वरुणं यादसां पतिम् । पापनाशकरं दिव्यं कलशेऽस्मिन् शुभावहम् ॥ अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् आवाहयामि स्थापयामि ॥

प्रतिष्ठापनम्--प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता । प्रतिष्ठां ते करोम्यत्र कलशे देवतैः सह ॥ ह्रीं वरुणाय नम वरुण सुप्रतिष्ठितो वरदो भव ॥

पूजनम्—ह्रीं वरुणाय नमः चन्दनं समर्पयामि ॥ ह्रीं वरु० नमः अक्षतान् सम० ॥ ह्रीं वरु० नमः पुष्पाणि सम० ॥ ह्रीं वरु० नमः सौभा० सम० ॥ ह्रीं वरु० नमः धूपं दीपं नैवेद्यं च सम० ॥ ह्रीं वरु० नमःपूगी० ताम्बू० सम०॥ ह्रीं वरु० नमःहिर० द० सम०॥ ह्रीं वरु० नमः आरार्ति० सम० ॥ ह्रीं वरु० नमः मन्त्रपुष्पाञ्जलिं समर्पयामि ॥ ह्रीं वरु० नमः प्रा० पू० नम० सम० ॥

जलं गृहीत्वा–अनेन पूजनेन वरुणः प्रीयतां न मम ॥

(एवं कलशे वरुणं सम्पूज्य कलशस्य चतुर्दिक्षु मध्ये च ।) पूर्वे इंद्राय नमः । दक्षिणे यमाय नमः । पश्चिमे वरुणाय नमः । उत्तरे कुबेराय नमः। मध्ये अपाम्पतये वरुणाय नमः।(इति संपूज्य स्वदक्षिणकरस्यानामिकया कलशं स्पृष्ट्वा अभिमंत्रयेत् ॥) कलशस्य मुखे विष्णुः

कण्ठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलशाम्बुसमाश्रिताः । अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ॥ आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः ॥ गंगे च यमुने चैव गोदावरि सरस्वति । कावेरि नर्मदे सिन्धो जलेऽस्मिन् सान्निधिं कुरु ॥

प्रार्थयेत्—देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि सदा कुंभ विधृतो विष्णुना स्वयम् ॥ त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥ शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः ॥ त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः ॥ त्वत्प्रसादादिमां पूजां कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा ॥ नमो नमस्ते स्फटिकप्रभाय सुश्वेतहाराय सुमङ्गलाय । सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते ॥ पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक । पुण्याहवाहनं यावत्तावत्त्वं सन्निधो भव ॥

यजमानः—अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय दक्षिणेन पाणिना स्वर्णपूर्णकलशं धारयित्वा (वदेत्)—दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ (विप्रा वदेयुः)[1]—तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ॥ पुनः— दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ तेनायुःप्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु ॥

१ आचार्यो वा वदेत् ।

पुनः—दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च ॥ तेनायुः प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु ॥ तेनायुः-प्रमाणेन पुण्यं पुण्याहं दीर्घमायुरस्तु* ॥

(ततश्चतुरो ब्राह्मणानुपवेश्य तेषां हस्तेषु आचार्यस्य हस्ते वा सुप्रोक्षितादिकरणम्।) ह्रीं शिवा आपः सन्तु। सन्तु शिवा आपः। ह्रीं सौमनस्यमस्तु। अस्तु सौमनस्यम्॥ ह्रीं अक्षतञ्चारिष्टञ्चास्तु। अस्त्वक्षतमरिष्टञ्च। ह्रीं गन्धाः पान्तु सौमङ्गल्यं चास्त्विति भवन्तो ब्रुवन्तु। गन्धाः पान्तु सौमङ्गल्यञ्चास्तु॥ ह्रीं अक्षताः पान्तु आयुष्यमस्त्विति भवन्तो ब्रुवन्तु। अक्षताः पान्तु आयुष्यमस्तु॥ ह्रीं पुष्पाणि पान्तु सौश्रियमस्त्विति भवन्तो ब्रुवन्तु। पुष्पाणि पान्तु सौश्रियमस्तु॥ ह्रीं ताम्बूलानि पान्तु ऐश्वर्यमस्त्विति भवन्तो ब्रुवन्तु। ताम्बूलानि पान्तु ऐश्वर्यमस्तु॥ ह्रीं पूगीफलानि पान्तु बहुफलमस्त्विति भवन्तो ब्रुवन्तु। पूगीफलानि पान्तु बहुफलमस्तु॥ ह्रीं दक्षिणाः पान्तु बहु देयञ्चास्त्विति भवन्तो ब्रुवन्तु। दक्षिणाः पान्तु बहुदेयञ्चास्तु॥

(यजमानो वदेत्) ह्रीं दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यं चास्त्विति भवन्तो ब्रुवन्तु॥ (विप्रा वदेयुः)—अस्तु ते दीर्घमायुः शान्ति पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्र बहुधनं चायुष्यम्॥ (यजमानो वदेत्) यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहं ह्रींकारमादिं कृत्वा ऋग्यजुःसामाथर्वाशीर्वचनं बहुऋषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये॥ वाच्यताम् (इति विप्रा ब्रूयुः)॥ (ततो यजमानो ब्राह्मणानां हस्तेऽक्षतान् दद्यात्ते च मन्त्रान्ते आशिषो दद्युः॥) स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु गोवाजिहस्तिधनधान्यसमृद्धिरस्तु। ऐश्वर्यमस्तु बलमस्तु रिपुक्षयोऽस्तु वंशे सदैव भवतां हरिभक्तिरस्तु॥ इत्याशीर्वादः॥ (ततो यजमानो ब्राह्मणान् प्रति वदेत्) व्रतजपनियमतपःस्वाध्यायक्रतुदयादमदाननिशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम्॥ समाहितमनसः स्मः (इति ब्राह्मणा वदेयुः)॥ (एवं सर्वत्र) प्रसीदन्तु भवन्तः। प्रसन्नाः स्मः॥ ह्रीं शान्तिरस्तु। (अस्तु शान्तिः)॥ ह्रीं पुष्टिरस्तु॥ ह्रीं तुष्टिरस्तु॥

ह्रीं वृद्धिरस्तु ॥ ह्रीं अविघ्नमस्तु ॥ ह्रीं आयुष्यमस्तु ॥ ह्रीं आरोग्यमस्तु ॥ ह्रीं शिवं कर्मास्तु ॥ ह्रीं कर्मसमृद्धिरस्तु ॥ ह्रीं धर्मसमृद्धिरस्तु ॥ ह्रीं वेदसमृद्धिरस्तु ॥ ह्रीं शास्त्रसमृद्धिरस्तु ॥ ह्रीं धनधान्यसमृद्धिरस्तु ॥ ह्रीं पुत्रपौत्रसमृद्धिरस्तु ॥ ह्रीं इष्टसम्पदस्तु ॥ ह्रीं अरिष्टनिरसनमस्तु ॥ ह्रीं यत्पापं रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु ॥ ह्रीं यच्छ्रेयस्तदस्तु ॥ ह्रीं उत्तरे कर्मणि निर्विघ्नमस्तु ॥ ह्रीं उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ ह्रीं उत्तरोत्तराः क्रियाः शुभाः शोभनाः सम्पद्यन्ताम् ॥ ह्रीं तिथिकरणमुहूर्तनक्षत्रग्रहलग्नसम्पदस्तु ॥ ( पात्रे उदकसेकः ) ह्रीं तिथिकरणमुहूर्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम् ॥ ह्रीं तिथिकरणे समुहूर्ते सनक्षत्रे सग्रहे साधिदेवते प्रीयेताम् ॥ ह्रीं दुर्गापाञ्चाल्यौ प्रीयेताम् ॥ ह्रीं अग्निपुरोगा विश्वेदेवाः प्रीयन्ताम् ॥ ह्रीं इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् ॥ ह्रीं वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् ॥ ह्रीं माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् ॥ ह्रीं अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ॥ ह्रीं विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् ॥ ह्रीं ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् ॥ ह्रीं ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ॥ ह्रीं श्रीसरस्वत्यौ प्रीयेताम् ॥ ह्रीं श्रद्धामेधे प्रीयेताम् ॥ ह्रीं भगवती कात्यायनी प्रीयताम् ॥ ह्रीं भगवती माहेश्वरी प्रीयताम् ॥ ह्रीं भगवती ऋद्धिकरी प्रीयताम् ॥ ह्रीं भगवती सिद्धिकरी प्रीयताम् ॥ ह्रीं भगवती पुष्टिकरी प्रीयताम् ॥ ह्रीं भगवती तुष्टिकरी प्रीयताम् ॥ ह्रीं भगवन्तौ विघ्नविनायकौ प्रीयेताम् ॥ ह्रीं सर्वाः कुलदेवताः प्रीयन्ताम् ॥ ह्रीं सर्वा ग्रामदेवताः प्रीयन्ताम् ॥ ( बहिः पूर्वस्याम् ॥ ) ह्रीं हताश्च ब्रह्मद्विषः ॥ ह्रीं हताश्च परिपन्थिनः ॥ ह्रीं हताश्च विघ्नकर्तारः ॥ ह्रीं शत्रवः पराभवं यान्तु ॥ ह्रीं शाम्यन्तु घोराणि ॥ ह्रीं शाम्यन्तु पापानि ॥ ह्रीं शाम्यन्त्वीतयः ॥( पुनः पात्रे ) ह्रीं शुभानि वर्द्धन्ताम् ॥ ह्रीं शिवा आपः सन्तु ॥ ह्रीं शिवा ऋतवः सन्तु ॥ ह्रीं शिवा ओषधयः सन्तु ॥ ह्रीं शिवा वनस्पतयः सन्तु ॥ ह्रीं शिवा नद्यः सन्तु ॥ ह्रीं शिवा गिरयः सन्तु ॥ ह्रीं शिवा अतिथयः सन्तु ॥ ह्रीं शिवा अग्नयः सन्तु ॥ ह्रीं शिवा आहुतयः सन्तु ॥ ह्रीं अहोरात्रे शिवे स्याताम् ॥ ह्रीं शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसोमसहिता आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ॥ ह्रीं भगवान्नारायणः प्रीयताम् ॥ ह्रीं भगवान्पर्जन्यः प्रीयताम् ॥ ह्रीं भगवान् स्वामी महासेनः प्रीयताम् ॥

*पुण्याहकालान्वाचयिष्ये (यज०)१ वाच्यताम् (इति विप्रा ब्रूयुः)॥

पुण्याहम्—ब्राह्मं पुण्यं महर्यच्च सृष्टयुत्पादनकारकम् ॥ वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः ॥ १ ॥ भो ब्राह्मणाः! (मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य संकल्पोक्ताख्यस्य) अस्य कर्मणः पुण्याहं भवन्तो ब्रुवन्तु ॥ अस्तु पुण्याहम् (इति विप्राः)॥ एवं त्रिः ॥ ३ ॥

कल्याणम्—पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् ॥ ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः ॥ २ ॥ भो ब्राह्मणाः॥ (मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य संकल्पोक्ताख्यस्य) अस्य कर्मणः कल्याणं भवन्तो ब्रुवन्तु ॥ अस्तु कल्याणम्। (इति विप्राः)॥ एवं त्रिः ॥३॥

ऋद्धिः—सागरस्य यथा वृद्धिर्महालक्ष्म्यादिभिः कृता ॥ सम्पूर्णा सुप्रभावा च तां तु ऋद्धिं ब्रुवन्तु नः ॥ ३ ॥ भो ब्राह्मणाः! (मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य संकल्पोक्ताख्यस्य) अस्य कर्मणः ऋद्धिं भवन्तो ब्रुवन्तु ॥ कर्म ऋद्ध्यताम्। (इति विप्राः)॥ एवं त्रिः ॥

स्वस्ति—स्वस्तिस्तु याऽविनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः॥ भो ब्राह्मणाः! (मह्यं सकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य संकल्पोक्ताख्यस्य) अस्य कर्मणः स्वस्तिं भवन्तो ब्रुवन्तु ॥ आयुष्मते स्वस्ति ॥ (इति विप्राः)॥ एवं त्रिः ॥

श्रीः—समुद्रमथनाज्जाता जगदानन्दकारिका ॥ हरिप्रिया च माङ्गल्या तां श्रियं च ब्रुवन्तु नः ॥ भो ब्राह्मणाः! (मह्यं सकुटुम्बिने

महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय मया क्रियमाणस्य संकल्पोक्ताख्यस्य ) अस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु ॥ अस्तु श्रीः ॥ ( इति विप्राः ) ॥ एवं त्रिः ॥

( ततो यजमानो हस्ते जलमादाय। ) मया कृतेऽस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् महागणपतिप्रसादाच्च सर्वः परिपूर्णोऽस्तु ॥ अस्तु परिपूर्णः ( इति विप्राः ) ॥

अथाभिषेकः ॥ ( अविधुराश्चत्वारो ब्राह्मणा आचार्यो वा वाचनकलशाज्जलं निष्कास्य तज्जलेन वा प्रीयतामित्यस्य जलेन यथाकालं यजमानमूर्ध्नि अभिषेकं कुर्युः ॥ )

[ सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते । आखण्डलोऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः। ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु ते सदा॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिः कान्तिस्तुष्टिश्च मातरः॥ एतास्त्वामभिषिञ्चन्तु देवपत्न्यः समागताः ॥ आदित्यश्चन्द्रमा भौमबुधजीवसितार्कजाः । ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः ॥ ऋषयो मुनयो गावो देवमातर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च । औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः सागराः शैलास्तीर्थानि जलदा नदाः । एतास्त्वामभिषिञ्चन्तु सर्वकामार्थसिद्धये ॥ ]

सहस्राक्षं शतधारमृषिभिः पावनं कृतम् । तेन त्वामभिषिञ्चामि पावमानं पुनातु तत् ॥ भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥ यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि । ललाटे कर्णयोरक्ष्णोरापो निघ्नन्तु ते सदा ॥ शान्तिः शान्तिः सुशान्तिर्भवतु ॥ अमृताभिषेकोऽस्तु ॥ हस्ते जलं गृहीत्वा ॥ अभिषेक-

कर्तृकेभ्यो ब्राह्मणेभ्यो यथोत्साहं दक्षिणां दास्ये तेन श्रीकर्माधीशः प्रीयताम् ॥ अनेन पुण्याहवाचनेन श्रीभगवान् प्रजापतिः प्रीयताम् ॥

॥ इतिपुण्याहवाचनप्रयोगः ॥

---

# ॥ अथ गौर्यादिमातृकास्थापनम् ॥

तत्रादौ रक्तवस्त्रास्तृते भद्रपीठे सप्तदशगोधूमपुंजान् कृत्वा तदुपरि पूगीफलानि निधाय अक्षतान् गृहीत्वा यथोक्तस्थानेषु गणेशसहितमातृकाणाम् आवाहनं कुर्यात् ॥

तत्र क्रमः—गौरी पद्मा शची मेधा सावित्री विजया जया ॥ देवसेना स्वधा स्वाहा मातरो लोकमातरः ॥ १ ॥ धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवता ॥ गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडश ॥२॥ तद्यथा ॥

[ अत्र केचित् " मातरो लोकमातरः " इति सर्वासां विशेषणे मत्वा " गणेशेनाधिका ह्येता वृद्धौ पूज्याश्चतुर्दश " इति मत्वा चतुर्दशमातृकाणामावाहनं कुर्वन्ति तदा तन्मते गणेशसहितानां गौर्यादिचतुर्दशमातृकाणामावाहनं पूजनं च कार्यम् ]

( सगणेशगौर्यादिमातृकाणां सप्तघृतमातृकाणाञ्चैकतन्त्रेण पूजनं कर्तव्यं चेत् सगणेशगौर्यादीनामावाहनं कृत्वा श्रियादिसप्तघृतमातृकाणां चावाहनं कृत्वा ( प्रतिष्ठा सर्वदेवानाम्० ) इति प्रतिष्ठाप्य " वसोर्धारासमन्वितसगणेशगौर्यादिमातृभ्यो नमः " आसनं समर्पयामि । पाद्यं समर्पयामि । एवं अर्घ्यम् आचमनीयं स्नानं पञ्चामृतस्नानं गन्धोदकस्नानम् उद्वर्तनस्नानम् अभिषेकस्नानं शुद्धोदकस्नानं वस्त्रोपवस्त्रे गन्धम् अक्षतान् पुष्पाणि सौभाग्यद्रव्यं धूप दीपं नैवेद्यं पूगीफलतांबूलं हिरण्यदक्षिणाम् आरार्तिक प्रदक्षिणां मन्त्रपुष्पाञ्जलिं विशेषार्घं प्रार्थनापूर्वकनमस्कारान् समर्पयामि इति संपूजयेत् ॥ " जलं

गृहीत्वा-अनेन पूजनेन वसोर्धारासमन्वितसगणेशगौर्यादिमातरः प्रीयन्ताम् ॥ इति पूजनं कर्तव्यम् ॥)

॥ सगणेशगौर्यादिषोडशमातृकाणां स्थापनकोष्टकम् ॥ १ ॥

| | | | | |
|---|---|---|---|---|
| स्वाहा ११ | लोकमा. १३ | धृतिः १४ | मातरः १२ | स्वधा १० |
| देवसे० ९ | कुलदे० १७ | गणेशः १ | विजया ७ | |
| जया ८ | पद्मा ३ | गौरी २ | सावित्री ६ | |
| तुष्टिः १६ | मेधा ५ | शची ४ | पुष्टिः १५ | |

मध्याग्नेये गणेशं तु नैर्ऋत्यां गौरीमेव च ॥
पद्मां तदुत्तरे वायौ पश्चिमे तु शचीं तथा ॥ १ ॥
मेधां तदुत्तरे चैव सावित्रीं दक्षिणे तथा ॥
तत्पूर्वे विजयां चैव ह्युत्तरे तु जयां तथा ॥ २ ॥
तत्पूर्वे देवसेनां च बाह्याग्नेये स्वधां तथा ॥
बाह्येशान्यां तथा स्वाहां मातृर्वै बाह्यपूर्वके ॥ ३ ॥
तदुत्तरे लोकमातृर्मातृमध्ये धृतिं तथा ॥
बाह्यनैर्ऋत्यके कोणे पुष्टिं संस्थापयेत् क्रमात् ॥ ४ ॥
बाह्यवायौ तु तुष्टिं च मध्येशे कुलदेवताम् ॥
गणेशपूर्विका ह्येवं स्थापयेन्मातृकाःसदा ॥ ५ ॥

१ एवमुपरोक्तप्रकारेण सगणेशगौर्यादिमातृकाणा स्थापनं कर्तव्यं वा ईशानकोष्ठादारभ्य क्रमेण कर्तव्यम् ॥ चतुर्दशमातृकास्थापनपक्षेऽपि ईशानकोणादारभ्य स्थापनं कर्तव्यम् ।

[॥ सगणेशगौर्यादिषोडशमातृकास्थापनकोष्ठकम् ॥ २ ॥

ई.  पू.  अ.

| | | | |
|---|---|---|---|
| स्वधा १० | लोकमा. १३ | मातरः १२ | स्वाहा ११ |
| देवसे० ९ | कुलदे० १७ | पद्मा ३ | विज० ७ |
| जया ८ | धृतिः १४ | गौरी २ | सावि० ६ |
| | ग०१ | | |
| तुष्टिः १६ | मेधा ५ | शची ४ | पुष्टिः १५ |

उ.  द.

वा  प.  नै.

कात्यायनः—वायुचतुष्कमध्यस्थं गणेशं तत्र पूजयेत् ॥ मध्यनैर्ऋत्यके कोणे गौरी पद्मा तु पावके ॥ १ ॥ शची पश्चिमतो मेधा सावित्री विजया यमे ॥ जयोत्तरे देवसेना स्वधा चेशान एव च ॥ २ ॥ स्वाहाऽऽग्नेये तथा चैन्द्र्यां मातरो लोकमातरः ॥ मध्यवायौ धृतिश्चैव नैर्ऋत्ये पुष्टिरेवच ॥ ३ ॥ तुष्टिश्चैव तु वायव्ये मध्येशे कुलदेवता ॥ प्रादक्षिण्यक्रमात्स्थाप्या ईशानदिशतोऽपि वा ॥ ४ ॥ ]

(मध्याग्नेये) गणपतये नमः गणपतिम् आवाहयामि स्थापयामि ॥१॥
( नैर्ऋत्याम् ) गौर्यै नमः गौरीम् आवाहयामि स्थापयामि ॥ २ ॥
( वायव्ये ) पद्मायै नमः पद्माम् „ „ ॥३॥
( वायपश्चिमे ) शच्यै नमः शचीम् „ „ ॥४॥
( तदुत्तरे ) मेधायै नमः मेधाम् „ „ ॥५॥
( दक्षिणे ) सावित्र्यै नमः सावित्रीम् „ „ ॥६॥
( तत्पूर्वे ) विजयायै नमः विजयाम् „ „ ॥७॥
( उत्तरे ) जयायै नमः जयाम् „ „ ॥८॥

---

## ॥ समन्त्रकश्रीगौर्याद्यावाहनम् ॥

गणपतिः-एकदन्तं शूर्पकर्णं सर्वविघ्नहरं सदा ॥
त्रैलोक्यवन्दितं देवं गणेशं स्थापयाम्यहम् ॥ १ ॥

गौरी- हिमाद्रितनयां देवीं वरदां भैरवप्रियाम् ॥
लंबोदरस्य जननीं गौरीमावाहयाम्यहम् ॥ २ ॥

पद्मा- पद्माभां पद्मवदनां पद्मनाभां परिस्थिताम् ॥
जगत्प्रियां पद्मवासां पद्मामावाहयाम्यहम् ॥ ३ ॥

शची- दिव्यरूपां विशालाक्षीं शुक्लकुंडलधारिणीम् ॥
रक्तमुक्ताद्यलंकारां शचीमावाहयाम्यहम् ॥ ४ ॥

मेधा- मेधां विष्णुप्रियां नित्यं जगन्मोहनकारिणीम् ॥
मम यज्ञे महाभागां मेधामावाहयाम्यहम् ॥ ५ ॥

सावित्री- जगत्सृष्टिकरीं धात्रीं देवीं प्रणवमातृकाम् ॥
वेदगर्भामृतुमयीं सावित्रीं स्थापयाम्यहम् ॥ ६ ॥

विजया- सर्वास्त्रधारिणीं देवीं सर्वाभरणभूषिताम् ॥
सर्वदेवनुतां ध्यातां विजयां स्थापयाम्यहम् ॥ ७ ॥

जया- सुरारिमथिनीं देवीं देवानामभयप्रदाम् ॥
त्रैलोक्यवन्दितां देवीं जयामावाहयाम्यहम् ॥ ८ ॥

(तत्पूर्वे) देवसेनायै नमः देवसेनाम् आवा० स्थाप० ॥९॥
(वाह्याग्निकोणे) स्वधायै नमः स्वधाम् आवाहयामि स्थापयामि॥१०॥
(वाह्येशाने) स्वाहायै नमः स्वाहाम् ,, ,, ॥११॥
(पूर्वे) मातृभ्यो नमः मातृः ,, ,, ॥१२॥
(तदुत्तरे) लोकमातृभ्यो नमः लोकमातृः आवा० स्थाप० ॥१३॥
(मातृलोकमातृमध्ये) धृत्यै नमः धृतिम् ,, ,, ॥१४॥
(वाह्यनैर्ऋत्ये) पुष्ट्यै नमः पुष्टिम् ,, ,, ॥१५॥
(वाह्यवायव्ये) तुष्ट्यै नमः तुष्टिम् ,, ,, ॥१६॥
(मध्येशानकोणे) कुलदेवतायै नमः कुलदेवताम् आ०स्था०॥१७॥

---

देवसेना- मयूरवाहनां देवीं खड्गशक्तिधनुर्धराम् ॥
आवाहयेद्देवसेनां तारकासुरमर्दिनीम् ॥ ९ ॥
स्वधा- कव्यमादाय सततं पितृभ्यो या प्रयच्छति ॥
पितृलोकार्चितां देवीं स्वधामावाहयाम्यहम् ॥ १० ॥
स्वाहा- हविर्गृहीत्वा सततं देवेभ्यो या प्रयच्छति ॥
तां दिव्यरूपां वरदां स्वाहामावाहयाम्यहम् ॥ ११ ॥
मातरः- आवाहयाम्यहं मातॄः सकला लोकपूजिताः ॥
सर्वकल्याणरूपिणीर्वरदा दिव्यभूषिताः ॥ १२ ॥
लोकमातरः-आवाहयेल्लोकमातॄर्जयन्तीप्रमुखाः शुभाः ॥
नानाभीष्टप्रदाः शान्ताः सर्वलोकहितावहाः ॥ १३ ॥
धृतिः- सर्वहर्षकरीं देवीं भक्तानामभयप्रदाम् ॥
हर्षोत्फुल्लास्यकमलां धृतिमावाहयाम्यहम् ॥ १४ ॥
पुष्टिः- पोषयन्तीं जगत्सर्वं स्वदेहप्रभवाव्ययम् ॥
बहुपुष्टिकरीं देवीं पुष्टिमावाहयाम्यहम् ॥ १५ ॥
तुष्टिः- आवाहयाम्यहं तुष्टिं सूक्ष्मवस्त्रान्वितां शुभाम् ॥
संतोषो भविता चैव रक्षणायाध्वरे शुभे ॥ १६ ॥
कुलदेवता-आवाहयाम्यहं देवीमैश्वर्यसुखदायिनीम् ॥
वंशवृद्धिकरीं नित्यां धनदेवीं कुलांबिकाम् ॥ १७ ॥

एवं गौर्यादीनामावाहनं 'प्रतिष्ठा सर्वे०' इति स्थापनं च कृत्वा यथालाभोपचारैः "सगणेशगौर्यादिमातृभ्यो नमः" आसनं सम०। एवं क्रमेण पाद्यं स० । अर्घ्यं स० । आचमनीयं स० । स्नानं स० । पंचामृतस्नानं स० । गन्धोदकस्नानं स० । उद्वर्तनस्नानं स० । अभिषेकस्नानं स०। शुद्धोदकस्नानं स०। वस्त्रोपवस्त्रे स०। गन्धं स०। अक्षतान् स०।पुष्पाणि स०। पुष्पमालां स०। सौभाग्यद्रव्यं स०।धूपं स० दीपं स०। नैवेद्यं स०। पूगीफलतांबूलं स०। हिरण्यदक्षिणां स० । आरार्तिकं स०। प्रदक्षिणां स०। मन्त्रपुष्पांजलिं स०। विशेषार्घं स०।प्रार्थनापूर्वक-नमस्कारान् समर्पयामि । इति संपूज्य प्रार्थयेत् ॥ गणेशपूर्विका देव्यो गौर्यादिप्रमुखाः स्मृताः॥ प्रसीदन्तु हि कल्याण्यो निर्विघ्नं कुरुताध्वरम् ॥ इति ॥ जलमादाय—अनेन पूजनेन सगणेशगौर्यादिमातरः प्रीयन्ताम् ॥

ततो भित्तौ इष्टिकायां वा कुंकुमोपरि घृतेन सप्तरेखा उत्तरो-त्तरक्रमेण कुर्यात् ॥ तासां नामानि ॥ श्रीश्च लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा सरस्वती ॥ मांगल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः ॥ १ ॥ आवाहनं कुर्यात् । तद्यथा ।

श्रियै नमः श्रियम् आवाहयामि स्थापयामि ॥ १ ॥
लक्ष्म्यै नमः लक्ष्मीम् आवाहयामि स्थापयामि ॥ २ ॥
धृत्यै नमः धृतिम् आवाहयामि स्थापयामि ॥ ३ ॥

---

श्रीः— सुवर्णपद्महस्तां तां विष्णोर्वक्षःस्थले स्थिताम् ॥
त्रैलोक्यवल्लभां देवीं श्रियमावाहयाम्यहम् ॥ १ ॥
लक्ष्मीः— शुभलक्षणसंपन्नां क्षीरसागरसंभवाम् ॥
चंद्रस्य भगिनीं सौम्यां लक्ष्मीमावाहयाम्यहम् ॥ २ ॥
धृतिः— संसारधारणपरां धैर्यलक्षणसंयुताम् ॥
सर्वसिद्धिकरीं देवीं धृतिमावाहयाम्यहम् ॥ ३ ॥

मेधायै नमः मेधाम् आवाहयामि स्थापयामि ॥ ४ ॥
पुष्ट्यै नमः पुष्टिम् आवाहयामि स्थापयामि ॥ ५ ॥
श्रद्धायै नमः श्रद्धाम् आवाहयामि स्थापयामि ॥ ६ ॥
सरस्वत्यै नमः सरस्वतीम् आवाहयामि स्थापयामि ॥ ७ ॥

एवमावाहनं कृत्वा तत्र मध्यमातृकोपरि गुडेन रौप्यमुद्रां स्थापयेत् ॥ तत्र मंत्रः । "यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम् ॥ परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ॥" ततः "प्रतिष्ठा सर्वदेवानां०" इति प्रतिष्ठापनं च कृत्वा "श्रियादिसप्तघृतमातृकाभ्यो नमः" आसनं समर्पयामि ॥ पाद्यं स० । अर्घ्यं स० । आचमनीयं सम० । स्नानं स० । पंचामृतस्नानं स० । गन्धोदकस्नानं स० । उद्वर्तनस्नानं स० ॥ अभिषेकस्नानं स० । शुद्धोदकस्नानं स० । वस्त्रोपवस्त्रे स० । गन्धं स० । अक्षतान् स० । पुष्पाणि स० । पुष्पमालां स० । सौभाग्यद्रव्यं स० । धूपं स० । दीपं स० । नैवेद्यं स० । पूगीफलतांबूलं स० । हिरण्यदक्षिणां स० । आरार्तिक्यं स० । प्रदक्षिणां स० । मन्त्रपुष्पांजलिं सम० ॥ विशेषार्घं स० । प्रार्थनापूर्वकनमस्कारान् सम० । ( इति

---

मेधा- सदसत्कार्यकरणक्षमां बुद्धिविशालिनीम् ॥
मम कार्ये शुभकरीं मेधामावाहयाम्यहम् ॥ ४ ॥
पुष्टि.- सोमरूपां सुवर्णाभां विद्युज्ज्वलितकुण्डलाम् ॥
जननीं पुष्टिकरिणीं पुष्टिमावाहयाम्यहम् ॥ ५ ॥
श्रद्धा- भूतग्राममिदं सर्वमजेन श्रद्धया कृतम् ॥
श्रद्धया प्राप्यते सत्यं श्रद्धामावाहयाम्यहम् ॥ ६ ॥
सरस्वती-प्रणवस्यैव जननीं रसनाग्रस्थितां सदा ॥
प्रागल्भ्यदात्रीं चपलां वाणीमावाहयाम्यहम् ॥ ७ ॥

पूर्ववत् आसनपाद्यादिभिः संपूज्य ) प्रार्थयेत् ॥ श्रियादिसप्तमातृभ्यो नमो वाग्भ्यः सदा मम । कल्याणं ताः प्रयच्छन्तु श्रियादिघृतमातरः ॥इति॥ जलमादाय–अनेन पूजनेन श्रियादिसप्तघृतमातरः प्रीयन्ताम्॥

॥ इति गौर्यादिमातृकास्थापनप्रयोगः ॥

---

## ॥ आयुष्यमन्त्रजपः ॥

विप्रा हस्तेऽक्षतान् गृहीत्वा सपत्नीकयजमानस्यायुष्याभिवृद्ध्यर्थम् आयुष्यमन्त्रजपं कुर्युः ॥ यथा–स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु गोवाजिहस्तिधनधान्यसमृद्धिरस्तु ॥ ऐश्वर्यमस्तु बलमस्तु रिपुक्षयोऽस्तु वंशे सदैव भवतां हरिभक्तिरस्तु ॥ आयुष्यम् आयुष्यम् आयुष्यम् । आयुष्याभिवृद्धिरस्तु ॥ इत्यक्षतान् यजमानमूर्ध्नि निःक्षिपेयुः ॥

॥ इत्यायुष्यमन्त्रजपः ॥

---

## ॥ वैश्वदेवसंकल्पः ॥

अत्र प्रथमं वैश्वदेवः ॥ तदभावे तज्जनितदोषपरिहाराय तंदुलपात्रं सघृतं सदक्षिणाकमाचार्याय वा वैश्वदेवकर्त्रे कस्मैचिद्ब्राह्मणाय दद्यात्॥

यथा–( यजमानो हस्ते सदक्षिणाकं सघृतं तंदुलपात्रं गृहीत्वा वदेत्–) अस्मिन् कर्मणि विहितवैश्वदेवाकरणजनितप्रत्यवायपरिहारार्थं वैश्वदेवकरणजनितफलप्राप्त्यर्थम् इदं सदक्षिणाकं सघृतं तंडुलपात्रम् आचार्याय ( वा अमुकशर्मणे ब्राह्मणाय ) अहं दास्ये तेन वैश्वदेव-करणजनितफलप्राप्तिद्वारा मारीप्सितकर्मण्याधिकारसिद्धिरस्तु ॥

॥ इति वैश्वदेवसंकल्पः ॥

---

१ अत्र कचित् मातृकोमयपार्श्वे कुलाचारात् माण्ड्युम्न ( विश्वाधारासीत्यादिपूर्णपात्रान्त कृत्वा तस्योपरि नारिकेल निधाय वरूणपूजन च विधाय ) स्थापयित्वा तत्र कुलदेवताया गोत्रजाया पूजन कुर्वन्ति । कुत्रचिद्देशे इद क्रियते कुत्रचिन्न क्रियते यथाकुलाचार कर्तव्यम् ॥

## ॥ अथ नान्दीश्राद्धप्रयोगः ॥

नांदीश्राद्धं सपिंडकमपिंडकं वा फलं समानम् ॥ अपिंडकःप्रयोगोऽयम् ॥

ताम्रपात्रे त्रीन् तंडुलपुञ्जान् कृत्वा तदुपरि पूगीफलानि निधाय दक्षिणहस्ते सजलदुर्वांकुरान् गृहीत्वा पाद्यादिकं दद्यात् ॥ यथा–

पाद्यम् ॥ सत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥१॥ गोत्राः पितृपितामहप्रपितामहाः सपत्नीका नांदीमुखा इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ २ ॥ द्वितीयगोत्राः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नांदीमुखा इदं वः पाद्यं पादावनेजनं पादप्रक्षालनं वृद्धिः ॥ ३ ॥

जलमादाय — अद्येत्यादि० तिथौ अमुककर्माङ्गत्वेन सांकल्पेन विधिना नांदीश्राद्धमहं करिष्ये ॥

आसनदानम् ॥ सत्यवसुसंज्ञकानां विश्वेषां देवानां नांदीमुखानामिदमासनं सुखासनं नान्दीश्राद्धे क्षणौ क्रियेतां तथा प्राप्नुतां भवन्तौ । प्राप्नवाव ॥१॥ गोत्राणां पितृपितामहप्रपितामहानां सपत्नीकानां नांदीमुखानामिदमासनं सुखासनं नान्दीश्राद्धे क्षणाः क्रियन्तां तथा प्राप्नुवन्तु भवन्तः । प्राप्नवाम ॥ २ ॥ द्वितीयगोत्राणां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां नांदीमुखानामिदमासनं सुखासनं नान्दीश्राद्धे क्षणाः क्रियन्तां तथा प्राप्नुवन्तु भवन्तः । प्राप्नवाम ॥ ३ ॥

गंधादिदानम् ॥१॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नान्दीमुखेभ्य इदं गंधाद्यर्चनं नमः संपद्यतां वृद्धिः॥२॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्य इदं गंधाद्यर्चनं नमः संपद्यतां

वृद्धिः ॥ ३ ॥ द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्य इदं गन्धाद्यर्चनं नमः संपद्यतां वृद्धिः ॥

भोजनसंकल्पः ॥ १ ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नांदीमुखेभ्यो युग्मयुग्मब्राह्मणभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यम् अमृतरूपेण नमः संपद्यतां वृद्धिः ॥ २ ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्यो युग्मयुग्मब्राह्मणभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यम् अमृतरूपेण नमः संपद्यतां वृद्धिः ॥ ३ ॥ द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्यो युग्मयुग्मब्राह्मणभोजनपर्याप्तमन्नं तन्निष्क्रयीभूतं किंचिद्धिरण्यम् अमृतरूपेण नमः संपद्यतां वृद्धिः ॥

सक्षीरयवमुदकदानम् ॥ १ ॥ सत्यवसुसंज्ञका विश्वेदेवा नांदीमुखाः प्रीयन्ताम् ॥ २ ॥ गोत्राः पितृपितामहप्रपितामहाः सपत्नीका नांदीमुखाः प्रीयन्ताम् ॥ ३ ॥ द्वितीयगोत्रा मातामहप्रमातामहवृद्धप्रमातामहाः सपत्नीका नान्दीमुखाः प्रीयन्ताम् ॥

आशिषां ग्रहणम् ॥ [1]गोत्रं नोऽभिवर्द्धताम् । [2]अभिवर्द्धतां वो गोत्रम् ॥ दातारो नोऽभिवर्द्धन्ताम् । अभिवर्द्धन्तां वो दातारः ॥ संततिर्नोऽभिवर्द्धताम् । अभिवर्द्धतां वः संततिः ॥ श्रद्धा च नो मा व्यगमत् । मा व्यगमत् वः श्रद्धा ॥ बहुदेयं च नोऽस्तु । अस्तु वो बहुदेयम् ॥ अन्नं च नो बहु भवेत् । भवतु वो बह्वन्नम् ॥ अतिथींश्च

१ यजमानः प्रार्थयेत् ॥ २ ब्राह्मणा आशीर्वाचं वदेयुः ॥ आशिषामन्तपर्यन्तमेवं कुर्युः ॥

लभामहै । लभन्तां वोऽतिथयः ॥ याचितारश्च नः सन्तु । सन्तु वो याचितारः । एता आशिषः सत्याः सन्तु । सन्त्वेताः सत्या आशिषः ॥

दक्षिणादानम् ॥ १ ॥ सत्यवसुसंज्ञकेभ्यो विश्वेभ्यो देवेभ्यो नांदीमुखेभ्यः कृतस्य नांदीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे ॥ २ ॥ गोत्रेभ्यः पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्यः कृतस्य नांदीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे ॥ ३ ॥ द्वितीयगोत्रेभ्यो मातामहप्रमातामहवृद्धप्रमातामहेभ्यः सपत्नीकेभ्यो नांदीमुखेभ्यः कृतस्य नांदीश्राद्धस्य फलप्रतिष्ठासिद्ध्यर्थं द्राक्षामलकयवमूलनिष्क्रयीभूतां दक्षिणां दातुमहमुत्सृजे ॥ नान्दीश्राद्धं संपन्नम् । सुसंपन्नम् । जलं गृहीत्वा—अनेन नान्दीश्राद्धकर्मणा कृतेन श्री नांदीमुखदेवताः प्रीयन्ताम् ॥ अस्मिन्नांदीश्राद्धे न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनाद् श्रीनांदीमुखप्रसादाच्च सर्वः परिपूर्णोऽस्तु इति भवन्तो ब्रुवन्तु ॥ अस्तु परिपूर्णः ॥ इति ॥

॥ इति नान्दीश्राद्धप्रयोग. ॥

---

## ॥ अथ आचार्यादिवृत्तिग्वरणम् ॥

### ॥ अथार्घवंदनम् ॥

ततो यजमानः ( पाद्यार्घपात्राणि संस्थाप्य ) कांस्यपुटे ताम्रसंपुटे वा शरावे अर्घं कुर्यात् ॥ यथा— ॥ आपः क्षीरं कुशाग्राणि दधिदूर्वाक्षतास्तथा ॥ तिलाः सिद्धार्थकाश्चैव ह्यष्टांगोऽर्घः प्रकीर्तितः ॥ १ ॥ इत्यष्टाङ्गमर्घं कृत्वा रक्तसूत्रेण वेष्टयेत् ॥

यजमानः आसनात्पश्चिमत उत्तराभिमुखो भूत्वा तिष्ठेत् ॥ आचार्यः पत्नीहस्ते कलशं यजमानहस्ते अर्घ्यपात्रं च दद्यात् ॥ विप्राः शांतिसूक्तं पठेयुः ॥ तद्यथा–( सुमुहूर्तादिकर्तव्यं शोभने मंडपे द्विजैः ॥ शांतिपाठोऽर्घदानं च प्रच्छापूर्वं समाचरेत् ॥ १ ॥) आयुरारोग्यपुत्रादिसुखश्रीप्राप्तये मम ॥ आपद्विघ्नविनाशाय शत्रुबुद्धिक्षयाय च ॥ २ ॥ विशेषकाम्यहोमेन सहितं समिदादिभिः ॥ आदित्याद्या ग्रहाः सर्वे राहुकेतुपुरःसराः ॥ ३ ॥ ग्रहदेवाधिदेवैश्च नक्षत्राणां सदेवतैः ॥ इंद्रादिभिश्च दिक्पालैर्ब्रह्मविष्णुमहेश्वरैः ॥ ४ ॥ वास्तुदुर्गागणेशैश्च क्षेत्रपालादिसंयुतैः ॥ भूम्यन्तरिदेवैश्च कुलदेवैश्च मातृभिः ॥ ५ ॥ चतुर्भिश्चैव वेदैश्च रुद्रेण सहितास्तथा ॥ सागरा द्वीपपातालान्यूर्ध्वलोकाः सुरैः सह ॥६॥ पर्वता ऋषयः सर्वे गंगाद्याः सरितो ध्रुवम् ॥ आदित्यादिग्रहैर्यज्ञैर्यूयं कर्तुं प्रसीदत ॥ ७ ॥ ( मम क्षेमायुरारोग्यपरमश्रीसुखाप्तये ॥ सबंधुसुतभार्यस्य वांछितार्थस्य सिद्धये ॥ ८ ॥ आधिव्याधिजरामृत्युभयशोकापच्छित्तये ॥ भूतभव्यभविष्येतित्रिविधोत्पातशांतये ॥ ९ ॥ सर्वेनं सामप्रध्वस्तैर्निरस्तैश्च सुरद्विषाम् ॥ सर्वसौभाग्यसंपत्त्यै निष्पत्त्यै चास्य कर्मणः ॥१०॥ आचार्यादिसमस्तानां जापकानां द्विजन्मनाम् ॥ पादार्घं मकरिष्येऽहमाज्ञां देहि ममाध्वरे ॥ ११ ॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ॥ अनुगृह्णन्तु मामद्य संकल्पोक्ते च कर्मणि ॥१२॥ ) स्वागतं भो द्विजश्रेष्ठा मदनुग्रहकारकाः ॥ अयमर्घ इदं पाद्यं भवद्भिः प्रतिगृह्यताम् ॥ १३ ॥ अर्घोऽर्घोऽर्घः ॥ प्रतिगृह्यतामिति यजमानः । प्रतिगृह्णामीत्याचार्यः ॥

ततो यजमानो हस्ते जलं गृहीत्वा– आचार्यादृत्विजां वरणमहं

करिष्ये इति संकल्प्य हस्ते सयवपुष्पपूगीफलं गृहीत्वा ॥ अमुकगोत्रोऽमुकयजमानोऽहम् अमुकगोत्रम् अमुकप्रवरम् अमुकवेदान्तर्गतामुकशाखाध्यायिनम् अमुकशर्माणं ब्राह्मणम् अस्मिन् कर्मणि आचार्यकर्मकरणार्थम् "आचार्यत्वेन" त्वामहं वृणे ॥ इति पठित्वा पूगीफलमाचार्याय दत्त्वा पुष्पं शिरसि निधाय यवैर्जानुं स्पृशेत् ॥ "वृतोऽस्मि" इत्याचार्यो वदेत् ॥ पश्चात् "वृताय एतत्ते पाद्यं पादावनेजनं पादप्रक्षालनमिदम्" इति पादप्रक्षालनं कुर्यात् । "अयमर्घः" इति हस्तयोरर्घ्यं दद्यात् । ततो गन्धाक्षतपुष्पैः पूजयेत् । ततो हस्ते कंकणबंधनम् ॥ तत्र मंत्रः ॥ "प्रतिज्ञावरणं चैव स्वस्तिपुण्याहवाचनम् ॥ कपिलाय नमस्तुभ्यं रक्षाकंकणबंधनम् ॥ १ ॥" (ततो हस्तमुद्राकर्णमुद्रासनादिसामग्रीं यज्ञोपवीतं वस्त्रे च दत्त्वा) "यावत्कर्म समाप्यते तावत्त्वमाचार्यो भव ॥ आचार्यस्त्वं यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥१॥" इति यजमानो वदेत् "भवामि" इत्याचार्यो वदेत् ॥ एवं रीत्या ब्रह्माणं सदस्यं सर्वोपद्रष्टारं गाणपत्यम् ऋत्विजो वृणुयात् ॥इति॥

---

## ॥ अथ मधुपर्कार्चनप्रयोगः ॥

यजमान आदौ बाहुमात्रं हस्तमात्रं वा दीर्घं वामावर्तेन पञ्चाशद्भिर्दर्भैर्घटितं विष्टरद्वय तथा च आचमनार्थं च जलं चन्दनाक्षतपुष्पाणि मधुपर्कार्थे दधिमधुघृतं कांस्यपात्रे एकीकृतं कांस्यपात्रेण पिहितं वस्त्रालंकारणादीनि वस्तूनि च संपाद्य उदङ्मुख उपविशेत् । ऋत्विजः शुभवस्त्राच्छादिते पीठे प्राङ्मुखा उपविशेयुः ॥

ततो यजमान आचम्य प्राणानायम्य हस्ते जलमादाय—अद्येत्यादि० तिथौ अमुककर्मणि आचार्यादृत्विजो यथाशक्ति मधुपर्केणार्चयिष्ये ॥

ततो यजमानः ऋत्विजः संबोध्य "साधु भवन्त आसताम् अर्चयिष्यामो भवतः" इति ब्रूयात्। "अर्चय" इति ऋत्विजो वदेयुः ॥

ततो यजमानो विष्टरानादाय ॥

विष्टरः– "विष्टराः विष्टराः विष्टराः ॥ इत्यन्येनोक्ते– "विष्टराः प्रतिगृह्यन्ताम्" इति वदेत् ॥ ऋत्विजः "प्रतिगृह्णीमः" इत्यभिधाय विष्टरान् गृहीत्वा। "श्रेष्ठोऽस्मि वै समानानामुद्यतामिव भास्करः। तिष्ठामि त्वामधः कृत्वा य इदं मेऽभिदीयते ॥ १ ॥" इत्यनेनासने उत्तराग्रविष्टरोपरि उपविशन्ति ॥

तत्रोपविष्टेषु तेषु यजमानः पादार्थमुदकानि गृहीत्वा तिष्ठेत् ॥

पाद्यम्–"पादार्थमुदकानि पादार्थमुदकानि पादार्थमुदकानि" इत्यन्येनोक्ते "प्रतिगृह्यन्ताम्" इति यजमानो वदेत् ॥ ऋत्विजः "प्रतिगृह्णीमः" इत्यभिधाय यजमानपात्रादञ्जलिना पाद्यमादाय। "विराजो दोहो भवसि विराजो दोहमश्नवै ॥ विराजो दोहः पाद्याय मयि त्वं भव भो जल ॥ २ ॥" अनेन मंत्रेण वामं पादं प्रक्षाल्य दक्षिणपादं प्रक्षालयन्ति ॥

द्वि॰ विष्टरः— ततो यजमानो द्वितीयविष्टरानादाय "विष्टराः विष्टराः विष्टराः" इत्यन्येनोक्ते "विष्टराः प्रतिगृह्यन्ताम्" इति वदेत्। ऋत्विजः "प्रतिगृह्णीमः" इत्यभिधाय विष्टरान् गृहीत्वा। "श्रेष्ठोस्मि वै समानानामुद्यतामिव भास्करः। तिष्ठामि त्वामधः कृत्वा य इदं मेऽभिदीयते ॥" इति मंत्रेण पादयोरधस्तात् उत्तराग्रं विष्टरं स्थापयेयुः ॥

अर्घः—ततो दूर्वाक्षतफलपुष्पचंदनयुतार्घपात्रं गृहीत्वा यजमानः

"अर्घाः अर्घाः अर्घाः" इत्यन्येनोक्ते "प्रतिगृह्यन्ताम्" इति वदेत् ॥ ऋत्विजः "प्रतिगृह्णीमः" इत्यभिधाय यजमानहस्तादर्घं गृहीत्वा ॥ "वयं वरुण युष्माभिः सर्वान् कामानशेषतः । अतोऽर्घं त्वं गृहाणेमं भो ह्यापस्थमवाप्नुयाम्" ॥ ३ ॥ अनेन मंत्रेण शिरस्यक्षतादिकं किंचिद्दत्त्वा । "गमयामि समुद्र स्वां योनिमापः प्रयान्तु वै ॥ वीरा अरिष्टाश्चास्माकं मा परासेचिमत्पयः ॥ ४ ॥" अनेन मंत्रेणार्घपात्रस्थं जलमैशान्यां प्राच्युदग्दिशि वा निनयेयुः ॥

यजमान आचमनीयोदकपात्राण्यादाय ॥

आचमनीयम्—ततः "आचमनीयानि आचमनीयानि आचमनीयानि" इत्यन्येनोक्ते "प्रतिगृह्यन्ताम्" इति यजमानो वदेत् । तत ऋत्विजः "प्रतिगृह्णीमः" इत्यभिधाय यजमानहस्तादाचमनीयपात्राणि वामहस्तेनादाय–दक्षिणहस्ते जलं गृहीत्वा "प्रियं जनानां यशसा पशूनां स्वामिनं कुरु ॥ शरीरिणामरिष्टानि वरुणाचमयाम्यहम् ॥ ॥ ५ ॥" अनेन मंत्रेण सकृदाचामेयुः ॥ द्विस्तूष्णीम् ॥

मधुपर्कः—ततो यजमानः घृतमेकपलं दधि त्रिपलं मधु एकपलं चेति सर्वं कांस्यपात्रेष्वेकीकृत्य तानि कांस्यपात्रपिहितानि कृत्वा आदाय "मधुपर्काः मधुपर्काः मधुपर्काः" इत्यन्येनोक्ते "मधुपर्काः प्रतिगृह्यन्ताम्" इति वदेत् । ऋत्विजः "प्रतिगृह्णीमः" इति उक्त्वा—"समीक्षे च यथा सर्वाण्यहं भूतानि चक्षुषा ॥ तथेमं मधुपर्कं च प्रतीक्षेऽहं खलु प्रभो ॥ ६ ॥" अनेन मंत्रेण यजमानकरस्थमेव स्वं स्वं मधुपर्कं निरीक्ष्य ॥

१ यजमानहस्ते सर्वेषां पात्राणां स्थितेरसंभवात् ऋत्विजः स्वहस्ते एव गृहीत्वा बहुधा प्रेक्षणादिकं कुर्वन्ति ।

"पूष्णो देवस्य सवितुर्हस्ताभ्यामाददे किल ॥ मधुपर्कं भर्गरूपमाभिनं सूर्यदैवतम् ॥७॥" अनेन मंत्रेण स्वं मधुपर्कं दक्षिणहस्तेन गृहीत्वा वामहस्ते कृत्वा । "मर्यामि मधुपर्कं च नाशनेनादनीयकम् । निष्क्रन्तामि च यत्तद्धि श्यावास्याय नमो नमः ॥ ८ ॥" अनेन मंत्रेणानामिकांगुष्ठेन च त्रिःप्रदक्षिणमालोड्य अनामिकांगुष्ठेन भूमौ किंचिन्निःक्षिपेयुः ॥ पुनस्तथैव द्विः क्षिपेयुः । तत ऋत्विजः "परमेण मधव्येन रूपेणान्नाद्यकेन च ॥ मधव्यं परमं तेन ह्यश्नामि मधुनोऽशनम् ॥९॥" अनेन मंत्रेण प्रथमं कनिष्ठिकांगुष्ठेन द्वितीयमनामिकांगुष्ठेन तृतीयं मध्यमांगुष्ठेन प्राश्य ततो मधुपर्कशेषं पुत्राय वा शिष्याय दद्यात् । उत्तरत आसीनाय दद्यात् सर्वं वा प्राश्नीयाद् असंचरदेशे वा धारयेयुः ॥

आचमनम्—ततः ऋत्विजः—"प्रियं जनानां यशसा पशूनां स्वामिनं कुरु ॥ शरीरिणामरिष्टानि वरुणाचमयाम्यहम् ॥" इत्यनेन मंत्रेणैकवारं द्विस्तूष्णीं चाचमनं कुर्युः ॥

जलाभिमर्शनम्—ततः ऋत्विजो वामहस्तस्थजलेन प्राणान् स्पृशन्ति यथा—कराग्रेण मुखं स्पृशन्ति "वाङ्म आस्येऽस्तु"॥ तर्जन्यंगुष्ठाभ्यां नासारन्ध्रे स्पृशन्ति "नसोर्मे प्राणोऽस्तु" ॥ अनामिकाङ्गुष्ठाभ्यां नेत्रे स्पृशन्ति "अक्ष्णोर्मे चक्षुरस्तु" ॥ मध्यमाङ्गुष्ठाभ्यां कर्णरन्ध्रे स्पृशन्ति "कर्णयोर्मे श्रोत्रमस्तु ॥" कनिष्ठिकाङ्गुष्ठाभ्यां बाहू स्पृशन्ति "बाह्वोर्मे बलमस्तु" ॥ हस्तेन ऊरू स्पृशन्ति "ऊर्वोर्मे ओजोऽस्तु ॥ उभाभ्यां हस्ताभ्याम् "अरिष्टानि मेऽङ्गानि तनूस्तन्वा

नास्तीर्य तत्र (ऋत्विजां हस्तेषु वा) गोनिष्क्रयद्रव्यं दत्त्वा ॥ 'गौर्गौर्गौः' इति त्रिः प्राह ॥ "वसूनां दुहिता माता रुद्राणां भास्करस्वसा । ब्रवीमि गां मा वधिष्ट जनाय चेतनाष्टते ॥ १० ॥" अनेन मन्त्रेण ऋत्विजः "मम यजमानस्य च उभयोः पाप्मा हतः" इत्युपांशु ब्रूयुः ॥ ततः अन्यः कश्चित् "तृणानि उत्सृजत" इति उच्चैर्ब्रूयात् ॥ ततो यजमानः "अमांसोऽर्घश्च भवति षडर्घ्यानाधिकृत्य वै ॥ गोरुद्देशेन तांस्तस्या निष्क्रयं ह्युत्सृजाम्यहम् ॥११॥" अनेन मंत्रेण निष्क्रयं-तृणान्युत्सृजेत् ॥

संकल्पः—यजमानो जलमादाय ॥ अद्येत्यादि० तिथौ समस्त ऋत्विजो वस्त्राद्युपचारैः पूजयिष्ये ॥ इति संकल्प्य यथोक्तनियमेन वस्त्रालंकारादिभिर्ऋत्विजां पूजनं कुर्यात् ॥ततो जलमादाय॥ अनेन यथाशक्तिमधुपर्कार्चनेन श्रीपरमेश्वरः प्रीयताम् ॥ तत आचार्यादीन्संपूज्याचारात्तेभ्यो दक्षिणां दद्यात् ॥ ततः प्रार्थयेत् ॥

॥ इति मधुपर्कार्चनप्रयोगः ॥ ]

---

## ॥ अथ ब्राह्मणप्रार्थना ॥

ब्राह्मणाः संतु मे शस्ताः पापात्पांतु समाहिताः ॥ वेदानां चैव दातारः पातारः सर्वदेहिनाम् ॥ १ ॥ जपयज्ञैस्तथा होमैर्दानैश्च विविधैः पुनः ॥ देवानां च ऋषीणाञ्च तृप्त्यर्थं याजकाः कृताः ॥ ॥ २ ॥ येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम् । रक्षन्तु सततं ते मां कर्मण्यस्मिन् व्यवस्थिताः ॥ ३ ॥ ब्राह्मणा जंगमं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ येषां वाक्योदकेनैव शुद्ध्यन्ति मलिनो जनाः

॥ ४ ॥ पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः ॥ सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ॥ ५ ॥ श्रोत्रियाः सत्यवाचश्च देवध्यानरताः सदा ॥ यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः ॥ ६ ॥ अंगीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाशिषः ॥ यथोक्तनियमैर्युक्ता मंत्रार्थे स्थिरबुद्धयः ॥ ७ ॥ यत्कृपालोचनात्सर्वा ऋद्धयो वृद्धिमाप्नुयुः ॥ कर्मण्यस्मिन्मया पूज्याः सन्तु मे नियमान्विताः ॥ ८ ॥ अक्रोधना शौचपराः सततं ब्रह्मचारिणः ॥ देवध्यानरता नित्यं प्रसन्नमनसः सदा ॥ ९॥ अदुष्टभाषणाः सन्तु मा सन्तु परनिंदकाः ॥ ममापि नियमा ह्येते भवन्तु भवतामपि ॥ १० ॥ ऋत्विजश्च यथा पूर्वे शक्रादीनां मखेऽभवन् । यूयं तथा मे भवत ऋत्विजो द्विजसत्तमाः ॥ ॥ ११ ॥ अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया । सुप्रसादैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम् ॥ १२ ॥ ( ब्राह्मणा ब्रूयुः ) (वय नियमसंयुक्तास्तव कर्तव्यतत्पराः॥ कार्यं तव करिष्यामो विधिपूर्वं न संशयः ॥ १३ ॥ कर्तव्या नो क्रियाशंका वेदाज्ञा हि गरीयसी ॥ वैदिका नहि वेदाज्ञां लंघयन्ति कदाचन ॥ १४ ॥ त्वदधीनं त्वया कार्यं निःशंकं श्रद्धयान्वितम् ॥ वयं सर्वं करिष्यामस्तव कार्यं न संशयः ॥ १५ ॥ यजमानः – धन्योऽहं कृतकृत्योऽहं सौभाग्योऽहं धरातले ॥ प्रसादाद्भवतां विप्राः पवित्रोऽहं कृतोऽधुना ॥ १६ ॥ शक्त्या सर्वं करिष्यामि वचनाद्भवतां ततः ॥ आशीर्वादाच्च सिद्धानां पूर्णं सर्वं भविष्यति ॥ १७ ॥ ) इति संप्रार्थ्य वरणश्राद्धं कुर्यात् ॥

---

अथ वरणश्राद्धम् ॥

" वरणश्राद्धम् " ॥ यजमानः स्वपादौ करौ प्रक्षाल्याचामेत् ॥ अक्षतैर्दिग्बंधः ॥ स्वस्तिरस्तु या० ॥ चतसृषु दिक्षु अक्षतान् विकीर्य—सांक-

ल्पेन विधिना वरणश्राद्धोपहाराणां पवित्रताऽस्तु ॥ देशकालपाक-पात्रान्नद्रव्यश्रद्धासंपदस्तु ॥ जलमादाय — अद्येत्यादि० सांकल्पेन विधिना वरणश्राद्धं करिष्ये ॥ जलं गृहीत्वा — आचार्यादिऋत्विग्भ्यो यथादत्तं गंधाद्यर्चनं संपन्नं सुसंपन्नम् ॥ अर्चनाविधेः परिपूर्णतास्तु ॥ दीपादीनां प्रदत्तानामिदं वो ज्योतिः सूर्यो ज्योतिः ॥ शेषोपचारा विधिवद्भवन्तु ॥ आचार्यादिऋत्विग्भ्यः अद्याह्नि भोजनं (दत्तं) दास्य-मानं (वा) संपन्नं सुसंपन्नम् ॥ आचार्यादिऋत्विग्भ्यो दक्षिणाः संपन्नाः सुसंपन्नाः ॥ तिलकमाशीर्वादः ॥ येन बद्धो बली राजा दानवेन्द्रो महाबलः ॥ तेन त्वामपि बध्नामि रक्षे रक्ष हि मा चल ॥ १ ॥ इति यजमानहस्ते कंकणबन्धनं कुर्यात् ॥ ततः पत्नीवामकरे कंकणं बध्नीयात् ॥ यथा-मांगल्यं तन्तुना येन भर्तुर्जीवनहेतुना ॥ हस्ते बध्नामि सुभगे संजीव शरदः शतम् ॥ २ ॥ इति ॥



पत्नीवामकरे सूत्रं बद्ध्वा सौख्यधनागमम् ॥ बहुसपत्निमारोग्य रक्षार्थे कंकणं शुभम् ॥ ३ ॥

॥ श्रीगणेशाय नमः ॥

॥ श्रीराधाकृष्णाभ्यां नमः ॥

## ॥ अथ जन्माष्टमीव्रतविधिः ॥

करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् ॥
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि ॥१॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यान्दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ॥
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान्मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ २ ॥

कृष्णाय वासुदेवाय हरये परमात्मने ॥
प्रणतक्लेशनाशाय गोविंदाय नमो नमः ॥ ३ ॥

तत्र प्राग्व्रतनिर्णयः । यथा जन्माष्टमीव्रतमर्धरात्रव्यापिन्यामष्टम्यां कार्यम् । अष्टम्यां दिनद्वयेऽर्धरात्रव्यापिन्यामव्यापिन्यां वा परैव चाष्टमी ग्राह्या । यदा पूर्वदिने निशीथे केवलाष्टमी चोत्तरदिने निशीथास्पर्शिनी रोहिणीयुक्ता चाष्टमी तदा पूर्वैव ग्राह्या ॥ यथा-"उदये चाष्टमी किंचिन्नवमी सकला यदि ॥ भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता ॥ अपि वर्षशतेनापि लभ्यते यदि वा न वा ॥" अत्र उदयशब्दश्चन्द्रोदयपरः ॥ सूर्योदयपरत्वे तु यदा पूर्वदिने निशीथे केवलाष्टमी अपरदिने निशीथास्पर्शिन्यष्टमी रोहिणीयुता सती बुधयुक्ता तदापरदिन एव स्यात् ॥ यदि बुधसत्त्वेऽपि रोहिणीयोगमात्रा तदैवोत्तरा चोच्यते तदा रोहिणीयोगाभावेऽपि बुधमात्रसत्त्वादुत्तरैव ऋक्षयोगवद्वारस्यापि प्राशस्त्यहेतु-

त्वात् ॥"विष्णुरहस्ये"—"प्राजापत्यृक्षसंयुक्ता कृष्णा नभसि चाष्टमी ॥ मुहूर्तमपि लभ्येत सोपोष्या च महाफला ॥" अत्रापि मुहूर्तपदं निशीथपरम् ॥ यदा हि शुद्धाऽप्यष्टम्यर्धरात्रे विद्यमाना ग्राह्या तदा रोहिणीयुता मुहूर्तमप्यहोरात्रे यस्मिन्नित्युक्तं लभ्यते ॥ यथा—"अष्टम्यां रोहिणीऋक्षं तासु पुण्यमुपावसेत् ॥" रोहिणीयोगे त्वाधिकनिशीथव्यापिनीमपि विहाय स्वल्पाऽपि निशीथव्यापिनी रोहिणीयुता चाष्टमी तदा सैव ग्राह्येति व्याख्यान्तरं "मयूखे" द्रष्टव्यम् ॥ पारणा तु तिथिभान्ते कार्या यथाह । "भृगुः"—"जन्माष्टमी रोहिणी च शिवरात्रिस्तथैव च ॥ पूर्वविद्धैव कर्तव्या तिथिभान्ते तु पारणा ॥ १ ॥" पारणानिषेधोऽपि "ब्रह्मवैवर्ते"—"अष्टम्यामथ रोहिण्यां न कुर्यात्पारणं क्वचित् ॥ हन्यात्पुराकृतं कर्म चोपवासार्जितं फलम् ॥ १ ॥ तिथिरष्टगुणं हन्ति नक्षत्रं च चतुर्गुणम् ॥ तस्मात्प्रयत्नात्कुर्वीत तिथिभान्ते च पारणम् ॥२॥" तत्र दिवसे उभयान्ते पारणमिति मुख्यः पक्षः । एकतरान्ते त्वनुकल्पः ॥ यदा तु तिथिनक्षत्रयोरन्यतरस्यैव दिनान्तस्तदाऽहोरात्रे पारणानिषेधादन्यतरान्ते पारणाऽभ्यनुज्ञाता सा च दिवैवान्यतरान्ते कार्या । अत एव "वह्निपुराणे"—"भान्ते कुर्यात्तिथेर्वापि शस्तं भारत पारणम्" इति ॥

॥ इति जन्माष्टमीव्रतनिर्णयः ॥

---

## ॥ अथ जन्माष्टमीव्रतपूजाविधिः ॥

व्रतदिने प्रातःकाले प्रातःस्मरणादि कृत्वा द्वादशगंडूषैर्मुखशुद्धिं कृत्वा ततोऽपामार्गसमिधा दन्तधावनं विधाय नद्यादौ विमले जले तिलामलककल्केन मृदा च समन्त्रकं स्नानं विधाय शुद्धे वस्त्रे परिधाय

ब्राह्मणादिः कृतनित्यक्रियः प्राङ्मुख उपविश्य व्रतग्रहणं कुर्यात् । यथा हस्ते जलं गृहीत्वा—अद्येत्यादि० देशकालौ संकीर्त्य "श्रीकृष्णप्रीत्यर्थं जन्माष्टमीव्रतं ( जयन्तीव्रतं चैकतन्त्रेण ) करिष्ये " इति संकल्प्य ततस्ताम्रपात्रे जलं गृहीत्वा "वासुदेवं समुद्दिश्य सर्वपापप्रशान्तये । उपवासं करिष्यामि ( अशक्तौ वा "फलानि भक्षयिष्यामि" ) जन्माष्टम्यां नभस्यहम् ॥ १ ॥ आजन्ममरणं यावद्यन्मया दुष्कृतं कृतम् ॥ तत्प्रणाशय गोविन्द प्रसीद पुरुषोत्तम ॥ २ ॥" इति मन्त्रद्वयेन तज्जलं पात्रान्तरे क्षिपेत् ॥ इति व्रतग्रहणं कृत्वा ततो गृहमध्ये वेदीं विधाय तां गोमयेनोपलिप्य तत्र सुवर्णरजतादिमय्यो मृन्मय्यो भित्त्यादौ लिखिता वा प्रतिमा यथाकुलाचारं कर्तव्याः ॥ तद्यथा—(कदलीस्तम्भवासोभिराम्राशोकपल्लवयुतसजलपूर्णकलशैर्दीपैः पुष्पमालाभिर्युतं स्वगरुधूपितमग्रखङ्गकृष्णछागरक्षामणिद्वारन्यस्तमुसलादियुतं मङ्गलोपेतं षष्ठ्यां देवक्याः सूतिकागृहं विधाय तस्य समन्ताद् भित्तिषु कुसुमाञ्जलियुतान् देवगन्धर्वादीन् खड्गचर्मधरवसुदेवदेवकीनन्दयशोदागर्भगोपीगोपान् कंसनियुक्तान् गोधेनुकुञ्जरान् यमुनां तन्मध्यस्थकालियं चान्यच्च तत्काननादिकं गोकुलचरितं यथासंभवं लिखित्वा सूतिकागृहमध्ये प्रच्छाद्य वृत्तमंचकं स्थापयेत् ॥) तत्र पर्यंके प्रसुप्तदेवक्याः स्तनं पिबन्तीं श्रीकृष्णप्रतिमां निधाय ( जयन्तीसत्त्वे त्वन्यदेवक्या उत्सङ्गे द्वितीयां श्रीकृष्णमूर्तिं निधाय ) पर्यंकस्थदेवकीचरणसंवाहनपरां लक्ष्मीञ्च निधाय भित्त्यादौ खड्गधरं वसुदेवं नन्दगोपान् लिखित्वा प्रदेशान्तरे मञ्चके प्रसूतकन्यया सह यशोदाप्रतिमां पीठान्तरे वसुदेवदेवकीनन्दयशोदाश्रीकृष्णबलरामचण्डिकानां सप्त प्रतिमाः स्थापयेत् ॥ ( एतावत्प्रतिमाकरणाशक्तौ वसुदेवादिचण्डिकान्ताः सप्त वा यथाचारं

यथाशक्ति वा प्रतिमाः कृत्वा स्थापयेत् ॥ अन्याः सर्वा यथायथम् ध्यायेत् ॥ )

निशीथासन्नप्रावकाले स्नात्वा धौते वाससी परिधाय शुभासने (सपत्नीकः) यजमान उपविशेत् । तत आचार्यादिविप्राः " यो श्रीः०" इति भद्रसूक्तं पठेत् ॥ ततो यजमानः आचम्य प्राणानायम्य श्रीगुरुभ्यो नत्वा " श्रीमन्महा० सुमुखश्चैकदन्तश्च० इत्यादि ब्रह्मेशानजनार्दनाः" इत्यन्तं गणेशादिस्मरणं कृत्वा ततो हस्ते जलमादाय संकल्पं कुर्यात्। यथा-अत्राद्य० शुभपुण्यतिथौ मम सकुटुम्बस्य क्षेमस्थैर्यविजयाभयायुरारोग्यैश्वर्याभिवृद्ध्यर्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं परिवारसहितश्रीकृष्णप्रीत्यर्थं यथासंभव नियमेन वा यथामिलितोपचारद्रव्यैर्जन्माष्टमीव्रताङ्गत्वेन यथाशक्ति परिवारदेवतासहितभगवच्छ्रीकृष्णपूजनमहं करिष्ये ॥ इति संकल्प्य पुनर्जलमादाय-"तत्रादौ गणपतिस्मरणपूर्वकं दिग्रक्षण कलशशङ्खघण्टार्चनं च करिष्ये" इति संकल्प्य " विघ्नेश्वराय० त्वां विघ्नशत्रु० लम्बोदर० " इति मन्त्रत्रयेण गणपतिस्मरण कृत्वा ततः "अपसर्प०" इति दिग्रक्षणं कृत्वा कलशार्चनं शङ्खघण्टार्चनं च कुर्यात् ॥ ततो यथाशक्ति पुरुषसूक्तेन न्यासान् कुर्यात् ।

## ॥ अथ पुरुषसूक्तन्यासाः ॥

जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ॥ नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ (वामकरे) १ ॥ देवानां दानवानां च सामान्यमधिदैवतम् ॥ सर्वदा चरणद्वंद्वं व्रजामि शरणं तव ॥ (दक्षिणकरे) २ । एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ॥ अव्यक्तश्चानुमंता च गुणमायासमावृतः ॥ (वामपादे) ३ ॥ संसारसागरं घोरमनन्तं क्लेशभाजनम् ॥ त्वामेव शरणं प्राप्य निस्तरन्ति मनीषिणः ॥ (दक्षिणपादे) ४ । न ते रूपं नचाकारो नायुधानि न चास्पदम् ॥ तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥ (वामजानौ) ५ ॥ नैव किंचित्परोक्ष ते प्रत्यक्षोऽसि न कस्यचित् ॥ नैव किंचिदसाध्यं ते न च साध्योऽसि कस्यचित ॥ (दक्षिणजानौ) ६ ॥ कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ॥ योगिनां परमा सिद्धिः परमं ते पदं विदुः ॥ (वामकट्याम्) ७ ॥ अहं भीतोऽस्मि देवेश संसारेऽस्मिन्भयावहे ॥ त्राहि मां पुंडरीकाक्ष न जाने परमं पदम् ॥ (दक्षिणकट्याम्) ८ ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ॥ शरीरे च गतौ चापि वर्तते मे महद्भयम् ॥ (नाभौ) ९ ॥ त्वत्पादकमलादन्यत्र मे जन्मान्तरेष्वपि ॥ विज्ञानं यदिदं प्राप्य यदिदं ज्ञानमर्जितम् ॥ (हृदये) १० ॥ जन्मान्तरेऽपि मे देव माभूदस्य परिक्षयः ॥ दुर्गतावपि जातस्य त्वद्गतो मे मनोरथः ॥ (वामकुक्षौ) ११ ॥ यदि नाथं च विंदेत तावताऽस्मिन् कृती सदा ॥ कामये विष्णुपादौ तु सर्वजन्मसु केवलम् ॥ (दक्षिणकुक्षौ) १२ ॥ पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम् ॥ आत्मज्ञानमिदं पुण्य योगध्यानमिदं परम् ॥ (कण्ठे) ॥ १३ ॥ ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः ॥ केयूरवान् मकरकुंडलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ (मुखे) १४ ॥ एतत्तु यः पठति केवलमेव सूक्तं नारायणस्य चरणावभिवन्द्यवंद्यौ ॥ पाठेन तेन परमेण सनातनस्य स्थानं जरामरणवर्जितमेति विष्णोः ॥ (नेत्रयो.) १५ ॥ हविषाग्नौ जले पुष्पैर्ध्यानेन हृदये हरिम् ॥ यजन्ति सूरयो नित्यं जपेन रविमंडले ॥ (मूर्ध्नि) १६ ॥ बिल्वपत्रं शमीपत्रं पत्रं भृंगारकस्य च ॥ मालतीकुशपत्रं च सद्यस्तुष्टिकरं

हरेः ॥ (हृदयाय नमः) १७ ॥ यत्रोपपद्यते किंचिद् ध्यानेन मनसैव तु ॥ संपद्यते प्रसादात्तु देवदेवस्य चक्रिणः ॥ (शिरसे नमः) १८ ॥ पत्रैश्च पुष्पैश्च फलैश्च तोयैरक्रीतलभ्यैश्च सदैव सत्सु ॥ भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते न यत्नः ॥ (शिखायै नमः) १९ ॥ इत्येव मुक्तः पुरुषस्य विष्णोरर्चाविधिर्विष्णुकुमारनाम्ना ॥ मुक्त्यैकमार्गप्रतिबोधनाय दृष्ट्वा विधानं त्विह नारदोक्तम् ॥ (कवचाय नमः) २० ॥ नमोऽस्त्वनंताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटियुगधारिणे नमः ॥ (नेत्रत्रयाय नमः) २१ ॥ लक्ष्मीकलत्रं शतपत्रनेत्रं पूर्णेन्दुवक्त्रं पुरुषोत्तमं च ॥ कारुण्यपात्रं कमनीयगात्रं वंदे पवित्रं वसुदेवसूनुम् ॥ (अस्त्राय नम ) २२ ॥ इति ॥

---

एवं पुरुषसूक्तेन देहन्यासान् कृत्वा ततो नूतनप्रतिमायामग्न्युत्तारणपूर्वकप्राणप्रतिष्ठां कुर्यात् ॥

---

## ॥ अथाग्न्युत्तारणपूर्वकप्राणप्रतिष्ठा ॥

तत्रादौ सुवर्णमूर्तेः (मूर्तीनां) ताम्रपात्रे स्थापनं कृत्वा ॥ जलमादाय ॥ अद्येत्यादि० अस्याः मूर्तेः (आसां मूर्तीनाम्) अङ्गप्रत्यंगसंधिसमुत्पन्नटङ्काघातपाग्निजनितदोषपरिहारार्थमग्न्युत्तारणपूर्वकं ब्राह्मणद्वारा प्राणप्रतिष्ठां करिष्ये ॥ मूर्तिं (मूर्तीः) घृतेनाभ्युज्य उपरि जलधारां कुर्यात् ॥ मंत्र ॥ अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजय. ॥ अग्नेरुत्तारणार्थाय मूर्तीनां शुद्धिहेतवे ॥ एवं त्रिवार (३) पठित्वा प्राणप्रतिष्ठां कुर्यात् ॥ अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः । ऋग्यजुः सामाथर्वाणि छन्दांसि । जगत्सृष्टिकारिणी प्राणशक्तिर्देवता आंबीजं ह्रींशक्तिः क्रौंकीलकम् अस्या मूर्ते (आसां मूर्तीनां) प्राणप्रतिष्ठापने विनियोगः ॥ मूर्तौ (मूर्तिषु) हस्तं निधाय पठेत् ॥ आं ह्रीं क्रों यं रं लं वं शं षं सं हं सः-सोऽहम् । अस्या मूर्ते. (आसां मूर्तीनां) प्राणा. इह प्राणा ॥ पुनः आं ह्रीं क्रौं यं रं लं वं शं षं सं हं स.-सोऽहम् ॥ अस्या मूर्ते (आसां मूर्तीनां)

जीव इह स्थित' ॥ पुनः आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः-सोहम् अस्या मूर्तेः (आसां मूर्तीनां) सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वा घ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु नमः ॥ ततः गर्भाधानदिषोडशसंस्कारसिद्ध्यर्थं षोडशप्रणवावृत्तिं करिष्ये ॥ ह्रीं इति षोडशवारमुच्चरेत् ॥ अनेन षोडशसंस्काराः संपद्यन्ताम् ॥ ततः प्रार्थयेत् ॥ रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः पाशं कोदण्डमिक्षूद्भवमथ गुणमप्यङ्कुशं पञ्चबाणान् ॥ बिभ्राणा सृक्कपालं त्रिनयनविलसत्पीनवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ इति ॥ ( ततस्तां मूर्तिं कलशोपरि स्थापयेत् ॥ )

---

तदनन्तरं "विश्वाधारासि" इत्यादिना कलशाधिष्ठातृदेवतानां प्रतिष्ठादिपूजनान्तं कृत्वा अष्टदलोपरि ( वा सर्वतोभद्रमंडले देवान् संस्थाप्य संपूज्य तत्र) (जन्माष्टमी व्रतोद्यापने द्रष्टव्यम् ) कलशं संस्थाप्य तस्योपरि पात्रं स्थापयित्वा देवं निधाय परिवारदेवतासहितम् आवाहनादिकं कुर्यात् ।

आवाहनम्—पर्यङ्कस्थां किन्नराद्यैर्युतां ध्यायेत्तु देवकीम् ॥ श्रीकृष्णं बालकं ध्यायेत्पर्यङ्के स्तनपायिनम् ॥१॥ श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविम् ॥ संवाहयन्तीं देवक्याः पादौ ध्यायेच्च तां श्रियम् ॥२॥

देवक्यै नमः देवकीमावाहयामि स्थापयामि ॥१॥ श्रीकृष्णाय नमः श्रीकृष्णमावाहयामि स्थापयामि ॥२॥ लक्ष्म्यै नमः लक्ष्मीमावाहयामि स्थापयामि ॥ ३ ॥

प्रतिष्ठापनम्—प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ॥ प्रतिष्ठां ते करोम्यत्र मण्डले दैवतैः सह ॥ देवक्यादिपरिवारदेवताः सुप्रतिष्ठिताः वरदा भवत ॥ ततो ध्यानं कुर्यात् । हस्ते पुष्पाण्यादाय ॥

ध्यानम्—गायद्भिः किन्नराद्यैः सततपरिवृता वेणुवीणानिनादैः शृङ्गारादर्शकुन्तप्रवरकृतकरैः किन्नरैः सेव्यमाना ॥ पर्यङ्के स्वास्तृते या मुदिततरमुखी पुत्रिणी सम्यगास्ते सा देवी देवमाता जयति सुवदना देवकी दिव्यरूपा ॥ १ ॥ श्रीकृष्णं बालकं ध्यायेत्पर्यङ्के स्तनपायिनम् ॥ श्रीवत्सवक्षसं शांतं नीलोत्पलदलच्छविम् ॥ नमो देव्यै महादेव्यै शिवायै सततं नमः॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्॥ देवक्या वसुदेवेन यशोदानन्दमेव च ॥ श्रीकृष्णं सहितं ध्याये बलदेवेन चण्डिकाम् ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः ध्यानं समर्पयामि ॥

ततो–"देवा ब्रह्मादयो ये च स्वरूपं न विदुस्तव ॥ अतस्त्वां पूजयिष्यामि मातुरुत्सङ्गवासिनम् ॥" इत्युक्त्वा पूजनार्थं भगवदनुज्ञां गृहीत्वा आसनादिना परिवारदेवतासहितभगवतः षोडशोपचारैः पूजनं कुर्यात्॥

आसनम्—देवदेव जगन्नाथ गरुडासनसंस्थित ॥ गृहाण चासनं दिव्यं जगद्धातर्नमोऽस्तु ते ॥ १ ॥ रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं परम् ॥ आसनं च मया दत्तं गृहाण परमेश्वर ॥ २ ॥ श्रीदेवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः आसनं समर्पयामि ॥

पाद्यम्—अवतारसहस्राणि करोषि मधुसूदन ॥ न ते संख्यावताराणां कश्चिज्जानाति तत्त्वतः ॥ १ ॥ नानातीर्थयुतं तोयं निर्मलं पुष्पमिश्रितम् ॥ पाद्यं गृहाण देवेश विश्वरूप नमोऽस्तु ते ॥ २ ॥ उष्णोदकं निर्मलं च सर्वसौगन्ध्यसंयुतम् ॥ पादप्रक्षालनार्थाय दत्तं ते प्रतिगृह्यताम् ॥ ३ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः पादयोः पाद्यं समर्पयामि ॥

अर्घम्—जातः कंसवधार्थाय भूभारोत्तारणाय च ॥ देवानां च हितार्थाय धर्मसंस्थापनाय च ॥ १ ॥ कौरवाणां विनाशाय पाण्डवानां हिताय च ॥ गृहाणार्घं मया दत्तं देवक्या सहितो हरे ॥२॥ रौप्यपात्रस्थितं तोयं गन्धपुष्पसमन्वितम् ॥ सहिरण्यं ददाम्यर्घं गृहाण परमेश्वर ॥ ३ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः हस्तयोः अर्घं समर्पयामि ॥

आचमनीयम्—सुरासुर नरेशाय क्षिराब्धिशयनाय च ॥ कृष्णाय वासुदेवाय ददाम्याचमनं शुभम् ॥ १ ॥ सर्वतीर्थसमायुक्तं सुगन्धि निर्मलं जलम् ॥ आचम्यार्थं मया दत्तं गृहाण परमेश्वर ॥२॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः आचमनीयं समर्पयामि ॥

मधुपर्कः—दधि क्षौद्रं घृतं शुद्धं कपिलायाः सुगन्धि यत् । सुस्वादु मधुरं शौरे मधुपर्कं गृहाण मे ॥१॥ मध्याह्नचंडार्कभवश्रमाप सितांगसंपर्कमनोहरं परम् ॥ गृहाण भक्त्या मधुपर्कमाहृतं संहृष्य पीताम्बर सात्वतांपते ॥ २ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः मधुपर्कस्नानं समर्पयामि ॥ मधुपर्कस्नानान्ते शुद्धोदकस्नानं सम० । शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

पयःस्नानम्—कामधेनोः समुद्भूतं सर्वेषां जीवनं परम् ॥ पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥ १ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः पयःस्नानं समर्पयामि । पयःस्नानान्ते शुद्धोदकस्नानं सम०॥ शुद्धोदकस्नानान्ते आचमनीयं समर्प० ॥

दधिस्नानम्—पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ॥ दध्यानीतं मया देव स्नानार्थं प्रतिगृह्यताम् ॥ १ ॥ देवक्यादिपरिवारदेवता-

सहितश्रीकृष्णाय नमः दधिस्नानं सम० ॥ दधिस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं सम० ॥

घृतस्नानम्—नवनीतसमुत्पन्नं देवानां प्रीतिवर्धनम् ॥ घृतं तुभ्यं प्रदास्यामि स्नानार्थं प्रतिगृह्यताम् ॥ १ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः घृतस्नानं समर्पयामि । घृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्प० ॥

मधुस्नानम्—तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ॥ तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम् ॥ १ ॥ देवक्यादिपरिवारदेवता सहितश्रीकृष्णाय नमः मधुस्नानं समर्पयामि । मधुस्नानान्ते शुद्धोदकस्नानं समर्पयामि ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

शर्करास्नानम्—इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ॥ मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥ १ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः शर्करास्नानं समर्प० ॥ शर्करास्नानान्ते शुद्धोदकस्नानं समर्प० ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्प० ॥

गन्धोदकस्नानम्—श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् ॥ विलेपनं सुरश्रेष्ठ स्नानार्थं प्रतिगृह्यताम् ॥ १ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः गन्धोदकस्नानं समर्पयामि ॥ गन्धोदकस्नानान्ते शुद्धोदकस्नानं सम० ॥ शुद्धोदकस्नानान्ते आचमनीयं समर्पयामि ॥

उद्वर्तनस्नानम्— नानासुगन्धितं द्रव्यं चन्दनं रजनीयुतम् ॥ उद्वर्तनं मया दत्तं स्नानार्थं प्रतिगृह्यताम् ॥ १ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः उद्वर्तनस्नानं सम० ॥ उद्वर्तनस्नानान्ते शुद्धोदकस्नानं सम० ॥ शुद्धोदकस्नानान्ते आच० सम० ॥

ततः पंचामृताङ्गपूजनत्वेन सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० ॥ इति सपरिवारं देवं गन्धाक्षतपुष्पैः सम्पूज्य । हस्तेजलमादाय—अनेन पंचामृताङ्गपूजनेन देवक्यादिपरिवारदेवतासहितः श्रीकृष्णः प्रीयतां नमम इति संकल्प्य उत्तरे निर्माल्यं विसृज्य पुनः सपरिवारं देवं गन्धाक्षतपुष्पैः संपूज्य "जितं ते पुंडरीकाक्ष०" "सहस्रोर्वङ्घ्रि०" वा इति पुरुषसूक्तेन अभिषेकं कुर्यात् ॥

---

॥ महापुरुषविद्येत्यपरपर्यायम् ऋग्विधानोक्तम् ॥

## ॥ पुरुषसूक्तम् ॥

जितं ते पुंडरीकाक्ष नमस्ते विश्वभावन ॥ नमस्तेऽस्तु हृषीकेश महापुरुषपूर्वज ॥ १ ॥ देवानां दानवानां च सामान्यमधिदैवतम् ॥ सर्वदा चरणद्वन्द्वं व्रजामि शरणं तव ॥ २ ॥ एकस्त्वमसि लोकस्य स्रष्टा संहारकस्तथा ॥ अव्यक्तश्चानुमंता च गुणमायासमावृतः ॥ ३ ॥ संसारसागरं घोरमनन्तं क्लेशभाजनम् ॥ त्वामेव शरणं प्राप्य निस्तरान्ति मनीषिणः ॥ ४ ॥ न ते रूपं न चाकारो नायुधानि न चास्पदम् ॥ तथापि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥ ५ ॥ नैव किञ्चित् परोक्षं ते प्रत्यक्षोऽसि न कस्यचित् ॥ नैव किञ्चिदसाध्यं ते न च साध्योऽसि कस्यचित् ॥ ६ ॥ कार्याणां कारणं पूर्वं वचसां वाच्यमुत्तमम् ॥ योगिनां परमा सिद्धिः परमं ते पदं विदुः ॥ ७ ॥ अहं भीतोऽस्मि देवेश संसारेऽस्मिन् भयावहे ॥ त्राहि मां पुण्डरीकाक्ष

---

१ 'अग्नेर्भगवतस्तस्य समीपे स्तोत्रमुच्चरेत्' इत्यनुक्रम्य ऋग्विधाने 'जितं ते पुण्डरीकाक्षे' त्यादि महापुरुषविद्येत्यपरपर्यायं स्तोत्रमुट्टङ्कितम् । तेनास्य स्तोत्रस्य स्तवने विनियोगः प्रतिभाति न होमे । तत्र तु षोडशर्चामेव विनियोगः । यत्तु अस्मिन्नेव स्तोत्रे 'पुरुषस्य हरेः सूक्त' मित्यनेनास्य स्तोत्रस्य 'पुरुषसूक्ते'ति नाम लिखितं तद् भाक्तं न मुख्यम् ।

न जाने परमं पदम् ॥ ८ ॥ कालेष्वपि च सर्वेषु दिक्षु सर्वासु चाच्युत ॥ शरीरे च गतौ चापि वर्तते मे महद्भयम् ॥ ९ ॥ त्वत्पादकमलादन्यत्र मे जन्मान्तरेष्वपि ॥ विज्ञानं यदिदं प्राप्य यदिदं ज्ञानमर्जितम् ॥ १० ॥ जन्मान्तरेऽपि मे देव माभूदस्य परिक्षयः ॥ दुर्गतावपि जातस्य त्वद्गतो मे मनोरथः ॥ ११ ॥ यदि नाथं च विन्देत तावताऽस्मिन् कृती सदा ॥ कामये विष्णुपादौ तु सर्वजन्मसु केवलम् ॥ १२ ॥ पुरुषस्य हरेः सूक्तं स्वर्ग्यं धन्यं यशस्करम् ॥ आत्मज्ञानमिदं पुण्यं योगध्यानमिदं परम् ॥ १३ ॥ ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः ॥ केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ १४ ॥ एतत्तु यः पठति केवलमेव सूक्तं नारायणस्य चरणावभिवन्द्यवन्द्यौ ॥ पाठेन तेन परमेण सनातनस्य स्थानं जरामरणवर्जितमेति विष्णोः ॥ १५ ॥ हविषाग्नौ जले पुष्पैर्ध्यानेन हृदये हरिम् ॥ यजन्ति सूरयो नित्यं जपेन रविमण्डले ॥ १६ ॥ बिल्वपत्रं शमीपत्रं पत्रं भृंगारकस्य च ॥ मालतीकुशपत्रं च सद्यस्तुष्टिकरं हरेः ॥ १७ ॥ यन्नोपपद्यते किञ्चिद् ध्यानेन मनसैव तु ॥ संपद्यते प्रसादात्तु देवदेवस्य चक्रिणः ॥ १८ ॥ पत्रैश्च पुष्पैश्च फलैश्च तोयैरक्रीतलभ्यैश्च सदैव सत्सु ॥ भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यै किमर्थं क्रियते प्रयत्नः ॥ १९ ॥ इत्येवमुक्तः पुरुषस्य विष्णोरर्चाविधिर्विष्णुकुमारनाम्ना ॥ मुक्त्यैकमार्गप्रतिबोधनाय दृष्ट्वा विधानं त्विह नारदोक्तम् ॥ २० ॥ नमोऽस्त्वनंताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे ॥ सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ २१ ॥ लक्ष्मीकलत्रं शतपत्रनेत्रं पूर्णेंदुवक्त्रं पुरुषोत्तमं च ॥ कारुण्यपात्रं कमनीयगात्रं वंदे पवित्रं वसुदेवसूनुम् ॥ २२ ॥

॥ इति पुरुषसूक्तम् ॥

---

## ॥ श्रीमद्भागवतोक्तं पुरुषसूक्तम् ॥

[1]सहस्रोर्वङ्घ्रिबाह्वक्षः सहस्राननशीर्षवान् । यस्येहावयवैर्लोकान् कल्पयन्ति मनीषिणः ॥ १ ॥ कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः । [2]पुरुषस्य मुखं ब्रह्म क्षत्रमेतस्य बाहवः ॥ ऊर्वोर्वैश्यो भगवतः पद्भ्यां शूद्रोऽभ्यजायत ॥ २ ॥ [3]भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः । स्वर्लोकः कल्पितो मूर्ध्ना इति वा लोककल्पना ॥ ३ ॥ [4]अहं भवान् भवश्चैव त इमे मुनयोऽग्रजाः । सुरासुरनरा नागाः खगा मृगसरीसृपाः ॥ ४ ॥ गन्धर्वाप्सरसो यक्षा रक्षोभूतगणोरगाः । पशवः पितरः सिद्धा विद्याध्राश्चारणा द्रुमाः ॥ ५ ॥ अन्ये च विविधा जीवा जलस्थलनभौकसः । ग्रहर्क्षकेतवस्तारास्तडितः स्तनयित्नवः ॥ ६ ॥ सर्वं पुरुष एवेदं भूतं भव्यं भवच्च यत् । [5]तेनेदमावृतं विश्वं वितस्तिमधितिष्ठति ॥ ७ ॥ स्वधिष्ण्यं प्रतपन् प्राणो बहिश्च प्रतपत्यसौ । एवं विराजं प्रतपंस्तपत्यन्तर्बहिः पुमान् ॥ ८ ॥ [6]सोऽमृतस्याभयस्येशो मर्त्यमन्नं यदत्यगात् । [7]महिमैष ततो ब्रह्मन् पुरुषस्य दुरत्ययः ॥ ९ ॥ [8]पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः । [9]अमृतं क्षेममभयं त्रिमूर्ध्नोऽधायि मूर्धसु ॥ १० ॥ [10]पादास्त्रयो बहिश्चासन्नप्रजानां य आश्रमाः । अन्तस्त्रिलो-

१ 'सहस्रशीर्षे' त्यर्धचस्यार्थमाह । २ 'ब्राह्मणोऽस्य मुखमासी' दित्यस्या ऋचोऽर्थमाह । ३ 'नाभ्याऽआसी' दित्यस्या ऋचोऽर्थमाह । ४ 'पुरुष एवेद सर्वं' मित्यस्या ऋचोऽर्थमाह सार्धत्रिभि श्लोकै । ५ 'स भूमिं सर्वतस्पृत्वे' त्यर्धचस्यार्थमाह । ६ 'उतामृतत्वस्ये' ति ऋचोऽर्थमाह । ७ 'एतावानस्य महिमे' ति ऋचोऽर्थमाह । ८ 'पादोऽस्य विश्वाभूतानी' ति ऋचोऽर्थमाह । ९ 'त्रिपादस्यामृत दिवी' त्यस्यार्थमाह । १० 'त्रिपादूर्ध्वमुदै' दित्यस्यार्थमाह ।

चयास्त्वपरो गृहमेधोऽबृहद्व्रतः॥११॥ सृती विचक्रमे विष्वङ् साशनानशने उभे। यदविद्या च विद्या च पुरुषस्तूभयाश्रयः ॥ १२ ॥ यस्मादण्डं विराड् जज्ञे भूतेन्द्रियगुणात्मकः । तद्द्रव्यमत्यगाद्विश्वं गोभिः सूर्य इवातपन् ॥ १३ ॥ यदास्य नाभ्यान्नलिनादहमासं महात्मनः । नाविदं यज्ञसंभारान् पुरुषावयवादृते ॥ १४ ॥ तेषु यज्ञस्य पशवः सवनस्पतयः कुशाः। इदं च देवयजनं कालश्चोरुगुणान्वितः ॥ १५ ॥ वस्तून्योषधयः स्नेहा रसलोहमृदो जलम्। ऋचो यजूंषि सामानि चातुर्होत्रं च सत्तम ॥ १६ ॥ नामधेयानि मन्त्राश्च दक्षिणाश्च व्रतानि च। देवतानुक्रमः कल्पः संकल्पस्तन्त्रमेव च ॥ १७ ॥ गतयो मतयश्चैव प्रायश्चित्तं समर्पणम्। पुरुषावयवैरेते संभाराः संभृता मया ॥ १८ ॥ इति संभृतसंभारः पुरुषावयवैरहम्। तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् ॥ १९ ॥ ततस्ते भ्रातर इमे प्रजानां पतयो नव। अयजन् व्यक्तमव्यक्तं पुरुषं सुसमाहिताः ॥२०॥ ततश्च मनवः काले ईजिरे ऋषयोऽपरे। पितरो विबुधा दैत्या मनुष्याः क्रतुभिर्विभुम् ॥ २१ ॥ नारायणे भगवति तदिदं विश्वमाहितम् ॥ गृहीतमायोरुगुणः सर्गादावगुणः स्मृतः ॥ २२ ॥ सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः। विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक् ॥२३॥ ( भा० ५,३५–३७,४२ ॥ भा० ६,११–३१ ) ॥

इति श्रीमद्भागवतपुराणसंहितायां द्वितीयस्कन्धगतपंचमषष्ठाध्याययोः श्रीवेदव्यासेन प्रोक्तं पौरुषं सूक्तं समाप्तम् ॥

ॐ

---

१ 'ततो विष्वङ् व्यक्राम' दित्यस्यार्थमाह। २ 'ततोविराडजायत' इत्यस्यार्थमाह। ३ 'तस्माद्यज्ञात्', 'तस्माद्यज्ञात्सर्व-', 'तस्मादश्वा', 'यत्पुरुषेण' इति ऋचामर्थं सगृह्य दर्शयति 'यदास्येति १४ श्लोकमारभ्य 'गतयो मतय' इत्यन्तेन श्लोकपंचकेन। ४ 'यज्ञेन यज्ञमयजन्त' इति मन्त्रार्थं सूचितं। ५ 'तेन देवा अयजन्त' इत्यस्यार्थं सम्यक् दर्शयति द्वाभ्यां श्लोकाभ्याम्। ६ 'पुरुषं जातमग्रत' इत्यस्यार्थो दर्शितः

देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः अभिषेकस्नानं समर्प०॥ अभिषेकस्नानान्ते शुद्धोदकस्नानम् ॥

शुद्धोदकस्नानम्—गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाऽऽहृतम् ॥ तोयमेतत् सुखस्पर्शं स्नानार्थं प्रतिगृह्यताम् ॥ १ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः शुद्धोदकस्नानं समर्प० ॥ शुद्धोदकस्नानान्ते आचमनीयं सम० ॥

वस्त्रोपवस्त्रे—क्षौमे च पत्रसूत्राढ्ये मया नीतांशुके शुभे ॥ गृहाण देवदेवेश प्रीत्या दत्ते सुरोत्तम ॥१॥ सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ॥ मयोपपादिते तुभ्यं गृह्येतां वाससी त्वया ॥ २ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः वस्त्रोपवस्त्रे सम० ॥ वस्त्रोपवस्त्रान्ते आचमनीयं सम० ॥

यज्ञोपवीतं—नमः कृष्णाय देवाय शङ्खचक्रधराय च ॥ ब्रह्मसूत्रं जगन्नाथ गृहाण परमेश्वर ॥ १ ॥ नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् ॥ यज्ञोपवीतं परमं प्रीत्यर्थं प्रतिगृह्यताम् ॥ २ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः यज्ञोपवीतं समर्प० । यज्ञोपवीतान्ते आचमनीयं समर्प० ॥

अलङ्काराः—किरीटकुण्डलादीनि काञ्चीवलययुग्मकम् ॥ कौस्तुभं वनमालां च दत्तानि भूषणानि ते ॥ १ ॥ सुवर्णरत्नमाणिक्यमौक्तिकादिसुमंडितान् ॥ दीप्यमानानलंकारान् गृहाण जगदीश्वर ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः अलंकारान् समर्पयामि ॥

गन्धः—मलयाचलसंभूतं घनसारं मनोहरम् ॥ हृदयानन्दनं चारु चन्दनं प्रतिगृह्यताम् ॥ १ ॥ श्रीखंडं चन्दनं दिव्यं गंधाढ्यं

सुमनोहरम् ॥ विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् ॥ २ ॥ देवक्यादिपरि० दे० स० श्रीकृष्णाय नमः चन्दनं समर्पयामि ॥

अक्षताः—अक्षतांश्च सुरश्रेष्ठ कुंकुमाक्तान् सुशोभनान् ॥ मया निवेदितान् भक्त्या गृहाण परमेश्वर ॥ १ ॥ ब्रह्मणोत्पान् ब्राह्मतोयैः संचितान् विष्णुना तथा ॥ रुद्रेण रक्षितान् भूमन्नक्षतांस्त्वं गृहाण वै ॥२ देवक्यादिपरि० दे० स० श्रीकृष्णाय नमः अक्षतान् समर्पयामि ॥

पुष्पाणि—मालती चम्पकादीनि यूथिकावकुलानि ॥ तुलसीपत्रमिश्राणि पुष्पाणि त्वं गृहाण वै ॥ १ ॥ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो ॥ मयाऽऽहृतानि पुष्पाणि गृहाण सुरसत्तम ॥२॥ देवक्यादिपरि० दे० स० श्रीकृष्णाय नमः पुष्पाणि समर्पयामि ॥

॥ ततोऽङ्गपूजां कुर्यात् ॥

अङ्गपूजा—अघनाशनाय नमः पादौ पूजयामि ॥ १ ॥ वामनाय नमः गुल्फौ पूज० ॥ २ ॥ शौरये नमः जङ्घे पूज० ॥ ३ ॥ वैकुण्ठवासिने नमः ऊरू पूज० ॥४॥ पुरुषोत्तमाय नमः मेढ्रं पूज० ॥५॥ वासुदेवाय नमः कटी पूजयामि ॥ ६ ॥ हृषीकेशाय नमः नाभिं पूजयामि ॥ ७ ॥ माधवाय नमः हृदयं पूज० ॥ ८ ॥ मधुसूदनाय नमः कण्ठं पूज० ॥ ९ ॥ वराहाय नमः बाहू पूज० ॥१०॥ नृसिंहाय नमः हस्तौ पूज० ॥ ११ दैत्यसूदनाय नमः मुखं पूज० ॥ १२ ॥ दामोदराय नमः नासिकां पूज० ॥ १३ ॥ पुण्डरीकाक्षाय नमः नेत्रे पूज०॥ १४ ॥ गरुडध्वजाय नमः श्रोत्रे पूज० ॥ १५ ॥ गोविन्दाय नमः ललाटं पूज० ॥ १६ ॥ अच्युताय नमः शिरः पूज०॥ १७ ॥ श्रीकृष्णाय नमः सर्वाङ्गं पूजयामि ॥ १८॥ इत्येवमङ्गपूजां कुर्यात् ॥

ततोऽन्यपरिवारदेवताः नाममन्त्रेणावाह्य गन्धाक्षतपुष्पैः पूजयेत् । यथा—देवक्यै नमः ॥१॥ वसुदेवाय नमः ॥ २ ॥ रोहिण्यै नमः ॥ ३ ॥ बलरामाय नमः ॥ ४ ॥ सात्यकये नमः ॥ ५ ॥ उद्धवाय नमः ॥ ६ ॥ अक्रूराय नमः ॥ ७ ॥ उग्रसेनादियादवेभ्यो नमः ॥ ८ ॥ नन्दाय नमः ॥ ९ ॥ यशोदायै नमः ॥ १० ॥ गोपाय नमः ॥११॥ गोपिकायै नमः ॥ १२ ॥ कालियाय नमः ॥ १३ ॥ सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

एवं परिवारदेवतापूजनं कृत्वा ततो यथावकाशं श्रीकृष्णसहस्रनामभिः भगवते श्रीकृष्णाय सहस्रतुलसीदलार्पणं कुर्यात् ॥

---

तत्र प्राक् " भगवत्यै भगवत्प्रियायै श्रीतुलसीदेव्यै नमः " सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि । इति तुलसीं पूजयेत् ॥ ( ततः स्याचेदवकाशः तुलसीकवचं पठित्वा तुलसीं प्रार्थयेत् ॥

तुलसि श्रीमहादेवि नमः पंकजधारिणि । शिरो मे तुलसी पातु भालं पातु यशस्विनी ॥ १ ॥ दृशौ मे पद्मनयना श्रीसखी श्रवणे मम । घ्राणं पातु सुगन्धा मे मुखं च सुमुखी मम ॥ २ ॥ जिह्वां मे पातु शुभदा कण्ठं विद्यामयी मम । स्कंधौ कह्लारिणी पातु हृदयं विष्णुवल्लभा ॥ ३ ॥ पुण्यदा मे पातु मध्यं नाभिं सौभाग्यदायिनी । कटिं कुंडलिनी पातु ऊरू नारदवन्दिता ॥ ४ ॥ जननी जानुनी पातु जंघे सकलवन्दिता । नारायणप्रिया पादौ सर्वांगं सर्वरक्षिणी ॥ ५ ॥ संकटे विषमे दुर्गे भये वादे महाहवे । नित्यं हि संध्ययोः पातु तुलसी सर्वतः सदा ॥ ६ ॥ इतीदं परमं गुह्यं तुलस्याः कवचामृतम् । * * * जाप्यं त्रिवर्गसिद्ध्यर्थं गृहस्थेन विशेषतः ॥ ७ ॥ )

ततस्तुलसीदलान्यर्पयेत् ॥

---

॥ श्रीगणेशाय नमः ॥

# ॥ श्रीकृष्णसहस्रनामावलिः ॥



यजमानः (आचम्य प्राणानायम्य) हस्ते जलमादाय । अद्येत्यादि० ॐ (ह्रीं) अस्य श्रीपुराणपुरुषोत्तमश्रीकृष्णसहस्रनाममंत्रस्य नारद ऋषिः अनुष्टुप् छंदः सर्वात्मस्वरूपी श्रीकृष्णः परमात्मा देवता ॐ (ह्रीं) इति बीजं नमः इति शक्तिः कृष्णायेति कीलकं धर्मार्थकाममोक्षार्थे (सहस्रतुलसी-दलसमर्पणे ) जपे विनियोगः ॥

अथ करन्यासः ॥ कालात्मने इति अंगुष्ठाभ्यां नमः ॥ कीर्तिवर्द्धनेति तर्जनीभ्यां नमः ॥ कूटस्थसाक्षीति मध्यमाभ्यां नमः ॥ कैवल्यज्ञानसाधनेति अनामिकाभ्यां नमः ॥ कौस्तुभोद्भासितोरस्केति कनिष्ठिकाभ्यां नमः ॥ कंदर्पज्वरनाशनेति करतलकरपृष्ठाभ्यां नमः ॥

एवं हृदयादिन्यासः॥ कालात्मने इति हृदयाय नमः॥ कीर्तिवर्धनेति शिरसे स्वाहा॥ कूटस्थसाक्षीति शिखायै वषट्॥ ॐ कैवल्यज्ञानसाधिनेति कवचाय हुम्॥ कौस्तुभोद्भासितोरस्केति नेत्रत्रयाय वौषट्॥ कंदर्पज्वरनाशनेति अस्त्राय फट्॥

॥ अथ ध्यानम्॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यान् दारयते बलिं छलयते क्षत्रक्षयं कुर्वते॥
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः॥
वंदे कृष्णं कृपालुं कालिकुलदलनं केशवं कंसशत्रुं
धर्मिष्ठं ब्रह्मनिष्ठं द्विजवरवरदं कालमायातिरिक्तम्॥
कालिंदीकेलिसक्तं कुवलयनयनं कुंडलोद्भासितास्यं
कालातीतस्वधामाश्रितनिजयुवतीवल्लभं कालकालम्॥ १॥

॥ इति ध्यानम्॥

॥ श्रीकृष्णाय नमः॥

१ कृष्णाय नमः
२ कृष्णात्मकाय नमः
३ कृष्णस्वरूपाय नमः
४ कृष्णनामधृपे नमः
५ कृष्णाङ्गाय नमः
६ कृष्णदैवताय नमः
७ कृष्णारक्तविलोचनाय नमः
८ कृष्णाश्रयाय नमः
९ कृष्णवर्त्मने नमः
१० कृष्णालक्ताभिरक्षकाय नमः
११ कृष्णेशप्रीतिजनकाय नमः
१२ कृष्णेशप्रियकारकाय नमः
१३ कृष्णेशारिष्टसंहर्त्रे नमः
१४ कृष्णेशप्राणवल्लभाय नमः
१५ कृष्णेशानन्दजनकाय नमः
१६ कृष्णेशायुर्विवर्द्धनाय नमः

१७ कृष्णेशारिसमूहघ्नाय नमः
१८ कृष्णेशाभीष्टसिद्धिदाय नमः
१९ कृष्णाधीशाय नमः
२० कृष्णकेशाय नमः
२१ कृष्णानन्दविवर्द्धनाय नमः
२२ कृष्णागरुसुगंधाढ्याय नमः
२३ कृष्णागरुसुगंधिविदेनमः
२४ कृष्णागरुविवेकज्ञाय नमः
२५ कृष्णागरुविलेपनाय नमः
२६ कृष्णानन्दैकवरदाय नमः
२७ कृष्णानंदपदाश्रयाय नमः
२८ कृतज्ञाय नमः
२९ कृतकृत्यात्मने नमः
३० कृपासिंधवे नमः
३१ कृपाकराय नमः
३२ कमलावल्लभाकाराय नमः
३३ कलिघ्नाय नमः
३४ कमलापतये नमः
३५ कमलानन्दसंपन्नाय नमः
३६ कमलासेविताकृतये नमः
३७ कमलामानसोल्लासिने नमः
३८ कमलामानदायकाय नमः
३९ कमलालंकृताकाराय नमः
४० कमलाश्रितविग्रहाय नमः
४१ कमलामुखपद्मार्काय नमः
४२ कमलाकरपूजिताय नमः
४३ कमलाकरमध्यस्थाय नमः
४४ कमलाकरतोषिताय नमः
४५ कमलाकरसंसेव्याय नमः
४६ कमलाकरभूषिताय नमः
४७ कमलाकरभावज्ञाय नमः
४८ कमलाकरसंयुताय नमः
४९ कमलाकरपार्श्वस्थाय नमः
५० कमलाकररूपवते नमः
५१ कमलाकरशोभाढ्याय नमः
५२ कमलाकरपंकजाय नमः
५३ कमलाकरपापघ्नाय नमः
५४ कमलाकरपुष्टिकृते नमः
५५ कमलारूपसौभाग्यवर्द्धनाय नमः
५६ कमलेक्षणाय नमः
५७ कमलाकलितांघ्र्यब्जाय नमः
५८ कमलाकलिताकृतये नमः
५९ कमलाहृदयानन्दवर्द्धनाय नमः
६० कमलाप्रियाय नमः

६१ कमलाचलचित्तात्मने नमः
६२ कमलालंकृताकृतये नमः
६३ कमलाचलभावज्ञाय नमः
६४ कमलालिंगिताकृतये नमः
६५ कमलामलनेत्रश्रिये नमः
६६ कमलाचलमानसाय नमः
६७ कमलापरमानन्दवर्द्धनाय नमः
६८ कमलाननाय नमः
६९ कमलानन्तसौभाग्यवर्द्धनाय नमः
७० कमलाश्रयाय नमः
७१ कमलाविलसत्पाणये नमः
७२ कमलामललोचनाय नमः
७३ कमलामलभालश्रिये नमः
७४ कमलाकरपल्लवाय नमः
७५ कमलेशाय नमः
७६ कमलभुवे नमः
७७ कमलानन्ददायकाय नमः
७८ कमलोद्भवभीतिघ्नाय नमः
७९ कमलोद्भवसंस्तुताय नमः
८० कमलाकरपाशाढ्याय नमः
८१ कमलोद्भवपालकाय नमः
८२ कमलासनसंसेव्याय नमः
८३ कमलासनसंस्थिताय नमः
८४ कमलासनरोगघ्नाय नमः
८५ कमलासनपापहन्त्रे नमः
८६ कमलोदरमध्यस्थाय नमः
८७ कमलोदरदीपनाय नमः
८८ कमलोदरसंपन्नाय नमः
८९ कमलोदरसुंदराय नमः
९० कनकालंकृताकाराय नमः
९१ कनकालंकृताम्बराय नमः
९२ कनकालंकृतागाराय नमः
९३ कनकालंकृतासनाय नमः
९४ कनकालंकृतास्यश्रिये नमः
९५ कनकालंकृतास्पदाय नमः
९६ कनकालंकृताङ्घ्र्यब्जाय नमः
९७ कनकालंकृतोदराय नमः
९८ कनकाम्बरशोभाढ्याय नमः
९९ कनकाम्बरभूषणाय नमः
१०० कनकोत्तमभालश्रिये नमः
१०१ कनकोत्तमरूपधृपे नमः
१०२ कनकागारमध्यस्थाय नमः
१०३ कनकागारकारकाय नमः
१०४ कनकाचलमध्यस्थाय नमः

१०५ कनकाचलपालकाय नमः
१०६ कनकाचलशोभाढ्याय नम
१०७ कनकाचलभूषणाय नमः
१०८ कनकैकप्रजाकर्त्रे नमः
१०९ कनकैकप्रदायकाय नमः
११० कवीशाय नमः
१११ कविभावस्थाय नमः
११२ कविनाथाय नमः
११३ कविप्रियाय नमः
११४ कविमानसहंसात्मने नमः
११५ कविवंशविभूषणाय नमः
११६ कविनायकसंसेव्याय नमः
११७ कविनायकपालकाय नमः
११८ कविवंशैकवरदाय नमः
११९ कविवंशशिरोमणये नमः
१२० कविवंशविवेकज्ञाय नमः
१२१ कविवंशप्रबोधकाय नमः
१२२ कविवंशपरित्रात्रे नमः
१२३ कविवंशप्रभावविदे नमः
१२४ कवित्वामृतसंसिद्धाय नमः
१२५ कवित्वामृतसागराय नमः
१२६ कवित्वाकारसंयुक्ताय नमः
१२७ कवित्वाकारपालकाय नमः
१२८ कवित्वाद्वैतभावस्थाय नमः
१२९ कवित्वाश्रयकारकाय नमः
१३० कवीन्द्रहृदयानन्दिने नमः
१३१ कवीन्द्रहृदयास्पदाय नमः
१३२ कवीन्द्रहृदयांतःस्थाय नमः
१३३ कवीन्द्रज्ञानदायकाय नमः
१३४ कवीन्द्रहृदयांभोजप्रकाशै-
कदिवाकराय नमः
१३५ कवीन्द्रहृदयांभोजाह्लादै-
कनिशाकराय नमः
१३६ कवीन्द्रहृदयाब्जस्थाय नमः
१३७ कवीन्द्रमतिबोधकाय नमः
१३८ कवीन्द्रानन्दजनकाय नमः
१३९ कवीन्द्राश्रितपंकजाय नमः
१४० कविशब्दैकवरदाय नमः
१४१ कविशब्दैकदोहनाय नमः
१४२ कविशब्दैकभावस्थाय नमः
१४३ कविशब्दैककारणाय नमः
१४४ कविशब्दैकसंस्तुत्याय नमः
१४५ कविशब्दैकभूषणाय नमः
१४६ कविशब्दैकरसिकाय नमः
१४७ कविशब्दविवेकविदे नमः
१४८ कवित्वब्रह्मविख्यातायनमः

१४९ कवित्वब्रह्मगोचराय नमः
१५० कविवाणीविवेकज्ञाय नमः
१५१ कविवाणीविभूषणाय नमः
१५२ कविवाणीसुधास्वादिनेनमः
१५३ कविवाणीसुधाकराय नमः
१५४ कविवाणीविवेकस्थाय नमः
१५५ कविवाणीविवेकविदे नमः
१५६ कविवाणीपरित्रात्रे नमः
१५७ कविवाणीविलासवते नमः
१५८ कविशक्तिप्रदात्रे नमः
१५९ कविशक्तिप्रवर्तकाय नमः
१६० कविशक्तिसमूहस्थाय नमः
१६१ कविशक्तिकलानिधये नमः
१६२ कलाननाय नमः
१६३ कलरवाय नमः
१६४ कलस्त्रीपरिवेष्टिताय नमः
१६५ कलहंसपरित्रात्रे नमः
१६६ कलहंसपराक्रमाय नमः
१६७ कलहंससमानश्रिये नमः
१६८ कलहंसप्रियंकराय नमः
१६९ कलहंसस्वभावस्थाय नमः
१७० कलहंसैकमानसाय नमः
१७१ कलहंससमारूढाय नमः
१७२ कलहंससमप्रभाय नमः
१७३ कलहंसविवेकज्ञाय नमः
१७४ कलहंसगतिप्रदाय नमः
१७५ कलहंसपरित्रात्रे नमः
१७६ कलहंससुखास्पदाय नमः
१७७ कलहंसकुलाधीशाय नमः
१७८ कलहंसकुलास्पदाय मनः
१७९ कलहंसकुलाधाराय नमः
१८० कलहंसकुलेश्वराय नमः
१८१ कलहंसकुलाचारिणे नमः
१८२ कलहंसकुलप्रियाय नमः
१८३ कलहंसकुलत्रात्रे नमः
१८४ कलहंसकुलात्मकाय नमः
१८५ कलाकोटिसमायुक्ताय नम
१८६ कलाकोटिसमावृताय नमः
१८७ कलाकोटिप्रकाशस्थाय नमः
१८८ कलाकोटिप्रवर्तकाय नमः
१८९ कलानिधिसमाकाराय नमः
१९० कलानिधिसमन्विताय नमः
१९१ कलाकोटिपरित्रात्रे नमः
१९२ कलाकोटिप्रवर्द्धनाय नमः
१९३ कलानिधिसुधास्वादिनेनमः
१९४ कलानिधिसमाश्रितायनमः

१९५ कलंकरहिताकाराय नमः
१९६ कलंकरहितास्पदाय नमः
१९७ कलंकरहितानन्दाय नमः
१९८ कलंकरहितात्मकाय नमः
१९९ कलंकरहिताभासाय नमः
२०० कलंकरहितोदयाय नमः
२०१ कलंकरहितोद्देशाय नमः
२०२ कलंकरहिताननाय नमः
२०३ कलंकरहितश्रीशाय नमः
२०४ कलंकरहितस्तुतये नमः
२०५ कलंकरहितोत्साहाय नमः
२०६ कलंकरहितप्रियाय नमः
२०७ कलंकरहितोच्चाराय नमः
२०८ कलंकरहितेन्द्रियाय नमः
२०९ कलंकरहिताकाराय नमः
२१० कलंकरहितोत्सवाय नमः
२११ कलंकांकितदुष्टघ्नाय नमः
२१२ कलंकांकितधर्महन्त्रे नमः
२१३ कलंकांकितकर्मारये नमः
२१४ कलंकांकितमार्गहृते नमः
२१५ कलंकांकितदुर्दर्शाय नमः
२१६ कलंकांकितदुःसहाय नमः
२१७ कलंकांकितदूरस्थाय नमः
२१८ कलंकांकितदूषणाय नमः
२१९ कलहोत्पत्तिसंहर्त्रे नमः
२२० कलहोत्पत्तिकृद्रिपवे नमः
२२१ कलहातीतधामस्थाय नमः
२२२ कलहातीतनायकाय नमः
२२३ कलहातीततत्त्वज्ञाय नमः
२२४ कलहातीतवैभवाय नमः
२२५ कलहातीतभावस्थाय नमः
२२६ कलहातीतसत्तमाय नमः
२२७ कलिकालबलातीताय नमः
२२८ कलिकालविलोपकाय नमः
२२९ कलिकालैकसंहर्त्रे नमः
२३० कलिकालैकदूषणाय नमः
२३१ कलिकालकुलध्वंसिने नमः
२३२ कलिकालकुलापहाय नमः
२३३ कलिकालभयच्छेत्रे नमः
२३४ कलिकालमदापहाय नमः
२३५ कलिक्लेशविनिर्मुक्ताय नमः
२३६ कलिक्लेशविनाशनाय नमः
२३७ कलिग्रस्तजनत्रात्रे नमः
२३८ कलिग्रस्तनिजार्तिहन्त्रे नमः
२३९ कलिग्रस्तजगन्मित्राय नमः
२४० कलिग्रस्तजगत्पतये नमः

२४१ कलिग्रस्तजगत्त्रात्रे नमः
२४२ कलिपाशविनाशनाय नमः
२४३ कलिमुक्तिप्रदात्रे नमः
२४४ कर्मे नमः
२४५ कलिमुक्तकलेवराय नमः
२४६ कलिमुक्तमनोवृत्तये नमः
२४७ कलिमुक्तमहामतये नमः
२४८ कलिकालमतातीताय नमः
२४९ कलिधर्मविलोपकाय नमः
२५० कलिधर्माधिपध्वंसिने नमः
२५१ कलिधर्मैकखंडनाय नमः
२५२ कलिधर्माधिपालक्ष्याय नमः
२५३ कलिकालविकारहन्त्रे नमः
२५४ कलिकर्मकथातीताय नमः
२५५ कलिकर्मकथारिपवे नमः
२५६ कलिकष्टैकशमनाय नमः
२५७ कलिकष्टविवर्जिताय नमः
२५८ कलिघ्नाय नमः
२५९ कलिधर्मघ्नाय नमः
२६० कलिधर्माधिकारिहन्त्रे नमः
२६१ कर्मविदे नमः
२६२ कर्मकृते नमः
२६३ कर्मिणे नमः
२६४ कर्मकांडैकदोहनाय नमः
२६५ कर्मस्थाय नमः
२६६ कर्मजनकाय नमः
२६७ कर्मिष्ठाय नमः
२६८ कर्मसाधनाय नमः
२६९ कर्मकर्त्रे नमः
२७० कर्मभर्त्रे नमः
२७१ कर्महर्त्रे नमः
२७२ कर्मजिते नमः
२७३ कर्मजातजगत्त्रात्रे नमः
२७४ कर्मजातजगत्पतयेनमः
२७५ कर्मजातजगन्मित्राय नमः
२७६ कर्मजातजगद्गुरवे नमः
२७७ कर्मभूतभवच्छत्राय नमः
२७८ कर्मभूतभयार्तिहन्त्रे नमः
२७९ कर्मकांडपरिज्ञात्रे नमः
२८० कर्मकांडप्रवर्तकाय नमः
२८१ कर्मकांडपरित्रात्रे नमः
२८२ कर्मकाण्डप्रमाणकृते नमः
२८३ कर्मकाण्डविवेकज्ञाय नमः
२८४ कर्मकांडप्रचाराय नमः
२८५ कर्मकांडविवेकस्थाय नमः
२८६ कर्मकांडैकदोहनाय नमः

२८७ कर्मकांडरताभीष्टप्रदात्रेनमः
२८८ कर्मतत्पराय नमः
२८९ कर्मबद्धजगत्त्रात्रे नमः
२९० कर्मबद्धजगद्गुरवे नमः
२९१ कर्मबंधार्तिशमनाय नमः
२९२ कर्मबंधविमोचनाय नमः
२९३ कर्ममूलजगद्धेतवे नमः
२९४ कर्ममूलनिकंदनाय नमः
२९५ कर्मबीजपरित्रात्रे नमः
२९६ कर्मबीजविवर्द्धनाय नमः
२९७ कर्मद्रुमफलाधीशाय नमः
२९८ कर्मद्रुमफलप्रदाय नमः
२९९ कर्मिष्ठद्विजवर्यस्थाय नमः
३०० कर्मिष्ठद्विजवल्लभाय नमः
३०१ कर्मिष्ठद्विजजीवात्मने नमः
३०२ कर्मिष्ठद्विजजीवनाय नमः
३०३ कर्मिष्ठद्विजभावज्ञाय नमः
३०४ कर्मिष्ठद्विजपालकाय नमः
३०५ कर्मिष्ठद्विजजातिस्थाय नमः
३०६ कर्मिष्ठद्विजकामदाय नमः
३०७ कर्मिष्ठद्विजसंसेव्याय नमः
३०८ कर्मिष्ठद्विजपापघ्न्ने नमः
३०९ कर्मिष्ठद्विजबुद्धिस्थाय नमः
३१० कर्मिष्ठद्विजबोधकाय नमः
३११ कर्मिष्ठद्विजभीतिघ्नाय नमः
३१२ कर्मिष्ठद्विजमुक्तिदाय नमः
३१३ कर्मिष्ठद्विजदोषघ्नाय नमः
३१४ कर्मिष्ठद्विजकामदुहे नमः
३१५ कर्मिष्ठद्विजसंपूज्याय नमः
३१६ कर्मिष्ठद्विजतारकाय नमः
३१७ कर्मिष्ठारिष्टसंहर्त्रे नमः
३१८ कर्मिष्ठाभीष्टसिद्धिदायनमः
३१९ कर्मिष्ठादृष्टमध्यस्थाय नमः
३२० कर्मिष्ठादृष्टवर्द्धनाय नमः
३२१ कस्तूरीद्रवलिप्तांगाय नमः
३२२ कस्तूरींद्रववल्लभाय नमः
३२३ कस्तूरीसौरभग्राहिणे नमः
३२४ कस्तूरीमृगवल्लभाय नमः
३२५ कस्तूरीतिलकानंदिने नमः
३२६ कस्तूरीतिलकप्रियाय नमः
३२७ कस्तूरीतिलकाश्लेषिणे नमः
३२८ कस्तूरीतिलकांकिताय नमः
३२९ कस्तूरीवासनालीनाय नमः
३३० कस्तूरीवासनाप्रियाय नमः
३३१ कस्तूरीवासनारूपाय नमः
३३२ कस्तूरीवासनात्मकाय नमः

३३३ कस्तूरीवासनांतःस्थाय नमः
३३४ कस्तूरीवासनास्पदाय नमः
३३५ कस्तूरीचन्दनग्राहिणे नमः
३३६ कस्तूरीचन्दनार्चिताय नमः
३३७ कस्तूरीचन्दनान्विताय नमः
३३८ कस्तूरीचन्दनप्रियाय नमः
३३९ कस्तूरीचन्दनाकाराय नमः
३४० कस्तूरीचन्दनासनाय नमः
३४१ कस्तूरीचार्चितोरस्काय नमः
३४२ कस्तूरीचर्चिताननाय नमः
३४३ कस्तूरीचार्चितश्रीशाय नमः
३४४ कस्तूरीचर्चितांबराय नमः
३४५ कस्तूरीचर्चितास्यश्रिये नमः
३४६ कस्तूरीचर्चितप्रियाय नमः
३४७ कस्तूरीमोदमुदिताय नमः
३४८ कस्तूरीमोदवर्द्धनाय नमः
३४९ कस्तूरीमोददीप्तांगाय नमः
३५० कस्तूरीसुंदराकृतये नमः
३५१ कस्तूरीमोदरसिकाय नमः
३५२ कस्तूरीमोदलोलुपाय नमः
३५३ कस्तूरीपरमानन्दिने नमः
३५४ कस्तूरीपरमेश्वराय नमः
३५५ कस्तूरीदानसंतुष्टाय नमः
३५६ कस्तूरीदानवल्लभाय नमः
३५७ कस्तूरीपरमाह्लादनाय नमः
३५८ कस्तूरीपुष्टिवर्द्धनाय नमः
३५९ कस्तूरीमुदितात्मने नमः
३६० कस्तूरीमुदिताशयाय नमः
३६१ कदलीवनमध्यस्थाय नमः
३६२ कदलीवनपालकाय नमः
३६३ कदलीवनसंचारिणे नमः
३६४ कदलीवनवल्लभाय नमः
३६५ कदलीदर्शनानंदिने नमः
३६६ कदलीदर्शनोत्सुकाय नमः
३६७ कदलीपल्लवास्वादिने नमः
३६८ कदलीपल्लवाश्रयाय नमः
३६९ कदलीफलसंतुष्टाय नमः
३७० कदलीफलदायकाय नमः
३७१ कदलीफलसंपुष्टाय नमः
३७२ कदलीफलभोजनाय नमः
३७३ कदलीफलवर्षाशिने नमः
३७४ कदलीफलतोषिताय नमः
३७५ कदलीफलमाधुर्यवल्लभाय नमः
३७६ कदलीप्रियाय नमः
३७७ कपिध्वजसमायुक्ताय नमः

३७८ कपिध्वजरिपुस्तुताय नमः
३७९ कपिध्वजपरित्रात्रे नमः
३८० कपिध्वजसमाश्रिताय नमः
३८१ कपिध्वजहृदंतःस्थाय नमः
३८२ कपिध्वजजयप्रदाय नमः
३८३ कपिध्वजरथारूढाय नमः
३८४ कपिध्वजयशःप्रदाय नमः
३८५ कपिध्वजैकपापघ्नाय नमः
३८६ कपिध्वजसुखप्रदाय नमः
३८७ कपिध्वजारिसंहर्त्रे नमः
३८८ कपिध्वजभयापहन्त्रे नमः
३८९ कपिध्वजमनोभिज्ञाय नमः
३९० कपिध्वजमतिप्रदाय नमः
३९१ कपिध्वजसुहृन्मित्राय नमः
३९२ कपिध्वजसुहृत्सखाय नमः
३९३ कपिध्वजांगनाराध्याय नमः
३९४ कपिध्वजगतिप्रदाय नमः
३९५ कपिध्वजांगनारिघ्नाय नमः
३९६ कपिध्वजरतिप्रदाय नमः
३९७ कपिध्वजकुलत्रात्रे नमः
३९८ कपिध्वजकुलारिहन्त्रे नमः
३९९ कपिध्वजकुलाधीशाय नमः
४०० कपिध्वजकुलप्रियाय नमः
४०१ कपीन्द्रसेवितांघ्र्यब्जाय नम
४०२ कपीन्द्रस्तुतिवल्लभाय नमः
४०३ कपीन्द्राश्रितपादाब्जाय नम
४०४ कपीन्द्राश्रितविग्रहाय नमः
४०५ कपीन्द्रानन्दजनकाय नमः
४०६ कपीन्द्राश्रितमानसाय नमः
४०७ कपीन्द्राराधिताकाराय नमः
४०८ कपीन्द्राभीष्टसिद्धिदाय नमः
४०९ कपीन्द्रारातिसंहर्त्रे नमः
४१० कपीन्द्रातिबलप्रदाय नमः
४११ कपीन्द्रैकपरित्रात्रे नमः
४१२ कपीन्द्रैकयशःप्रदाय नमः
४१३ कपीन्द्राननसंपन्नाय नमः
४१४ कपीन्द्रानंदवर्द्धनाय नमः
४१५ कपीन्द्रध्यानगम्यात्मने नम
४१६ कपीन्द्रज्ञानदायकाय नमः
४१७ कल्याणमंगलाकाराय नमः
४१८ कल्याणमंगलास्पदाय नमः
४१९ कल्याणमंगलाधीशाय नमः
४२० कल्याणमगलप्रदाय नमः
४२१ कल्याणमंगलागाराय नमः
४२२ कल्याणमंगलात्मकाय नमः
४२३ कल्याणानन्दसंपन्नाय नमः

| | |
|---|---|
| ४२४ कल्याणानन्दवर्धनाय नमः | ४४७ कल्पवृक्षपरित्रात्रे नमः |
| ४२५ कल्याणानन्दसहिताय नमः | ४४८ कल्पवृक्षसमावृताय नमः |
| ४२६ कल्याणानंददायकाय नमः | ४४९ कल्पवृक्षवनाधीशाय नमः |
| ४२७ कल्याणानंदसंतुष्टाय नमः | ४५० कल्पवृक्षवनास्पदाय नमः |
| ४२८ कल्याणानंदसंयुताय नमः | ४५१ कल्पांतदहनाकाराय नमः |
| ४२९ कल्याणीरागसंगीताय नमः | ४५२ कल्पांतदहनोपमाय नमः |
| ४३० कल्याणीरागवल्लभाय नमः | ४५३ कल्पांतकालशमनाय नमः |
| ४३१ कल्याणीरागरसिकाय नमः | ४५४ कल्पांतातीतविग्रहाय नमः |
| ४३२ कल्याणीरागकारकाय नमः | ४५५ कलशोद्भवसंसेव्याय नमः |
| ४३३ कल्याणीकेलिकुशलाय नमः | ४५६ कलशोद्भववल्लभाय नमः |
| ४३४ कल्याणीप्रियदर्शनाय नमः | ४५७ कलशोद्भवभीतिघ्नाय नमः |
| ४३५ कल्पशास्त्रपरिज्ञात्रे नमः | ४५८ कलशोद्भवसिद्धिदाय नमः |
| ४३६ कल्पशास्त्रार्थदोहनाय नमः | ४५९ कपिलाय नमः |
| ४३७ कल्पशास्त्रसमुद्धर्त्रे नमः | ४६० कपिलाकाराय नमः |
| ४३८ कल्पशास्त्रपरिस्तुताय नमः | ४६१ कपिलप्रियदर्शनाय नमः |
| ४३९ कल्पकोटिशतातीताय नमः | ४६२ कर्दमात्मजभावस्थाय नमः |
| ४४० कल्पकोटिशतोत्तराय नमः | ४६३ कर्दमप्रियकारकाय नमः |
| ४४१ कल्पकोटिशतज्ञानिने नमः | ४६४ कन्यकानीकवरदाय नमः |
| ४४२ कल्पकोटिशतप्रभवे नमः | ४६५ कन्यकानीकवल्लभाय नमः |
| ४४३ कल्पवृक्षसमाकाराय नमः | ४६६ कन्यकानीकसंस्तुत्यायनमः |
| ४४४ कल्पवृक्षसमप्रभाय नमः | ४६७ कन्यकानीकनायकाय नमः |
| ४४५ कल्पवृक्षसमोदाराय नमः | ४६८ कन्यादानप्रदत्रात्रे नमः |
| ४४६ कल्पवृक्षसमास्थिताय नमः | ४६९ कन्यादानप्रदप्रियाय नमः |

४७० कन्यादानप्रभावज्ञाय नमः
४७१ कन्यादानप्रदायकाय नमः
४७२ कश्यपात्मजभावस्थाय नमः
४७३ कश्यपात्मजभास्करायनमः
४७४ कश्यपात्मजशत्रुघ्नाय नमः
४७५ कश्यपात्मजपालकाय नमः
४७६ कश्यपात्मजमध्यस्थाय नमः
४७७ कश्यपात्मजवल्लभाय नमः
४७८ कश्यपात्मजभीतिघ्नाय नमः
४७९ कश्यपात्मजदुर्लभाय नमः
४८० कश्यपात्मजभावस्थायनमः
४८१ कश्यपात्मजभावविदे नमः
४८२ कश्यपोद्भवदैत्यारये नमः
४८३ कश्यपोद्भवदेवराजे नमः
४८४ कश्यपानन्दजनकाय नमः
४८५ कश्यपानन्दवर्द्धनाय नमः
४८६ कश्यपारिष्टसंहर्त्रे नमः
४८७ कश्यपाभीष्टसिद्धिदाय नमः
४८८ कर्तृकर्मक्रियातीताय नमः
४८९ कर्तृकर्मक्रियान्वयाय नमः
४९० कर्तृकर्मक्रियालक्ष्याय नमः
४९१ कर्तृकर्मक्रियास्पदाय नमः
४९२ कर्तृकर्मक्रियाधीशाय नमः
४९३ कर्तृकर्मक्रियात्मकाय नमः
४९४ कर्तृकर्मक्रियाभासाय नमः
४९५ कर्तृकर्मक्रियाप्रदाय नमः
४९६ कृपानाथाय नमः
४९७ कृपासिंधवे नमः
४९८ कृपाधीशाय नमः
४९९ कृपाकराय नमः
५०० कृपासागरमध्यस्थायनमः
५०१ कृपापात्राय नमः
५०२ कृपानिधये नमः
५०३ कृपापात्रैकवरदाय नमः
५०४ कृपापात्रभयापहाय नमः
५०५ कृपाकटाक्षपापघ्नाय नमः
५०६ कृतकृत्याय नमः
५०७ कृतांतकाय नमः
५०८ कदम्बवनमध्यस्थाय नमः
५०९ कदम्बकुसुमप्रियाय नमः
५१० कदंबवनसंचारिणे नमः
५११ कदंबवनवल्लभाय नमः
५१२ कर्पूरामोदमुदिताय नमः
५१३ कर्पूरामोदवल्लभाय नमः
५१४ कर्पूरावासनासक्ताय नमः
५१५ कर्पूरागुरुचर्चिताय नमः

५१६ करुणारससंपूर्णाय नमः
५१७ करुणारसवर्द्धनाय नमः
५१८ करुणाकरविख्याताय नमः
५१९ करुणाकरसागराय नमः
५२० कालात्मने नमः
५२१ कालजनकाय नमः
५२२ कालाग्रये नमः
५२३ कालसंज्ञकाय नमः
५२४ कालाय नमः
५२५ कालकलातीताय नमः
५२६ कालस्थाय नमः
५२७ कालभैरवाय नमः
५२८ कालज्ञाय नमः
५२९ कालसंहर्त्रे नमः
५३० कालचक्रप्रवर्तकाय नमः
५३१ कालरूपाय नमः
५३२ कालनाथाय नमः
५३३ कालकृते नमः
५३४ कालिकाप्रियाय नमः
५३५ कालैकवरदाय नमः
५३६ कालाय नमः
५३७ कारणाय नमः
५३८ कालरूपभुजे नमः
५३९ कालमायाकलातीताय नमः
५४० कालमायाप्रवर्तकाय नमः
५४१ कालमायाविनिर्मुक्तायनमः
५४२ कालमायाबलापहाय नमः
५४३ कालत्रयगतिज्ञात्रे नमः
५४४ कालत्रयपराक्रमाय नमः
५४५ कालज्ञानकलातीताय नमः
५४६ कालज्ञानप्रदायकाय नमः
५४७ कालज्ञाय नमः
५४८ कालरहिताय नमः
५४९ कालाननसमप्रभाय नमः
५५० कालचक्रैकहेतुस्थाय नमः
५५१ कालरात्रिदुरत्ययाय नमः
५५२ कालपाशविनिर्मुक्ताय नमः
५५३ कालपाशविमोचनाय नमः
५५४ कालव्यालैकदलनाय नमः
५५५ कालव्यालभयापहन्त्रे नमः
५५६ कालकर्मकलातीताय नमः
५५७ कालकर्मकलाश्रयाय नमः
५५८ कालकर्मकलाधीशाय नमः
५५९ कालकर्मकलात्मकाय नमः
५६० कालव्यालपरिग्रस्तनिजभ-
क्तैकमोचनाय नमः

५६१ कालागरुसुगंधाढ्यायनमः
५६२ कालागरुविलेपनाय नमः
५६३ कालागरुसुगंधज्ञाय नमः
५६४ कालागरुसुगंधकृते नमः
५६५ काशिराजशिरश्छेत्रे नमः
५६६ काशीशप्रियकारकाय नमः
५६७ काशीस्थार्तिहराय नमः
५६८ काशीमध्यस्थाय नमः
५६९ काशीकाप्रियाय नमः
५७० काशीवासिजनानान्दिनेनमः
५७१ काशीवासिजनप्रियाय नमः
५७२ काशीवासिजनत्रात्रे नमः
५७३ काशीवासिजनस्तुतये नमः
५७४ काशीवासिविकारघ्नाय नमः
५७५ काशीवासिविमोचनायनमः
५७६ काशीवासिजनोद्धर्त्रे नमः
५७७ काशीवासकुलप्रदाय नमः
५७८ काशीवास्याश्रितांघ्र्यब्जाय नमः
५७९ काशीवासिसुखप्रदाय नमः
५८० काशीस्थाभीष्टफलदायनमः
५८१ काशीस्थारिष्टनाशनायनमः
५८२ काशीस्थद्विजसंसेव्यायनमः
५८३ काशीस्थद्विजपालकायनमः
५८४ काशीस्थद्विजसद्बुद्धिप्रदात्रे नमः
५८५ काशिकाश्रयाय नमः
५८६ कांतिशाय नमः
५८७ कांतिदाय नमः
५८८ कांताय नमः
५८९ कांतारप्रियदर्शनाय नमः
५९० कांतिमते नमः
५९१ कांतिजनकाय नमः
५९२ कांतिस्थाय नमः
५९३ कांतिवर्द्धनाय नमः
५९४ कापट्यप्रबलच्छेत्रे नमः
५९५ कायस्थाय नमः
५९६ कायवर्द्धनाय नमः
५९७ कायभाग्भयभीतिघ्नायनमः
५९८ कायरोगापहारकाय नमः
५९९ कार्यकारणकर्तृस्थाय नमः
६०० कार्यकारणकारकाय नमः
६०१ कार्यकारणसंपन्नाय नमः
६०२ कार्यकारणसिद्धिदाय नमः
६०३ काव्यामृतरसास्वादिने नमः
६०४ काव्यामृतरसात्मकाय नमः

६०५ काव्यामृतरसाभिज्ञाय नमः
६०६ काव्यामृतरसप्रियाय नमः
६०७ कादिवर्णकजनकाय नमः
६०८ कादिवर्णप्रवर्तकाय नमः
६०९ कादिवर्णविवेकज्ञाय नमः
६१० कादिवर्णविनोदनाय नमः
६११ कादिहादिमनुज्ञाताय नमः
६१२ कादिहादिमनुप्रियाय नमः
६१३ कादिहादिमनूद्धारकारकाय नमः
६१४ कादिसंज्ञकाय नमः
६१५ कालुष्यरहिताकाराय नमः
६१६ कालुष्यैकविनाशनाय नमः
६१७ कारागृहविमुक्तात्मने नमः
६१८ कारागृहविमोचनाय नमः
६१९ कामात्मने नमः
६२० कामाय नमः
६२१ कामिने नमः
६२२ कामिशाय नमः
६२३ कामपूरकाय नमः
६२४ कामहन्त्रे नमः
६२५ कामजनकाय नमः
६२६ कामिने नमः
६२७ काममदायकाय नमः
६२८ कामपालाय नमः
६२९ कामभर्त्रे नमः
६३० कामकेलिकलानिधये नमः
६३१ कामकेलिकलासक्ताय नमः
६३२ कामकेलिकलाप्रियाय नमः
६३३ कामबीजैकवरदाय नमः
६३४ कामबीजसमन्विताय नमः
६३५ कामजित्कामवरदाय नमः
६३६ कामक्रीडातिलालसाय नमः
६३७ कामार्तिशमनाय नमः
६३८ कामालंकृताय नमः
६३९ कामसंस्तुताय नमः
६४० कामेश्वराय नमः
६४१ कामदेवाय नमः
६४२ कामबीजैकजीवनाय नमः
६४३ कामधेनुपरित्रात्रे नमः
६४४ कामधेनुसमावृताय नमः
६४५ कामिनीकामजनकाय नमः
६४६ कामिनीकामवर्द्धनाय नमः
६४७ कामिनीकामरसिकाय नमः
६४८ कामिनीकामपूरकाय नमः
६४९ कामिनीमानदाय नमः

६५० कामकलाकौतुहलप्रियाय नमः
६५१ कामिनीप्रेमजनकाय नमः
६५२ कामिनीप्रेमवर्द्धनाय नमः
६५३ कामिनीहावभावज्ञाय नमः
६५४ कामिनीप्रीतिवर्द्धनाय नमः
६५५ कामिनीरूपरसिकाय नमः
६५६ कामिनीरूपभूषणाय नमः
६५७ कामिनीमानसोल्लासिनेनमः
६५८ कामिनीमानसास्पदायनमः
६५९ कामिभक्तजनत्रात्रे नमः
६६० कामिभक्तजनप्रियाय नमः
६६१ कालिंदीविषसंहर्त्रे नमः
६६२ कालिन्दीप्राणजीवनायनमः
६६३ कालिन्दीहृदयानन्दिनेनमः
६६४ कालिन्दीनीरवल्लभाय नमः
६६५ कालिन्दीकेलिकुशलायनमः
६६६ कालिन्दीप्रीतिवर्द्धनायनमः
६६७ कालिन्दीकेलिरसिकायनमः
६६८ कालिन्दीकेलिलालसाय नमः
६६९ कालिन्दीनीरसंखेलद्गोपीयूथसमावृताय नमः
६७० कालिन्दीनीरमध्यस्थायनमः
६७१ कालिन्दीनीरकेलिकृते नमः
६७२ कालिन्दीरमणासक्तायनमः
६७३ कालिनागमदापहाय नमः
६७४ कांचनाद्रिसमानश्रिये नमः
६७५ कांचनाद्रिनिवासकृते नमः
६७६ कांचनाभूषणासक्ताय नमः
६७७ कांचनैकविवर्द्धनाय नमः
६७८ कांचनाभश्रियासक्तायनमः
६७९ कांचनाभश्रियाश्रितायनमः
६८० कार्तिकेयैकवरदाय नमः
६८१ कार्तवीर्यमदापहाय नमः
६८२ किशोरीनायिकासक्तायनमः
६८३ किशोरीनायिकाप्रियायनमः
६८४ किशोरीकेलिकुशलायनमः
६८५ किशोरीप्राणजीवनायनमः
६८६ किशोरीवल्लभाकारायनमः
६८७ किशोरीप्राणवल्लभायनमः
६८८ किशोरीप्रीतिजनकायनमः
६८९ किशोरीप्रियदर्शनायनमः
६९० किशोरीकेलिसंसक्ताय नमः
६९१ किशोरीकेलिवल्लभाय नमः
६९२ किशोरीकेलिसंयुक्ताय नमः

६९३ किशोरीकेलिलोलुपाय नमः
६९४ किशोरीहृदयानन्दिने नमः
६९५ किशोरीहृदयास्पदाय नमः
६९६ किशोरीशाय नमः
६९७ किशोरात्मने नमः
६९८ किशोराय नमः
६९९ किंशुकाकृतयेनमः
७०० किंशुकाभरणालक्ष्याय नमः
७०१ किंशुकाभरणान्विताय नमः
७०२ कीर्तिमत्कीर्तिजनकाय नमः
७०३ कीर्तनीयपराक्रमाय नमः
७०४ कीर्तनीययशोराशये नमः
७०५ कीर्तिस्थाय नमः
७०६ कीर्तनप्रियाय नमः
७०७ कीर्तिश्रीमतिदाय नमः
७०८ कीर्तये नमः
७०९ कीर्तिज्ञाय नमः
७१० कीर्तिवर्द्धनाय नमः
७११ क्रियात्मकाय नमः
७१२ क्रियाधाराय नमः
७१३ क्रियाभासाय नमः
७१४ क्रियास्पदाय नमः
७१५ कीलालामलचिद्वृत्तये नमः
७१६ कीलालाश्रयकारणाय नमः
७१७ कुलधर्माधिपाधीशाय नमः
७१८ कुलधर्माधिपप्रियाय नमः
७१९ कुलधर्मपरित्रात्रे नमः
७२० कुलधर्मपतिस्तुताय नमः
७२१ कुलधर्मपदाधाराय नमः
७२२ कुलधर्मपदाश्रयाय नमः
७२३ कुलधर्मपतिप्राणाय नमः
७२४ कुलधर्मपतिप्रियाय नमः
७२५ कुलधर्मपतित्रात्रे नमः
७२६ कुलधर्मैकरक्षकाय नमः
७२७ कुलधर्मसमासक्ताय नमः
७२८ कुलधर्मैकदोहनाय नमः
७२९ कुलधर्मसमुद्धर्त्रे नमः
७३० कुलधर्मप्रभावविदे नमः
७३१ कुलधर्मसमाराध्याय नमः
७३२ कुलधर्मधुरंधराय नमः
७३३ कुलधर्माधिकारस्थाय नमः
७३४ कुलधर्मविवर्द्धनाय नमः
७३५ कुलमार्गरतासक्ताय नमः
७३६ कुलमार्गरताश्रयाय नमः
७३७ कुलमार्गसमासीनाय नमः
७३८ कुलमार्गसमुत्सुकाय नमः

७३९ कुलाचारविचारज्ञाय नमः
७४० कुलाचारसमाश्रिताय नमः
७४१ कुलाचारसमायुक्ताय नमः
७४२ कुलाचारसुखप्रदाय नमः
७४३ कुलाचारातिचतुराय नमः
७४४ कुलाचारातिवल्लभाय नमः
७४५ कुलाचारपवित्राङ्गाय नमः
७४६ कुलाचारप्रमाणकृते नमः
७४७ कुलवृक्षैकजनकाय नमः
७४८ कुलवृक्षविवर्द्धनाय नमः
७४९ कुलवृक्षपरित्रात्रे नमः
७५० कुलवृक्षफलप्रदाय नमः
७५१ कुलवृक्षफलाधीशाय नमः
७५२ कुलवृक्षफलाशनाय नमः
७५३ कुलमार्गकलाभिज्ञाय नमः
७५४ कुलमार्गकलान्विताय नमः
७५५ कुकर्मनिरतातीताय नमः
७५६ कुकर्मनिरतांतकाय नमः
७५७ कुकर्ममार्गरहिताय नमः
७५८ कुकर्मैकनिषूदनाय नमः
७५९ कुकर्मरहिताधीशाय नमः
७६० कुकर्मरहितात्मकाय नमः
७६१ कुकर्मरहिताकाराय नमः
७६२ कुकर्मरहितास्पदाय नमः
७६३ कुकर्मरहिताचाराय नमः
७६४ कुकर्मरहितोत्सवाय नमः
७६५ कुकर्मरहितोद्देशाय नमः
७६६ कुकर्मरहितप्रियाय नमः
७६७ कुकर्मरहितांतःस्थाय नमः
७६८ कुकर्मरहितेश्वराय नमः
७६९ कुकर्मरहितस्त्रीशाय नमः
७७० कुकर्मरहितप्रजाय नमः
७७१ कुकर्मोद्भवपापघ्नाय नमः
७७२ कुकर्मोद्भवदुःखहन्त्रे नमः
७७३ कुतर्करहिताधीशाय नमः
७७४ कुतर्करहिताकृतये नमः
७७५ कूटस्थसाक्षिणे नमः
७७६ कूटात्मने नमः
७७७ कूटस्थाक्षरनायकाय नमः
७७८ कूटस्थाक्षरसंसेव्याय नमः
७७९ कूटस्थाक्षरकारणाय नमः
७८० कुबेरबंधवे नमः
७८१ कुशलाय नमः
७८२ कुंभकर्णविनाशनाय नमः
७८३ कूर्माकृतिधराय नमः
७८४ कूर्माय नमः

७८५ कूर्मस्थावनिपालकाय नमः
७८६ कुमारीवरदाय नमः
७८७ कुस्थाय नमः
७८८ कुमारीगणसेविताय नमः
७८९ कुशस्थलीसमासीनाय नमः
७९० कुशदैत्यविनाशनाय नमः
७९१ केशवाय नमः
७९२ क्लेशसंहर्त्रे नमः
७९३ केशिदैत्यविनाशनाय नमः
७९४ क्लेशहीनमनोवृत्तये नमः
७९५ क्लेशहीनपरिग्रहाय नमः
७९६ क्लेशातीतपदाधीशाय नमः
७९७ क्लेशातीतजनप्रियाय नमः
७९८ क्लेशातीतशुभाकाराय नमः
७९९ क्लेशातीतसुखास्पदाय नमः
८०० क्लेशातीतसमाजस्थाय नमः
८०१ क्लेशातीतमहामतये नमः
८०२ क्लेशातीतजनत्रात्रे नमः
८०३ क्लेशहीनजनेश्वराय नमः
८०४ क्लेशहीनस्वधर्मस्थाय नमः
८०५ क्लेशहीनविमुक्तिदाय नमः
८०६ क्लेशहीननराधीशाय नमः
८०७ क्लेशहीननरोत्तमाय नमः
८०८ क्लेशातिरिक्तसदनाय नमः
८०९ क्लेशमूलनिकंदनाय नमः
८१० क्लेशातिरिक्तभावस्थाय नमः
८११ क्लेशहीनैकवल्लभाय नमः
८१२ क्लेशहीनपदातिःस्थाय नमः
८१३ क्लेशहीनजनार्दनाय नमः
८१४ केसरांकितभालश्रिये नमः
८१५ केसरांकितवल्लभाय नमः
८१६ केसरालिप्तहृदयाय नमः
८१७ केसरालिप्तसद्भुजाय नमः
८१८ केसरांकितवासश्रिये नमः
८१९ केसरांकितविग्रहाय नमः
८२० केसराकृतिगोपीशाय नमः
८२१ केसरामोदवल्लभाय नमः
८२२ केसरामोदमधुपाय नमः
८२३ केसरामोदसुंदराय नमः
८२४ केसरामोदमुदिताय नमः
८२५ केसरामोदवर्द्धनाय नमः
८२६ केसरार्चितभालश्रिये नमः
८२७ केसरार्चितविग्रहाय नमः
८२८ केसरार्चितपादाब्जाय नमः
८२९ केसरार्चितकुण्डलाय नमः
८३० केसरामोदसंपन्नाय नमः

८३१ केसरामोदलोलुपाय नमः
८३२ केतकीकुसुमासक्ताय नमः
८३३ केतकीकुसुमप्रियाय नमः
८३४ केतकीकुसुमाधीशाय नमः
८३५ केतकीकुसुमांकिताय नमः
८३६ केतकीकुसुमामोदवर्द्धनाय नमः
८३७ केतकीप्रियाय नमः
८३८ केतकीशोभिताकाराय नमः
८३९ केतकीशोभिताम्बराय नमः
८४० केतकीकुसुमामोदवल्लभाय नमः
८४१ केतकीश्वराय नमः
८४२ केतकीसौरभानन्दिने नमः
८४३ केतकीसौरभप्रियाय नमः
८४४ केयूरालंकृतभुजाय नमः
८४५ केयूरालंकृतात्मकाय नमः
८४६ केयूरालंकृतश्रीशाय नमः
८४७ केयूरप्रियदर्शनाय नमः
८४८ केदारेश्वरसंयुक्ताय नमः
८४९ केदारेश्वरवल्लभाय नमः
८५० केदारेश्वरपार्श्वस्थाय नमः
८५१ केदारेश्वरभक्तपाय नमः
८५२ केदाराकल्पसारज्ञाय नमः
८५३ केदारस्थलवासकृते नमः
८५४ केदाराश्रितभीतिघ्नाय नमः
८५५ केदाराश्रितमुक्तिदाय नमः
८५६ केदारावासिवरदाय नमः
८५७ केदाराश्रितदुःखहन्त्रे नमः
८५८ केदारपोपकाय नमः
८५९ केशाय नमः
८६० केदारान्नविवर्द्धनाय नमः
८६१ केदारापुष्टिजनकाय नमः
८६२ केदारप्रियदर्शनाय नमः
८६३ कैलासेशसमाजस्थाय नमः
८६४ कैलासेशप्रियंकराय नमः
८६५ कैलासेशसमायुक्ताय नमः
८६६ कैलासेशप्रभावविते नमः
८६७ कैलासाधीशशत्रुघ्नाय नमः
८६८ कैलासपतितोपकाय नमः
८६९ कैलासाधीशसहिताय नमः
८७० कैलासाधीशवल्लभाय नमः
८७१ कैवल्यमुक्तिजनकाय नमः
८७२ कैवल्यपदवीश्वराय नमः
८७३ कैवल्यपदवीत्रात्रे नमः
८७४ कैवल्यपदवीप्रियाय नमः

८७५ कैवल्यज्ञानसंपन्नाय नमः
८७६ कैवल्यज्ञानसाधनाय नमः
८७७ कैवल्यज्ञानगम्यात्मने नमः
८७८ कैवल्यज्ञानदायकाय नमः
८७९ कैवल्यज्ञानसंसिद्धाय नमः
८८० कैवल्यज्ञानदीपकाय नमः
८८१ कैवल्यज्ञानविख्याताय नमः
८८२ कैवल्यंवमदायकाय नमः
८८३ क्रोधलोभभयातीताय नमः
८८४ क्रोधलोभविनाशनाय नमः
८८५ क्रोधारये नमः
८८६ क्रोधहीनात्मने नमः
८८७ क्रोधहीनजनप्रियाय नमः
८८८ क्रोधहीनजनाधीशाय नमः
८८९ क्रोधहीनप्रजेश्वराय नमः
८९० कोपतापोपशमनाय नमः
८९१ कोपहीनवरप्रदाय नमः
८९२ कोपहीननरत्रात्रे नमः
८९३ कोपहीनजनाधिपाय नमः
८९४ कोपहीननरांतःस्थाय नमः
८९५ कोपहीनप्रजापतये नमः
८९६ कोपहीनप्रियासक्ताय नमः
८९७ कोपहीनजनार्तिहन्त्रे नमः
८९८ कोपहीनपदाधीशाय नमः
८९९ कोपहीनपदप्रदाय नमः
९०० कोपहीननरस्वामिने नमः
९०१ कोपहीनस्वरूपधृपे नमः
९०२ कोकिलालापसंगीताय नमः
९०३ कोकिलालापवल्लभाय नमः
९०४ कोकिलालापलीनात्मनेनमः
९०५ कोकिलालापकारकाय नपः
९०६ कोकिलालापकालिशाय नमः
९०७ कोकिलालापभावविते नमः
९०८ कोकिलागानरसिकाय नमः
९०९ कोकिलास्वरवल्लभाय नमः
९१० कोटिसूर्यसमानश्रिये नमः
९११ कोटिचन्द्रामृतात्मकाय नमः
९१२ कोटिदानवसंहर्त्रे नमः
९१३ कोटिकंदर्पदर्पहन्त्रे नमः
९१४ कोटिदेवेन्द्रसंसेव्याय नमः
९१५ कोटिब्रह्मार्चिताकृतये नमः
९१६ कोटिब्रह्माण्डमध्यस्थायनमः
९१७ कोटिविद्युत्समद्युतये नमः
९१८ कोट्यश्वमेधपापघ्नाय नमः
९१९ कोटिकामेश्वराकृतये नमः
९२० कोटिमेघसमोदाराय नमः
९२१ कोटिवह्निसुदुःसहाय नमः
९२२ कोटिपाथोधिगंभीराय नमः

९२३ कोटिमेरुसमस्थिराय नमः
९२४ कोटिगोपीजनाधीशाय नमः
९२५ कोटिगोपांगनावृताय नमः
९२६ कोटिदैत्येशदर्पघ्नाय नमः
९२७ कोटिरुद्रपराक्रमाय नमः
९२८ कोटिभक्तार्तिशमनाय नमः
९२९ कोटिदुष्टविमर्दनाय नमः
९३० कोटिभक्तजनोद्धर्त्रे नमः
९३१ कोटियज्ञफलप्रदाय नमः
९३२ कोटिदेवर्षिसंसेव्याय नमः
९३३ कोटिब्रह्मर्षिमुक्तिदाय नमः
९३४ कोटिराजर्षिसंस्तुत्याय नमः
९३५ कोटिब्रह्माण्डमंडनाय नमः
९३६ कोट्याकाशप्रकाशात्मनेनमः
९३७ कोटिवायुमहाबलाय नमः
९३८ कोटितेजोमयाकाराय नमः
९३९ कोटिभूमिसमक्षमिणे नमः
९४० कोटिनीरसमस्वच्छाय नमः
९४१ कोटिदिग्ज्ञानदायकाय नमः
९४२ कोटिब्रह्मांडजनकाय नमः
९४३ कोटिब्रह्मांडपालकाय नमः
९४४ कोटिब्रह्मांडसंहर्त्रे नमः
९४५ कोटिब्रह्मांडबोधकाय नमः
९४६ कोटिवाक्पतिवाचालायनमः
९४७ कोटिशुक्रकवीश्वराय नमः
९४८ कोटिद्विजसमाचाराय नमः
९४९ कोटिहेरम्बविघ्नघ्नन्त्रे नमः
९५० कोटिमानसहंसात्मने नमः
९५१ कोटिमानससंस्थिताय नमः
९५२ कोटिच्छलकरारातये नमः
९५३ कोटिदांभिकनाशनाय नमः
९५४ कोटिशून्यपथच्छेत्रे नमः
९५५ कोटिपाखंडखंडनाय नमः
९५६ कोटिशेषधराधाराय नमः
९५७ कोटिकालप्रबोधकाय नमः
९५८ कोटिवेदांतसंवेद्याय नमः
९५९ कोटिसिद्धांतनिश्चयाय नमः
९६० कोटियोगीश्वराधीशाय नमः
९६१ कोटियोगैकसिद्धिदाय नमः
९६२ कोटिधामाधिपाधीशायनमः
९६३ कोटिलोकैकपालकाय नमः
९६४ कोटियज्ञैकभोक्त्रे नमः
९६५ कोटियज्ञफलप्रदाय नमः
९६६ कोटिभक्तहृदंतःस्थाय नमः
९६७ कोटिभक्ताभयप्रदाय नमः
९६८ कोटिजन्मार्तिशमनाय नमः
९६९ कोटिजन्माघनाशनाय नमः
९७० कोटिजन्मांतरज्ञानप्रदात्रेनमः

| | |
|---|---|
| ९७१ कोटिभक्तपाय नमः | ९९५ कौमुदीमुदिताननाय नमः |
| ९७२ कोटिशक्तिसमायुक्ताय नमः | ९९६ कौमुदीमुदितप्राणाय नमः |
| ९७३ कोटिचैतन्यबोधकाय नमः | ९९७ कौमुदीमुदिताशयाय नमः |
| ९७४ कोटिचक्रावृताकाराय नमः | ९९८ कौमुदीमोदमुदिताय नमः |
| ९७५ कोटिचक्रप्रवर्तकाय नमः | ९९९ कौमुदीमोदवल्लभाय नमः |
| ९७६ कोटिचक्रार्चनत्रात्रे नमः | १००० कौमुदीमोदमधुपाय नमः |
| ९७७ कोटिवीरावलीवृताय नमः | १००१ कौमुदीमोदवर्द्धनाय नमः |
| ९७८ कोटितीर्थजलान्तःस्थायनमः | १००२ कौमुदीमोदमानात्मने नमः |
| ९७९ कोटीतीर्थफलप्रदाय नमः | १००३ कौमुदीमोदसुंदराय नमः |
| ९८० कोमलामलचिद्वृत्तये नमः | १००४ कौमुदीदर्शनानन्दिने नमः |
| ९८१ कोमलामलमानसाय नमः | १००५ कौमुदीदर्शनोत्सुकाय नमः |
| ९८२ कौस्तुभोद्भासितोरस्कायनमः | १००६ कौशल्यापुत्रभावस्थायनमः |
| ९८३ कौस्तुभोद्भासिताकृतयेनमः | १००७ कौशल्यानंदवर्द्धनाय नमः |
| ९८४ कौरवानीकसंहर्त्रे नमः | १००८ कंसारये नमः |
| ९८५ कौरवार्णवकुंभभुवे नमः | १००९ कंसहीनात्मने नमः |
| ९८६ कौंतेयश्रितपादाब्जाय नमः | १०१० कंसपक्षनिकंदनाय नमः |
| ९८७ कौंतेयाभयदायकाय नमः | १०११ कंकालाय नमः |
| ९८८ कौंतेयारातिसंहर्त्रे नमः | १०१२ कंकवरदाय नमः |
| ९८९ कौंतेयमतिपालकाय नमः | १०१३ कंटकक्षयकारकाय नमः |
| ९९० कौंतेयानन्दजनकाय नमः | १०१४ कंदर्पदर्पशमनाय नमः |
| ९९१ कौंतेयप्राणजीवनाय नमः | १०१५ कंदर्पाभिमनोहराय नमः |
| ९९२ कौंतेयाचलभावज्ञाय नमः | १०१६ कंदर्पकामनाहीनाय नमः |
| ९९३ कौंतेयाचलमुक्तिदाय नमः | १०१७ कंदर्पज्वरनाशनाय नमः |
| ९९४ कौमुदीमुदिताकाराय नमः | १०१८ कंदर्पज्वरनाशनाय नमः |

॥ इति श्रीकृष्णसहस्रनामावलिः ॥

# ॥ श्रीभगवतः अष्टोत्तरशतनामानि ॥

१ श्रीकृष्णाय नमः
२ कमलानाथाय नमः
३ वासुदेवाय नमः
४ सनातनाय नमः
५ वसुदेवात्मजाय नमः
६ पुण्याय नमः
७ लीलामानुषविग्रहाय नमः
८ श्रीवत्सकौस्तुभधराय नमः
९ यशोदावत्सलाय नमः
१० हरये नमः
११ चतुर्भुजात्तचक्रासिगदाशंखा-
म्बुजधराय नमः
१२ देवकीनंदनाय नमः
१३ श्रीशाय नमः
१४ नंदगोपप्रियात्मजाय नमः
१५ यमुनावेगसंहारिणे नमः
१६ बलभद्रप्रियानुजाय नमः
१७ पूतनाजीवितहराय नमः
१८ शकटासुरभंजनाय नमः
१९ नंदव्रजजनानंदिने नमः
२० सच्चिदानंदविग्रहाय नमः
२१ नवनीतनवाहारिणे नमः
२२ मुचकुंदप्रसादकाय नमः
२३ षोडशस्त्रीसहस्रेशाय नमः
२४ त्रिभंगाय नमः
२५ मधुराकृतये नमः
२६ शुकवागमृताब्धीन्दवे नमः
२७ गोविंदाय नमः
२८ गोविदांपतये नमः
२९ वत्सपालनसंचारिणे नमः
३० धेनुकासुरभंजनाय नमः
३१ तृणीकृततृणावर्ताय नमः
३२ यमलार्जुनभंजनाय नमः
३३ उत्तालतालभेत्रे नमः
३४ तमालश्यामलाकृतये नमः
३५ गोपगोपीश्वराय नमः
३६ योगिने नमः
३७ सूर्यकोटिसमप्रभाय नमः
३८ रामाय नमः
३९ इलापतये नमः
४० पराय नमः
४१ ज्योतिषे नमः
४२ यादवेंद्राय नमः
४३ यदूद्वहाय नमः
४४ वनमालिने नमः
४५ पीतवाससे नमः
४६ पारिजातापहारकाय नमः
४७ गोवर्धनाचलोद्धर्त्रे नमः
४८ गोपालकाय नमः
४९ सर्वपालकाय नमः
५० अजाय नमः
५१ धुरंजनाय नमः
५२ कामजनकाय नमः
५३ कंजलोचनाय नमः

५४ मधुहन्त्रे नमः
५५ मथुरानाथाय नमः
५६ द्वारकानाथाय नमः
५७ बलिने नमः
५८ वृंदावनान्तःसंचारिणे नमः
५९ तुलसीदामभूषणाय नमः
६० स्यमंतकमणेर्हर्त्रे नमः
६१ नरनारायणात्मकाय नमः
६२ कुब्जाकृष्णांबरधराय नमः
६३ मायिने नमः
६४ परमपुरुषाय नमः
६५ मुष्टिकासुरचाणूरमहायुद्ध-
विशारदाय नमः
६६ संसारवैरिणे नमः
६७ कंसारये नमः
६८ मुरारये नमः
६९ नरकांतकाय नमः
७० अनादये नमः
७१ ब्रह्मचारिणे नमः
७२ कृष्णाव्यसनकर्षकाय नमः
७३ शिशुपालशिरश्छेत्रे नमः
७४ दुर्योधनकुलांतकृते नमः
७५ विदुराक्रूरवरदाय नमः
७६ विश्वरूपप्रदर्शकाय नमः
७७ सत्यवाचे नमः
७८ सत्यसंकल्पाय नमः
७९ सत्यभामारताय नमः
८० जयिने नमः
८१ सुभद्रापूर्वजाय नमः
८२ विष्णवे नमः
८३ भीष्ममुक्तिप्रदाय नमः
८४ जगद्गुरवे नमः
८५ जगन्नाथाय नमः
८६ वेणुनादविशारदाय नमः
८७ वृषभासुरविध्वंसिने नमः
८८ बाणासुरबलांतकृते नमः
८९ युधिष्ठिरप्रतिष्ठात्रे नमः
९० बर्हिबर्हावतंसकाय नमः
९१ पार्थसारथये नमः
९२ अव्यक्ताय नमः
९३ गीतामृतमहोदधये नमः
९४ कालियफणिमाणिक्यरंजित-
श्रीपदांबुजाय नमः
९५ दामोदराय नमः
९६ यज्ञभोक्त्रे नमः
९७ दानवेंद्रविनाशनाय नमः
९८ नारायणाय नमः
९९ पराय नमः
१०० ब्रह्मणे नमः
१०१ पन्नगाशनवाहनाय नमः
१०२ जलक्रीडासमासक्तगोपी-
वस्त्रापहारकाय नमः
१०३ पुण्यश्लोकाय नमः
१०४ तीर्थकराय नमः
१०५ वेदविद्यादयानिधये नमः
१०६ सर्वतीर्थात्मकाय नमः
१०७ सर्वग्रहरूपिणे नमः
१०८ परात्पराय नमः
१०९ श्रीलक्ष्मीनारायणाय नमः

॥ इत्यष्टोत्तरशतनामानि ॥

सौभाग्यद्रव्यम्–श्वेतचूर्णं रक्तचूर्णं हरिद्रां कुङ्कुमं तथा॥ सौभाग्यं संप्रदास्यामि गृह्यतां परमेश्वर ॥१॥ अबीरं च गुलालं च चुवाचन्दनमेव च। सिन्दूरेण समायुक्तं सौभाग्यं प्रतिगृह्यताम् ॥ २ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः सौभाग्यपरिमलद्रव्याणि सम०॥

धूपः—वनस्पतिरसोद्भूतं कालागरुसमन्वितम् ॥ धूपं गृहाण गोविन्द गुणसागर गोपते ॥ १ ॥ वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥ २ ॥ देवक्यादिपरि० देव० स० श्रीकृष्णाय नमः धूपमाघ्रापयामि ॥

दीपः—साज्यश्च वर्तिसंयुक्तं वह्निना योजितं मया ॥ दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ॥ सर्वदेवमयं दीप्तमन्धकारनिवारकम् ॥ दीपं प्रकाशितं देव दर्शयामि जगद्गुरो ॥ २ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः दीपं दर्शयामि ॥

नैवद्यम्—शाल्योदनं पायसं च सिताघृतविमिश्रितम् ॥ नानापक्वान्नसंयुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ १ ॥ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ॥ भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥२॥ देवक्यादिपरिवारदे० स० श्रीकृष्णाय नमः नैवेद्यं निवेदयामि ॥ इति नैवद्योपरि तुलसीदलं निधाय "ह्रीं नमो भगवते वासुदेवाय" इति मन्त्रेण जलेन संप्रोक्ष्य धेनुमुद्रयाऽमृतीकृत्य ग्रासमुद्राः प्रदर्शयेत् ॥ यथा–ह्रीं प्राणाय स्वाहा ॥१॥ ह्रीं अपानाय स्वाहा ॥२॥ ह्रीं व्यानाय स्वाहा ॥३॥ ह्रीं उदानाय स्वाहा ॥ ४ ॥ ह्रीं समानाय स्वाहा ॥ ५ ॥ इति पञ्चग्रासमुद्राः प्रदर्श्य पूर्वापोशानं दत्वा "ह्रीं नमो भगवते वासुदेवाय" इति मन्त्रमष्टोत्तरशतं वा द्वादशवारं यावज्जपेत्तावद्भगवता

भुज्यतं इति मनसि ध्यायेत् । तदनन्तरं मध्येपानीयं समर्पयामि । उत्तरापोशानं समर्पयामि । हस्तप्रक्षालनं . सम० । मुखप्रक्षालनं सम० ॥ इति चतुर्वारं जलं समर्प्य करोद्वर्तनार्थे गन्धं समर्पयामि इति गन्धं समर्प्य सपूगीफलं तांबूलं दद्यात् ॥

ताम्बूलम्—ताम्बूलं च सकर्पूरं पूगीफलसमन्वितम् ॥ मुखवासकरं रम्यं प्रीतिदं प्रतिगृह्यताम् ॥ १ ॥ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ॥ कर्पूरैलासमायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ २ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः मुखवासार्थे पूगीफलताम्बूलं समर्पयामि ॥

दक्षिणा—सौवर्णं राजतं ताम्रं नानारत्नसमन्वितम् ॥ कर्मसाद्गुण्यसिद्ध्यर्थं दक्षिणा प्रतिगृह्यताम् ॥ १ ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदामर्पये दक्षिणां पराम् ॥ २ ॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः यथाशक्ति दक्षिणां समर्पयामि ॥

नीराजनम्—नीराजनं ह्रीं इति मन्त्रेण प्रज्वाल्य "रत्नैश्वर्यै नमः" इति गन्धाक्षतपुष्पैः संपूज्य ततो देवं नीराजयेत् ॥

## ॥ १ ॥ श्रीकृष्णनीराजनम् ॥

जयदेव जयदेव जय करुणासिन्धो ! (२) । गृहाण नीराजनमिद-(२) ममराधिप विष्णो ॥ जयदेव जयदेव ॥ १ ॥ लक्ष्मीनायक मुरहर मधुसूदन विष्णो (२) । करुणाकर वंसीधर (२) मुसलायुधवन्धो ॥ जयदेव जयदेव ॥ २ ॥ दामोदर गुणसुंदर कंसासुर-

शत्रो (२) । नरकासुरमदभंजन (२) शरणागतबन्धो ॥ जय- देव जय० ॥ ३ ॥ अघवककेशिविदारण कमलासुखसिन्धो (२) । गजवरपाशविमोचन (२) करुणामृतसिन्धो । जयदेव जय० ॥४॥ नवघननीलद्युतिरिव गोपीजनरमण (२) । गरुडध्वज पीताम्बर (२) हनुमद्ध्वजशरण ॥ जयदे० जय० ॥ ५ ॥ वासुदेव संकर्षण कुसुमायुधजनक (२) । भक्तजनप्रतिपालक (२) नारायण विष्णो ॥ जयदेव जयदेव ॥ ६ ॥ लक्ष्मीवर पुरुषोत्तम विश्वम्भरनाथ (२)। भक्तकृतनीराजन-(२) मङ्गीकुरु विष्णो ॥ जय० जय० ॥ ७ ॥ आरातिरित्युत्तरिता नवमणिरचिता ते (२)। किन्नरगानं कुरुते (२) सप्तस्वरसहितम् ॥ जय०जय०॥८॥ जयदेव जयदेव जयकरुणासिन्धो (२) गृहाणनीराजनमिद-(२) ममराधिप विष्णो ॥ जयदेव जयदेव ॥९॥

---

## ॥ २ ॥ श्रीकृष्णनीराजनम् ॥

जयदेव जयदेव वंदे गोपालं (२) मृगमदविलकितभालं करुणा-कल्लोलम् ॥ निर्गुणसगुणाकारं संहृतभूभारं (२) मुरहरनंदकुमारं (२) मुनिजनसुखकारम् ॥ वृंदावनसंचारं कौस्तुभमणिहारं (२) करुणापारावारं (२) गोवर्धनधारम् ॥ जय० ॥ १ ॥ कंबुग्रीवं गुंजातुलसीवनमालं (२) श्रीवत्सांकितवक्षो (२) लंबितश्रीकमलम् ॥ बाहुविभूषितवेणुं करधृतदधिकवलं (२) त्रिवलीशोभितजठरं-(२) नवजलधरनीलम् ॥ जय० ॥ २ ॥ कुंचितकुंडलरम्यं सुंदरमुखकमलं (२) बिंबाधरमतिसुंदर-(२) नासामणिलोलम् ॥ मणिगणमंडित-कुंडलराजितश्रुतिमूलं (२) विकचेंदीवरनयनं (२) विलसितभ्रूयु-

गलम् ॥ जय० ॥ ३ ॥ मुरलीवादनशीलं सप्तस्वरगीतं ( २ ) जल चरवनचरखेचर ( २ ) भूचरहृताचित्तम् ॥ स्तंभितयमुनातोयं छग णितसच्चरितं ( २ ) गोपीजनमनमोहन ( २ ) रूपं श्रीकांतम् । जय० ॥ ४ ॥ रासक्रीडामंडलवेष्टितव्रजललनं ( २ ) तांडवनर्तन संगति-( २ ) मोहितरतिमदनम् ॥ कुसुमाकरराकापतियुतवनकृतशयन ( २ ) कालियफणिवरदमनं ( २ ) पक्षीश्वरगमनम् ॥ जय० ॥५॥ किंकिणिमेखलमध्यं पीतांबरवसनं ( २ ) नूपुरकोमलसिंजत-( २ ) विलसितपदनीलम् ॥ गोगोपीपरिवेष्टितयमुनातटसदनं ( २ ) व्यासा-भयदं सुखदं ( २ ) भुवनत्रयभवनम् ॥ जयदेव जयदेव वंदे गोपालं ( २ ) मृगमदतिलकितभालं ( २ ) करुणाकल्लोलम् ॥ ६ ॥

॥ इति श्रीकृष्णनीराजनम् ॥

---

## ॥ ३ ॥ श्रीगोपालनीराजनम् ॥

सदाऽहं भुवनत्रयपालं, नीराजये गोपबालम् ।
यशोदासुत ते दिश स्मरणं, यथा मे भूयाद् भवतरणम् ॥
हरे मे वारय जनिमरणं, न मन्ये त्वदितरमिह शरणम् ।
प्रदर्शय रूपं साभरणं, निवारय मम मायावरणम् ।
इन्दुसमवदन कुंदरदनो, गणितगुणपात्र, निखिलसुरमात्र,
सजलघनगात्र, तवोरःश्रितश्रीवनमालं, सबालं दर्शय श्रीबालम्।
—सदाऽहं० ॥ १ ॥

भजेऽहं भवजलनिधिपारं, शरण्यं करुणाकूपारम् ।
सुरेशाकरसंहृतसारं, रुचा श्रीवपुषो जितमारम् ।

सुरासुरनरहृदयागारं शुकादिककविकृतशृंगारम् ।
कंठीरवोदारनीलं, निखिलजनसमल, शमितगुणविमल,
सुखदपदकमल, विलालितव्योमासुरकालं,
स्वलीलातोपितनरजालम् ।

—सदाऽहं० ॥ २ ॥

रणय भो वेणुं निजवदने, बिंबाधरे कुंदरदने ।
राधा यथा वसति मदने, प्रतिष्ठति मनसा पतिसदने ।
तथा मे तिष्ठतु हृदि वदने, समुद्धर पतितं भवकदने ।
वृंदावने कुंजभवने, कुसुमसरभरित, युवतिजनगदित,
रासरसस्वरित, विंदुमाधवश्यामबालं,
मुकुन्दापरभजनेनालम् ॥

—सदाऽहं० ॥ ३ ॥

---

( ततः कर्पूरं प्रज्वाल्य नीराजयेत् ॥ यथा ) कर्पूरपूरेण मनोहरेण सुवर्णपात्रान्तरसंस्थितेन ॥ प्रदीप्तवासा सहसंगतेन नीराजनं ते जगदीश कुर्वे ॥ मङ्गलं भगवान् विष्णुर्मङ्गलं गरुडध्वजः ॥ मङ्गलं पुण्डरीकाक्षो मङ्गलायतनो हरिः ॥ ( सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके ॥ शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते ॥ ) देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः नीराजनं सम० ॥ जलेन प्रदक्षिणया शीतलीकृत्य आचारात् पुष्पैर्देववन्दनम् आत्मवदनं हस्तप्रक्षालनम् ॥ ततो मन्त्रपुष्पाञ्जलिमर्पयेत् ॥

मन्त्रपुष्पाञ्जलिः-(हस्ते पुष्पाण्यादाय) नमस्तुभ्यं जगन्नाथ देवकीतनय प्रभो। वसुदेवात्मजानन्त यशोदानन्दवर्धन।१। गोविन्द गोकुलाधार

---

१ दत्वा पुष्पाञ्जलिं चैव प्रदक्षिणपुरःसरम् ॥ प्रणमेद्दण्डवद्भूमौ भक्तिप्रह्वः पुनः पुनः ॥ स्तुत्वा नानाविधैः स्तोत्रैः प्रार्थयेच्च जगत्पतिम् ॥१॥

गोपीकान्त नमोस्तु ते ॥ पुष्पाञ्जलिर्मया देव दत्तस्ते प्रतिगृह्यताम् ॥२॥ वेदानुद्धरते नगान्निवहते भूगोलमुद्धिभ्रते दैत्यान दारयते वलिं छलयते क्षत्रक्षयं कुर्वते ॥ पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते म्लेच्छान् मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ ३ ॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविंदाय नमो नमः॥४॥ देवक्यादिपरि० दे०स० श्रीकृष्णाय नमः चरणकमलयोर्मन्त्रपुष्पाञ्जलिं स० ॥ ततः शंखं जलेनापूर्य उपरि सदक्षिणाकं श्रीफलं निधाय विशेषार्घं दद्यात् ॥ यथा—

विशेषार्घः—रम्भाफलं नारिकेलं तथैवाम्रफलानि च ॥ पूजितोऽसि सुरश्रेष्ठ गृहाणासुरसूदन ॥ १ ॥ जातः कंसवधार्थाय भूभारोत्तारणाय च ॥ गृहाणार्घं मया दत्तं देवक्या सहितो हरे ॥ २ ॥ देवक्यादिपरि० दे० स० श्रीकृष्णाय नमः विशेषार्घं समर्पयामि ॥

ततो देवस्य समीपे अभया वचा शुंठी गुडूची पिप्पली शस्त्राणि इति निधाय संक्षेपेण जातकर्मपष्ठीपूजानामकर्माणि च कुर्यात् ॥ यथा–देव्राय नमः ॥ सवित्रे नमः ॥ सरस्वत्यै नमः ॥ अश्विभ्यां नमः ॥ इति नाममन्त्रैर्देवोपरि गन्धपुष्पाण्यर्पयेत् ॥ इति ज़ातकर्म ॥ विघ्नेशाय नमः ॥ जन्मदायै नमः ॥ पष्ठीदेव्यै नमः ॥ जीवन्तिकायै नमः ॥ इति नाममन्त्रैर्देवोपरि गन्धपुष्पाण्यर्पयेत् ॥ इति पष्ठीपूजा ॥

नामकरणम् ॥ हे कुमार त्वं गणपतिभक्तोऽसि। हे कुमार त्वं कुलदव्या भक्तोऽसि नाम्ना कृष्णवर्माऽसि॥ हे कुमार त्वं मासनाम्ना वैकुंठवर्मासि॥ हे कुमार त्वं नक्षत्रनाम्ना विष्णुवर्माऽसि । हे कुमार त्वं व्यवहारनाम्ना कृष्णवर्माऽसि ॥ इति कर्णे कथयेत् ॥ हस्ते जलं गृहीत्वा-अनेन संक्षिप्तजातकर्मपष्ठीपूजानामकरणसंस्कारकर्मणा परिवारदेवतासहितो भगवान् श्रीकृष्णः प्रीयताम् ॥

१ नारिकेलन शुद्धेन दद्यादर्घं विचक्षणः॥ कृष्णाय परया भक्त्या शखे कृत्वा विधानत ॥१॥

## ॥ चन्द्रपूजनम् ॥

ततश्चन्द्रोदये रोहिणीयुतं चन्द्रं प्रासादतले स्थित्वा प्रत्यक्षं वा स्थण्डिले प्रतिमायां "रोहिणीसहितचन्द्राय नमः" इति नाममन्त्रेण वा "सोमेश्वराय सोमाय तथा सोमोद्भवाय च ॥ सोमस्य पतये नित्यं तुभ्यं सोमाय वै नमः" इति मन्त्रेण सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि। इति गन्धाक्षतपुष्पैः संपूज्य शङ्खे सपुष्पकुशचन्दनं जलं गृहीत्वा चन्द्रमसेऽर्घं दद्यात् ॥ यथा—

क्षीरोदार्णवसंभूत आत्रिगोत्रसमुद्भव॥ गृहाणार्घं शशाङ्क मे रोहिण्या सहितो मम ॥१॥ ज्योत्स्नापते नमस्तुभ्यं ज्योतिषां पतये नमः॥ नमस्ते रोहिणीकान्त अर्घो नः प्रतिगृह्यताम् ॥ २ ॥ रोहिणीसहितचन्द्रमसे नमः अर्घं समर्पयामि ॥ इति अर्घं दत्वा प्रार्थयेत् ॥ यथा—नभोमंडलदीपाय शिरोरत्नाय धूर्जटेः ॥ कलाभिर्वर्धमानाय नमश्चन्द्राय चारवे ॥ १ ॥ रोहिणीसहितचन्द्रमसे नमः प्रार्थनापूर्वकनमस्कारान् समर्पयामि ॥ हस्तेजलमादाय—अनेन यथाशक्ति पूजनपूर्वकार्घप्रदानेन रोहिणीसहितचन्द्रमाः प्रीयताम् ॥

ततः प्रधानपीठसमीपे समागत्य प्रार्थनापूर्वकं स्तुतिपाठं कुर्यात् ॥

प्रार्थना—अनघं वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् ॥ वासुदेवं हृषीकेशं माधवं मधुसूदनम् ॥ १ ॥ वराहं पुंडरीकाक्षं नृसिंहं दैत्यसूदनम् ॥ दामोदरं पद्मनाभं केशवं गरुडध्वजम् ॥ २ ॥ गोविन्दमच्युतं विष्णुमनन्तमपराजितम् ॥ अधोक्षजं जगद्बीजं सृष्टिस्थित्यन्तकारकम् ॥ ३ ॥ अनादिनिधनं कृष्णं त्रैलोक्येशं जगद्गुरुम् ॥ नारायणं चतुर्बाहुं शंखचक्रगदाधरम् ॥ ४ ॥ पीताम्बरधरं नित्यं वनमालाविराजितम् ॥ श्रीवत्साङ्कं जगद्धेतुं श्रीधरं श्रीपतिं हरिम् ॥ ५ ॥

वन्दे त्वां भगवन् कृष्ण परिवारयुतं प्रभो ! ॥ संसारार्णवमग्नं मां समुद्धर जगत्पते ! ॥ ६ ॥

वंशीधरं सुन्दरमन्दहासं बर्हावतंसं बलबालयुक्तम् ।

वृन्दावनस्थं नवनीरदाभं नमामि कृष्णं यदुवंशनाथम् ॥ १ ॥

वंशीविभूषितकरान्नवनीरदाभात् पीताम्बरादरुणबिम्बफलाधरोष्ठात् । पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात् कृष्णात्परं किमपि तत्त्वमहं न जाने॥२॥ देवक्यादिपरिवारदेवतासहितश्रीकृष्णाय नमः मार्थनापूर्वकं स्तुतिपाठं समर्पयामि ॥

नमस्काराः—अनन्ताय नमस्तुभ्यं वैकुण्ठाय नमो नमः ॥ वासुदेवाय कृष्णाय नित्यमेव नमो नमः ॥ १ ॥ देवक्यादिपरि० दे० स० श्रीकृष्णाय नमः नमस्कारान् समर्पयामि ॥

हस्ते जलमादाय—अनेन पूजनेन देवक्यादिपरिवारदेवतासहितः श्रीकृष्णः प्रीयतां न मम ॥

तत आचार्यपूजनं ब्राह्मणानां च पूजनं कुर्यात् । नमोस्त्वनंताय सहस्र०॥ ततो ब्राह्मणेभ्यो भूयसीं दद्यात् ॥ तत आचार्यादयो व्रता ब्राह्मणा यजमानायाशिर्वादं दद्युः । ब्राह्मणा हस्ते अक्षतान् गृहीत्वा आशिषो दद्युः ॥

स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु गोवाजिहस्तिधनधान्यसमृद्धिरस्तु ॥ ऐश्वर्यमस्तु बलमस्तु रिपुक्षयोऽस्तु वंशे सदैव भवतां हरिभक्तिरस्तु ॥ धनं धान्यं पशुपुत्रलाभः शतसंवत्सरं दीर्घमायुरस्तु ॥ इति यजमान हस्ते मूर्ध्नि वाऽक्षतान्निःक्षिपेयुः ॥ सर्वे जनाः सुखिनो भवन्तु ॥ शान्तिः शान्तिः शान्तिः ॥ ततः पुराणश्रवणादिना रात्रिं नयेत् ॥

॥ इति जन्माष्टमीव्रतपूजाविधिः समाप्तः ॥

॥ श्रीकृष्णाय नमः ॥



## ॥ अथ जन्माष्टमीव्रतोद्यापनविधिः ॥

उद्यापनदिने प्रातः पूर्ववद् दन्तधावनं कृत्वा नद्यादौ विधिवत्स्नात्वा गृहमागत्य (पूर्ववत्) मण्डपादिकं कृत्वा सपत्नीको यजमानः शुभासने उपविशेत् ॥ तत आचार्यादयो विप्रा शांतिसूक्तं (यां श्रीः स्वयं० इत्यादिकं ) पठेत् ॥ ततो यजमानः आचम्य प्राणानायम्य श्रीगुरुभ्यो नत्वा " श्रीमन्महा० सुमुखश्चै० इत्यादि ब्रह्मेशानजनार्दनाः" इत्यन्तं गणेशादिस्मरणं कृत्वा ततो हस्ते जलमादाय संकल्पं कुर्यात् । यथा अत्राद्य० तिथौ ममात्मनः सकुटुम्बस्य क्षेमस्थैर्यविजयाभयायुरारोग्यैश्वर्याभिवृद्ध्यर्थं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं पुत्रपौत्राद्यनविच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थं श्रीकृष्णप्रीत्यर्थमाचरितस्य (आचरिष्यमाणस्य) जन्माष्टमीव्रतस्य संपूर्णफलावाप्तये एकरात्र्यधिवासपक्षाश्रयेण श्रीजन्माष्टमीव्रतोद्यापनमहं करिष्ये ॥

पुनर्जलमादाय । तदङ्गत्वेन निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वास्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धाराम् आयुष्यमन्त्रजपं नान्दीश्राद्धम् आचार्यादि ऋत्विग्वरणं सर्वतोभद्रमण्डले ब्रह्मादिदेवतानां स्थापनं पूजनं

१ शांतिसूक्तादि (पृ. २-४) ॥ २ महासंकल्प. कर्तव्यश्चेत् (पृ. ५-६) द्रष्टव्यः ॥

परिवारदेवतासहितप्रधानदेवतास्थापनं पूजनं च करिष्ये ॥ तदङ्गत्वेन दिग्रक्षणं कलशार्चनं शंखघंटादीपपूजनं च करिष्ये ॥ इति संकल्प्य दिग्रक्षणाद्याचार्यादि–ऋत्विग्वरणान्तं ( पृष्ठ ६–४६ ) पूर्ववत् कृत्वा सर्वतोभद्रमण्डले ब्रह्मादिदेवतानामावाहनं प्रतिष्ठां पूजां च कुर्यात् यथा॥

## ॥ श्रीसर्वतोभद्रमंडलदेवताकोष्टकम् ॥

ई. पूर्व अ

उत्तर दक्षिण

| | | | | | | | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| श्वे. | श्वे. | ह. | र. | र. | र. | र. | र. | श्वे. | श्वे. | र. | र. | र. | र. | र. | ह. | श्वे. | श्वे. |
| श्वे. | | ह. | ह. | र. | र. | र. | श्वे. | श्वे. | श्वे. | श्वे. | र. | र. | र. | ह. | ह. | | श्वे. |
| ह. | ह. | | ह. | ह. | र. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | र. | ह. | ह. | | ह. | ह. |
| र. | ह. | ह. | | ह. | ह. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | ह. | ह. | | ह. | ह. | र. |
| र. | र. | ह. | ह. | | ह. | ह. | श्वे. | श्वे. | श्वे. | श्वे. | ह. | ह. | | ह. | ह. | र. | र. |
| र. | र. | र. | ह. | ह. | | ह. | ह. | श्वे. | श्वे. | ह. | ह. | | ह. | ह. | र. | र. | र. |
| र. | र. | श्वे. | श्वे. | ह. | ह. | पी. | पी. | पी. | पी. | पी. | पी. | ह. | ह. | श्वे. | श्वे. | र. | र. |
| र. | श्वे. | श्वे. | श्वे. | श्वे. | ह. | पी. | र. | र. | र. | र. | पी. | ह. | श्वे. | श्वे. | श्वे. | श्वे. | र. |
| श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | पी. | र. | | | र. | पी. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. |
| श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | पी. | र. | | | र. | पी. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. |
| र. | श्वे. | श्वे. | श्वे. | श्वे. | ह. | पी. | र. | र. | र. | र. | पी. | ह. | श्वे. | श्वे. | श्वे. | श्वे. | र. |
| र. | र. | श्वे. | श्वे. | ह. | ह. | पी | पी. | पी. | पी. | पी. | पी. | ह. | ह. | श्वे. | श्वे. | र. | र. |
| र. | र. | र. | ह. | ह. | | ह. | ह. | श्वे. | श्वे. | ह. | ह. | | ह. | ह. | र. | र. | र. |
| र. | र. | ह. | ह. | | ह. | ह. | श्वे. | श्वे. | श्वे. | श्वे. | ह. | ह. | | ह. | ह. | र. | र. |
| र. | ह. | ह. | | ह. | ह. | श्वे | श्वे | श्वे. | श्वे. | श्वे. | श्वे. | ह. | ह. | | ह. | ह. | र. |
| ह. | ह. | | ह. | ह. | र. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे. | श्वे | र. | ह. | ह. | | ह. | ह. |
| श्वे. | | ह. | ह. | र. | र. | र. | श्वे. | श्वे. | श्वे. | श्वे. | र. | र. | र. | ह. | ह. | | श्वे. |
| श्वे. | श्वे. | ह. | र. | र. | र. | र. | र. | श्वे. | श्वे. | र. | र. | र. | र. | र. | ह. | श्वे. | श्वे. |

वा. पश्चिम

## ॥ श्रीसर्वतोभद्रमंडलदेवतास्थापनम् ॥

१ ब्रह्मा—एह्येहि सर्वाधिपते विधातो मदीययज्ञे पितृदेवताभिः ॥
सर्वस्य धाताऽस्यमितप्रभाव नमोऽस्तु ते मे सततं शिवाय ॥१॥
१ (मध्ये) ब्रह्मणे नमः ब्रह्माणम् आवाहयामि स्थापयामि ॥

२ सोमः—एह्येहि यक्षेश्वर सर्वरक्षां विधत्स्व यज्ञे स्वगणेन सार्धम् ॥
कुबेर यज्ञस्य कुरुष्व सिद्धिं गृहाण पूजां भगवन्नमस्ते ॥ २ ॥
२ (उत्तरस्यां वाप्यन्ते वाणद्वयमध्ये) सोमाय नमः सोमम् आ० स्था०॥

३ ईशानः—एह्येहि विश्वेश्वर विश्वनाथ कपालखट्वाङ्गधर त्रिनेत्र ॥
लोकेश यज्ञेश्वर यज्ञसिद्ध्यै गृहाण पूजां भगवन्नमस्ते ॥ ३ ॥
३ (ईशान्यां खण्डेन्दौ) ईशानाय नमः ईशानम् आवा० स्थाप० ॥

४ इन्द्रः—एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश ॥
संसेव्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ॥ ४ ॥
४ (पूर्वे वाप्यन्ते वाणद्वयमध्ये) इन्द्राय नमः इन्द्रम् आवा० स्थाप०॥

५ अग्निः—एह्येहि सर्वामरहव्यवाह मुनिप्रवर्यैरभितोऽभिजुष्टः ॥
तेजोवता लोकगणेन सार्धं ममाध्वरं रक्ष नमोऽस्तु तेऽग्ने ॥ ५ ॥
५ (आग्नेय्यां खण्डेन्दौ) अग्नये नमः अग्निम् आवा० स्थाप० ॥

६ यमः—एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चित धर्ममूर्ते ॥
शुभाशुभस्यैव फलप्रदाता शिवाय नः पाहि मखं नमस्ते ॥ ६ ॥
६ (दक्षिणस्यां वाप्यन्ते वाणद्वयमध्ये) यमाय नमः यमम् आ० स्था०॥

७ निर्ऋतिः—एह्येहि रक्षोगणनायक त्वं विशालवैतालपिशाचसंघैः ॥
ममाध्वरं पाहि पिशाचनाथ लोकेश्वर त्वां प्रणमामि नित्यम् ॥७॥
७ (नैर्ऋत्यां खण्डेन्दौ) निर्ऋतये नमः निर्ऋतिम् आवा० स्थाप० ॥

८ वरुणः—एह्येहि यज्ञे मम रक्षणाय यादोगणैः सार्धमपामधीश ॥
झषाधिरूढ प्रथितप्रभाव नमोऽस्तु ते नाथ सुपाशपाणे ॥ ८ ॥
८ (पश्चिमस्यां वाप्यन्ते वाणद्वयमध्ये) वरुणाय नमः वरुणम् आ० स्था० ॥

९ वायुः—एह्येहि वायो मखरक्षणार्थं मृगाधिरूढः सुरसिद्धसंघैः ॥
प्राणाधिपो हव्यभुजः सहाय गृहाण पूजां भगवन्नमस्ते ॥ ९ ॥
९ ( वायव्यां खण्डेन्दौ ) वायवे नमः वायुम् आवा० स्थाप० ॥

१० अष्टवसवः-एतेत चाष्टौ वसवः सुदिव्या महानिधीनामतिरक्षितारः ॥
तेजस्विनो यज्ञविधिं प्रपातुं गृह्णीत पूजां प्रणमाम्यहं वः ॥ १० ॥
१० ( वायुसोमयोर्मध्ये भद्रे ) अष्टवसुभ्यो नमः अष्टवसून् आ० स्था० ।

११ एकादशरुद्राः—
एतेत यज्ञस्य सुसिद्धिकामास्त्रिशूलखट्वाङ्गधराः सुरेशाः ॥
लोकेश्वरा विश्वविधायकार्थं रुद्राः कुरुध्वं हि शिवं नमो वः ॥११॥
११ ( सोमेशानयोर्मध्ये भद्रे )
एकादशरुद्रेभ्यो नमः एकादशरुद्रान् आवा० स्थाप० ॥

१२ द्वादशादित्याः—एतेत पद्मासनपद्महस्ता सुरक्तसिंदूरसमानवर्णाः ॥
रक्ताम्बरा वै हरिदश्वयुक्ता आदित्यदेवाः प्रणमामि युष्मान् ॥१२॥
१२ ( ईशानेन्द्रयोर्मध्ये भद्रे )
द्वादशादित्येभ्यो नमः द्वादशादित्यान् आवा० स्थाप० ॥

१३ अश्विनौ—एतन्तु वैद्यौ सुरसिद्धकान्तौ सूर्याश्वसंज्ञावडवासुतौ यौ ॥
देवेन्द्रविद्याधरदेवमान्यौ यज्ञस्य रक्षां कुरुतं नमो वाम् ॥ १३ ॥
१३ ( इन्द्राग्न्योर्मध्ये भद्रे ) अश्विभ्यां नमः अश्विनौ आवा० स्थाप० ॥

१४ सपैतृकविश्वेदेवाः—
एतेत देवादिककार्यपूज्या अभिष्टुताः सिद्धसुसाध्यदेवैः ॥

सपैतृका यज्ञमिमं तु विश्वेदेवाः सुरक्षध्वमथो नमो वः ॥ १४ ॥
१४ (अग्नियमयोर्मध्ये भद्रे)
सपैतृकविश्वेभ्यो देवेभ्यो नमः सपैतृकविश्वान् देवान् आ० स्था० ॥
१५ सप्तयक्षाः—एतैत यज्ञे मम सप्तयक्षा लोकेश्वरा यक्षगणादिनाथाः ॥
सिद्धादिभिः सेवितपादपद्मा रक्षां कुरुध्वं मम वः प्रणामः ॥१५॥
१५ (यमनिर्ऋत्योर्मध्ये भद्रे) सप्तयक्षेभ्यो नम सप्तयक्षान् आ० स्था०॥
१६ भूतनागाः—एतैत सर्पाः शिवकंठभूषा लोकोपकाराय भुवं वहन्तः॥
भूतैः समेता मणिभूषिताङ्गा गृह्णीत पूजां परमां नमो वः ॥ १६ ॥
१६ (निर्ऋतिवरुणयोर्मध्ये भद्रे) भूतनागेभ्यो नमः भूतनागान् आ० स्था०॥
१७ गंधर्वाप्सरसः-एतैत सर्वाप्सरसः समेता गन्धर्वसंघैः सुरदेवसेव्याः॥
दिव्यस्वरूपाः सुरपूर्णकामा नमामि यज्ञं सफलं कुरुध्वम् ॥ १७ ॥
१७ (वरुणवाय्वोर्मध्ये भद्रे)
गन्धर्वाप्सरोभ्यो नमः गन्धर्वाप्सरसः आवा० स्थाप० ॥
१८ स्कन्दः—एह्येहि देवेश्वर शंभुसूनो! शिखीन्द्रगामिन् सुरसिद्धसंघैः ॥
संमाननीयः सुरराजदेवैर्गृहाण पूजां भगवन्नमस्ते ॥ १८ ॥
१८ (उत्तरस्यां ब्रह्मसोमयोर्मध्ये वाप्याम्)
स्कन्दाय नमः स्कन्दम् आवाहयामि स्थापयामि ॥
१९ नंदीश्वरः—एह्येहि देवेश शिवस्य सर्वगणाधिराज प्रमथादिसेव्य ॥
गौरीशयानेश्वर यज्ञसिद्ध्यै गृहाण पूजां प्रणमामि हित्वाम् ॥ १९ ॥
१९ (तत्रैव स्कन्दोत्तरत) नंदीश्वराय नम नंदीश्वरम् आवा० स्थाप० ॥
२० शूलमहाकालौ—
आयातमायातमुमाप्रियस्य प्रियौ मुनीन्द्रादिकसिद्धसेव्यौ ॥
गृहीतमेतां मम शूलकालौ पूजां नमो वां कुरुतं शिवं नः ॥२०॥
२० (तत्रैव नंद्युत्तरतः) शूलमहाकालाभ्यां नम शूलमहाकालौ आ० स्था०॥

२१ दक्षादिप्रजापतयः—
एतैत देवादिकसर्वमान्याः प्रजापतीनामधिपाः प्रजापाः ॥
दक्षादिसप्तप्रथिता नमो वो गृह्णीत पूजां मम यज्ञसिद्ध्यै ॥२१॥
२१ (ब्रह्मेशानयोर्मध्ये शृंखलायाम्)
दक्षादिप्रजापतिभ्यो नमः दक्षादिप्रजापतीन् आवा० स्थाप० ।
२२ दुर्गा-एह्येहि दुर्गे दुरितौघनाशिनि प्रचण्डदैत्यौघविनाशकारिणि ॥
त्रैलोक्यरक्षार्थसुरूपधारिणि नमोऽस्तु ते शं कुरु यज्ञकर्मणि ॥२२॥
२१ (पूर्वस्यां ब्रह्मेन्द्रयोर्मध्ये वाप्याम्) दुर्गायै नमः दुर्गाम् आवा०स्थाप०॥
२३ विष्णुः—एह्येहि नीलाम्बुजमेचक त्वं श्रीवत्सवक्षः कमलाधिनाथ ॥
सर्वामरैः पूजितपादपद्म गृहाण पूजां भगवन्नमस्ते ॥ २३ ॥
२३ (तत्रैव दुर्गोत्तरतः) विष्णवे नमः विष्णुम् आ० स्था० ॥

२४ स्वधासहितपितरः—
आवाहयेऽहं कुलवृद्धिकर्तॄन् पितॄन् सुरक्तान् स्वधया समेतान् ।
यज्ञे ममास्मिन् सततं कुरुध्वं यज्ञस्य सिद्धिं प्रणमामि नित्यम् ॥२४॥
२४ (ब्रह्माग्न्योर्मध्ये शृंखलायाम्)
स्वधासहितपितृभ्यो नमः स्वधासहितपितॄन् आवा० स्थाप० ॥
२५ मृत्युरोगौ-आवाहयेऽहं किलमृत्युरोगौ भयप्रदौ लोकविनाशकारिणौ
यज्ञस्य शान्त्यर्थमतिप्रगल्भौ धर्मानुगौ शं कुरुतं नमो वाम् ॥२५॥
२५ (दक्षिणस्यां ब्रह्मयमयोर्मध्ये वाप्याम्)
मृत्युरोगाभ्यां नमः मृत्युरोगौ आवा० स्थाप० ॥
२६ गणेशः— एह्येहि विघ्नाधिपते सुरेन्द्र ब्रह्मादिदेवैरभिमान्यमूर्ते ॥
गजास्य यज्ञं कुरु सर्वसिद्धं नमोऽस्तु ते देववर प्रसीद ॥ २६ ॥
२६ (ब्रह्मनिर्ऋत्योर्मध्ये शृंखलायाम्) गणपतये नमः गणपतिम् आ०स्था०॥

२७ आपः—एतैत यादोगणवारिधीनां सुसेव्यमाना स्वगणैश्च सार्धम्
जलाधिदेव्यो मम यज्ञसिद्ध्यै गृहीत पूजां प्रणमामि युष्मान् ॥२७॥
२७ (पश्चिमस्यां ब्रह्मवरुणयोर्मध्ये वाप्याम्) अद्भ्यो नमः अपः आ० स्था०॥
२८ मरुतः—एतैत यज्ञे मरुतः सुसेव्या मृगाधिरूढाः सह सिद्धसंघैः॥
प्राणस्वरूपाः सुखदाः कुरुध्वं शं नो गृहीत्वाऽर्चनमत्र नित्यम् ॥२८
२८ (ब्रह्मवाय्वोर्मध्ये शृंखलायाम्) मरुद्भ्यो नमः मरुत० आ० स्था०॥
२९ पृथिवी—एह्येहि लोकस्थितिहेतुभूते ह्यादौ वराहेण समुद्धृता या॥
कल्याणकर्त्री पृथिवि त्वमस्मिन् यज्ञे शिवं नः कुरु ते नमोऽस्तु ॥२९
२९ (ब्रह्मणः पादमूले कर्णिकायाम्) पृथिव्यै नम० पृथिवीम् आ०स्था०॥
३० गंगादिनद्यः—एतैत गंगायमुनादयश्च नद्यः पवित्रा दुरितौघहन्त्र्यः।
झषादिरूढा उदकुम्भहस्ता गृहीत पूजां मम यज्ञसिद्ध्यै ॥ ३० ॥
३० (तत्रैव पृथिव्युत्तरत) गंगादिनदीभ्यो नम० गंगादिनदी आ०स्था०॥
३१ सप्तसागराः-एतैत यादोगणकैः समेता पर्जन्ययुक्ताः पुनितोदकौघाः
शुचिं समुद्राः कुरुतात्र यज्ञं पूजां गृहीत्वाऽस्तु नमो नमो वः॥३१
३१ (तत्रैव गंगाद्युत्तरतः) सप्तसागरेभ्यो नम० सप्तसागरान् आ०स्था०॥
३२ मेरुः—एह्येहि पृथ्वीधरराज मेरो सुवर्णवर्णाङ्कितदिव्यदेहे ॥
नगाधिपैस्त्वं कुरु यज्ञसिद्धिं ममास्तु ते भूधर सुप्रणामः ॥३२॥
३२ (ब्रह्मण मस्तकोपरिकर्णिकायाम्) मेरवे नम० मेरुम् आवा० स्थाप०॥

॥ श्वेतपरिधौ ( मंडलबाह्ये उत्तरतः ) ॥

३३ गदा—एह्येहि सोमप्रियदिव्यशक्ते महाबलिष्ठे विजयप्रदात्रि ॥
कुरुष्व यज्ञं सकलार्थसिद्धं पूजां गृहीत्वाऽस्तु नमो गदे ते ॥ ३३ ॥
३३ (उत्तरस्याम्) गदायै नमः गदाम् आवा० स्थाप० ॥

१ ब्रह्मादिमेर्वन्तानां श्लोका यथामति संशोधिता गदादिवैनायकपन्ताना श्लोका पूजाप्रकारार्थं नूतनरचिता -सयोजक ॥

३४ त्रिशूलम्—एह्येहि संहारक रुद्रशक्ते त्रैगुण्यरूप प्रथितप्रभाव ॥
निशूल रुद्रप्रिय दिव्य यज्ञे पाहि त्वमस्मान् सुतरां नमस्ते॥ ३४ ॥
३४ (ईशान्याम्) त्रिशूलाय नमः त्रिशूलम् आवा० स्थाप० ॥

३५ वज्रः—एह्येहि नारायणदिव्यतेजःप्रभावसृष्टे मुनिदेहजात ॥
इन्द्रप्रिय त्वं कुरु वज्र शान्तिं यज्ञस्य मे त्वां प्रणमामि नित्यम्॥३५॥
३५ (पूर्वस्याम्) वज्राय नम वज्रम् आवा० स्थाप० ॥

३६ शक्तिः—एह्येहि शक्तेऽनलदेवदेवप्रभावसंदर्शिनि दिव्यरूपे ॥
महाबले मे कुरु यज्ञसिद्धिं पूजां गृहीत्वा परमे नमस्ते ॥ ३६ ॥
३६ (आग्नेय्याम्) शक्त्ये नम शक्तिम् आवा० स्थाप० ॥

३७ दण्डः—एह्येहि यज्ञे प्रभुधर्मराजप्रज्ञाबलैश्वर्यसुशक्तिदण्ड ॥
नयप्रमाणप्रथितप्रभाव रक्षां कुरु त्वं मम ते प्रणामः ॥ ३७ ॥
३७ (दक्षिणस्याम्) दण्डाय नम दण्डम् आवा० स्थाप० ॥

३८ खड्गः—एह्येहि तीक्ष्णातिसुतिग्मधार त्व तु प्रियो निर्ऋतिदेवकस्य।
खड्गप्रभाभास्वर यज्ञसिद्धिं पूजां गृहीत्वा कुरु ते नमोऽस्तु॥३८॥
३८ (नैर्ऋत्याम्) खड्गाय नम खड्गम् आवा० स्थाप० ॥

३९ पाशः—एह्येहि यादोगणवारिधीनामधीश देवस्य जलाधिपस्य ॥
पाश प्रियोऽसि प्रकुरु प्रिय नो नमोऽस्तु ते मे प्रगृह्णाण पूजाम् ॥३९
३९ (पश्चिमस्याम्) पाशाय नम पाशम् आवा० स्थाप० ॥

४० अंकुशः—एह्येहि देवाधिपदेववायोः सर्वत्र सिद्धिप्रदमङ्कुश त्वम् ॥
पूजां गृहीत्वा कुरु यज्ञसिद्धिं रक्ष त्वमस्मान् नितरां नमस्ते ॥४०॥
४० (वायव्याम्) अङ्कुशाय नम अङ्कुशम् आवा० स्थाप० ॥

॥ रक्तपरिधौ ( मंडलबाह्ये उत्तरतः ) ॥

४१ गौतमः—एह्येहि सर्वैर्मुनिभिः समेतस्तपःप्रभावैः कृतकार्यसिद्धे ॥
सतीपते गौतम पापहारिन् कुरुष्व भद्रं मुनिवर्य ते नमः ॥ ४१॥
४१ ( उत्तरस्याम् ) गौतमाय नमः गौतमम् आ० स्था० ॥
४२ भरद्वाजः—एह्येहि सप्तर्षिगणे स्वतेजःप्रभावसंप्राप्तगते मुनीन्द्र ॥
ऋषे भरद्वाज गृहाण पूजां नमोऽस्तु ते यज्ञमिमं सुरक्ष ॥ ४२ ॥
४२ ( ईशान्याम् ) भरद्वाजाय नमः भरद्वाजम् आवा० स्थाप० ॥
४३ विश्वामित्रः-एह्येहि सन्नूतनसृष्टिकारिन् ब्रह्मत्वसिद्ध प्रबलैस्तपोभिः॥
यज्ञस्य सिद्धिं कुरु कौशिक त्वं ब्रह्मर्षिवर्य प्रणमाम्यहं त्वाम् ॥४३
४३ ( पूर्वस्याम् ) विश्वामित्राय नमः विश्वामित्रम् आवा० स्थाप०॥
४४ कश्यपः—एह्येहि गोत्रप्रवरप्रकाश महामुनिश्रेष्ठतमैः सुवन्द्य ॥
ब्रह्मात्मज त्वं कुरु रक्षणं नो नमोऽस्तु ते कश्यप सर्ववर्य ॥४४॥
४४ ( आग्नेय्याम् ) कश्यपाय नमः कश्यपम् आवा० स्थाप० ॥
४५ जमदग्निः—एह्येहि सप्तर्षिगणप्रभाव समाधिनिष्ठैकमनस्तपस्विन् ॥
नमोऽस्तु तुभ्यं जमदग्निसिद्ध पूजां गृहीत्वा कुरु शं मुने नः ॥४५॥
४५ ( दक्षिणस्याम् ) जमदग्नये नमः जमदग्निम् आवा० स्थाप० ॥
४६ वशिष्ठः-एह्येहि सर्वामरसिद्धसाध्यमुनीन्द्रसंसेवित शान्तमूर्ते ॥
ब्रह्मर्षिवर्यास्तु हि ते प्रणामो यज्ञं सुसिद्धं कुरु मे वशिष्ठ ॥ ४६ ॥
४६ ( नैर्ऋत्याम् ) वशिष्ठाय नमः वशिष्ठम् आवा० स्थाप० ॥
४७ अत्रिः—एह्येहि दत्तात्रयदिव्यमूर्तेः पितस्तपस्विन्च्छशिसंभवात्रे ॥
महामुने यज्ञमिमं स्वशक्त्या पाहि त्वमस्मान् हि नमोऽस्तु तुभ्यम् ४७
४७ ( पश्चिमस्याम् ) अत्रये नमः अत्रिम् आवा० स्थाप० ॥

४८ अरुन्धती–एह्येहि साध्वीवरदिव्यमूर्ते सतीप्रभावाङ्कितसर्वलोके।
अरुन्धति त्वं कुरु यज्ञसिद्धिं विधेहि शं नो सति ते नमोऽस्तु ॥४८॥
४८ (वायव्याम्) अरुन्धत्यै नमः अरुन्धतीम् आवा० स्थाप० ॥

॥ कृष्णपरिधौ (मण्डलबाह्ये पूर्वतः) ॥

४९ ऐन्द्री–दिव्यलोकस्थितां देवीं देवकल्याणकारिणीम् ॥
देवेन्द्रदेहजां शक्तिमैन्द्रीमावाहयाम्यहम् ॥ ४९ ॥
४९ (पूर्वस्याम्) ऐन्द्र्यै नमः ऐन्द्रीम् आवा० स्थाप० ॥

५० कौमारी–कौमारीमतुलां शक्तिं कुमारस्य प्रभावजाम् ॥
आवाहयाम्यहं दिव्यां देवतार्थप्रसाधिनीम् ॥ ५० ॥
५० (आग्नेय्याम्) कौमार्यै नमः कौमारीम् आवा० स्थाप० ॥

५१ ब्राह्मी–ब्रह्मणस्तु समुत्पन्नां सर्वलोकसुखावहाम् ॥
ब्राह्मीं तु परमां शक्तिं यज्ञ आवाहयाम्यहम् ॥ ५१ ॥
५१ (दक्षिणस्याम्) ब्राह्म्यै नमः ब्राह्मीम् आवा० स्थाप० ॥

५२ वाराही–वराहस्थां महाशक्तिं वसुधोद्धारकारिणीम् ॥
आवाहयाम्यहं देवीं वाराहीं दैत्यदारिणीम् ॥ ५२ ॥
५२ (नैर्ऋत्याम्) वाराह्यै नमः वाराहीम् आवा० स्थाप० ॥

५३ चंडिका–चंडिकां चंडरूपां तां चंडमुंडविनाशिनीम् ॥
चामुण्डां शक्तिमत्युग्रां यज्ञ आवाहयाम्यहम् ॥ ५३ ॥
५३ (पश्चिमस्याम्) चामुण्डायै नमः चामुण्डाम् आवा० स्थाप० ॥

५४ वैष्णवी–विष्णुदेहस्थितां शक्तिं प्रवरां वैष्णवीं पराम् ॥
आवाहयाम्यहं यज्ञे लोककल्याणकारिणीम् ॥ ५४ ॥
५४ (वायव्याम्) वैष्णव्यै नमः वैष्णवीम् आवा० स्थाप० ॥

५५ माहेश्वरी—माहेश्वरीं महाशक्तिं त्रिशूलवरधारिणीम् ॥
आवाहयाम्यहं देवीं यज्ञसिद्धिकरीं शिवाम् ॥ ५५ ॥
५५ ( उत्तरस्याम् ) माहेश्वर्यै नमः माहेश्वरीम् आवा० स्थाप० ॥

५६ वैनायकी—विनायकस्थिता नित्यं सर्वविघ्नविदारिणीम् ॥
शक्तिं वैनायकीं यज्ञे शुभामावाहयाम्यहम् ॥ ५६ ॥
५६ ( ईशान्याम् ) वैनायक्यै नमः वैनायकीम् आवा० स्थाप० ॥

एवामावाह्य "प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ॥ प्रतिष्ठां ते करोम्यत्र मण्डले दैवतैः सह ॥" ब्रह्माद्यावाहितदेवाः सुप्रतिष्ठिता वरदा भवत ॥ इति प्रतिष्ठाप्य "ब्रह्मादिदेवेभ्यो नमः" इति पाद्यार्घ्याचमनीय-पञ्चामृतस्नानशुद्धोदकस्नान-गन्धादिभिश्च ब्रह्मादिदेवान् संपूज्य ततो मण्डलमध्ये प्रस्थप्रमाणतिलराशिं ( तण्डुलराशिं वा ) कृत्वा तदुपरि "विश्वाधारासि" इत्यादिमन्त्रैरभिमन्त्रितं कलशं संस्थाप्य तस्योपरि क्षौमवस्त्रं प्रसार्य तत्र चन्दनेनाष्टदलं विलिख्य मध्येमण्डूकादिपीठदेवता आवाहयेत् ॥ यथा ( पीठमध्ये ) ॥ १ ॥ मण्डूकाय नमः ॥ २ ॥ आधारशक्त्यै नमः ॥३॥ मूलप्रकृत्यै नमः ॥४॥ कालाग्निरुद्राय नमः ( तदुपरि ) ॥५॥ अमृतार्णवाय नमः ॥६॥ रत्नद्वीपाय नमः ॥७॥ हेमगिरये नमः ॥ ॥८॥ नंदनोद्यानाय नमः ॥ ॥९॥ कल्पवृक्षाय नमः ॥१०॥ मणिभूतलाय नमः ॥११॥ दिव्यमंडपाय नमः ॥१२॥ स्वर्णवेदिकायै नमः ॥१३॥ रत्नसिंहासनाय नमः ॥१४॥ धर्माय नमः ॥१५॥ ज्ञानाय नमः ॥१६॥ वैराग्याय नमः ॥१७॥ ऐश्वर्याय नमः ॥१८॥ ( पूर्वे ) अनैश्वर्याय नमः ॥१९॥ ( पुनर्मध्ये ) सत्त्वाय प्रबोधात्मने नमः॥२०॥ रजसे प्रकृत्यात्मने नमः॥२१॥ तमसे मोहात्मने नमः ॥२२॥ सोममंडलाय नमः ॥ २३ ॥ सूर्यमंडलाय नमः ॥२४॥

वह्निमंडलाय नमः ॥ २५ ॥ मायातत्त्वाय नमः ॥ २६ ॥ विद्यातत्त्वाय नमः ॥२७॥ शिवतत्त्वाय नमः॥२८॥ ब्रह्मणे नमः ॥२९॥ महेश्वराय नमः ॥३०॥ आत्मने नमः ॥३१॥ अन्तरात्मने नमः ॥३२॥ परमात्मने नमः ॥३३॥ जीवात्मने नमः ॥३४॥ ज्ञानात्मने नमः ॥३५॥ कन्दाय नमः ॥३६॥ नीलाय नमः ॥३७॥ पद्माय नमः ॥ ३८ ॥ महापद्मायं नमः ॥ ३९ ॥ रत्नेभ्यो नमः ॥ ४० ॥ केसरेभ्यो नमः ॥ ४१ ॥ कर्णिकायै नमः ॥ इति पीठदेवता आवाह्य "प्रतिष्ठा०" इति प्रतिष्ठाप्य "मण्डूकादिपीठदेवताभ्यो नमः" इति ताः गन्धादिभिः पूजयेत् ॥

ततस्तत्र रौप्यमयं पर्यङ्कं वा पात्रं ताम्बूलदलं वा निधाय ततः शंखघंटापूजनं कृत्वा ततः परिवारदेवता आवाहयेत् ॥ यथा ॥१॥ *वसुदेवाय नमः वसुदेवम् आवा० स्थाप० ॥२॥ बलदेवाय नमः* बलदेवम् आवा० स्थाप० ॥३॥ नन्दाय नमः नन्दम् आवा० स्थाप० ॥४॥ यशोदायै नमः यशोदाम् आवा० स्थाप० ॥५॥ सुभद्रायै नमः सुभद्राम् आवा० स्थाप० ॥६॥ रोहिण्यै नमः रोहिणीम् आवा० स्थाप० ॥७॥ चन्द्राय नमः चन्द्रम् आवा० स्थाप० ॥८॥ मत्स्यादिदशरूपेभ्यो नमः मत्स्यादिदशरूपान् आवा० स्थाप० ॥९॥ आदित्यादिग्रहेभ्यो नमः आदित्यादिग्रहान् आवा० स्थाप० ॥१०॥ अश्विन्यादिसप्तविंशतिनक्षत्रेभ्यो नमः अश्विन्यादिसप्तविंशतिनक्षत्राणि आवा० स्थाप० ॥११॥ देवेभ्यो नमः देवान् आवा० स्थाप०॥१२॥ नागेभ्यो नमः नागान् आवा० स्थाप० ॥१३॥ यक्षेभ्यो नमः यक्षान् आवा० स्थाप० ॥१४॥ विद्याधरेभ्यो नमः विद्याधरान् आ०स्थाप० ॥१५॥ उरगेभ्यो नमः उरगान् आवा० स्थाप० ॥१६॥ यमुनायै नमः यमुनाम् आवा०स्थाप० ॥१७॥ कालियाय नमः कालियम् आ० स्था०

॥१८॥ कंसाय नमः कंसम् आ० स्था० ॥१९॥ गोभ्यो नमः गाः आ०स्था० ॥२०॥ योगनिद्रायै नमः योगनिद्राम् आ० स्था० ॥२१॥ सात्यकये नमः सात्यकिम् आवा० स्था०॥२२॥ उद्धवाय नमः उद्धवम् आवा० स्था० ॥२३॥ अक्रूराय नमः अक्रूरम् आ० स्था० ॥ २४॥ उग्रसेनादियादवेभ्यो नमः उग्रसेनादियादवान् आ० स्था० ॥ २५॥ शङ्खाय नमः शङ्खम् आ० स्था० ॥२६॥ चक्राय नमः चक्रम् आ० स्था० ॥२७॥ गदायै नमः गदाम् आ० स्था० ॥२८॥ पद्माय नमः पद्मम् आवा०स्था० ॥२९॥ त्रुटये नमः त्रुटिम् आ०स्था० ॥३०॥ कालात्मने नमः कालात्मानम् आ० स्था०॥३१॥ अहोरात्राय नमः अहोरात्रम् आ० स्था०॥३२॥ मासाय नमः मासम् आ० स्था० ॥३३॥ संवत्सराय नमः संवत्सरम् आ० स्था० ॥३४॥ सर्वात्मने नमः सर्वात्मानम् आ० स्था० ॥३५॥ द्वारपालेभ्यो नमः द्वारपालम् आवा० स्था० ॥३६॥ पुण्यशीलाय नमः पुण्यशीलम् आवा० स्था० ॥३७॥ सुशीलाय नमः सुशीलम् आवा० स्था० ॥३८॥ जयाय नमः जयाम् आवा० स्था०॥३९॥ विजयाय नमः विजयम् आवा० स्था० ॥४०॥ गरुडाय नमः गरुडम् आ० स्था० ॥

एवं परिवारदेवताः आवाह्य " प्रतिष्ठा०" इति मंत्रेण "वसुदेवादि-परिवारदेवताः सुप्रतिष्ठिता वरदा भवत" इति प्रतिष्ठाप्य " वसुदेवादि परिवारदेवताभ्यो नमः" इति पाद्यादिभिर्गन्धादिभिश्च ताः संपूजयेत् ।

ततः श्रीकृष्णस्य नूतनप्रतिमायां पूर्ववत्-( व्रतविधौ विहितरीत्या) (पृ० ५०) न्यासप्राणप्रतिष्ठादिकं कृत्वा "परिवारदेवतासहिताय भगवते श्रीकृष्णाय नमः" इति आवाहनादि स्तुतिपाठान्तं पूजनं* (पूर्ववत् पृ०

५२-९६ ) कुर्यात् । ( अनेन पूजनेन परिवारदेवतासहितः भगवान् श्रीकृष्णः प्रीयताम् इति संकल्पयेत् ॥ तत आचार्यादिपूजनाशिर्वादान्तं कर्म कृत्वा रात्रिं पुराणश्रवणभजनकीर्तनादिना निनयेत् ॥ )

* अथवा राजोपचारपूजा कर्तव्या चेत् निम्नप्रकारेण कर्तव्या॥यथा—

---

॥ श्रीकृष्णाय नमः ॥

## ॥ अथ राजोपचारपूजा ॥

### ॥ अथ ध्यानम् ॥

वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यान् दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ॥
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान् मूर्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥१॥

वंशीविभूषितकरान्नवनीरदाभात्
पीताम्बरादरुणबिम्बफलाधरोष्ठात् ॥
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्
कृष्णात् परं किमपि तत्त्वमहं न जाने ॥ २ ॥

लक्ष्मीकौस्तुभवक्षसं मुररिपुं शंखासिकौमोदकी-
हस्तं पद्मपलाशताम्रनयनं पीताम्बरं शार्ङ्गिणम् ॥
मेघश्याममुदारपीवरचतुर्बाहुं प्रधानात्परं
श्रीवत्साङ्कमनाथनाथममृतं वन्दे मुकुन्दं मुदा ॥ ३ ॥

---

॥ तत्र प्राक् तिलकधारणादिकं कुर्यात् ॥

॥ अथ तिलकधारणम् ॥

हस्ते जलमादाय॥ श्रीगणेशं नमस्कृत्य अत्राद्य० श्रीजन्माष्टमीव्रतोद्यापनकर्मणि भगवतः श्रीकृष्णस्य पूजनकर्माधिकारार्थं तिलकतुलसीधारणपूर्वकं शंखघंटापूजनमहं करिष्ये ॥ इति संकल्प्य ॥ तिलकधारणार्थं यथोक्तमृत्तिकामादाय वामहस्ते गृहीत्वा तस्योपरि जलं निक्षिपेत् ॥ "श्रीकिरीटकेयूरहारमकरकुंडलशंखचक्रगदापद्महस्ताय पीताम्बरधराय श्रीवत्सांकितवक्षःस्थलश्रीभूमिसहितस्वात्मज्योतिर्द्योतिकराय सहस्रादित्यतेजसे श्रीकृष्णाय नमः ॥ "श्रीनारायणाय नमः" इत्यभिमंत्र्य ॥ "जलशायिने नमः" इति जलं निक्षिप्य ॥ "मधुरिपवे नमः" इति संमर्द्य "ॐनमो भगवते वासुदेवाय" इति द्वादशस्थानेषु धारयेत् ॥ यथा ललाटे—केशवाय नमः । उदरे—नारायणाय० । वक्षःस्थले—माधवाय० । कंठे—गोविंदाय० । दक्षिणकुक्षौ—विष्णवे० । दक्षिणबाहौ—मधुसूदनाय० । कंधरे—त्रिविक्रमाय० । वामपार्श्वे—वामनाय नमः । वामबाहौ—श्रीधराय० । कंधरे—हृषीकेशाय० । पृष्ठे—पद्मनाभाय० । कट्यां—दामोदराय० । एवं तिलकं कृत्वा हस्तौ प्रक्षाल्य तत्तोयं "वासुदेवाय नमः" इति मंत्रेण मूर्ध्नि निक्षिपेत् ॥

॥ इति तिलकधारणम् ॥

---

॥ अथ मालाधारणम् ॥

हस्ते मालां गृहीत्वा पात्रे निधाय तदुपरि देवमावाहयेत् ॥ अक्षतान्गृहीत्वा ॥ सर्वशक्तिस्वरूपिणि सिद्धिदात्रि इहागच्छ इह तिष्ठ॥ ध्यानम् ॥ ध्यायेच्च तुलसीमालां रामां कमललोचनाम् ॥ प्रसन्नां

पद्मवदनां वराभयचतुर्भुजाम् ॥ इति ध्यात्वा ॥ "भगवत्प्रसादिकायै नमः" इति मंत्रेण यथाशक्त्या संपूज्य प्रार्थयेत् ॥ सौभाग्यं संततिं देहि धनं धान्यं च मे सदा ॥ आरोग्यं शोकशमनं कुरु मे माधवप्रिये ॥ १ ॥ अभीष्टफलसिद्धिं च सदा देहि हरिप्रिये ॥ देवैस्त्वं निर्मिता पूर्वमर्चिताऽसि मुनीश्वरैः ॥ २ ॥ इति संप्रार्थ्य ॥ "ह्रीं सिद्धिदायिन्यै नमः" इति हस्ते गृहीत्वा ॥ महामाले महामाये सर्वशक्तिस्वरूपिणि ॥ चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ "ह्रीं नमो भगवते वासुदेवाय" इति मंत्रेण कंठे धारयेत्

॥ इति मालाधारणम् ॥

---

॥ अथ शंखपूजनम् ॥

स्वस्य वामभागे पुरस्तात् त्र्यस्रं त्रिकोणं मंडलमुल्लिख्य तस्मिन्मंडले "ह्रीं आधारशक्त्यै नमः" इति शंखाधारत्रिपदिकां स्थापयेत् ॥ ततो "ह्रीं अस्त्रायफट्" इति मंत्रेण क्षालितं शंखं "आधारशक्त्यै नमः" इति त्रिपदिकोपरि स्थापयेत् ॥ ततो "ह्रीं हृदयाय नमः" इत्यनेन शंखमध्ये गंधपुष्पादि क्षिप्त्वा दक्षिणहस्तेन शंखं स्पृष्ट्वा ध्यायेत् ॥ "शंखं चंद्रार्कदैवत्यं मध्ये वरुणदैवतम् ॥ पृष्ठे प्रजापतिं विद्यादग्रे गंगासरस्वती ॥ त्रैलोक्ये यानि तीर्थानि वासुदेवस्य चाज्ञया ॥ शंखे तिष्ठंति विप्रेंद्र तस्माच्छंखं प्रपूजयेत् ॥ दर्शनेन हि शंखस्य किं पुनः स्पर्शनेन तु ॥ विलयं यांति पापानि हिमवद्भास्करोदये ॥ नत्वा शंखं करे धृत्वा मंत्रेणानेन वैष्णवः ॥ यः स्नापयति गोविंदं तस्य पुण्यमनंतकम् ॥" इति ध्यात्वा ॥ स्नानीयफलशोदकेनोद्धरण्या शंखमापूर्य ॥ शंख-पद्म-गरुड-सुरभिमुद्राः

प्रदर्श्य ॥ शंखस्थितजले तुलसीगंधपुष्पं निधाय ॥ हस्तेन शंखं संस्पृशन् कूर्चेन तज्जलं स्पृष्ट्वा मूलमंत्रमष्टशो जपेत् ॥ " ह्रीं नमो भगवते वासुदेवाय ॥ " जलगायत्री यथा ॥ " ह्रीं जलबिंबाय विद्महे मीनपुरुषाय धीमहि तन्नो विष्णुः प्रचोदयात् " इति ॥ ( ततः प्रोक्षणीपात्रे किंचित् क्षिपेत् ) ॥ शेषेण शंखजलेन सर्वपूजोपकरणानि निजशरीरं च " अपवित्र० " इति मन्त्रेण वारत्रयं प्रोक्षयेत् ॥ ततो गायत्री मंत्रं पठित्वा शंखमुद्रां प्रदर्शयेत् ॥ यथा ॥ " ह्रीं पांचजन्याय विद्महे पावमानाय धीमहि। तन्नः शंखः प्रचोदयात् ॥ " इति गायत्री ॥ ततः " शंखस्थदेवतायै० " इति मंत्रेण पंचोपचारैः संपूज्य प्रार्थयेत् ॥ त्वं पुरा सागरोत्पन्नो विष्णुना विधृतः करे ॥ नमितः सर्वदेवैश्च पांचजन्य नमोऽस्तु ते ॥ इति प्रार्थना ॥ ( " पुरतो देवदेवस्य सपुष्पसजलाक्षतः ॥ शंखश्चाभ्यर्चितो येन तस्य लक्ष्मीर्न दूरगा " ॥ इति ॥ ) हस्ते जलमादाय । अनेन पूजनेन शङ्खस्थदेवता प्रीयताम् ॥

॥ अथ घंटापूजनम् ॥

ततो हस्ते घण्टामादाय "घंटास्थितगरुडाय नमः" आवाहयामि ॥ इत्यावाह्य यथावकाशेन यथाशक्ति " घण्टास्थितगरुडाय नमः " इति गंधादिना पूजयेत् ॥ पूजान्ते तां हस्ते धृत्वा नादं कुर्यात् ॥ प्रार्थना ॥ सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः ॥ विषपापहरो नित्यमतः शांतिं प्रयच्छ मे ॥ आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् ॥ घंटानादं प्रकुर्वीत पश्चाद् घंटां प्रपूजयेत् ॥ इति संप्रार्थ्य ॥ ततो हस्ते जलमादाय ॥ अनेन पूजनेन घंटास्थितगरुडः प्रीयताम् ॥ इति ॥

॥ इति शंखघण्टार्चनम् ॥

---

## ॥ अथ भूशुद्धिः ॥

आचम्य प्राणानायम्य ॥ जलमादाय ॥ अद्येत्यादि० जन्माष्टमीव्रतोद्यापनाख्ये कर्मणि भगवतः श्रीकृष्णस्य पूजाधिकारसिद्ध्यर्थं भूशुद्धिभूतशुद्धिप्राणप्रतिष्ठान्तर्मातृकाबहिर्मातृकान्यासांश्च करिष्ये ॥

तत्र प्राङ् "नमस्कारः" (दक्षिणे) ह्रीं सरस्वत्यै नमः। शंखनिधये०। (वामभागे) लक्ष्म्यै०। पद्मनिधये० ॥

आसनम्—पृथ्वि त्वयेति मंत्रस्य मेरुपृष्ठऋषिः कूर्मो देवता सुतलं छंदः आसने विनियोगः ॥ ह्रीं पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ॥ त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ (प्रार्थना) विश्वशक्त्यै नमः। महाशक्त्यै०। कूर्मासनाय०। योगासनाय० ॥ अनन्तासनाय०। विमलासनाय० ॥ (मध्ये) परमसुखासनाय० ॥ आत्मासनाय० ॥ अनेन मन्त्रेण पुष्पादिना आत्मनः आसनदानम् ॥

"शिखाबंधनम्" ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभोजने ॥ तिष्ठ देवि शिखाबंधे चामुण्डे चापराजिते ॥ विष्णोर्नामसहस्रैस्तु शिखाबंधं करोम्यहम् ॥ इति शिखाबंधनम् ॥

अथ दिग्बंधः-"अपसर्पन्तु ते०" इत्यादि मंत्रेण चतुर्दिक्षु सर्षपान् विकिरयेत् ॥ "तीक्ष्णदंष्ट्र०" इति भैरवाज्ञां गृहीत्वा ॥ "तालत्रयकरणम्" -ह्रीं सर्वभूतनिवारकाय शार्ङ्गाय सशराय सुदर्शनायास्त्रराजाय हुं फट् स्वाहा ॥ अनेन मंत्रेण तालत्रयं कृत्वा ॥ (स्वस्य परितः सर्वदिक्षु) अस्त्रमुद्रां प्रदर्शयेत् ॥ (ततः स्वदक्षिणभागे) ह्रीं गुरुभ्यो०। परमगुरुभ्यो०। परमेष्ठीगुरुभ्यो०। पूर्वसिद्धेभ्यो०। आचार्येभ्यो० ॥ (स्ववामभागे) गणेशाय०। दुर्गायै० क्षेत्रपालाय०

योगिनीभ्यो० क्षेत्रेशाय० ॥ "भूमिताडनम्" अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामविरोधेन भूशुद्ध्यादि समारभे ॥ १ ॥ इति स्वपार्ष्णिना त्रिवारं भूमिं ताडयेत् ॥ उदकस्पर्शः ॥

भूशुद्धिः –( भूमौ हस्तौ कृत्वा पश्चाद्ब्रूयात् ) शुक्लवर्णा मही कार्या दिव्याभरणभूषिता ॥ चतुर्भुजा सौम्यवपुश्चंद्रांशुसदृशाम्बरा ॥ "भैरवनमस्कारः" तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ इति भैरवनमस्कारः ॥ इति भूशुद्धिः ॥

---

## ॥ अथ भूतशुद्धिः ॥

आचम्य प्राणानायम्य ॥ स्वांके उत्तानौ करौ कृत्वा कुंडलिनीं ध्यायेत् ॥ तद्यथा ॥ मूलाधारचतुर्दलकमलकर्णिकान्तर्गतत्रिकोणान्तरस्थाम् अधोमुखीं स्वयं भूलिंगवेष्टिनीमसुप्तभुजंगाकारां शंखाकारेण सार्द्धत्रिवलयां तडित्कोटिनिभां नीवारशूकतन्वीं मूलविद्याप्रकृतिमयीं कुंडलिनीमिष्टदेवतारूपां ध्यात्वा । हुंकारेण त्रिकोणाग्निना सचेतनां कृत्वा । स्वभूलिंगमध्यवर्तिसुषुम्णामार्गेणोर्ध्वगां कृत्वा । मूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञादीनि चक्राणि भेदयित्वा सहस्रारस्थपरमशिवे जीवात्मना सह कुंडलिनीं "हंसः" इति संयोजयेत् ॥ ( मूलाधारात् समुत्थाप्य कुंडलीं परदेवताम् ॥ सुषुम्ना मार्गमाश्रित्य ब्रह्मरंध्रगतां स्मरेत् ॥ जीवं ब्रह्मणि संयोज्य हंसमंत्रेण साधकः )॥ ह्रीं हसः सोऽहम् ॥

अथ मातृकोपसंहारः ॥ ह्रीं क्षकारं हकारे उपसंहरामि ॥ हकारं सकारे उपसंहरामि ॥ ( एवं सर्वत्र ) सकारं षकारे उपसंहरामि ॥ षकारं

शकारे० । शकारं वकारे० । वकारं लकारे० । लकारं रकारे० । रकारं यकारे० । यकारं मकारे० । मकारं भकारे० । भकारं बकारे० । बकारं फकारे० । फकारं पकारे० । पकारं नकारे० । नकारं धकारे० । धकार दकारे० । दकारं थकारे० । थकारं तकारे० । तकारं णकारे०। णकारं ढकारे० । ढकार डकारे० । डकारं ठकारे० । ठकारं टकारे० । टकारं ञकारे० । ञकारं झकारे० । झकारं जकारे० । जकारं छकारे० । छकारं चकारे० । चकार ङकारे० । ङकार घकारे० । घकारं गकारे० । गकारं खकारे० । खकारं ककारे० । ककारम् अःकारे० । अःकारम् अंकारे० । अंकारम् औकारे० । औकारम् ओकारे० । ओकारम् ऐकारे० । ऐकारम् एकारे० । एकारं ॡकारे० ॡकारं ऌकारे० । ऌकारम् ॠकारे० । ॠकारम् ऋकारे० । ऋकारम् ऊकारे० । ऊकारम् ईकारे० । ईकारम् इकारे०॥ इकारम् आकारे०। आकारम् अकारे उपसंहरामि ॥ अकारः सहस्रदलाम्बुजाकारे ब्रह्मरन्ध्रे परमात्मनि " लयं गतः " इति भावयेत् ॥

अथ भूतोपसंहारः॥ पादादिजानुपर्यन्तं चतुष्कोणं स्ववज्रकम् ॥ लंबीजाढ्यं स्वर्णवर्णं स्मरेदवनिमंडलम् ॥ लं "पृथिव्यै नमः" ध्यायामि ॥ १ ॥ जान्वोरानाभिचंद्रार्धनिभं पद्मद्वयाकृतिम् ॥ वंबीजयुक्त श्वेताभं मं सोममडल स्मरेत् ॥ "वं अद्भयो नमः" ध्यायामि ॥ २ ॥ नाभेर्हृदयपर्यन्त त्रिकोणं स्वस्तिकासनम् ॥ रंबीजेन युतं रक्त स्मरेत्पावकमंडलम् ॥ "रं अग्नये नमः" ध्यायामि ॥३॥ हृदो भ्रूमध्यपर्यन्तं वृत्तं षड्बिंदुलाञ्छितम् ॥ यंबीजयुक्त धूम्राभ वायव्यं मंडलं स्मरेत् ॥ " यं वायवे नमः" ध्यायामि ॥४॥ आब्रह्मरन्ध्र भ्रूमध्याद्वृत्तं स्वच्छं मनोहरम् ॥ हंबीजयुक्तमाकाशमंडलं च विचिन्तयेत् ॥ "हं

आकाशाय नमः " ध्यायामि ॥ ५ ॥ ( एवं भूतानि संचिंत्य प्रत्येकं प्रविलापयेत् ) तद्यथा ॥ भुवं जले प्रविलापयामि ॥ जलं वह्नौ प्रविलापयामि ॥ वह्निं वायौ प्रवि० ॥ वायुम् आकाशे प्रवि० ॥ आकाशम् अहंकारे प्रवि० ॥ अहंकारं महत्तत्त्वे प्र० ॥ महत्तत्त्वं प्रकृतौ प्र० ॥ प्रकृतिं नित्यशुद्धबुद्धस्वभावे स्वप्रकाशे सत्यज्ञानानन्तानन्दलक्षणे परमकारणे परब्रह्मणि प्रविलापयामि ॥ इति ॥

अथ पापपुरुषध्यानम् ॥ मंत्राः ॥ शुद्धसच्चिन्मयो भूत्वा चिंतयेत्पापपूरुषम् ॥ वामकुक्षिस्थितं कृष्णमंगुष्ठपरिमाणकम् ॥ १ ॥ विप्रहत्याशिरोयुक्तं कनकस्तेयबाहुकम् । मदिरापानहृदयं गुरुतल्पकटियुतम् ॥ २ ॥ तत्संयोगिपदद्वंद्वमंगप्रत्यंगपातकम् ॥ उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ॥ ३ ॥ खड्गचर्मधरं क्रुद्धं पुरुषं कज्जलप्रभम् ॥ इति ध्यात्वा ॥ पापपुरुषशोषणम्–यथा–"यं" इति वायुबीजं (पूरकेन) षोडशवारं ( १६ ) जपित्वा तद्बीजोत्थवायुना स्वशरीरस्थं पापपुरुषशोषितं विभावयेत् ॥ पापपुरुषदहनम–यथा–" रं " इति वह्निबीजं ( कुंभकेन ) चतुःषष्ठिवारं ( ६४ ) जपित्वा तद्बीजोत्थाग्निना तद्भस्मीभूतं विभावयेत् ॥ शरीराप्लावनम्–यथा–"यं" इति वायुबीजं (रेचकेन) द्वात्रिंशद्वारं ( ३२ ) जपित्वा पापपुरुषभस्म रेचयेत् ॥ ततो " व " इति सुधाबीजं ( पूरकेन ) षोडशवारं ( १६ ) जपित्वा तद्बीजेन भस्म संप्लावयेत् ॥ ततो ( भूबीजेन घनीकृत्य भस्म तत्कनकाण्डवत् ॥ विशुद्धमुकुराकारं ब्रह्मरन्ध्रगतं स्मरेत् ) यथा–" लं " इति भूबीजं

१ वायुबीजं स्मरन्वायुं संपूर्यैनं विशोषयेत् ॥ २ वह्निबीजं स्मरन्नित्य निर्दहेत् पापपूरुषम् । ३ वायुबीजेन तद्रक्षा बहिर्निष्कास्य यत्नतः ॥ सुधाबीजेन देहोत्थं भस्म संप्लावयेत् सुधीः ॥

( कुंभकेन ) षोडशवारं ( १६ ) जपित्वा तद्बीजोत्थकाठिन्येन तः दृढां भावयेत् ॥ ततो " हं " इति आकाशबीजं (रेचकेन) द्वात्रिंशद्वा ( ३२ ) जपित्वा तद्बीजेन मूर्द्धादिपादपर्यन्तान्यंगानि भावयेत् । एवं शरीरं विचिन्त्य परमात्मनः सृष्टिक्रमेण तत्त्वानि स्वस्वस्थाने प्रापयेत् ॥ यथा-परब्रह्मणः सकाशात्प्रकृतिस्वरूपा माया प्रादुर्भूता । तस्याः सकाशात् महत्तत्त्वम् ॥ महत्तत्त्वादहंकारः ॥ अहंकारादाकाशः संभूतः ॥ आकाशाद्वायुः ॥ वायोरग्निः ॥ अग्नेरापः ॥ अद्भ्यः पृथिवी ॥ पृथिव्या ओषधयः ॥ ओषधिभ्योऽन्नम् ॥ अन्नाद्रेतः ॥ रेतसः पुरुषः ॥ स वा एष पुरुषोऽन्नरसमयः ॥ हंसः सोऽहम् ॥ मंत्रः ॥ ( कुण्डलीजीवमादाय परसंगात्सुधामयम् ॥ संस्थाप्य हृदयाम्भोजे मूलाधारगतं स्मरेत् )-एवं स्वशरीरं पुनरुत्पन्नं तेजोमयं पुण्यात्मकं सकलपुरुषार्थसाधकं निरस्तकिल्बिषं देवताराधनयोग्यं विभावयेत् ॥ इति ॥ इति भूतशुद्धिः ॥

---

## ॥ अथ प्राणप्रतिष्ठा ॥

जलमादाय ॥ अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामानि छंदांसि जगत्सृष्टिकारिणी प्राणशक्तिर्देवता आं बीजं ह्रीं शक्तिः क्रौं कीलकं मम प्राणप्रतिष्ठापने विनियोगः ॥ अथ न्यासः ॥ ब्रह्मविष्णुमहेश्वरऋषिभ्यो नमः शिरसि ॥ ऋग्यजुःसामछंदोभ्यो नमः मुखे ॥ जगत्सृष्टिकारिणीप्राणशक्तिदेवतायै नमः हृदये ॥ आं बीजाय० गुह्ये ॥ ह्रीं शक्तये० पादयोः ॥ क्रौंकीलकाय०

१ (आकाशादीनि भूतानि पुनरुत्पादयेत्ततः ॥ अखण्डं ब्रह्म तस्मात्स्यात् प्रेरकः पुरुषस्तथा )

सर्वांगे ॥ इति ॥ अथ षडंगन्यासः ॥ अं कं खं गं घं ङं आं—पृथिव्यप्तेजोवाय्वाकाशात्मने—अंगुष्ठाभ्यां नमः ( हृदयाय नमः ) ॥ इं चं छं जं झं ञं ईं—शब्दस्पर्शरूपरसगंधात्मने—तर्जनीभ्यां नमः ( शिरसे नमः ) ॥ उं टं ठं डं ढं णं ऊं—त्वक्चक्षुजिह्वाघ्राणात्मने—मध्यमाभ्यां नमः ( शिखायै नमः ) ॥ एं तं थं दं धं नं ऐं—वाक्पाणिपादपायूपस्थात्मने—अनामिकाभ्यां नमः ( कवचाय नमः ) ॥ ओं पं फं बं भं मं औं—वचनादानगतिविसर्गानन्दात्मने—कनिष्ठिकाभ्यां नमः ( नेत्रत्रयाय नमः) ॥ अं यं रं लं वं शं षं सं हं ळं क्षं अः—मनोबुद्ध्यहंकारचित्तविज्ञानात्मने—करतलकरपृष्ठाभ्यां नमः ( अस्त्राय नमः ) ॥ इति करन्यासः ॥ ( एवं हृदयादिन्यासः ) ॥ ततः आं नमः नाभ्यादिपादपर्यन्तम् ॥ ह्रीं नमः हृदादिनाभ्यन्तम् ॥ क्रौं नमः भ्रूमध्यादिहृदयान्तं विन्यस्य हृदये सप्तधातून्विन्यसेत् ॥ यथा —यं त्वगात्मने नमः। रं असृगात्मने०। लं मांसात्मने०। वं मेदात्मने०। शं अस्थ्यात्मने०। षं मज्जात्मने०। सं शुक्रात्मने० । हं प्राणात्मने० । ळं जीवात्मने नमः ॥ क्षं बीजात्मने० ॥ इति हृदये विन्यस्य ॥ अकारादि क्षकारान्तं व्यापकं कुर्यात् ॥ यथा–अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः । कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं—इति व्यापकं कृत्वा ॥ ततः स्वहृदि पीठशक्तिं विन्यस्य पूजयेत् ॥ यथा-मंमंडूकायनमः । कालाग्निरुद्राय० । आधारशक्त्यै० । कूर्माय० । पृथिव्यै० । सुधासिंधुपरिवृताय० । श्वेतद्वीपाय० । कल्पवृक्षाय० । मणिहर्म्याय० । हेमपीठाय० । धर्माय० । ज्ञानाय० । वैराग्याय० । ऐश्वर्याय० । अधर्माय० ।

१ हृदयादिभिन्नन्यासे कर्तव्ये (  ) मध्ये स्थितं "हृदयाय नमः" इत्यादिवक्तव्यम् ॥

अज्ञानाय० । अवैराग्याय० । अनैश्वर्याय० । अनन्ताय० । सर्वतत्त्वात्मकपद्माय० । आनंदमयकंदाय० । संविन्नालाय० । विकारमयकेसरेभ्यो० । प्रकृतीमयपत्रेभ्यो० । पंचाशद्बीजाढ्यकर्णिकायै० । सूर्यमंडलाय० । वह्निमंडलाय० । सत्त्वाय० । रजसे० । तमसे० । आत्मने० । अंतरात्मने० । परमात्मने० । ज्ञानात्मने० । मायातत्त्वाय० । कलातत्त्वाय० । विद्यातत्त्वाय० । परमतत्त्वाय० ॥ इति हृदये विन्यस्य ॥ ततो हृत्कमलपत्रेषु पूर्वादितः ॥ यथा-( पूर्वे ) जयायै० । ( आग्नेये ) विजयायै० । ( दक्षिणे ) अजितायै० । ( नैर्ऋते ) अपराजितायै० । ( पश्चिमे ) नित्यायै० । ( वायव्ये ) विलासिन्यै० । ( उत्तरे ) दोग्ध्र्यै० । ( ऐशाने ) अघोरायै० । ( कर्णिकायाम् ) मंगलायै० ॥ आं ह्रीं क्रौं प्राणशक्तियोगपीठाय नमः ॥ इति मंत्रेणासनदानम् ॥ इति पीठशक्तिं विनस्य ध्यायेत् ॥ तद्यथा—

रक्ताम्भोधिस्थपोतोल्लसदरुणसरोजाधिरूढा कराब्जैः
पाशं कोदंडमिक्षूद्भवमथ गुणमप्यंकुशं पंचबाणान् ॥
बिभ्राणासृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः ॥ १ ॥

इति ध्यात्वा ॥ मानसोपचारैः पूजयेत् ॥ यथा—"लं पृथिव्यात्मकं गंधं परिकल्पयामि ॥ हं आकाशात्मकं पुष्पं परि० ॥ यं वाय्वात्मकं धूपं परि०॥ रं तेजआत्मकं दीपं परि० ॥ वं अमृतात्मकं नैवेद्यं परि०॥ सं सोमात्मकं तांबूलं परि० ॥ छत्रचामरमुकुरमुकुटपादुकाः परिकल्पयामि ॥" इति संपूज्य ॥ सुमुखवृत्तचतुरस्रगोक्षुरयोनिमुद्राः प्रदर्शयेत् ॥

अथावरणपूजा ॥ ( १ ) यथा—स्वहृदिस्थाष्टपत्रस्थषट्कोणे ( पूर्वे )

ब्रह्मणे० । ( नैर्ऋत्यां ) विष्णवे० । ( वायव्ये ) शिवाय० । ( आग्नेये ) सरस्वत्यै० । ( पश्चिमे ) लक्ष्म्यै० । ( ऐशाने ) गौर्यै० ॥ इति प्रथमावरणम् ॥ ततो केसरेषु षडंगानि न्यसेत् ॥(२) यथा-हृदयाय०। शिरसे० । शिखायै० । कवचाय० । नेत्रत्रयाय० । अस्त्राय० ॥ इति द्वितीयावरणम् ॥ ततोऽष्टपत्रेषु पूर्वादितः ॥ ( ३ ) यथा-ब्राह्म्यै० । माहेश्वर्यै० । कौमार्यै० । वैष्णव्यै० । वाराह्यै० । इंद्राण्यै० । चामुंडायै० । महालक्ष्म्यै० ॥ इति तृतीयावरणम् ॥ ततो दशदिक्षु ॥ ( ४ ) यथा-इंद्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । सोमाय० । ईशानाय० । ब्रह्मणे० । अनंताय० ॥ इति चतुर्थावरणम् ॥ ततो दशदिक्षु ॥ ( ५ ) यथा-वज्राय० । शक्तये० । दंडाय० । खड्गाय० । पाशाय० । अंकुशाय० । गदायै० । त्रिशूलाय० । चक्राय० । पद्माय० ॥ इति पंचमावरणम् ॥ एवमावरणानि हृदये विन्यस्य ततो हृदि ज्ञानमुद्रया हस्तं दत्त्वा प्राणस्थापनं कुर्यात् ॥ यथा-आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः-सोऽहम् प्राणा इह प्राणाः ॥ पुनः-आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः-जीव इह स्थितः ॥ पुनः-आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः-सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानीहैवागत्य सुखं चिरं तिष्ठन्तु नमः ॥ "ह्रीं क्षं सं हं सः ह्रीं-इति प्राणप्रतिष्ठामंत्रं त्रिवारं ( ३ ) पठित्वा ॥ गर्भाधानादिषोडशसंस्कारसिद्ध्यर्थं षोडशवारं " ह्रीं " (१६) इति जपेत् ॥ अनेन मम देहस्य गर्भाधानादिषोडशसंस्काराः संपद्यन्ताम् ॥ अयं देहः सर्वकर्मारंभयोग्यो जात इति भावनम् ॥ ज्योतिर्मयं स्वशरीरं भावयेत् ॥ ततः प्राणायामं कुर्यात् ॥ यथा-अकारादिषोडशस्वरानुच्चार्य ( अ-अः-१६ ) वामनासिकया वायुं पूरयित्वा ॥

ककारादि पंचविंशतिवर्णानुच्चार्य ( क-म-२५ ) कुंभकेन वायुं स्थिरीकृत्य। यकारादिक्षकारान्तान्वर्णानुच्चार्य ( य-क्ष-१० ) वायुं रेचयेत् ॥ एवं प्राणायामत्रयं कृत्वा " यथा पर्वतधातूनां दोषं दहति पावकः ॥ एवमंतर्गतं पापं प्राणायामेन दह्यते " ॥ इति देहशुद्धिं भावयेत् ॥

॥ इति प्राणप्रतिष्ठा ॥

---

## ॥ अथान्तर्मातृकान्यासः ॥

जलमादाय ॥ अस्य श्रीअन्तर्मातृकामंत्रस्य ब्रह्माऋषिः गायत्रीछंदः अन्तर्मातृकासरस्वतीदेवता हलोबीजानि स्वराः शक्तयः अन्तर्मातृकान्यासे विनियोगः ॥ न्यासः ॥ ब्रह्मऋषये नमः शिरसि ॥ गायत्रीछंदसे० मुखे ॥ अन्तर्मातृकासरस्वतीदेवतायै० हृदये ॥ हलोबीजाय० गुह्ये ॥ स्वराः शक्तये० पादयोः ॥ अथ करन्यासः ॥ ह्रीं अंकंखंगंघंङं आं–अंगुष्ठाभ्यां नमः ( हृदयाय नमः ) ॥ इंचंछंजंझंञंईं–तर्जनीभ्यां० ( शिरसे नमः ) ॥ उंटंठंडंढंणंऊं–मध्यमाभ्यां० ( शिखायै नमः) ॥ एंतंथंदंधंनंऐं–अनामिकाभ्यां० ( कवचाय नमः )॥ ओंपंफंबंभंमंऔं–कनिष्ठिकाभ्यां० ( नेत्रत्रयाय नमः ) ॥ अंयंरंलंवंशंषंसंहंळंक्षंअः–करतलकरपृष्ठाभ्यां नमः ( अस्त्राय नमः ) ॥ इति करन्यासः ॥ ( एवं हृदयादि ) ॥ अथ ध्यानम् ॥

पंचाशल्लिपिभिर्विभज्य मुखदोर्हृत्पद्मवक्षःस्थलां
भास्वन्मौलिनिबद्धचंद्रशकलामापीनतुंगस्तनीम् ॥
मुद्रामक्षगुणं सुधाढ्यकलशं विद्यां च हस्ताम्बुजै-
र्बिभ्राणां विशदप्रभां त्रिनयनां वाग्देवतामाश्रये ॥ १ ॥

एवं ध्यात्वा ॥ मनसोपचारैः संपूज्य ॥ यथा—"लं पृथिव्यात्मकं गंधं परिकल्पयामि ॥ हं आकाशात्मकं पुष्पं परि० ॥ यं वाय्वात्मकं धूपं परि० ॥ रं तेजआत्मकं दीपं परि० ॥ वं अमृतात्मकं नैवेद्यं परि० ॥ सं सोमात्मकं तांबूलं परि० ॥ छत्रचामरमुकुरमुकुटपादुकाः परिकल्पयामि ॥" इति संपूज्य ॥ सुमुखवृत्तचतुरस्रगोक्षुरयोनिमुद्राः प्रदर्शयेत् ॥ ततो दक्षिणकनिष्ठिकाया आद्यपर्वारभ्य वामाङ्गुष्ठाग्रपर्वपर्यंतं षोडशसु पर्वसु षोडशस्वरान् विन्यसेत् ॥ यथा—अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ॥ ततो वामतर्जनीमारभ्य दक्षिणतर्जनीपर्यन्तमेकैकस्यां पर्वस्याग्रेषु चतुरश्चतुरो वर्णान् क्रमेण विन्यस्य अंगुष्ठयोर्हलौ सर्वांगुल्यग्रेषु क्षकारं विन्यसेत् ॥ यथा—कं खं गं घं । ङं चं छं जं । झं ञं टं ठं । डं ढं णं तं । थं दं धं नं । पं फं बं भं । मं यं रं लं । वं शं षं सं । (अंगुष्ठयोः) हं ळं । (अंगुल्यग्रेषु) क्षं ॥ इत्थं करस्थमातृकान्यासः ॥ पुनः पूर्वोक्तमातृकान्यासः ॥ यथा—(षोडशपत्रके—कंठे)—अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ॥ (द्वादशपत्रके हृदि) कं खं गं घं ङं चं छं जं झं ञं टं ठं ॥ (दशपत्रके—नाभौ) डं ढं णं तं थं दं धं नं पं फं ॥ (षट्पत्रके-गुह्ये) बं भं मं यं रं लं ॥ (चतुष्पत्रके—गुदे)—वं शं षं सं ॥ (द्विपत्रके भ्रुवोर्मध्ये) हं क्षं ॥ इति ॥ अथ ध्यानम् ॥

आधारे लिंगनाभौ प्रकटितहृदये तालुमूले ललाटे
द्वे पत्रे षोडशारे द्विदशदशदले द्वादशार्द्धे चतुष्के ॥
वासान्ते वालमध्ये डफकठसहिते कंठदेशे स्वराणां
हं क्षं तत्त्वार्थयुक्तं सकलदलगतं वर्णरूपं नमामि ॥ २ ॥

एवं ध्यानं कृत्वा ततो मूर्द्धादिपादान्तं स्वशरीरे व्यापकं कुर्यात् ॥ अं आं इत्यादि क्षान्तम् ॥ यथा—अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं क्षं ॥ इति ॥

॥ इति अन्तर्मातृकान्यासः ॥

---

## ॥ अथ बहिर्मातृकान्यासः ॥

आचम्य प्राणानायम्य ॥ जलमादाय ॥ अस्य श्रीबहिर्मातृकान्यासस्य ब्रह्मऋषिः गायत्रीछंदः मातृकासरस्वतीदेवता हलोबीजानि स्वराः शक्तयः बहिर्मातृकान्यासे विनियोगः ॥ अथ न्यासः ॥ ब्रह्मऋषये नमः शिरसि ॥ गायत्रीछंदसे० मुखे ॥ श्रीबहिर्मातृका सरस्वतीदेवतायै० हृदये ॥ हलोबीजाय० गुह्ये ॥ स्वराः शक्तये० पादयोः ॥ अथ करन्यासः ॥ अं कं खं गं घं ङं आं—अंगुष्ठाभ्यां० ( हृदयाय नमः ) ॥ इं चं छं जं झं ञं ईं—तर्जनीभ्यां० ( शिरसे नमः ) ॥ उं टं ठं डं ढं णं ऊं—मध्यमाभ्यां० ( शिखायै नमः ) ॥ एं तं थं दं धं नं ऐं—अनामिकाभ्यां० ( कवचाय नमः ) ॥ ओं पं फं बं भं मं औं—कनिष्ठिकाभ्यां० ( नेत्रत्रयाय नमः ) ॥ अं यं रं लं वं शं षं सं हं ळं क्षं अः—करतलकरपृष्ठाभ्यां नमः ( अस्त्राय नमः ) ॥ इति करन्यासः ॥ ( एवं हृदयादिन्यासः ) ॥—अथ ध्यानम् ॥

पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादहृत्कुक्षिवक्षो-<br>
देशां भास्वत्कपर्दां कलितशशिकलामिन्दुकुन्दावदाताम् ॥<br>
अक्षस्रक्कुंभचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था-<br>
मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ॥ १ ॥

एवं ध्यात्वा ॥ मानसोपचारैः संपूजयेत् यथा—"लं पृथिव्यात्मकं गंधं परिकल्पयामि ॥ हं आकाशात्मकं पुष्पं परि० ॥ यं वाय्वात्मकं धूपं परि० ॥ रं तेजआत्मकं दीपं परि० ॥ वं अमृतात्मकं नैवेद्यं परि० ॥ सं सोमात्मकं तांबूलं परि० ॥ छत्रचामरमुकुरमुकुटपादुकाः परिकल्पयामि ॥" इति संपूज्य ॥ सुमुखवृत्तचतुरस्रगोक्षुरयोनिमुद्राः प्रदर्शयेत् ॥ ततो निजांगे न्यासान्कुर्यात् ॥ यथा—ह्रीं अं नमः ललाटे ॥ आं नमः मुखे ॥ इं नमः दक्षिणनेत्रे ॥ ईं नमः वामनेत्रे ॥ उं न० दक्षिणकर्णे ॥ ऊं न० वामकर्णे ॥ ऋं न० दक्षिणनासापुटे ॥ ॠं न० वामनासापुटे ॥ ऌं न० दक्षिणगंडे ॥ ॡं न० वामगंडे ॥ एं न० ऊर्ध्वोष्ठे ॥ ऐं न० अधरोष्ठे ॥ ओं न० ऊर्ध्वदंतपंक्तौ ॥ औं न० अधोदंतपंक्तौ ॥ अं न० शिरसि ॥ अः नमः मुखाभ्यन्तरे रसनायाम् ॥ कं नमः दक्षिणबाहुमूले ॥ खं न० दक्षिणकूर्परे ॥ गं न० दक्षिणमणिबंधे ॥ घं न० दक्षिणकरांगुलिमूले ॥ ङं नमः दक्षिणकरांगुल्यग्रे ॥ चं न० वाम बाहुमूले ॥ छं न० वामकूर्परे ॥ जं न० वाममणिबंधे ॥ झं न० वामांगुलिमूले ॥ ञं न० वामकरांगुल्यग्रे ॥ टं न० दक्षिणपादमूले ॥ ठं न० दक्षिणजानुनि ॥ डं न० दक्षिणगुल्फे ॥ ढं न० दक्षिणपादांगुलिमूले ॥ णं न० दक्षिणपादांगुल्यग्रे ॥ तं न० वामपादमूले ॥ थं न० वामजानुनि ॥ दं न० वामगुल्फे ॥ धं न० वामपादाङ्गुलिमूले ॥ नं न० वामपादांगुल्यग्रे ॥ पं न० दक्षिणकुक्षौ ॥ फं न० वामकुक्षौ ॥ बं न० पृष्ठे ॥ भं न० नाभौ ॥ मं न० उदरे ॥ यं त्वगात्मने० हृदि ॥ रं असृगात्मने० दक्षिणांसे ॥ लं मांसात्मने० ककुदि ॥ वं मेदात्मने० वामांसे ॥ शं अस्थ्यात्मने० दक्षिणहस्ताग्रान्तम् ॥ षं मज्जात्मने नमः वामहस्ताग्रान्तम् ॥ सं शुक्रात्मने० हृदयादिदक्षिणपादान्तम् ॥ हं आत्म-

शक्त्यात्मने० हृदयादिवामपादान्तम् ॥ ळं जीवात्मने० नाभ्यादिहृदयान्तम् ॥ क्षं परमात्मने नमः हृदयादिमस्तकान्तं विन्यसेत् ॥ (ततोऽकारादिक्षकारान्तं मस्तकादिपादांतं व्यापकं कुर्यात्) ॥इति॥ "अर्पणम्"– अनेन यथाशक्त्या कृतेन भूशुद्धिभूतशुद्धिप्राणप्रतिष्ठान्तर्मातृकाबहिर्मातृकान्यासाख्यकर्मणा भगवान् श्रीकृष्णः प्रीयतां न मम ॥ इति ॥

॥ इतिबहिर्मातृकान्यासः ॥

---

## ॥ अथैकादशन्यासाः ॥

(अथ प्रथमन्यासः)॥ ह्रीं नमो भगवते वासुदेवाय–अंगुष्ठाभ्यां नमः ॥ ( हृदयाय[१] नमः ) ॥ नमो भगवते वासुदेवाय–तर्जनीभ्यां० ( शिरसे नमः ) ॥ नमो भगवते वासुदेवाय–मध्यमाभ्यां० ( शिखायै नमः ) ॥ नमो भगवते वासुदेवाय–अनामिकाभ्यां० ( कवचाय नमः ) ॥ नमो भगवते वासुदेवाय-कनिष्ठिकाभ्यां० ( नेत्रत्रयाय नमः) ॥ नमो भगवते वासुदेवाय–करतलकरपृष्ठाभ्यां० ( अस्त्राय नमः ) ॥ ( एवं हृदयादि ) ॥

( द्वितीयन्यासः ) श्रीविष्णोर्दिव्यसहस्रनामस्तोत्रमालामंत्रस्य श्री भगवान् वेदव्यासऋषये–अंगुष्ठाभ्यां० ( हृदयाय नमः ) ॥ एवं अनुष्टुप्छंदसे तर्जनीभ्यां० ( शिरसे नमः ) ॥ श्रीकृष्णपरमात्मदेवतायै मध्यमाभ्यां० ( शिखायै नमः ) ॥ अमृतांशूद्भवोभानुरितिबीजाय अनामिकाभ्यां० ( कवचाय नमः ) ॥ देवकीनंदनः स्रष्टेतिशक्तये

---

१ हृदयादिभिन्नन्यासे कर्तव्ये ( ) मध्ये स्थित "हृदयाय नमः" इत्यादि पश्चाद्वक्तव्यम्.

निष्ठिकाभ्यां० ( नेत्रत्रयाय नमः ) ॥ शंखभृन्नंदकी चक्रीतिकील-
ाय करतलकरपृष्ठाभ्यां नमः ॥ ( अस्त्राय नमः )॥ ( एवं हृदयादि ॥)

(तृतीयन्यासः)" ह्रीं विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः" इति-
ागुष्ठाभ्यां० ( हृदयाय नमः ) ॥ "अमृतांशूद्भवो भानुः शशबिंदुः
ुरेश्वरः" इति तर्जनीभ्यां० ( शिरसे नमः )॥"ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा
ब्रह्म ब्रह्मविवर्धनः" इति-मध्यमाभ्यां० ( शिखायै नमः ) ॥
"सुवर्णवर्णो हेमांगो वरांगश्चंदनांगदी" इति-अनामिकाभ्यां० (कवचाय
नमः )॥ "आत्मयोनिः स्वयं जातो वैखानः सामगायनः" इति-
कनिष्ठिकाभ्यां० (नेत्रत्रयाय नमः)॥ "शंखभृन्नंदकी चक्री शार्ङ्गधन्वा
गदाधरः" इति-करतलकरपृष्ठाभ्यां नमः (अस्त्राय नमः)॥ (एवं
हृदयादि ॥)

( चतुर्थन्यासः ) " ह्रीं नमो नारायणाय " ह्रीं विश्वाय नमः
पादयोः॥ नं तैजसाय० जान्वोः ॥ मो प्राज्ञाय० नाभौ ॥ नां तुर्याय०
हृदि ॥ रां आत्मने० मुखे ॥ यं अंतरात्मने० नासिकायाम् ॥ णां
परमात्मने० नेत्रयोः ॥ य ज्ञानात्मने० शिरसि ॥ इति ॥

( पंचमन्यासः ) ह्रीं विश्वाय० शिरसि ॥ नं तैजसाय०
नेत्रयोः ॥ मों प्राज्ञाय० नासिकायाम् ॥ नां तुर्याय० मुखे ॥ रां
आत्मने० हृदि ॥ यं अंतरात्मने० नाभौ ॥ णां परमात्मने० जान्वोः॥
यं ज्ञानात्मने० पादयोः ॥ इत्यक्षरन्यासः ॥

( षष्ठन्यासः ) ह्रीं क्रुद्धोल्काय० अंगुष्ठाभ्यां नमः ॥ महोल्काय०
तर्जनीभ्यां०॥ विरोल्काय०मध्यमाभ्यां०॥द्युल्काय०अनामिकाभ्यां०॥
सहस्रोल्काय० कनिष्ठिकाभ्यां० ॥ क्रुद्धोल्काय० हृदयाय नमः॥ महो-

ल्काय० शिरसे स्वाहा ॥ निरोल्काय० शिखायै वषट् ॥ शुल्काय० कवचाय हुं ॥ सहस्रोल्काय० अस्त्रायफट् ॥ इति पंचांगन्यासः ॥

( सप्तमन्यासः )—केशवाय० शिखायाम् ॥ नारायणाय० मूर्ध्नि ॥ माधवाय० ललाटे ॥ गोविंदाय० भ्रुवोः ॥ विष्णवे० नेत्रयोः ॥ मधुसूदनाय० श्रोत्रयोः ॥ त्रिविक्रमाय० श्रोत्रमूलयोः ॥ वामनाय० कपोलयोः ॥ श्रीधराय० नासिकयोः ॥ दामोदराय० दंतेषु ॥ वराहाय० चिबुके ( हडपचि ) ॥ हृषीकेशाय० ऊर्ध्वोष्ठे ॥ पद्मनाभाय० अधरोष्ठे ॥ वासुदेवाय० जिह्वायाम् ॥ गरुडध्वजाय० तालुदेशे ॥ असुरांतकाय० मुखे ॥ वैकुंठाय० कंठे ॥ पुरुषोत्तमाय० दक्षिणबाहुमूले ॥ महाभागाय० वामबाहुमूले ॥ राघवाय० हृदये ॥ मालाधराय० वक्षसि ॥ योगशायिने० कक्षयोः ॥ क्षितिधराय० पृष्ठे ॥ जनार्दनाय० स्कंधयोः ॥ कौस्तुभधारिणे० स्तनयो० ॥ हरये० नाभौ ॥ योगीशाय० पार्श्वयोः ॥ भगवते० दक्षिणकुक्षौ ॥ श्रीशाय० वामकुक्षौ ॥ देवेशाय० जठरे ॥ पारिजाताय० कट्याम् ॥ वासुदेवाय० आंत्रे ॥ अव्यक्तरूपिणे० गुदे ॥ स्वयंभुवे० मेढ्रे ॥ गदाधराय० ऊर्वोः ॥ चक्रधारिणे० गुल्फयोः ॥ अच्युताय० जंघयोः ॥ नृसिंहाय० जानुनी ॥ यदुपतये० पादपृष्ठे ॥ वैकुंठाधिपतये० पादांगुलिषु ॥ शेषाय० पादतले ॥ पद्माक्षिणे० सर्वसंधिषु ॥ पद्मकराय० नखेषु ॥ गुडाकेशाय० रोमकूपेषु ॥ कृष्णाय० रक्तमज्जायाम् ॥ अंतरात्मने० मनोबुद्ध्यहंकारेषु ॥ लक्ष्मीनारायणाय० पादादिमस्तकांतं मस्तकादिपादांतम् ॥ इति केशवादिमहान्यासः ॥

सिंहनादाय० नासिकयोः ॥ लक्ष्मीप्रियाय० मुखे ॥ सर्वविद्यानिधये० जिह्वायाम् ॥ प्रह्लादवंदिताय० कंठे ॥ इंदुवदनाय० गुल्फयोः ॥ भूभारोत्तारकाय० स्कंधयोः ॥ दिव्यास्त्रशोभितभुजाय० भुजयोः ॥ देववरप्रदाय० करयोः ॥ योगीहृत्पद्मनिवासिने० हृदये ॥ हिरण्याक्षभ्रातृकुक्षिविदारणाय० जठरे ॥ पद्मनाभाय० नाभौ ॥ ब्रह्माण्डकोटये० कट्योः ॥ गुह्यानां मंत्राणां गुह्यरूपधृते० गुह्ये ॥ मनोजवाय० ऊर्वोः ॥ सिंहरूपधराय० जंघयोः ॥ भूधराय० जानुनी ॥ नृकेसरिणे० गुल्फयोः ॥ सुरराज्यप्रदाय० पादयोः ॥ सहस्रशीर्षपुरुषाय० सर्वांगे ॥ इत्यंगाङ्गन्यासः ॥

(नवमन्यासः) लक्ष्मीनारायणाभ्यां० पादयोः ॥ विशालाक्षीकेशवाभ्यां० जानुनी ॥ सुनंदासंकर्षणाभ्यां० ऊर्वोः ॥ रुक्मिणीमाधवाभ्यां० कट्योः ॥ वैष्णव्यच्युताभ्यां० नाभौ ॥ नारायणीगोविंदाभ्यां० हृदि ॥ मित्रविंदाहृषीकेशाभ्यां० कंठे ॥ पद्माक्षीत्रिविक्रमाभ्यां० हस्तयोः ॥ नारसिंहीनृसिंहाभ्यां० बाह्वोः ॥ सत्यावासुदेवाभ्यां० मुखे ॥ कालिंदीजनार्दनाभ्यां० नासिकयोः ॥ कमलावामनाभ्यां० अक्ष्णोः ॥ सत्याश्रीकृष्णाभ्यां० ललाटे ॥ जांबुवतीश्रीधराभ्यां० मूर्ध्नि ॥ लक्ष्मणाधोक्षजाभ्यां० शिखायाम् ॥ वाराहीपद्मनाभाभ्यां नमः सर्वांगे ॥ इति महापातकहरन्यासः ॥

( दशमन्यासः ) केशवाय० वामकरे ॥ नारायणाय० दक्षिणकरे ॥ माधवाय० वामपादे ॥ गोविंदाय० दक्षिणपादे ॥ विष्णवे० वामजानुनि ॥ मधुसूदनाय० दक्षिणजानुनि ॥ त्रिविक्रमाय० वामकट्याम् ॥ वामनाय० दक्षिणकट्याम् ॥ श्रीधराय० नाभौ ॥ हृषीकेशाय० हृदये ॥ पद्मनाभाय० कंठे ॥ दामोदराय० वामबाहुमूले ॥ संकर्षणाय० दक्षिणबाहुमूले ॥ वासुदेवाय० मुखे ॥ प्रद्युम्नाय० नासिकयोः ॥ अनिरुद्धाय० श्रोत्रयोः ॥ पुरुषोत्तमाय० नेत्रयोः ॥

अधोक्षजाय० ललाटे ॥ नृसिंहाय० पूर्वे ॥ अच्युताय० दक्षिणे ॥ जनार्दनाय० पश्चिमे ॥ उपेंद्राय० उत्तरे ॥ हरये० मूर्ध्नि ॥ श्रीकृष्णाय नमः सर्वांगे ॥ इति केशवादिचतुर्विंशतिनामन्यासः ॥

(अथैकादशन्यासः) "ह्रीं नमो भगवते वासुदेवाय" इति मूलमंत्रेणाष्टवारं व्यापकं न्यसेत् ॥ अवकाशश्चेद्विशेषः ॥ प्रद्युम्नाय० शिखायाम् ॥ दैत्यारये० मुखवृत्ते ॥ विश्वतोमुखाय० ककुदि ॥ जनार्दनाय० चिबुके ॥ धराधाराय० हृदयादिवामांशे ॥ श्रीधराय० हृदयादिदक्षिणांशे ॥ पूतनाप्राणहर्त्रे० नाभौ ॥ यशोदास्तनन्धयाय० गुह्ये ॥ मारिचघातिने० गुदे (हस्तप्रक्षालनम्) ॥ वकारये० कट्यादिवामपादान्तम् ॥ वृत्रारिप्रियाय नमः कट्यादिदक्षिणपादान्तम् ॥ लक्ष्मीनारायणाय० सर्वांगे ॥ इत्यैकादशन्यासः ॥

---

## ॥ अथ पात्रासादनम् ॥

हस्ते जलमादाय ॥ अद्येत्यादि० "जन्माष्टमीव्रतोद्यापन"कर्मणि श्रीकृष्णप्रीत्यर्थं पात्रासादनपूर्वकं भगवतः श्रीकृष्णस्य पूजनमहं करिष्ये ॥ तत्रादौ गणपतये नमः इति गणपतिं स्मृत्वा ॥ देवदक्षिणे घृतदीपं तन्मध्ये वर्तुलमष्टपत्रं चतुरस्रात्मकं च देववामे तैलदीपं तन्मध्ये वर्तुलमष्टपत्रं चतुरस्रं यंत्रं विलिख्य संपूज्य दीपं प्रज्वाल्य संपूज्य "भो दीप ब्रह्मरूप०" इति मंत्रेण प्रार्थयेत् ॥ एवं दीपं संस्थाप्य ॥ शरीरशुद्ध्यर्थं "ह्रीं नमो भगवते वासुदेवाय" इति मूलमंत्रेण षडंगन्यासं कृत्वा ॥ कलशे वरुणं संपूज्य ॥ "गंगेच यमुने०" इति मंत्रेण तीर्थान्यावाह्य मूलेनाष्टवारमभिमंत्र्य कलशजलेन सर्वत्र "अपवित्रः पवित्रो वा०" इति मंत्रेण प्रोक्षणं कुर्यात् ॥

" अथ पात्रस्थापनम् " प्राक् ( १ )कलशः ॥—स्ववामे वर्तुलमष्टपत्रं चतुरस्रात्मकं यंत्रं चंदनादिना विलिख्य अक्षतैः " ह्रीं नमो भगवते वासुदेवाय " इति मूलमंत्रेण संपूजयेत् ॥ यथा— मध्ये मूलम् ॥ मूलेन वृत्तम् ॥ मूलेनाष्टपत्रम् ॥ मूलेन चतुरस्रम् ॥ इति यंत्रं संपूज्य ॥ " क्लिम् " इत्याधारं प्रक्षाल्य मूलेन संस्थाप्य ॥ मे "वह्निमंडलाय दशकलात्मने श्रीकृष्णदेवताकलशपात्राधाराय नमः" इत्याधारं संपूज्य तत्र दशकलाः पूजयेत्॥ यथा—"यं धूम्रार्चिषे०। रं ऊष्मायै०। लं ज्वलिन्यै०। वं ज्वालिन्यै०। शं विस्फुलिंगिन्यै०। षं सुश्रियै०। सं सुरूपायै०। हं कपिलायै०। ळं हव्यवाहायै०। क्षं कव्यवाहायै० ॥१०॥ इति संपूज्य ॥ " क्लिम् " इति पात्रं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ " श्रीसूर्यमंडलाय द्वादशकलात्मने श्रीकृष्णदेवताकलशपात्राय नमः" इति पात्रं संपूज्य तत्र द्वादशकलाः पूजयेत् ॥ यथा—" कंभं तपिन्यै०। खंबं तापिन्यै०। गंफं धूम्रायै०। घंपं मरिच्यै०। ङंनं ज्वालिन्यै०। चंधं रुच्यै०। छंदं सुषुम्णायै०। जंथं भोगदायै०। झंतं विश्वायै०। ञंणं बोधिन्यै०। टंढं धारिण्यै०। ठंडंक्षमायै० ॥ १२ ॥ " इति संपूज्य तत्र मूलेन शुद्धजलमापूर्य ॥ गालिनीमुद्रया निरीक्ष्य ॥ "षोडशकलात्मने चंद्रमंडलाय श्रीकृष्णदेवताकलशामृताय नमः" इति संपूज्य तत्र षोडशकलां पूजयेत् ॥ यथा—"अं अमृतायै०। आं मानदायै०। इं पूषायै०। ईं तुष्ट्यै०। उं पुष्ट्यै०। ऊं रत्यै०। ऋं धृत्यै०। ॠं शशिन्यै०। ऌं चंद्रिकायै०। ॡं कांत्यै०। एं ज्योत्स्नायै०। ऐं श्रियै०। ओं प्रीत्यै०। औं अंगदायै०। अं पूर्णायै०। अः पूर्णामृतायै० ॥१६॥ " इति संपूज्य ॥ "क्लिम्" इति संरक्ष्य ॥

१ अन्यत्र या प्रधानदेवता स्यात् तस्या नाम सर्वत्र वक्तव्यम्। २ " ह्रीं नमो भगवते वासुदेवाय " इति मूलमन्त्र ॥ ३ करद्वयाङ्गुष्ठतर्जन्यो• संयोगे गालिनीमुद्रा ॥

मूलेन देवमावाह्य ॥ आवाहनादिदशमुद्राः प्रदर्शयेत् ॥ तद्यथा ॥ मूलेन ॥ १ आवाहितो भव ॥ २ संस्थापितो भव ॥ ३ संनिधो भव ॥ ४ सन्निरुद्धो भव ॥ ५ संमुखो भव ॥ ६ मूलेन "हृदयाय नमः" इत्यादिना षडंगेन सकलीकृतो भव ॥ ७ अवगुंठितो भव ॥ ८ अमृतीकृतो भव ॥ ९ परमीकृतोभव ॥ १० ॥ शंखमुद्रां प्रदर्श्य मूलेन संपूज्य ॥ ११ ॥ मत्स्यमुद्रयाच्छाद्य ॥ मूलेनाष्टवारमभिमंत्र्य ॥ १२ ॥ धेनुमुद्रां प्रदर्शयेत् ॥ इति कलशः ॥

॥ अथ (२) सामान्यार्घः ॥ वृत्तमष्टपत्रं चतुरस्रं यंत्रं विलिख्य ॥ मध्ये मूलम् ॥ मूलेन वृत्तम् ॥ मूलेनाष्टपत्रम् ॥ मूलेन चतुरस्रम् ॥ इति मूलेन यंत्रं संपूज्य ॥ "क्लिम्" इत्याधारं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ "मं वह्निमंडलाय दशकलात्मने श्रीकृष्णदेवतासामान्यार्घपात्राधाराय

---

१ हस्ताभ्यामञ्जलिं कृत्वाऽनामिकामूलपर्वणोः । अङ्गुष्ठौ निःक्षिपेत् सेयं मुद्रा त्वावाहनी स्मृता ॥ एष एव साम्प्रदायिकः पक्षः । २ अधोमुखी त्वियं चैव प्रोक्ता स्थापनकर्मणि । ३ आश्लिष्टमुष्टियुगला प्रोन्नताङ्गुष्ठयुग्मका । सन्निधाने समुद्दिष्टा मुद्रेयं तन्त्रवेदिभिः । ४ अङ्गुष्ठगर्भिणी सैव सन्निरोधा समीरिता । ५ उत्तानौ द्वौ करौ मुष्टी सम्मुखीकरणी तथा ॥ ६ हृदय–शिरः–शिखा–कवच–नेत्रा–स्त्रादिभिः न्यासैः सकलीकरणम् ॥ देवताङ्गे षडङ्गानां न्यासः स्यात्सकलीकृतिः ॥ ७ सव्यहस्तकृता मुष्टिर्दीर्घाधोमुखतर्जनी । अवगुंठनमुद्रेयमभितो भ्रामिता सती । ८ अमृतीकरणं कुर्यात्तथा देशिकसत्तमः । अन्योन्यग्रथिताङ्गुष्ठा प्रसारितकराङ्गुली ॥ ९ करसम्पुटेन नमस्कारः परमीकरणम् । १० शङ्खमुद्रालक्षणम्–वामाङ्गुष्ठन्तु संगृह्य दक्षिणेन तु मुष्टिना । कृत्वोत्तानं तथा मुष्टिमङ्गुष्ठं तु प्रसारयेत् ॥ वामाङ्गुल्यस्तथाश्लिष्टाः संयुक्ताः सुप्रसारिताः । दक्षिणाङ्गुष्ठसंस्पृष्टा मुद्रा शङ्खस्य चोदिता ॥ ११ मत्स्यमुद्रालक्षणम् । अधोमुखावुभौ हस्तौ सव्योपरि च संस्थितौ । पार्श्वद्वयगताङ्गुष्ठौ मत्स्यमुद्रेयमीरिता ॥ १२ वामाङ्गुली-र्दक्षिणानामङ्गुलीनाञ्च सन्धिषु । प्रवेश्य मध्यमाभ्यां तु तर्जन्यौ द्वौ प्रवेशयेत् । कनिष्ठेऽनामिकाभ्यां युञ्ज्ये सा धेनुमुद्रिका ।

नमः" इति संपूज्य ॥ "क्लिम्" इति पात्रं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ "श्रीसूर्यमंडलाय द्वादशकलात्मने श्रीकृष्णदेवतासामान्यार्घपात्राय नमः" इति संपूज्य ॥ मूलेन जलमापूर्य ॥ गालिनीमुद्रया निरीक्ष्य ॥ "चंद्रमंडलाय षोडशकलात्मने श्रीकृष्णदेवतासामान्यार्घपात्रामृताय नमः" इति संपूज्य ॥ मत्स्यमुद्रयाऽऽच्छाद्य ॥ मूलेनाष्टवारमभिमंत्र्य ॥ धेनुमुद्रां प्रदर्शयेत् ॥ इति सामान्यार्घः ॥

"अथ (३) विशेषार्घः ॥ (कलशवत्) यथा—स्ववामे वर्तुलमष्टपत्रं चतुरस्रात्मकं यंत्रं चंदनादिना विलिख्य अक्षतैः "ह्रीं नमो भगवते वासुदेवाय" इति मूलमंत्रेण संपूजयेत् ॥ यथा—मध्ये मूलम् ॥ मूलेन वृत्तम् ॥ मूलेनाष्टपत्रम् ॥ मूलेन चतुरस्रम् ॥ इति यंत्रं संपूज्य ॥ "क्लिम्" इत्याधारं प्रक्षाल्य मूलेन संस्थाप्य ॥ "मं वह्निमंडलाय दशकलात्मने श्रीकृष्णदेवताविशेषार्घपात्राधाराय नमः" इत्याधारं संपूज्य तत्र दशकलाः पूजयेत् ॥ यथा—"यं धूम्रार्चिषे०। रं ऊष्मायै०। लं ज्वलिन्यै०। वं ज्वालिन्यै०। शं विस्फुलिंगिन्यै०। षं सुश्रियै०। सं सुरूपायै०। हं कपिलायै०। ळं हव्यवाहायै०। क्षं कव्यवाहायै० ॥१०॥ इति संपूज्य ॥ "क्लिम्" इति पात्रं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ "श्रीसूर्यमंडलाय द्वादशकलात्मने श्रीकृष्णदेवताविशेषार्घपात्राय नमः" इति पात्रं संपूज्य तत्र द्वादशकलाः पूजयेत् ॥ यथा—"कंभं तपिन्यै०। खंबं तापिन्यै०। गंफं धूम्रायै०। घंपं मरिच्यै०। ङंनं ज्वालिन्यै०। चंधं रुच्यै०। छंदं सुषुम्णायै०। जंथं भोगदायै०। झंतं विश्वायै०। ञंणं बोधिन्यै०। टंढं धारिण्यै०। ठंडं क्षमायै० ॥ १२ ॥" इति संपूज्य तत्र मूलेन शुद्धजलमापूर्य ॥ गालिनीमुद्रया निरीक्ष्य ॥ "षोडशकलात्मने चंद्रमंडलाय श्री-

कृष्णदेवताविशेषार्घामृताय नमः" इति संपूज्य तं षोडशकलां पूजयेत् ॥ यथा–"अं अमृतायै० । आं मानदायै० । इं पूषायै० । ईं पुष्ट्यै० । उं तुष्ट्यै० । ऊं रत्यै० । ऋं धृत्यै० । ॠं शशिन्यै० । लृं चंद्रिकायै० । लॄं कांत्यै० । एं ज्योत्स्नायै० । ऐं श्रियै० । ओं प्रीत्यै० । औं अंगदायै० । अं पूर्णायै० । अः पूर्णामृतायै० ॥ १६ ॥" इति संपूज्य ॥ "क्लिम्" इति संरक्ष्य ॥ मूलेन देवमावाह्य ॥ आवाहनादिदशमुद्राः प्रदर्शयेत् ॥ तद्यथा ॥ मूलेन ॥ १ आवाहितो भव ॥ २ संस्थापितो भव ॥ ३ संनिधो भव ॥ ४ सन्निरुद्धो भव ॥ ५ संमुखो भव ॥ ६ ॥ मूलेन "हृदयाय नमः" इत्यादिना षडंगेन सकलीकृतो भव ॥ ७ अवगुंठितो भव ॥ अमृतीकृतो भव ॥ ९ परमीकृतो भव ॥ १० शंखमुद्रां प्रदर्श्य ॥ मूलेन संपूज्य ॥ ११ मत्स्यमुद्रयाच्छाद्य मूलेनाष्टवारमभिमंत्र्य ॥ १२ ॥ धेनुमुद्रां प्रदर्शयेत् ॥ इति विशेषार्घः ॥

॥ अथ (४) पाद्यपात्रम् ॥ वृत्तमष्टपत्रं चतुरस्रं यंत्रं विलिख्य ॥ मध्ये मूलम् ॥ मूलेन वृत्तम् ॥ मूलेनाष्टपत्रम् ॥ मूलेन चतुरस्रम् ॥ इति मूलेन यंत्रं संपूज्य ॥ "क्लिम्" इत्याधारं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ "मं वह्निमंडलाय दशकलात्मने श्रीकृष्णदेवतापाद्यपात्राधाराय नमः" इति संपूज्य ॥ "क्लिम्" इति पात्रं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ "श्रीसूर्यमंडलाय द्वादशकलात्मने श्रीकृष्णदेवतापाद्यपात्राय नमः" इति संपूज्य ॥ मूलेन जलमापूर्य ॥ गालिनीमुद्रया निरीक्ष्य ॥ "चंद्रमंडलाय षोडशकलात्मने श्रीकृष्णदेवतापाद्यपात्रामृ-

---

१ पाद्यपात्रम्, अर्घ्यपात्रम्, आचमनीयपात्रम्, मधुपर्कपात्रम्, प्रोक्षणीपात्रम्, इत्येतानि "सामान्यार्घवत्" स्थापनीयानि ॥

ताय नमः" इति संपूज्य ॥ मत्स्यमुद्रयाऽऽच्छाद्य मूलेनाष्टवारमभिमंत्र्य ॥ धेनुमुद्रां प्रदर्शयेत् ॥ इति पाद्यपात्रम् ॥

॥ अथ (५) अर्घपात्रम् ॥ वृत्तमष्टपत्रं चतुरस्रं यंत्रं विलिख्य ॥ मध्ये मूलम् ॥ मूलेन वृत्तम् ॥ मूलेनाष्टपत्रम् ॥ मूलेन चतुरस्रम् ॥ इति मूलेन यंत्रं संपूज्य ॥ "क्लिम्" इत्याधारं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ "मं वह्निमंडलाय दशकलात्मने श्रीकृष्णदेवतार्घपात्राधाराय नमः" इति संपूज्य ॥ "क्लिम्" इति पात्रं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ "श्रीसूर्यमंडलाय द्वादशकलात्मने श्रीकृष्णदेवतार्घपात्राय नमः" इति संपूज्य ॥ मूलेन जलमापूर्य ॥ गालिनीमुद्रया निरीक्ष्य ॥ "चंद्रमंडलाय षोडशकलात्मने श्रीकृष्णदेवतार्घपात्रामृताय नमः" इति संपूज्य ॥ मत्स्यमुद्रयाऽऽच्छाद्य मूलेनाष्टवारमभिमंत्र्य ॥ धेनुमुद्रां प्रदर्शयेत् ॥ इति अर्घः ॥

॥ अथ (६) आचमनीयपात्रम् ॥ वृत्तमष्टपत्रं चतुरस्रं यंत्रं विलिख्य ॥ मध्ये मूलम् ॥ मूलेन वृत्तम् ॥ मूलेनाष्टपत्रम् ॥ मूलेन चतुरस्रम् ॥ इति मूलेन यंत्रं संपूज्य ॥ "क्लिम्" इत्याधारं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ "मं वह्निमंडलाय दशकलात्मने श्रीकृष्णदेवताचमनीयपात्राधाराय नमः" इति संपूज्य ॥ "क्लिम्" इति पात्रं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ "श्रीसूर्यमंडलाय द्वादशकलात्मने श्रीकृष्णदेवताचमनीयपात्राय नमः" इति सपूज्य ॥ मूलेन जलमापूर्य ॥ गालिनीमुद्रया निरीक्ष्य ॥ "चंद्रमंडलाय षोडशकलात्मने श्रीकृष्णदेवताचमनीयपात्रामृताय नमः" इति संपूज्य ॥ मत्स्यमुद्रयाऽऽच्छाद्य मूलेनाष्टवारमभिमंत्र्य ॥ धेनुमुद्रां प्रदर्शयेत् ॥ इति आचमनीयम् ॥

॥ अथ (७) मधुपर्कपात्रम् ॥ वृत्तमष्टपत्रं चतुरस्रं यंत्रं विलिख्य ॥ मध्ये मूलम् ॥ मूलेन वृत्तम् ॥ मूलेनाष्टपत्रम् ॥ मूलेन चतुरस्रम् ॥ इति मूलेन यंत्रं संपूज्य ॥ "क्लिम्" इत्याधारं प्रक्षाल्य ॥ मूलेन संस्थाप्य

॥ " मं वह्निमंडलाय दशकलात्मने श्रीकृष्णदेवतामधुपर्कपात्राधाराय नमः " इति संपूज्य ॥ " क्लीम् " इति पात्रं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ " श्रीसूर्यमंडलाय द्वादशकलात्मने श्रीकृष्णदेवतामधुपर्कपात्राय नमः " इति संपूज्य ॥ मूलेन जलमापूर्य ॥ गालिनीमुद्रया निरीक्ष्य ॥ " चंद्रमंडलाय षोडशकलात्मने श्रीकृष्णदेवतामधुपर्कपात्रामृताय नमः" इति संपूज्य ॥ मत्स्यमुद्रयाऽऽच्छाद्य मूलेनाष्टवारमभिमंत्र्य ॥ धेनुमुद्रां प्रदर्शयेत् ॥ इति मधुपर्कः ॥

॥ अथ ( ८ ) प्रोक्षणीपात्रम् ॥ वृत्तमष्टपत्रं चतुरस्रं यंत्रं विलिख्य ॥ मध्ये मूलम् ॥ मूलेन वृत्तम् ॥ मूलेनाष्टपत्रम् ॥ मूलेन चतुरस्रम् ॥ इति मूलेन यंत्रं संपूज्य ॥ " क्लिम् " इत्याधारं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ " मं वह्निमंडलाय दशकलात्मने श्रीकृष्णदेवताप्रोक्षणीपात्राधाराय नमः" इति संपूज्य ॥ " क्लिम् " इति पात्रं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ श्रीसूर्यमंडलाय द्वादशकलात्मने श्रीकृष्णदेवताप्रोक्षणीपात्राय नमः" इति संपूज्य ॥ मूलेन जलमापूर्य ॥ गालिनीमुद्रया निरीक्ष्य ॥ " चंद्रमंडलाय षोडशकलात्मने श्रीकृष्णदेवताप्रोक्षणीपात्रामृताय नमः " इति संपूज्य ॥ मत्स्यमुद्रयाऽऽच्छाद्य मूलेनाष्टवारमभिमंत्र्य ॥ धेनुमुद्रां प्रदर्शयेत् ॥ इति प्रोक्षणीपात्रम्[१] ॥

एवं पात्रस्थापनं कृत्वा ॥ पाद्यपात्रमध्ये–श्यामाक ( सामो ) दूर्वाविष्णुक्रान्तादीनि प्रक्षिप्य ॥ अर्घ्यपात्रे–सर्षपतिलदूर्वांकुशप्रक्षेपः ॥ आचमनीयपात्रे–जातीफलैलालवंगकङ्कोल ( चिनिकबावा ) प्रक्षेपः ॥ मधुपर्कपात्रे–दधिमधुघृतानि प्रक्षिपेत् ॥ विशेषार्घ्यबिंदुं सर्वपात्रे प्रक्षिप्य मूलेन शंखोदकेन वा प्रोक्षणीजलेन पूजासामग्रीं संप्रोक्ष्य आत्मानं प्रोक्षयेत् ॥ ॥ इति पात्रासादनम् ॥

१ केचिदत्र प्रोक्षणीपात्रं न स्थापयन्ति । यथाचारं कर्तव्यम् ॥

॥ ॐ ॥

## ॥ अथ राजोपचारपूजा ॥

ध्यानम्—सशंखचक्रं सकिरीटकुंडलं सपीतवस्त्रं सरसीरुहेक्षणम् ॥
सहारवक्षःस्थलकौस्तुभश्रियं नमामि विष्णुं शिरसा चतुर्भुजम् १
आवा०—गोलोकधामाधिपते रमापते गोविंद दामोदर दीनवत्सल ॥
राधापते माधव सात्वतांपते सिंहासनेऽस्मिन्मम सम्मुखो भव २
आस०—श्रीपद्मरागस्फुरदूर्ध्वपृष्ठं महार्हवैदूर्ययुतं पदाब्जम् ॥
वैकुंठ वैकुंठपते गृहाण पीठं तडिद्धाटककुंभखंडम् ॥ ३ ॥
पाद्यम्—परं स्थितं निर्मलरौक्मपात्रे समाहृतं विंदुसरोवराद्धि ॥
योगेश देवेश जगन्निवास गृहाण पाद्यं प्रणमामि पादौ ॥ ४ ॥
अर्घ्यम्—जलजचंपकपुष्पसमान्वितं विमलमर्घ्यमनर्घ्यकरस्थितम् ॥
प्रतिगृहाण रमारमण प्रभो यदुपते यदुनाथ यदूत्तम ॥ ५ ॥
आच०—राधापते श्रीविरजापते प्रभो श्रियःपते सर्वपते चमूपते ॥
कंकोलजातीफलपुष्पवासितं परं गृहाणाचमनं दयानिधे ॥ ६ ॥
मधु०—मध्याह्नचंडार्कभवश्रमापहं सितांगसंपर्कमनोहरं परम् ॥
गृहाण विष्णो मधुपर्कमाहृतं संदश्यपीतांबर सात्वतांपते ॥ ७ ॥
आच०—भूपालदिक्पालकिरीटरत्नमरीचिनीराजितपादपीठ ॥
लक्ष्म्या समाराधितपादपद्म लक्ष्मीपते स्वाचमनं गृहाण ॥ ८ ॥
पयः०—स्वर्धेनुजातं बलवीर्यवर्धकं दिव्यामृतात्यंतरसप्रदं सितम् ॥
स्नानाय तुभ्यं मनसा मयार्पितं दुग्धं जगन्नाथ गृहाण चोत्तमम् ९
दधि०—क्षीरात्समुद्भूतमिदं मनोहरं कर्पूरकुंदेंदुसमानशोभितम् ॥

---

१ भगवते श्रीकृष्णाय नमः ध्यायामि ॥ भग० श्रीकृ० नम आवाहनं स० ।। आसनं स० । इत्यादिकं प्रत्युपचारं वक्तव्यम्

गोपांगनागोपगणेश्वर प्रभो स्नानार्थमंगीकुरु तेऽर्पितं दधि ॥१०॥
घृत०—श्रीक्षीरजोद्भूतमिदं सुधामयं संदीप्तवह्निद्युतिपावितं मया ॥
श्वेताम्बुजाम्भोजनिभं समर्पितं हैयंगवीनं परिगृह्यतां विभो ॥११॥
मधु०—माधुर्यमिष्टं मधुमक्षिकागणैर्वृक्षालिसौम्ये मधुकानने चितम् ॥
लक्ष्मीपते माधव गृह्यतां मया तुभ्यं प्रदत्तं मधुहन् मधूत्तमम् ॥१२॥
शर्क०—पूर्णेक्षुकांभोधिसमुद्भवामिमां माणिक्यमुक्ताफलदाममंजुलाम्
श्रीशर्करां भोपुरुषोत्तम प्रभो स्नानाय तुभ्यं विनिवेदयाम्यहम्१३
अभ्यं०—क्षीराब्धिकल्लोलपरंपरासु देवीरमावारविलासवश्य ॥
चांपेयतैलाद्युपमर्दनेन त्वं स्नाहि दैत्यान्वयमर्दनेश ॥ १४ ॥
स्नानम्०—काश्मीरपाटीरविमिश्रितेन श्रीमल्लिकोशीरसितोदकेन ॥
स्नानं कुरु त्वं यदुनाथ देव गोविंद गोपालकतीर्थपाद ॥ १५ ॥

॥ ॐ नमो भगवते वासुदेवाय ॥ इति मूलमंत्रेण वा पूर्वोक्तैरावाहनादिमंत्रैः "श्रीकृष्णाय नमः" इति श्रीकृष्णं पूजयेत् ॥ ततो देवं पात्रान्तरे धृत्वा पंचोपचारैः संपूज्य ॥ उत्तरे विश्वक्सेनाय निर्माल्यं विसृज्य पुनः गंधाक्षतपुष्पैः संपूज्य अभिषेकं कुर्यात् ॥ अभिषेकार्थं पात्रे जलगंधपुष्पदुग्धादीनि क्षिपेत् ॥ तेन देवस्योपरि अविच्छिन्नां धारां पातयित्वा—

पुरुषसूक्तेन ( पृष्ठ ५६–५८ ) अभिषेकं कुर्यात् ॥ ततः
शुद्धो०—श्रीजाह्नवीवारिमयं सुशीतलं जातीलवंगादिसुगंधितोदकम् ॥
लक्ष्मीपते ते मधुसूदनार्पितं स्नानार्थमंगीकुरु दीनवत्सल ॥ १६ ॥
वस्त्रम्०—विभो सर्वतःप्रस्फुरत्प्रोज्ज्वलं च स्फुरद्रश्मिशून्यं परं दुर्लभं च ॥
स्वतो निर्मितं पद्मकिंजल्कवर्णं गृहाणांबरं देव पीतांबराख्यम् ॥१७॥
आच०—जिष्णो जगन्नाथ जनार्दनाच्युत गोविंद गोपालक गोपिकाप्रिय

गोदावरीनिर्मलशीतवारिणा प्रीत्या कुरुष्वाचमनं दयानिधे ॥ १८ ॥
यज्ञो०–सुवर्णाभमापीतवर्णं सुमंत्रैः परं प्रोक्षितं वेदविन्निर्मितं च ॥
शुभं पंचकार्येषु नैमित्तिकेषु प्रभो यज्ञ यज्ञोपवीतं गृहाण ॥ १९ ॥
आच०–स्वर्वाहिनीशीतलशुद्धवारिभिः स्वर्गांगनाकांचनकुंभधारितैः ॥
त्रैलोक्यनाथार्तिहर त्रिविक्रम लक्ष्मीपते स्वाचमनं कुरु प्रभो ॥२०॥
अलं०–कनकरत्नमयं मयनिर्मितं मदनरुक्दनं सदनं रुचाम् ॥
उपसि पूपसवर्णविभूषणं सकललोकविभूषण गृह्यताम् ॥ २१ ॥
माला–माणिक्यमुक्तामणिविद्रुमैश्च गोमेदपद्मारुणपुष्परागैः ॥
देवेन्द्रनीलैश्च कृतं गृहाण गोरत्नवैडूर्ययुतं च हारम् ॥ २२ ॥
गंधः–शर्वेंदुशोभं बहुमंगलं श्रीकाश्मीरपाटीरकपंकपृक्तम् ॥
सुमंडनं गंधचयं गृहाण समस्तभूमंडलभारहारिन् ॥ २३ ॥
कुंकु०–कंकोलजातीफलपुष्पवासितं ह्यामोदमानं सुमनोहरं परम् ॥
श्रीरक्तवर्णं मनसा मयाऽर्पितं विष्णो जगन्नाथ गृहाण कुंकुमम् ॥२४॥
कज्ज०–चांपेयकर्पूरकचंदनादिकैर्नानाविधैर्गंधचयैः सुवासितम् ॥
नेत्रांजनार्थाय हरिन्मणिप्रभं लक्ष्मीपते स्वीकुरु कज्जलं शुभम् ॥२५॥
अक्ष०–ब्रह्मावर्ते ब्रह्मणा पूर्वमुख्यान्ब्राह्मैस्तोयैः संचितान् विष्णुना च ॥
रुद्रेणाराद्रक्षितान्राक्षसेभ्यः साक्षाद्भूमन्नक्षतांस्त्वं गृहाण ॥ २६ ॥
पुष्पा०–मंदारसंतानकपारिजातकल्पद्रुमश्रीहरिचंदनानाम् ॥
गृहाण पुष्पाणि हरे तुलस्या मिश्राणि साक्षान्नवमंजरीभिः ॥ २७ ॥
तुल०–जातीजपाचंपककंजादिकैरन्यैश्च कालोद्भवपुष्पसंयुतैः ॥
संपूजितस्त्वं तुलसीदलैरिह लक्ष्मीपते मां दययाऽवलोकय ॥ २८ ॥
॥ ततोऽङ्गपूजां कुर्यात् ॥

---

हस्ते जलमादाय—अनेनावरणदेवतापूजनकृतेन परिवारदेवतासहितो भगवान् श्रीकृष्णः प्रीयताम् ॥

ततः ( पृष्ठ ६२ ) तुलसीं संपूज्य श्रीकृष्णसहस्रनामभिः ( पृष्ठ ६३–८६ ) अष्टोत्तरशतनामभिर्वा ( पृष्ठ ८७ ) भगवते श्रीकृष्णाय तुलसीदलान्यर्पयेत् ॥

( एवं तुलसीदलानि समर्प्य श्वेतचूर्णादिकमर्पयेत् )

श्वेत०–मंदारमल्लीकरवीरसंभवं कर्पूरपाटीरसुवासितं सितम् ॥
श्रीश्वेतचूर्णं विधिवत्समर्पितं विष्णो जगन्नाथ गृहाण केशव ॥२९॥
रक्त०–मत्यूपकालार्कमयूखसंनिभं जातीफलैलागरुणा सुवासितम् ॥
श्रीरक्तचूर्णं मनसा मयाऽर्पितं प्रीत्या जगन्नाथ गृहाण माधव ॥३०॥
सिंदू०–मध्याह्नचंद्रार्कमरीचिसंनिभं विघ्नेश्वरश्रीहनुमद्द्रुमियम् ॥
समुद्रपुत्र्या सह नंदनात्मज सिंदूरचूर्णं परिगृह्यतां विभो ॥३१॥
हरि०–हरिद्रोत्थामतिपीतवर्णां सुवासितां चंदनपारिजातैः ॥
अनन्यभावेन समर्पितां ते हरे हरिद्रामुररीकुरुष्व ॥ ३२ ॥
धूपः०–लवंगपाटीरजचूर्णमिश्रं मनुष्यदेवासुरसौख्यदं च ॥
सद्यःसुगंधीकृतहर्म्यदेशं द्वारावतीभूप गृहाण धूपम् ॥ ३३ ॥
दीपः०–तमोहारिणं ज्ञानमूर्तिं मनोज्ञं लसद्वर्तिकर्पूरशुद्धाज्ययुक्तम् ॥
जगन्नाथ देव प्रभो विश्वरूप स्फुरज्ज्योतिषं दीपमंगीकुरुष्व ॥३४॥
नैवे०–माणिक्यपात्रे सविधिव्यवस्थितं श्रीषड्रसाढ्यं च यशोमतीकृतम् ॥
गृहाण नैवेद्यमिदं सुरोचिकं गव्यामृतं सुंदर नंदनंदन ॥३५॥
आच०–श्रीकांत सर्वश्रुतिगेयकीर्ते पादारविंदद्वयतीर्थतीर्थ ॥
त्वं देवदत्तार्घ मयाऽर्पितेन शंखोदकेनाचमनं कुरुष्व ॥ ३६ ॥
पूगी०–गंगादितीर्थांबु लविंगवासितं सुधाकरस्पांशुनिभं सुशीतलम् ॥

लक्ष्मीपते ते मनसा करेऽर्पितमापोशनार्थाय गृहाण माधव ॥३७॥
जलं०—गंगोत्तरीवेगबलात्समुद्धृतं सुवर्णपात्रेण हिमांशुशीतलम् ॥
सुनिर्मलाभं ह्यमृतोपमं जलं गृहाण राधावर भक्तवत्सल ॥ ३८ ॥
उत्त०—मंदाकिनीनिर्मलशीतवारिणा कर्पूरपाटीरसुगंधिना प्रभो ॥
वैकुंठलोकाधिपते श्रियःपते प्रेम्णोत्तरापोशनकं कुरुष्व ॥ ३९ ॥
करो०—शीतोदकैः पाणिमुखं पवित्रे प्रक्षाल्य लक्ष्मीश सुवर्णपात्रे ॥
मंदारपुष्पान्वितचंदनेन नारायणोद्वर्तनकं कुरुष्व ॥ ४० ॥
तांबू०—एलालवंगक्रमुकादिसंयुतं लक्ष्मीश जातीमृगनाभिवासितम् ॥
तांबूलवल्लीदलवीटिकामयं तांबूलमंगीकुरु ते मुखेऽर्पितम् ॥ ४१॥
दक्षि०—नाकपालवसुपालमौलिभिर्वन्दितांघ्रियुगल त्रिविक्रम ॥
दक्षिणां परिगृहाण माधव लोकदक्षवरदक्षिणापते ॥ ४२ ॥
छत्रम्—शशिप्रभं कांचनदंडमंडितं प्रवालमुक्तामणिविद्रुमावृतम् ॥
प्रभो जगन्नाथ दयानिधे भवान् गृह्णातु छत्रं शिरसि प्रकल्पितम् ४३
चाम०—श्वेतैः शरच्चंद्रमयूखसंनिभैर्माणिक्यरत्नद्युतिदंडमंजुलैः ॥
प्रीत्या भवन्तं मनसा श्रियःपते श्रीचामरैर्वै परिवीजयाम्यहम् ॥४४॥
व्यंज०—नक्षत्रराजेंदुमरीचिशुभ्रैर्नक्षत्रपैलागरुवासितैश्च ॥
नक्षत्रिणं विष्णुमहं भवन्तं श्रीतालवृंतैः परिवीजयामि ॥ ४५ ॥
दर्पे०—कर्पूरकुंदेंदुकरावदातं गोरत्नवैदूर्ययुतं मनोज्ञम् ॥
प्रकल्पितं ते वदनांबुजाग्रे लक्ष्मीपते स्वीकुरु दर्पणं शुभम् ॥४६॥
पादु०—मंदारपुष्पाकरकांतिसुंदरं माणिक्यमुक्तामणिरत्नमंडितम् ॥
पादाम्बुजाग्रे मनसा प्रकल्पितं लक्ष्मीपते स्वीकुरु पादुकाद्वयम् ४७
॥ अत्र ( पृष्ठ ९१ वन्दे गोपालम् इत्यादि ) नीराजनं कार्यम् ॥
नीरा०—प्रस्फुरत्परमदीप्तिमंगलं गोघृताक्तनवपंचवर्तिकम् ॥
आर्तिकं परिगृहाण चार्तिहन् पुण्यकीर्तिविशदीकृतावने ॥ ४८ ॥

## ॥ अथाङ्गपूजा ॥

वामहस्ते गंधपात्रं गृहीत्वा दक्षिणेनार्चयेत् ॥ सत्यपरब्रह्मणे नमः पादौ पूजयामि ॥ संकर्षणाय० गुल्फौ पूज० ॥ कमलात्मने० जानुनी पूज० ॥ विश्वरूपाय० जंघे पूज० ॥ विश्वस्मै० कटी पूज० ॥ विष्णुरूपधृषे० मेढ्रं पूज० ॥ पद्मनाभाय० नाभिं पूज० ॥ परमात्मने० हृदयं पूज० ॥ वैकुंठाय० कंठं पूज० ॥ सर्वास्त्रधारिणे० बाहू पूज० ॥ वाचस्पतये० मुखं पूज० ॥ हरये० जिह्वां पूज० ॥ दामोदराय० दंतान्पूज० ॥ सहस्राक्षाय० नेत्रे पूज० ॥ केशवाय० ललाटं पूज० ॥ सर्वात्मने० शिरः पूज० ॥ श्रीकृष्णाय नमः सर्वांगं पूजयामि ॥ इत्यङ्गपूजा ॥ तत आवरणपूजां कुर्यात् ॥

---

## ॥ अथ आवरणपूजा ॥

*अथ प्रथमावरणम्* ॥ (मध्ये) श्रीनारायणाय नमः (देवस्य वामपार्श्वे) सुवर्णवर्णायै दुकूलवसनायै विचित्राभरणभूषितायै पद्महस्तायै तन्मुखन्यस्तलोचनायै लक्ष्म्यै० । (देवस्य दक्षिणपार्श्वे) दूर्वादलश्यामलायै-विचित्राभरणभूषितायै कुमुदहस्तायै तन्मुखन्यस्तलोचनायै धरायै०॥इति॥ अथ द्वितीयावरणम् ॥ (पूर्वादिचतुर्दिक्षु) कल्होल्काय० महोल्काय० विरोल्काय० उल्काय० । (आग्नेयादिकोणेषु) सहस्रोल्काय०४॥ इति ॥ अथ तृतीयावरणम् ॥ (पूर्वादिचतुर्दिक्षु) वासुदेवाय० संकर्षणाय० प्रद्युम्नाय० अनिरुद्धाय० । (आग्नेयादिकोणेषु) मायायै० जयायै० कृत्यै० शांत्यै० ॥ इति ॥ अथ चतुर्थावरणम् ॥ (पूर्वादिचतुर्दिक्षु द्वौद्वौ कोणेषु चैकैकम्) केशवाय० नारायणाय० माधवाय० गोविंदाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० ॥ इति ॥ अथ पंचमावरणम् ॥ (पूर्वादिचतुर्दिक्षु द्वौद्वौ कोणेषु चैकैकम्) मत्स्याय० कूर्माय० वराहाय० नारसिंहाय० वामनाय० भार्गवाय० राघवाय० कृष्णाय० बुद्धाय० कल्किने० अनंताय० विश्वरूपाय०

॥ इति ॥ अथ षष्ठावरणम् ॥ ( पूर्वादिचतुर्दिक्षु ) अनंताय० ब्रह्मणे० वायवे० ईशानाय० । ( आग्नेयादिकोणेषु ) वारुण्यै० गायत्र्यै० भारत्यै० गिरिजायै० । ( अग्रे ) गरुडाय० । ( तत्पार्श्वे ) सौपर्ण्यै० ॥ इति ॥ अथ सप्तमावरणम् ॥ ( पूर्वाद्यष्टदिक्षु यथा ) ( पूर्वे ) इंद्राय स्वर्गाधीशाय सुराधिपतये शचीसहिताय वज्रहस्ताय ऐरावतवाहनाय सपुत्राय सपरिवाराय सपरिग्रहाय श्रीविष्णुपार्षदाय नमः ॥ ( आग्नेय्याम् ) अग्नये तेजोधिपतये स्वाहासहिताय शक्तितोमरहस्ताय मेषवाहनाय सपुत्राय सपरिवा० सपरिग्रहाय श्री वि० पा० ॥ ( दक्षिणे ) यमाय धर्माधिपतये श्यामलासहिताय दंडहस्ताय महिषवाहनाय सपुत्राय सपरि०॥ ( नैर्ऋत्यां ) निर्ऋतये रक्षोधिपतये तामसीसहिताय असिहस्ताय पुष्पकवाहनाय सपुत्राय सपरि० ॥ ( पश्चिमे ) वरुणाय जलाधिपतये भागीरथीसहिताय पाशहस्ताय मकरवाहनाय सपुत्राय सपरि० ॥ ( वायव्यां ) वायवे प्राणाधिपतये भारतीसहिताय गदाहस्ताय मेधवाहनाय सपुत्राय सपरि० ॥ ( उत्तरे ) सोमाय नक्षत्रमंडलाधिपतये रोहिणीसहिताय कुमुदहस्ताय रथवाहनाय सपुत्राय सपरि० ॥ ( ऐशान्याम् ) ईशानाय विद्याधिपतये पार्वतीसहिताय त्रिशूलहस्ताय वृषभवाहनाय सपुत्राय सपरि० ॥ ( ईशेंद्रयोर्मध्ये ) ब्रह्मणे सत्यलोकाधिपतये सरस्वतीसहिताय अक्षमालाहस्ताय हंसवाहनाय सपुत्राय सपरिवा०॥ ( निर्ऋतिवरुणयोर्मध्ये ) शेषाय नागाधिपतये वारुणीसहिताय मुसलायुधाय सवाहनाय सपुत्राय सपरि० सपरिग्रहाय श्रीविष्णुपार्षदाय नमो नमः ॥ इति॥ अथाष्टमावरणम् ॥ ( स्वस्वस्थानेष्वभिमुखान् पूजयेत् प्रोक्षणादिभिरिति वचनात् ) मध्ये आवाहितदेवताभिमुखान्संपूज्य ॥ द्वारपालपूजां कुर्यात् ॥ तद्यथा ) ॥ ( पूर्वादिचतुर्दिक्षु द्वौ द्वौ कोणेषु चैकैकम् ) वज्रनाभाय० हरीश्वराय० गंगातनयाय० शंखनिधीश्वराय० जयाय० विजयाय० भद्राय० सुभद्राय० धात्रे० विधात्रे० अमृतेश्वराय० विरूपाक्षाय० ॥ इति द्वादशद्वारपालान् संपूज्य तत आवरणदेवताभ्योऽर्घ्यादिदशोपचारान्दद्यात् ॥ ( ते चोपचाराः ॥ अर्घ्यं पाद्यं त्वाचमनं साचामं मधुपर्ककम् ॥ स्नापनं वसनं चैव गंधपुष्पविभूषणम् ॥ दशैतानुपचारांस्तु सर्वाभ्यश्च पृथग् ददेत् ॥ अंगाद्यावरणदेवेभ्यः स्वाहान्तैः स्वस्वनामकैः॥ धूपदीपादिकं सर्वं सर्वेभ्यो विष्णुना सह ॥ ) इत्यावरणपूजा ॥

हस्ते जलमादाय—अनेनावरणदेवतापूजनकृतेन परिवारदेवतासहितो भगवान् श्रीकृष्णः प्रीयताम् ॥

ततः ( पृष्ठ ६२ ) तुलसीं संपूज्य श्रीकृष्णसहस्रनामभिः ( पृष्ठ ६३–८६ ) अष्टोत्तरशतनामभिर्वा ( पृष्ठ ८७ ) भगवते श्रीकृष्णाय तुलसीदलान्यर्पयेत् ॥

( एवं तुलसीदलानि समर्प्य श्वेतचूर्णादिकमर्पयेत् )

श्वेत०–मंदारमल्लीकरवीरसंभवं कर्पूरपाटीरसुवासितं सितम् ॥
श्रीश्वेतचूर्णं विधिवत्समर्पितं विष्णो जगन्नाथ गृहाण केशव ॥२९॥
रक्त०–प्रत्यूषकालार्कमयूखसंनिभं जातीफलैलागरुणा सुवासितम् ॥
श्रीरक्तचूर्णं मनसा मयाऽर्पितं प्रीत्या जगन्नाथ गृहाण माधव ॥३०॥
सिंदू०–मध्याह्नचंडार्कमरीचिसंनिभं विघ्नेश्वरश्रीहनुमद्वहुप्रियम् ॥
समुद्रपुत्र्या सह नंदनात्मज सिंदूरचूर्णं परिगृह्यतां विभो ॥३१॥
हरि०–हरिद्रुमोत्थामतिपीतवर्णां सुवासितां चंदनपारिजातैः ॥
अनन्यभावेन समर्पितां ते हरे हरिद्रामुररीकुरुष्व ॥ ३२ ॥
धूपः०–लवंगपाटीरजचूर्णमिश्रं मनुष्यदेवासुरसौख्यदं च ॥
सद्यःसुगंधीकृतहर्म्यदेशं द्वागवतीभूपं गृहाण धूपम् ॥ ३३ ॥
दीपः०–तमोहारिणं ज्ञानमूर्तिं मनोज्ञं लसद्वर्तिकर्पूरशुद्धाज्ययुक्तम् ॥
जगन्नाथ देव प्रभो विश्वरूप स्फुरज्ज्योतिषं दीपमंगीकुरुष्व ॥३४॥
नैवे०–माणिक्यपात्रे सविधिव्यवस्थितं श्रीषड्साढ्यं च यशोमतीकृतम् ॥
गृहाण नैवेद्यमिदं सुरोचिकं गव्यामृतं सुंदर नंदनंदन ॥३५॥
आच०–श्रीकांत सर्वश्रुतिपेयकीर्ते पादारविंदद्वयतीर्थतीर्थ ॥
त्वं देवदत्तार्घ मयाऽर्पितेन शंखोदकेनाचमनं कुरुष्व ॥ ३६ ॥
पूर्वा०–गंगादितीर्थाम्बु लविंगवासितं सुधाकरस्यांशुनिभं सुशीतलम् ॥

लक्ष्मीपते ते मनसा करेऽर्पितमापोशनार्थाय गृहाण माधव ॥३७॥
जलं०—गंगोत्तरीवेगबलात्समुद्धृतं सुवर्णपात्रेण हिमांशुशीतलम् ॥
सुनिर्मलाभं ह्यमृतोपमं जलं गृहाण राधावर भक्तवत्सल ॥ ३८ ॥
उत्त०—मंदाकिनीनिर्मलशीतवारिणा कर्पूरपाटीरसुगंधिना प्रभो ॥
वैकुंठलोकाधिपते श्रियःपते प्रेम्णोत्तरापोशनकं कुरुष्व ॥ ३९ ॥
करो०—शीतोदकैः पाणिमुखं पवित्रे प्रक्षाल्य लक्ष्मीश सुवर्णपात्रे ॥
मंदारपुष्पान्वितचंदनेन नारायणोद्वर्तनकं कुरुष्व ॥ ४० ॥
तांबू०—एलालवंगक्रमुकादिसंयुतं लक्ष्मीश जातीमृगनाभिवासितम् ॥
तांबूलवल्लीदलवीटिकामयं तांबूलमंगीकुरु ते मुखेऽर्पितम् ॥ ४१॥
दक्षि०—नाकपालवसुपालमौलिभिर्वन्दितांघ्रियुगल त्रिविक्रम ॥
दक्षिणां परिगृहाण माधव लोकदक्षवरदक्षिणापते ॥ ४२ ॥
छत्रम्—शशिप्रभं कांचनदंडमंडितं प्रवालमुक्तामणिविद्रुमावृतम् ॥
प्रभो जगन्नाथ दयानिधे भवान् गृह्णातु छत्रं शिरसि प्रकल्पितम् ४३
चाम०—श्वेतैः शरच्चंद्रमयूखसंनिभैर्माणिक्यरत्नद्युतिदंडमंजुलैः ॥
प्रीत्या भवन्तं मनसा श्रियःपते श्रीचामरैर्वै परिवीजयाम्यहम् ॥४४॥
व्यंज०—नक्षत्रराजेंदुमरीचिशुभ्रैर्नक्षत्रपैलागरुवासितैश्च ॥
नक्षत्रिणं विष्णुमहं भवन्तं श्रीतालवृंतैः परिवीजयामि ॥ ४५ ॥
दर्प०—कर्पूरकुंदेंदुकरावदातं गोरत्नवैदूर्ययुतं मनोज्ञम् ॥
प्रकल्पितं ते वदनांबुजाग्रे लक्ष्मीपते स्वीकुरु दर्पणं शुभम् ॥४६॥
पादु०—मंदारपुष्पाकरकांतिसुंदरं माणिक्यमुक्तामणिरत्नमंडितम् ॥
पादाम्बुजाग्रे मनसा प्रकल्पितं लक्ष्मीपते स्वीकुरु पादुकाद्वयम् ४७
॥ अत्र ( पृष्ठ ९१ वन्दे गोपालम् इत्यादि ) नीराजनं कार्यम् ॥
नीरा०—प्रस्फुरत्परमदीप्तिमंगलं गोघृताक्तनवपंचवर्तिकम् ॥
आर्तिकं परिगृहाण चार्तिहन् पुण्यकीर्तिविशदीकृतावने ॥ ४८ ॥

प्रद०–प्रदक्षिणं ते प्रकरोति भक्त्या चतुर्भ्रमं यो हि चतुर्भुजस्य ॥
सतीर्थदानव्रतयज्ञविद्याचतुर्विधाप्तोऽस्ति भयाद्विमुक्तः ॥ ४९ ॥
मंत्र०हरे मत्समः पातकी नास्ति भूमौ तथा त्वत्समो नास्ति पापापहारी
इति त्वं च मत्वा जगन्नाथ देव यथेच्छा भवेत्ते तथा मां कुरुष्व ॥५०॥
( अत्र अन्यमंत्रैरपि पुष्पाञ्जलिर्भक्तिपुरःसरः कार्यः । )
विशे०–सुगंधिपुष्पाक्षतचंदनान्वितं तांबूलपूगीफलवारिसंयुतम् ॥
विष्णो जगन्नाथ मया मुदाऽर्पितं लक्ष्मीपतेऽर्घ्यं प्रगृहाण वै प्रभो ॥
स्तुति०–वेदानुद्धरते जगन्निवहते भूगोलमुद्बिभ्रते
दैत्यान्दारयते बलिं छलयते क्षत्रक्षयं कुर्वते ॥
पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते
म्लेच्छान्मूर्च्छयते दशाकृतिकृते कृष्णाय तुभ्यं नमः ॥ ५२ ॥
नम०–भूः पादौ यस्य नाभिर्वियदसुरनिलश्चंद्रसूर्यौ च नेत्रे
कर्णावाशा शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः ॥
अंतःस्थं यस्य विश्वं सुरनरखगगोभोगिगंधर्वदैत्यै–
श्चित्रं रं रम्यतेऽजं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥ ५३ ॥
प्रार्थ०–संज्ञानमात्रं सदसत्परं महच्छश्वत्प्रशांतं विभवं समं महत् ॥
त्वां ब्रह्म वंदे हि सुदुर्गमं परं सदास्वधाम्ना परिभूतकैतवम् ५४
श्रीकृष्णाय नमः प्रार्थनापूर्वकनमस्कारं समर्पयामि ॥

ततो "ह्रीं नमो भगवते वासुदेवाय" इति मूलमंत्रेण यथाशक्ति जपं कुर्यात् ॥ जलमादाय ॥ अनेन यथाज्ञानेन जपाख्येन कर्मणा श्रीकृष्णः प्रीयताम् ॥ पुनर्जलमादाय ॥ अनेन यथाज्ञानेन यथा मिलितोपचारैः पूजनकृतेन भगवान् श्रीकृष्णः प्रीयताम् ॥ इति राजोपचारपूजा ॥
( तत आचार्यादीनां पूजनं विधायाशिर्वादं गृहीत्वा रात्रिं पुराणश्रवणभजनकीर्तनादिभिर्निनयेत् ॥ ) ॥ इति प्रथमदिनकृत्यम् ॥

---

# ॥ अथ भगवन्मानसपूजा ॥

श्रीगणेशाय नमः ॥ हृदम्भोजे कृष्णः सजलजलदश्यामलतनुः सरोजाक्षः स्रग्वी मुकुटकटकाद्याभरणवान् ॥ शरद्राकानाथप्रतिमवदनः श्रीमुरलिकां वहन्ध्येयो गोपीगणपरिवृतः कुंकुमचितः ॥ १ ॥ पयोम्भोधेर्द्वीपान्मम हृदयमायाहि भगवन्मणिव्रातभ्राजत्कनकवरपीठं भज हरे ॥ सुचिह्नौ ते पादौ यदुकुलज नेनेज्मि सुजलैर्गृहाणेदं दुर्वाफलजलवदर्घ्यं मुररिपो ॥ २ ॥ त्वमाचामोपेंद्र त्रिदशसरिदंभोतिशिशिरं भजस्वेमं पंचामृतरचितमाप्लावमवहन् ॥ द्युनद्याः कालिंद्या अपि कनककुंभस्थितमिदं जलं तेन स्नानं कुरु कुरु कुरुष्वाचमनकम् ॥ ३ ॥ तडिद्वर्णे वस्त्रे भज विजयकांताधिहरण प्रलंबारिभ्रातर्मृदुलमुपवीतं कुरु गले ॥ ललाटे पाटीरं मृगमदयुतं धारय हरे गृहाणेदं माल्यं शतदलतुलस्यादिरचितम् ॥ ४ ॥ दशाङ्गं धूपं सद्वरदचरणाग्रेऽर्पितमये मुखं दीपेनेन्दुप्रभवरजसा देव कलये ॥ इमौ पाणी वाणीपतिनुत सकर्पूररजसा विशोध्याग्रे दत्तं सलिलमिदमाचाम नृहरे ॥ ५ ॥ सदा तृप्तान्नं षड्रसवदखिलव्यंजनयुतं सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम् ॥ यशोदासूनो तत्परमदययाऽशान सखिभिः प्रसादं वाञ्छद्भिः सह तदनु नीरं पिब विभो ॥ ६ ॥ सचंद्रं तांबूलं मुखरुचिकरं भक्षय हरे फलं स्वादु प्रीत्या परिमलवदास्वादय चिरम् ॥ सपर्यापर्याप्त्यै कनकमणिजातं स्थितमिदं प्रदीपैरारार्तिं जलधितनयाश्लिष्ट रचये ॥७॥ विजातीयैः पुष्पैरतिसुरभिभिर्बिल्वतुलसीयुतैश्चेमं पुष्पांजलिमजित ते मूर्ध्नि निदधे ॥ तव प्रादक्षिण्यक्रमणमघविध्वंसिरचितं चतुर्वारं विष्णो जनिपथिगतिश्रांतविदुषा ॥ ८ ॥ नमस्कारोऽष्टांगः सकलदुरितध्वंस

नपद्रः कृतं नित्यं गीतं स्तुतिरपि रमाकांत त इयम् ॥ तव प्रीत्यै भूयादहमपि च दासस्तव विभो कृतं छिद्रं पूर्णं कुरु कुरु नमस्तेऽस्तु भगवन् ॥ ९ ॥ सदा सेव्यः कृष्णः सजलघननीलः करतले दधानो दध्यन्नं तदनु नवनीतं मुरलिकाम् ॥ कदाचित्कांतानां कुचकलशपत्रालिरचनासमासक्तः स्निग्धैः सह शिशुविहारं विरचयन् ॥ १० ॥ मणिकर्णीच्छया जातमिदं मानसपूजनम् ॥ यः कुर्वीतोपसि प्राज्ञस्तस्य कृष्णः प्रसीदति ॥ ११ ॥

इति श्रीमच्छंकराचार्यविरचितं भगवन्मानसपूजनं संपूर्णम् ॥

---

॥ आचार्यकृतषट्पदी ॥

श्रीगणेशाय नमः ॥ अविनयमपनय विष्णो दमय मनः शमय विषयमृगतृष्णाम् । भूतदयां विस्तारय तारय संसारसागरतः ॥ १ ॥ दिव्यधुनीमकरन्दे परिमलपरिभोगसच्चिदानन्दे । श्रीपतिपदारविन्दे भवभयखेदच्छिदे वन्दे ॥ २ ॥ सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम् । सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः ॥ ३ ॥ उद्धृतनग नगभिदनुज दनुजकुलामित्र मित्रशशिदृष्टे । दृष्टे भवति प्रभवति न भवति किं भवतिरस्कारः ॥ ४ ॥ मत्स्यादिभिरवतारैरवतारवताऽवता सदा वसुधाम् । परमेश्वर परिपाल्यो भवता भवतापभीतोऽहम् ॥ ५ ॥ दामोदर गुणमन्दिर सुन्दरवदनारविन्द गोविन्द । भवजलधिमथनमन्दर परमं दरमपनय त्वं मे ॥ ६ ॥ नारायण करुणामय शरणं करवाणि तावकौ चरणौ ॥ इति षट्पदी मदीये वदनसरोजे सदा वसतु ॥ ७ ॥

॥ इति श्रीमच्छंकराचार्यविरचितं षट्पदीस्तोत्रं संपूर्णम् ॥

॥ इति प्रथमदिवसकृत्यम् ॥

## ॥ अथ द्वितीयदिनकृत्यम् ॥

द्वितीयदिने प्रातः नित्यकर्म विधाय स्थापितदेवतामण्डलसमीपे स्वासने उपविश्य आचम्य "ह्रीं नमो भगवते वासुदेवाय" इति प्राणायामं कृत्वा "या श्रीः स्वयं०" इति श्लोकचतुष्टयेन शान्तिसूक्तं पठित्वा "श्रीमन्महा० सुमुखश्चै० सिद्धये" इति पठित्वा हस्ते जलमादाय "विष्णुर्विष्णुर्विष्णुः श्रीमद्भगवतो० तिथौ ममात्मनः सकुटुम्बस्य० प्रारब्धस्य श्रीजन्माष्टमीव्रतोद्यापनकर्मणः साङ्गतासिद्ध्यर्थं स्थापितदेवतानां यथोक्तद्रव्यैः सग्रहमखं हवनाख्यं कर्माहं करिष्ये" इति संकल्प्य पुनर्जलमादाय "तदङ्गत्वेनाद्य द्वितीयदिने दिग्रक्षणादि स्थापितदेवतानां च यथामिलितोपचारैः पूजनमहं करिष्ये" इति संकल्प्य दिग्रक्षणं कलशपूजनं दीपपूजनं विधाय स्थापितदेवतानां क्रमेण गणपतिपूजनं वसोर्द्धारासहितसगणेशगौर्यादिपूजनं सर्वतोभद्रमंडलस्थब्रह्मादिदेवतानां मण्डूकादिपीठदेवतानां पूजनं च विधाय परिवारदेवतासहितप्रधानदेवतापूजनं कुर्यात् ॥ अनेन पूजनेन परिवारदेवतासहितो भगवान् श्रीकृष्णः प्रीयताम् इति संकल्पयेत् ॥

ततः समचतुरस्रम् ,अरत्निमात्रं होमप्रमाणेनाधिकं हस्तप्रमाणं चतुरङ्गुलोत्सेधं स्थण्डिलं विधाय ब्राह्मणद्वाराऽग्निप्रणयनादिकं कुर्यात्॥

तत्रादौ दिग्रक्षणं पंचगव्यादिकञ्च कुर्यात् ॥ यथा—वामहस्ते गौरसर्षपान् अक्षतान् वा गृहीत्वा दक्षिणहस्तेनाच्छाद्य मन्त्रान् पठेत् ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते

१ मानवसंहितायाम्-कर्तु शास्त्रोक्तमार्गेण ह्याचार्यस्याथवा पुनः॥ कुर्यादग्निप्रणयनं हवनादिविधिस्तथा ॥

नश्यन्तु शिवाज्ञया ॥ १ ॥ अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशम् ॥ सर्वेषामविरोधेन पूजाकर्म समारभे ॥ २ ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वतः ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ ३ ॥ भूतप्रेतपिशाचाद्या अपक्रामन्तु राक्षसाः ॥ स्थानादस्माद् व्रजन्त्वन्यत्स्वीकरोमि भुवन्त्विमाम् ॥ ४ ॥ भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचन ॥ ते सर्वेऽप्यपगच्छन्तु शांतिकर्म करोम्यहम् ॥ ५ ॥ इति मन्त्रैरीशानादिसर्वदिक्षु सर्षपानक्षतान् वा विकिरेत् ॥ वामपादपार्ष्णिना भूमौ घातत्रयं कुर्यात् ॥ उदकोपस्पर्शः ॥

ततः पञ्चगव्यकरणम् ॥ एकस्मिन् पात्रे—[१]

गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
कर्मस्थलविशुद्ध्यर्थं पञ्चगव्यं करोम्यहम् ॥

इति पचगव्यं कृत्वा ह्रीं इति मन्त्रेण कुशेन वा यज्ञकाष्ठेनालोड्य "अपवित्रः पवित्रो०" इति मन्त्रेण कर्मभूमिं यज्ञसंभारांश्च प्रोक्षयेत् ॥

---

१ [ गोमूत्रम्—गोमूत्र सर्वशुद्ध्यर्थं पवित्र पापशोधनम् ॥
आपदा हरते नित्य पात्रे तन्निक्षिपाम्यहम् ॥ १ ॥
गोमयम्—अग्रमग्रश्चरन्तीनामौषधीनां रसोद्भवम् ॥
तासा वृषभपत्नीनां गोमय तन्निक्षिपाम्यहम् ॥ २ ॥
क्षीरम्—पय पुण्यतम प्रोक्त धेनुभ्यश्च समुद्भवम् ॥
सर्वशुद्धिकर दिव्य पात्रे तन्निक्षिपाम्यहम् ॥ ३ ॥
दधि—चद्रकुन्दसम शीत स्वच्छ वारिविवर्जितम् ॥
किंचिदाम्लरसाल च पात्रे तन्निक्षिपाम्यहम् ॥ ४ ॥
घृतम्—घृत शुद्ध महद्दिव्य पवित्र पापशोधनम् ॥
सर्वपुष्टिकर चैव पात्रे तन्निक्षिपाम्यहम् ॥ ५ ॥
कुशोदकम्—कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दन ॥
कुशाग्रे शकरो देवस्तेन पूत कुशोदकम् ॥ ६ ॥ ]

ततः स्थण्डिलसमीपे ( कुण्डसमीपे वा ) अक्षतपुञ्जेषु तत्स्थित-पूगीफलेषु वा भूम्यादीनां स्थापनपूजनं कुर्यात् ॥ यथा—भूम्यै नमः भूमिम् आवा० स्थाप० ॥ १ ॥ कूर्माय नमः कूर्मम् आवा० स्थाप० ॥ २ ॥ अनन्ताय नमः अनन्तम् आवा० स्थाप० ॥ ३ ॥ प्रतिष्ठा सर्वदेवा० ॥ ( इति प्रतिष्ठाप्य ) "भूमिकूर्मानन्तदेवताभ्यो नमः" सर्वोपचारार्थं गन्धाक्षतपुष्पाणि समर्प० ॥ ( इति संपूज्य ) संकल्पः- अनया पूजया भूमिकूर्मानन्तदेवताः प्रीयन्ताम् ॥

ततो हस्तयोः पुष्पाण्यादाय "स्वस्तिरस्तु या विनाशाख्या पुण्यकल्याणवृद्धिदा ॥ विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः ॥ इति मन्त्रं पठित्वोच्चस्वरेण "देवा आयान्तु" "यातुधाना अपयान्तु" इति पुष्पाण्यूद्र्ध्वं प्रक्षिप्य "विष्णो देवयजनं रक्ष" इत्युक्त्वा भूमौ प्रादेशं[1] कुर्यात् ॥ ततः यजमानः ( आचार्यो वा ) स्थण्डिले (कुंण्डे वा) पञ्चभूसंस्कारान् कुर्यात् ॥[2] यथा—

स्थण्डिलसमीपे उपविश्य हस्ते जलमादाय—"प्रारब्धस्य कर्मणः साङ्गतासिद्ध्यर्थं ब्राह्मणद्वारा पञ्चभूसंस्कारपूर्वकमग्निप्रतिष्ठापनं करिष्ये"

---

१ अङ्गुष्ठतर्जन्योर्मध्यप्रदेशः प्रादेश ॥ २ कुण्डे सतिकुण्डपूजन कुर्यात् ॥

## ॥ अथ कुंडपूजनम् ॥

यजमानो हस्ते जलमादाय ॥ अद्येत्यादि० "सग्रह० अमुकाख्ये कर्मणि ब्राह्मणद्वारा अग्निस्थापनं करिष्ये ॥ तदंगतया संमार्जनमेखलायोनिदेवतानां स्थापनं पूजनं च करिष्ये ॥" इति संकल्प्याग्न्यायतनं संमृज्य कुशोदकेन कुंडं प्रोक्ष्य अजलौ पुष्पाण्यादाय कुंडं स्पृष्ट्वाऽऽवाहयेत् ॥

आवाहयामि तत्कुंडं विश्वकर्मविनिर्मितम् ॥ शारीरं यच्च ते दिव्यमग्न्यधिष्ठानमद्भुतम् ॥ १ ॥ इत्यावाह्य प्रार्थयेत् ॥ ये च कुंडे स्थिता देवाः कुंडाङ्गे याश्च देवता ॥ ऋद्धिं यच्छन्तु ते सर्वे यज्ञसिद्धिं मुदान्विताः ॥

दर्भैः परिसमुह्य ३ । गोमयोदकाभ्याम् उपलिप्य ३ । स्रुवमूलेन उल्लिख्य ३ । अनामिकाङ्गुष्ठेन उद्धृत्य ३ । उदकेन अभ्युक्ष्य ३ ॥ अग्निम् उपसमादध्यात् । सुवासिन्या कांस्यादिपात्रे आनीतमग्निम् आग्नेय्यां दिशि स्थापयित्वा ततः "हुं फट्" इति क्रव्यादांशं नैर्ऋत्यां दिशि त्यक्त्वा स्थंडिलोपरि त्रिर्भ्रामयित्वा आत्माभिमुखमग्निम् "अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ हिरण्यवर्णममलं समिद्धं विश्वतोमुखम् ॥" इति मन्त्रेण संस्थापयेत् ॥ अग्न्यानीतपात्रे साक्षतोदकं निषिच्य (सुवासिन्यै द्रव्यं दापयित्वा) अग्निमुखं कृत्वाऽग्निं ध्यायेत् ॥

---

हे कुंड तव निर्माणं रचितं विश्वकर्मणा ॥ अस्माकं वाञ्छितां सिद्धिं यज्ञसिद्धिं ददातु भो ॥ २ ॥ इति संप्रार्थ्य ॥ कुंडमध्ये विश्वकर्मणे नमः विश्वकर्माणम् आवा० स्थाप० ॥ इत्यावाह्य "विश्वकर्मणे नमः" सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम०। इति विश्वकर्माणं संपूज्य प्रार्थयेत् ॥ अज्ञानाज्ज्ञानतो वापि दोषाः स्युः खननोद्भवाः ॥ नाशय त्वं हि तान् सर्वान् विश्वकर्मन्नमोस्तु ते ॥

"तत उपरिमेखलायां श्वेतवर्णालंकृतायां विष्णुमावाहयेत्" "विष्णो यज्ञपते देव दुष्टदैत्यनिषूदन ॥ विभो यज्ञस्य रक्षार्थं कुंडेऽस्मिन्सन्निधो भव ॥ इत्यावाह्य ॥ "विष्णवे नमः" सर्वोपचारार्थेगंधाक्षतपुष्पाणि समर्पयामि । इति संपूज्य ॥ "प्रथममेखलायै विष्णुदैवत्यै श्वेतवर्णालंकृतायै नमः" इति मेखलां च पूजयेत् ॥ १ ॥

"मध्यमेखलायां रक्तवर्णालंकृतायां ब्रह्माणमावाहयेत्" हंसपृष्ठसमारूढ देवदेवगणावृत ॥ रक्षार्थं मम यज्ञस्य कुंडेऽस्मिन्सन्निधो भव ॥ इत्यावाह्य ॥ "ब्रह्मणे नमः" सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि । इति संपूज्य ॥ "द्वितीयमेखलायै ब्रह्मदैवत्यै रक्तवर्णालंकृतायै नमः" इति मेखलां च पूजयेत् ॥ २ ॥

"अधोमेखलायां कृष्णवर्णालंकृतायां रुद्रमावाहयेत्" गंगाधर महादेव वृषारूढ महेश्वर ॥ आगच्छ भगवन्रुद्र कुंडेऽस्मिन्सन्निधो

" सप्तहस्तश्चतुःशृङ्गः सप्तजिह्वो द्विशीर्षकः ॥ त्रिपाद् प्रसन्नवदनः सुखासीनः शुचिस्मितः ॥१॥ स्वाहां तु दक्षिणे पार्श्वे देवीं वामे स्वधां

भव ॥ इत्यावाह्य ॥ " रुद्राय नमः " सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि। इति संपूज्य॥ "तृतीयमेखलायै रुद्रदैवत्ये कृष्णवर्णालंकृतायै नम ।" इति मेखलां च पूजयेत् ॥ ३ ॥

"योनिपूजा" तस्यां " गौर्यै नमः " गौरीमावाहयामि स्थापयामि ॥ " गौर्यै नमः " सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥ इति गौरीं संपूज्य प्रार्थयेत् ॥ सेवंते महतीं योनिं देवर्षिसिद्धमानवाः ॥ चतुरशीति लक्षाणि पन्नगाद्याः सरीसृपाः ॥ १ ॥ पशवः पक्षिण. सर्वे संसरन्ति यतो भुवि ॥ योनिरित्येव विख्याता जगदुत्पत्तिहेतुका ॥ २ ॥ मनोभव-युता देवी रतिसौख्यप्रदायिनी ॥ मोहयित्री सुरान् सर्वान् जगद्धात्रि नमोऽस्तु ते ॥ ३ ॥ इति ॥

" कंठपूजा " जीवनं सर्वजंतूनां स्वर्गादिस्थानमुत्तमम् ॥ उत्तमाङ्गस्य चाधारं कण्ठमावाहयाम्यहम् ॥ इत्यावाह्य ॥ "कंठाय नम." सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्प० । इति पूजयेत् ॥

" नाभिपूजा " पद्माकारां हि वा कुंडसदृशाकृतिसंयुताम् ॥ आधारं सर्वकुंडानां नाभिमावाहयाम्यहम् ॥ इत्यावाह्य ॥ "नाभ्य नम." सर्वोपचारार्थे गन्धाक्षतपुष्पाणि सम० । इति पूजयेत् ॥

" वास्तुपुरुषपूजा " कुडमध्ये नैर्ऋत्यकोणे-आवाहयामि देवेशं वास्तुदेवं महाबलम् ॥ देवदेवं गणाध्यक्ष पातालतलवासिनम् ॥ इत्यावाह्य॥"वास्तुपुरुषाय नम." सर्वोपचारार्थे गंधाक्षतपुष्पाणि सम०। इति गधादिना संपूज्य बलिं दत्त्वा प्रार्थयेत् ॥ यस्य देहे स्थिता क्षोणी ब्रह्माण्डं विश्वमंडलम् ॥ व्यापिनं भीमरूप च सुरूप विश्वरूपिणम् ॥ १ ॥ पितामहसुतो मुख्यस्तुभ्यं वास्तोष्पते नमः ॥

" कुंडमध्ये " गंधादिना त्रिकोणषट्कोणं तदुपरि अष्टदलपद्मं कृत्वा तस्मिन् ब्रह्मणे० विष्णवे० रुद्राय० ऋग्वेदाय० यजुर्वेदाय० सामवेदाय० अथर्ववेदाय० कूर्माय० अनंताय० हिरण्यगर्भाय० श्रीकंठाय० धनदाय० शिवाय० धर्माय० सूर्याय०॥ इति गधादिभिः पूजयेत्॥ इति कुडपूजनम्॥

तथा ॥ बिभ्रद्दक्षिणहस्तैस्तु शक्तिमन्नं स्रुचं स्रुवम् ॥ २ ॥ तोमरं व्यंजनं वामे घृतपात्रं च धारयन् ॥ आत्माभिमुखमासीनमेवंरूपो हुताशनः ॥ ३ ॥ अग्ने वैश्वानर शांडिल्यगोत्र शांडिल्यासितदेवलेति त्रिप्रवरान्वित भूमिमातः वरुणपितः लग्नाटजिह्व मेषध्वज प्राङ्मुख मम संमुखो भव" इति ध्यात्वा शांतिके "वरदंनामाग्नये नमः" सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि । इत्यग्निं बहिः पूजयेत् ॥ ततः प्रार्थयेत् ॥ "अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ हिरण्यवर्णममलं समिद्धं विश्वतोमुखम्" इत्यग्निं प्रतिष्ठाप्य ग्रहस्थापनं कुर्यात् ॥

हस्ते जलमादाय—"अद्येत्यादि तिथौ॰ प्रारब्धस्य कर्मणः साङ्गतासिद्ध्यर्थं ग्रहपीठे आदित्यादिग्रहमण्डलदेवतानाम् आवाहनप्रतिष्ठापूजनमहं करिष्ये" इति संकल्प्य आदित्यादिग्रहमण्डलदेवतानामावाहनादिकं कुर्यात् ॥ यथा—हस्तेऽक्षतान् गृहीत्वा

---

१ कर्मविशेषे अग्निनामानि—पावको लौकिके ह्यग्निः प्रथमः सम्प्रकीर्तितः । अग्निस्तु मारुतो नाम गर्भाधाने विधीयते ॥ ततः पुंसवने ज्ञेयः पवमानस्तथैव च । सीमन्ते मङ्गलो नाम प्रबलो जातकर्मणि ॥ नाम्नि वै पार्थिवो ह्यग्निः प्राशने तु शुचिः स्मृतः । सभ्यनामा तु चूडायां व्रतादेशे समुद्भवः ॥ गोदाने सूर्यनामा स्याद्वैश्वानरो विसर्गके । विवाहे योजको नाम चतुर्थ्यां शिखिनामकः ॥ आवसथ्ये द्विजो ज्ञेयो वैश्वदेवे तु पावकः । प्रायश्चित्ते तु विट् चैव पाकयज्ञेषु पावकः ॥ देवानां हव्यवाहश्च पितॄणां कव्यवाहनः । शान्तिके वरदः प्रोक्तः पौष्टिके बलवर्द्धनः । पूर्णाहुत्यां मृडो नाम क्रोधाग्निश्चाभिचारके । वश्यार्थे कामदो नाम वनदाहे तु दूषकः । कुक्षौ तु जाठरो ज्ञेयः क्रव्यादो मृतदाहके । वृषोत्सर्गेऽध्वरो नाम शुचये ब्राह्मणः स्मृतः ॥ समुद्रे वाडवो ह्यग्निः क्षये संवर्तकस्तथा । ब्रह्मा वै गार्हपत्ये स्याद्दक्षिणाग्नावथेश्वरः ॥ विष्णुराहवनीये स्यादग्निहोत्रे त्रयोऽग्नयः । लक्षहोमेऽभीष्टदः स्यात्कोटिहोमे महाशनः ॥ महहोमे विशेषः स्कान्दे— आदित्ये कपिलो नाम सोमे पिङ्गल उच्यते । धूमकेतुस्तथा भौमे जाठरोऽग्निर्बुधे स्मृतः ॥ गुरौ चैव शिखी नाम शुक्रे भवति हाटकः । शनैश्चरे महातेजा राहुकेत्वोर्हुताशनः ॥ ज्ञात्वैवमग्निनामानि गृह्यकर्म समाचरेत् ॥ अविदित्वा तु यो ह्यग्निं होमयेदविचक्षणः । न हुतं न च संस्कारो न तु यज्ञफलं भवेत् ॥

## ॥ नवग्रहादीनां स्थापनम् ॥

१ ( सूर्यः ) जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् ॥
तमोरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ॥ १ ॥
(मध्ये) सूर्याय नमः सूर्यम् आवाहयामि स्थापयामि ॥१॥

२ ( चन्द्रः )दधिशङ्खतुषाराभं क्षीरोदार्णवसंभवम् ॥
नमामि शशिनं सोमं शंभोर्मुकुटभूषणम् ॥ २ ॥
( आग्नेय्याम् ) चन्द्राय नमः चन्द्रम् आ० स्थाप० ॥२॥

३ (भौमः) धरणीगर्भसंभूतं विद्युत्कांतिसमप्रभम् ॥
कुमारं शक्तिहस्तं तं मंगलं प्रणमाम्यहम् ॥ ३ ॥
( दक्षिणस्याम् ) भौमाय नमः भौमम् आ० स्था० ॥३॥

४ ( बुधः ) प्रियंगुकलिकाश्यामं रूपेणाप्रतिमं बुधम् ॥
सौम्यं सौम्यगुणोपेतं तं बुधं प्रणमाम्यहम् ॥ ४ ॥
( ईशान्याम् ) बुधाय नमः बुधम् आ० स्था० ॥ ४ ॥

५ ( गुरुः ) देवानां च ऋषीणां च गुरुं कांचनसंनिभम् ॥
बुद्धिभूतं त्रिलोकेशं तं नमामि बृहस्पतिम् ॥ ५ ॥
( उत्तरस्याम् ) गुरवे नमः गुरुम् आ० स्था० ॥ ५ ॥

६ ( शुक्रः ) हिमकुन्दमृणालाभं दैत्यानां परमं गुरुम् ॥
सर्वशास्त्रप्रवक्तारं भार्गवं प्रणमाम्यहम् ॥ ६ ॥
( पूर्वस्याम् ) शुक्राय नमः शुक्रम् आ० स्था० ॥ ६ ॥

७ ( शनिः ) नीलांजनसमाभासं रविपुत्रं यमाग्रजम् ॥
छायामार्तंडसंभूतं तं नमामि शनैश्चरम् ॥ ७ ॥
(पश्चिमस्याम्) शनैश्चराय नमः शनैश्चरम् आ० स्था० ॥७॥

८ ( राहुः ) अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ॥
सिंहिकागर्भसंभूतं तं राहुं प्रणमाम्यहम् ॥ ८ ॥
( नैर्ऋत्याम् ) राहवे नमः राहुम् आ० स्था० ॥ ८ ॥

९ ( केतुः ) पलाशपुष्पसंकाशं तारकाग्रहमस्तकम् ॥
रौद्रं रौद्रात्मकं घोरं तं केतुं प्रणमाम्यहम् ॥ ९ ॥
( वायव्याम् ) केतवे नमः केतुम् आ० स्था० ॥ ९ ॥

( तत आदित्यादिग्रहाणां दक्षिणपार्श्वे क्रमेणाधिदेवतानां वामपार्श्वे च प्रत्यधिदेवतानामावाहनं कुर्यात् यथा– )

॥ अधिदेवताः ( सूर्यादिग्रहाणां दक्षिणपार्श्वेषु क्रमेण ) ॥

१० ( १ ) ईश्वराय नमः ईश्वरम् आ० स्था० ॥ ११ ( २ ) उमायै नमः उमाम् आ० स्था० ॥ १२ (३) स्कन्दाय नमः स्कन्दम्

१ ईश्वरोमे स्कन्दविष्णू ब्रह्मेन्द्रयमकालकाः ॥ चित्रगुप्तश्च विज्ञेया ग्रहाणामधिदेवता ॥ १ ॥ २ अग्न्यापः पृथिवीविष्णू इन्द्रेन्द्राणी प्रजापतिः ॥ सर्पा ब्रह्मा च विज्ञेया ग्रहप्रत्यधिदेवता ॥ २ ॥ अधिदेवताप्रत्यधिदेवतापञ्चलोकपालवास्तुपुरुषक्षेत्रपालदशदिक्पालाना च टिप्पण्यां स्थिता पञ्चत्रिंशच्छ्लोकास्तत्तद्देवतास्थापनार्थं नूतना रचिता। सति समये सदुपयोग कार्य ॥

( अधिदेवता )

१ ( ईश्वरः ) ईश्वर सर्वभूतानां सर्वविद्येश्वर तथा ॥
शंकर पार्वतीनाथं प्रणमामि मुहुर्मुहु ॥ १ ॥

२ ( उमा ) हिमाचलसुतां देवीं शंकरप्राणवल्लभाम् ॥
उमा सौभाग्यदात्रीं च वन्देऽहं जगदम्बिकाम् ॥ २ ॥

३ ( स्कन्द ) महादेवांशसंभूतं कृत्तिकातनयं तथा ॥
सेनानीं देवताना च नमामि स्कन्दमद्भुतम् ॥ ३ ॥

आ० स्था० ॥ १३ ( ४ ) विष्णवे नमः विष्णुम् आ० स्था०॥ १४ ( ५ ) ब्रह्मणे नमः ब्रह्माणम् आ० स्था० ॥ १५ ( ६ ) इन्द्राय नमः इन्द्रम् आ० स्था० ॥ १६ ( ७ ) यमाय नमः यमम् आ० स्था० ॥ १७ ( ८ ) कालाय नमः कालम् आ० स्था०॥ १८ (९) चित्रगुप्ताय नमः चित्रगुप्तम् आ० स्था० ॥

॥ प्रत्यधिदेवताः ( सूर्यादिग्रहाणां वामपार्श्वेषु क्रमेण ) ॥

१९ ( १ ) अग्नये नमः अग्निम् आ० स्था० ॥ २० ( २ ) अद्भ्यो नमः अपः आ० स्था० ॥ २१ ( ३ ) धरायै नमः धराम्

---

४ ( विष्णुः ) सृष्टिसंरक्षितारं च लक्ष्मीनाथं वरं विभुम् ॥
वैकुंठवासिनं वन्दे विष्णुं जिष्णुं परं प्रभुम् ॥ ४ ॥
५ ( ब्रह्मा ) चतुर्मुखं चतुर्बाहुं सृष्टेरुत्पत्तिकारकम् ॥
सावित्रीस्वामिनं देवं ब्रह्माणं प्रणमाम्यहम् ॥ ५ ॥
६ ( इन्द्रः ) स्वर्गाधिपं शचीनाथं देवानां प्रभुमीश्वरम् ॥
त्रैलोक्याधिपतिं वन्दे देवेन्द्रं लोकपालकम् ॥ ६ ॥
७ ( यमः ) धर्माधर्मविवेक्तारं पुण्यपापफलप्रदम् ॥
सर्वलोकनियन्तारं वन्दे वैवस्वतं यमम् ॥ ७ ॥
८ ( कालः ) कालं कलयतां नाथं सर्वकालस्वरूपिणम् ॥
अद्भुतं भगवद्रूपं नमाम्यहमगोचरम् ॥ ८ ॥
९ ( चित्रगुप्तः ) द्रष्टारं सर्वलोकानां सदसत्कर्मणां सदा ॥
मंत्रिणं यमराजस्य चित्रगुप्तं नमाम्यहम् ॥ ९ ॥

( प्रत्यधिदेवता )

१ ( अग्निः ) चतुःशृङ्गं त्रिपादं च द्विशीर्षं सप्तहस्तकम् ॥
वरुणारणिसंजातं वन्देऽग्निं मेषवाहनम् ॥ १ ॥
२ ( आपः ) सर्वेषां जीवनोपाया यादसां पतयस्तथा ॥
पावनाः सर्वलोकानां शुद्धापः प्रणमाम्यहम् ॥ २ ॥
३ ( धरा ) वराहेणोद्धृतां देवीं सर्वसंधारणक्षमाम् ॥
पृथुना संस्तुतां सौम्यां धरां वन्दे वसुप्रदाम् ॥ ३ ॥

आ० स्था० ॥ २२ (४) नारायणाय नमः नारायणम आ० स्था०॥
२३ ( ५ ) इन्द्राय नमः इन्द्रम् आ० स्था० ॥ २४ ( ६ ) इन्द्राण्यै
नमः इन्द्राणीम् आ० स्था० ॥ २५ (७) प्रजापतये नमः प्रजापतिम्
आ० स्था० ॥ २६ ( ८ ) सर्पेभ्यो नमः सर्पान् आ० स्था० ॥
२७ ( ९ ) ब्रह्मणे नमः ब्रह्माणम् आ० स्था० ॥

॥ विनायकादयो वास्तुपुरुपक्षेत्रपालौ च ॥

२८ (१) ( राहोरुत्तरे ) विनायकाय नमः विनायकम् आ० स्था०॥
२९ (२) ( शनेरुत्तरतः ) दुर्गायै नमः दुर्गाम् आ० स्था० ॥

---

४ ( नारायणः ) सर्वत्र व्यापकं देवं प्रभुं लोकनमस्कृतम् ॥
सर्वकल्याणकर्तारं वन्दे नारायणं विभुम् ॥ ४ ॥
५ ( इन्द्रः ) कश्यपादितिसंभूतं सहस्राक्षं समर्थकम् ॥
जयन्तपितरं वन्दे देवेन्द्रं शतयाजिनम् ॥ ५ ॥
६ ( इन्द्राणी ) इन्द्रपत्नीं सतीं देवीं सद्गुणालंकृतां सदा ॥
देवाङ्गनार्चितां शुद्धामिन्द्राणीं प्रणमाम्यहम् ॥ ६ ॥
७ ( प्रजापतिः ) प्रजापतिगणानां यो ह्यधिष्ठाता निरंतरम् ॥
वन्दे प्रजापतिं तं तु प्रजानां पतिमद्भुतम् ॥ ७ ॥
८ ( सर्पाः ) महाफणाधरान् नित्यं पातालतलवासिन ॥
सर्वलोकहितार्थाय सर्पान् वन्दे शिवाय नः ॥ ८ ॥
९ ( ब्रह्मा ) विष्णोर्वरप्रदानेन तपः कर्तारमद्भुतम् ॥
कर्म कर्तुं जगत्स्रष्टेर्ब्रह्माणं तं नमाम्यहम् ॥ ९ ॥
( विनायकादयो वास्तुपुरुषक्षेत्रपालौ च )

१ ( गणेशः ) पार्वतीशिवसत्पुत्रं गणानां पतिमीश्वरम् ॥
सर्वेषां विघ्नहर्तारं गणेशं तं नमाम्यहम् ॥ १ ॥
२ ( दुर्गा ) जगत्कल्याणसंकर्त्रीं दुष्टदैत्यविनाशिनीम् ॥
सर्वेषां मातरं नित्यं दुर्गां देवीं नमाम्यहम् ॥ २ ॥

३० (३) ( रवेरुत्तरतः ) वायवे नमः वायुम् आ० स्था० ॥
३१ (४) ( राहोर्दक्षिणे ) आकाशाय नमः आकाशम् आ० स्था० ॥
३२ (५) ( केतोर्दक्षिणे ) अश्विभ्यां नमः अश्विनौ आ० स्था० ॥
३३ (६) ( गुरूत्तरे ) वास्तोष्पतये नमः वास्तोष्पतिम् आ० स्था० ॥
३४ (७) ( तदुत्तरतः ) क्षेत्रपालाय नमः क्षेत्रपालम् आ० स्था० ॥

॥ मण्डलाद्बहिः ॥

॥ दशदिक्पालदेवाः ( प्राच्यादिसर्वदिक्षु क्रमेण ) ॥

३५ ( १ ) ( पूर्वस्याम् ) इन्द्राय नमः इन्द्रम् आ० स्था० ॥
३६ ( २ ) ( आग्नेय्याम् ) अग्नये नमः अग्निम् आ० स्था० ॥
३७ ( ३ ) ( दक्षिणस्याम् ) यमाय नमः यमम् आ० स्था० ॥

---

३ ( वायुः ) अनेकरूपभेदेन प्राणिनां जीवन परम् ॥
सर्वत्र संचरन्तं तं वायुं वन्दे ह्यरूपकम् ॥ ३ ॥
४ ( आकाशः ) नीरूपं निर्विकारं च सर्वत्र व्यापकं सदा ॥
ब्रह्मस्वरूपमज्ञेयमाकाशं प्रणमाम्यहम् ॥ ४ ॥
५ ( अश्विनौ ) अश्विन्यश्वस्वरूपाक्तसंज्ञासूर्यसुतौ परौ ॥
देवानां भिषजौ वन्दे ह्यश्विनौ युग्मरूपकौ ॥ ५ ॥
६ ( वास्तोष्पति ) गृहेशशिवकर्तारं गृहे स्थित्वा निरंतरम् ॥
धनधान्यप्रदातारं वन्दे वास्तोष्पतिं मुदा ॥ ६ ॥
७ ( क्षेत्रपालः ) क्षेत्रपालगणाधीशं चत्वराधिष्ठित सदा ॥
पूजासौख्यप्रदं नित्य क्षेत्रपालं नमाम्यहम् ॥ ७ ॥

( दशदिक्पालदेवाः )

१ ( प्राच्याम् इन्द्र ) वज्रायुधं देवदेव पूर्वदिक्पालकं सदा ॥
अनेकयज्ञकर्तारमिन्द्रं वन्दे सुरेश्वरम् ॥ १ ॥
२ ( आग्नेय्यामग्निः ) आग्नेयदिक्प्रभुं दीप्तं शक्तिप्रहरणं परम् ॥
ज्वालाव्याप्ततनुं वन्दे ह्यग्निं लोकशुभंकरम् ॥ २ ॥
३ ( दक्षिणे यम. ) सर्वप्राणिनियन्तारं याम्यदिक्पतिमीश्वरम् ॥
महादण्डधरं देवं यमं तं प्रणमाम्यहम् ॥ ३ ॥

३८ (४) ( नैर्ऋत्याम् ) निर्ऋतये नमः निर्ऋतिम् आ० स्था० ॥
३९ (५) ( पश्चिमस्याम् ) वरुणाय नमः वरुणम् आ० स्था० ॥
४० (६) ( वायव्याम् ) वायवे नमः वायुम् आ० स्था० ॥
४१ (७) ( उत्तरस्याम् ) कुबेराय नमः कुबेरम् आ० स्था० ॥
४२ (८) ( ईशान्याम् ) ईशानाय नमः ईशानम् आ० स्था० ॥
४३ (९) ( पूर्वेशानयोर्मध्ये ) ब्रह्मणे नमः ब्रह्माणम् आ० स्था०॥
४४ (१०)(पश्चिमनैर्ऋत्योर्मध्ये) अनन्ताय नमःअनन्तम् आ०स्था०॥
४५ (११)(ईशान्यां रुद्रकलशे) महारुद्राय नमः महारुद्रम् आ०स्था०॥

---

४ ( नैर्ऋत्यां निर्ऋतिः ) राक्षसाधिपतिं शूरं नैर्ऋत्याधीशमीश्वरम् ॥
खड्गप्रहरणं वन्दे निर्ऋतिं लोकरक्षकम् ॥ ४ ॥
५ ( पश्चिमे वरुणः ) पाशायुधधरं देवं प्रतीचीदिक्प्रपालकम् ॥
सर्वेषां जीवनं वन्दे वरुणं यादसां पतिम् ॥ ५ ॥
६ ( वायव्ये वायुः ) इन्द्रकृतानेकरूपं दितिसंभूतमद्भुतम् ॥
वायव्यदिक्प्रभुं वन्दे वायुमङ्कुशधारिणम् ॥ ६ ॥
७ ( उत्तरे कुबेरः ) यक्षराजं धनाध्यक्षमुदीचीदिक्पतिं प्रभुम् ॥
लोकपालमहं वन्दे कुबेरं सुगदाधरम् ॥ ७ ॥
८ ( ईशाने ईश्वरः ) ऐशान्यधिपतिं देवं सर्वदेवसुसेवितम् ॥
सर्वेश्वरेश्वरं वन्दे शूलधारिणमीश्वरम् ॥ ८ ॥
९ ( ऊर्ध्वायाम् ब्रह्मा ) ऊर्ध्वदिक्पालकं नित्यं लोकसृष्टिविधायकम् ।
पितामहं प्रभुं देवं ब्रह्माणं प्रणमाम्यहम् ॥ ९ ॥
१० ( अधः अनन्तः ) सर्वकल्याणकर्तारं फणामण्डलमंडितम् ॥
अधोदिक्पालकं दिव्यं ह्यनन्तं प्रणमाम्यहम् ॥ १० ॥
११ ( रुद्रकलशे महादेवः ) सर्वदेवाधिदेवेशं सृष्ट्युत्पत्तिविनाशकम् ॥
सर्वसौख्यप्रदं वन्दे महादेवं महाप्रभुम् ॥ ११ ॥

प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ॥ प्रतिष्ठां ते करोम्यत्र मण्डले दैवतैः सह ॥१॥ आदित्यादिग्रहमण्डलदेवाः सुप्रतिष्ठिता वरदा भवत ॥ इत्यादित्यादिग्रहमण्डलदेवान् प्रतिष्ठाप्य मूर्तौ सत्यां तस्याः प्राणप्रतिष्ठां कृत्वा कलशोपरि तां च संस्थाप्य "आदित्यादिग्रहमण्डलदेवताभ्यो नमः" इति समन्त्रकं नाममन्त्रेण वा यथावकाशम् आसनम्, पाद्यम्, अर्घ्यः, आचमनीयम्, स्नानम्, पंचामृतस्नानम्, अभिषेकः, शुद्धोदकस्नानम्, वस्त्रे, यज्ञोपवीतम्, अलंकाराः, गन्धः, अक्षताः, पुष्पाणि, सौभाग्यपरिमलद्रव्याणि, धूपः, दीपः, नैवेद्यम्, फलमुखवासताम्बूलम्, हिरण्यदक्षिणा, आरार्तिकम्, मन्त्रपुष्पाञ्जलिः, विशेषार्घः, प्रार्थनापूर्वकनमस्कारः, स्तुतिपाठः ॥ इति आसनादिप्रार्थनापूर्वकनमस्कारस्तुतिपाठपर्यन्तं पूजनं कार्यम्। अनेन यथामिलितोपचारैः कृतपूजनेन आदित्यादिग्रहमंडलदेवाः प्रीयन्ताम् ॥

एवं ग्रहमण्डलदेवतानां पूजनं विधाय ततः कुशकण्डिकां कुर्यात्। यथा-

---

## ॥ अथ कुशकण्डिका ॥

दक्षिणतो ब्रह्मासनम् ॥ उत्तरतः प्रणीतासनम् ॥ वायव्यां द्वितीयमासनम् ॥ दक्षिणे तत्र ब्रह्मोपवेशनम्। यावत्कर्म समाप्यते तावत्त्वं ब्रह्मा भव। भवामीति प्रतिवचनम् ॥ ब्रह्मानुज्ञातः उत्तरे प्रणीताप्रणयनम् ॥ ब्रह्मन् अपः प्रणेष्यामि। प्रणय। इति ब्रह्मानुज्ञातः वामकरेण प्रणीतां संगृह्य दक्षिणकरेण जलं प्रपूर्य भूमौ वायव्यासने निधाय आलभ्य उत्तरतोऽग्नेः स्थापयेत्॥ बर्हिभदक्षिणमग्नेः परिस्तरणम् ॥ (तच्च त्रिभिस्त्रिभिर्दर्भैरेकमुष्ट्या वा परिस्तरणम् ॥) तच्च प्रागुदगग्रैः। दक्षिणतः प्रागग्रैः। प्रत्यगुदगग्रैः। उत्तरतः प्रागग्रैः ॥ अर्थवत्पात्रासाद-

नम् ॥ पवित्रच्छेदना दर्भास्त्रयः। पवित्रे द्वे। प्रोक्षणीपात्रम्। आज्यस्थाली। चरुस्थाली। संमार्गकुशाः पंच। उपयमनकुशाः सप्त पञ्च वा। समिधस्तिस्रः। स्रुवः। स्रुक्। आज्यम्। तण्डुलाः। पूर्णपात्रं दक्षिणा वरो वा॥

पवित्रच्छेदनैः पवित्रीकरणम् ॥ द्वयोःपवित्रयोरुपरि पवित्रत्रयं निधाय द्वयोर्मूलेन द्वौ कुशौ प्रदक्षिणीकृत्य त्रयाणां मूलाग्राणि एकीकृत्य अनामिकांगुष्ठेन द्वयोरग्रे छेदयेत् ॥ द्वे ग्राह्ये॥ त्रीणि अन्यचोत्तरतः क्षिपेत्॥ प्रोक्षणीपात्रे प्रणीतोदकमासिच्य पात्रांतरेण चतुर्वारं जलं प्रपूर्य वामकरे पवित्राग्रं दक्षिणे पवित्रयोर्मूलं धृत्वा मध्यतः पवित्राभ्यामुत्पवनं प्रोक्षणीपात्रजलस्य॥ प्रोक्षणीनां सव्यहस्ते करणम् ॥ दक्षिणहस्तमुत्तानं कृत्वा मध्यमानामिकांगुल्योः मध्यपर्वाभ्यामपामुद्दिङ्गनम् ॥ (ताभिस्तासां प्रोक्षणम्) प्रणीतोदकेन प्रोक्षणीनां प्रोक्षणम् ॥ प्रोक्षण्युदकेन आज्यस्थाल्याः प्रोक्षणम् ॥ चरुस्थाल्याः प्रोक्षणम् ॥ संमार्गकुशानां प्रोक्षणम् ॥ उपयमनकुशानां प्रोक्षणम् ॥ समिधां प्रोक्षणम् ॥ स्रुवस्य प्रोक्षणम् ॥ स्रुचः प्रोक्षणम् ॥ आज्यस्य प्रोक्षणम् ॥ तण्डुलानां प्रोक्षणम् ॥ पूर्णपात्रस्य प्रोक्षणम् ॥ प्रणीताग्न्योर्मध्ये असंचरे प्रोक्षणीनां निधानम् ॥ आज्यस्थाल्यामाज्यनिर्वापः ॥ चरुस्थाल्यां तण्डुलप्रक्षेपः ॥ तस्य त्रिः प्रक्षालनम् ॥ चरुपात्रे प्रणीतोदकमासिच्य दक्षिणतः ब्रह्मणा आज्याधिश्रयणं मध्ये चरोराधिश्रयणम् आचार्येण युगपत् ॥ ज्वलितोल्मुकेन उभयोः पर्यग्निकरणम् ॥*

---

१ ताभिः प्रणीतास्थाभिरद्भिः प्रोक्षणीस्थानामपां प्रोक्षणम् ॥

* केचिदत्रावसरे ग्रहस्थापनं कुर्वन्ति। यथानुकूल्यं कर्तव्यम् ॥

## ॥ अथ होमक्रमः ॥

अधिश्रिते चरौ स्रुवस्य प्रतपनम् ॥ संमार्गकुशैः स्रुवस्य (स्रुचश्च) संमार्जनम् ॥[1] अग्रैरग्रम् ॥ मूलैर्मूलम् ॥ प्रणीतोदकेनाभ्युक्षणम् ॥ पुनः प्रतपनम् ॥ देशे निधानम् ॥ आज्योद्वासनम्[2] ॥ चरोरुद्वासनम्[3] ॥ ततो वामकरे पवित्राग्रे दक्षिणे पवित्रयोर्मूले धृत्वा मध्यतः पवित्राभ्यामाज्योत्पवनम् ॥ आज्यावेक्षणम् ॥ अपद्रव्यनिरसनम् ॥ प्रोक्षण्याः प्रत्युत्पवनम् ॥ उपयमनकुशानादाय ॥ तिष्ठन् समिधोऽभ्याध्याय । प्रोक्षिण्युदकशेषेण सपवित्रहस्तेनाग्नेः ईशानकोणादारभ्य प्रदक्षिणवत्पर्युक्षणम् हस्तस्येतरथावृत्तिः ॥ पवित्रयोः प्रणीतासु निधानम् ॥ दक्षिणं जान्वाच्य जुहोति ॥ तत्राघारावाज्यभागौ च ब्रह्मणाऽन्वारब्धः[4] स्रुवेण जुहुयात् ॥ स्रुवेणाज्यमादाय ॥ प्रजापतिं मनसा ध्यात्वा ॥(१) (ह्रीं प्रजापतये नमः)[5] इदं प्रजापतये नमम ॥ (२) ह्रीं इंद्राय नम इदमिंद्राय नमम[6] ॥(३) ह्रीं अग्नये नम इदमग्नये नमम[7] ॥ (४) ह्रीं सोमाय नम इदं सोमाय नमम[8] ॥ इत्याघारावाज्यभागौ हुत्वा वह्नेः पूजनं कार्यम् ॥ यथा-शान्तिके "वरदनामाग्नये

१ संमार्जनकुशानाम् अग्नौ उत्तरस्यां वा त्यागः ( का. श्रो. सू ).

२ अग्नेः सकाशादाज्यं गृहीत्वा चरो पूर्वेण नीत्वाऽग्नेरुत्तरतः प्रोक्षण्याः समीपे वायव्यां क्षणं निधायाग्नेः पश्चिमदिशि स्थापयेत्।

३ ततश्चरुं समुत्थाप्याग्नेरुत्तरतः प्रोक्षण्याः समीपे वायव्यां क्षणं निधायाज्यं प्रदक्षिणीकृत्याज्यस्योत्तरतः स्थापयेत् ॥

४ भूरादिनवसु स्विष्टकृति चाद्यचतुष्टये॥ अन्वारंभो भवेत्तेषु सोऽन्वारंभो कुशेन वै ।।

५ अग्नेरुत्तरप्रदेशे वायवीयमारभ्याग्नेयीपर्यन्तम् ॥

६ अग्नेर्दक्षिणप्रदेशे नैर्ऋतिमारभ्यैशानीपर्यन्तम् ॥

७ ईशानकोणाग्रे मध्ये वा ॥ ८ आग्नेयकोणाग्रे मध्ये वा ॥

नमः" गंधं–पुष्पं–धूपं–दीपं–नैवेद्यं–समर्पयामि ॥ घृतेन पञ्च प्राणाहुती जुहुयात् ॥ इत्यग्निं संपूज्य ततो यजमानेन द्रव्यत्यागः कार्यः ॥

यथा–सकुशयवजलान्यादाय (यथाकालं प्रत्याहुतित्यागस्य कर्तुमशक्यत्वात्सर्वमेव हविर्जातं देवताश्च मनसा ध्यात्वा ॥ ) इदं संपादितं समिचरुतिलाज्यादिहविर्द्रव्यं या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो देवताभ्यो मया परित्यक्तं नमम ॥ यथा देवतमस्तु ॥

---

## ॥ अथ होमविधिः ॥

प्रथमं " गणपतये स्वाहा इदं गणपतये नमम ( त्यागः )" इति वराहुतिं दद्यात् [1] ॥ ततः समिच्चरुतिलाज्यद्रव्यैः आदित्यादि नवग्रहाणाम् अष्टाष्ट अधिदेवताप्रत्यधिदेवतानां चतस्रश्चतस्रः विनायकादिसप्तानाम् इन्द्रादीनां दशानाञ्च द्वे द्वे आहुतीर्दद्यात् ॥ यथा—

॥ नवग्रहाणां होमः [2] ॥

१ जपाकुसुम०। सूर्याय नमः स्वाहा ( ८ ) ॥ २ दधिशंख०। चन्द्राय नमः स्वाहा ( ८ ) ॥ ३ धरणीगर्भ० । भौमाय नमः स्वाहा ( ८ ) ॥ ४ प्रियंगु० । बुधाय नमः स्वाहा ( ८ ) ॥ ५ देवानाञ्च०। बृहस्पतये नमः स्वाहा ( ८ ) ॥ ६ हिमकुन्दमृ० । शुक्राय नमः स्वाहा ( ८ ) ॥ ७ निलांजन० । शनैश्चराय नमः स्वाहा ( ८ ) ॥ ८ अर्धकायं० । राहवे नमः स्वाहा ( ८ ) ॥ ९ पलाशपुष्प० । केतवे नमः स्वाहा ( ८ ) ॥

---

१ गणाधिपतये देया प्रथमं तु वराहुतिः ॥ अन्यथा निष्फलं कर्म भवतीह न संशयः ॥

२ नवग्रहादीनां श्लोकाः १५१–१५६ पृष्ठेषु द्रष्टव्याः ॥

॥ अधिदेवताहोमः ॥

१ ईश्वराय नमः स्वाहा (४) ॥ २ उमायै नमः स्वाहा (४) ॥ ३ स्कन्दाय नमः स्वाहा (४) ॥ ४ विष्णवे नमः स्वाहा (४)॥ ५ ब्रह्मणे नमः स्वाहा (४) ॥ ६ इन्द्राय नमः स्वाहा (४) ॥ ७ यमाय नमः स्वाहा (४) ॥ ८ कालाय नमः स्वाहा (४) ॥ ९ चित्रगुप्ताय नमः स्वाहा (४) ॥

॥ प्रत्यधिदेवताहोमः ॥

१ अग्नये नमः स्वाहा (४) ॥ २ अद्भ्यो नमः स्वाहा (४) ॥ ३ धरायै नमः स्वाहा (४) ॥ ४ नारायणाय नमः स्वाहा (४) ॥ ५ इन्द्राय नमः स्वाहा (४) ॥ ६ इन्द्राण्यै नमः स्वाहा (४) ॥ ७ प्रजापतये नमः स्वाहा (४) ॥ ८ सर्पेभ्यो नमः स्वाहा (४) ॥ ९ ब्रह्मणे नमः स्वाहा (४) ॥

॥ पञ्चलोकपालादिहोमः ॥

१ गणपतये नमः स्वाहा (२) ॥ २ दुर्गायै नमः स्वाहा (२) ॥ ३ वायवे नमः स्वाहा (२) ॥ ४ आकाशाय नमः स्वाहा (२) ॥ ५ अश्विभ्यां नमः स्वाहा (२) ॥ ६ वास्तोष्पतये नमः स्वाहा (२) ॥ ७ क्षेत्रपालाय नमः स्वाहा (२) ॥

॥ दशदिक्पालहोमः ॥

१ इन्द्राय नमः स्वाहा (२) ॥ २ अग्नये नमः स्वाहा (२) ॥ ३ यमाय नमः स्वाहा (२) ॥ ४ निर्ऋतये नमः स्वाहा (२) ॥ ५ वरुणाय नमः स्वाहा (२) ॥ ६ वायवे नमः स्वाहा (२) ॥

७ कुबेराय नमः स्वाहा ( २ ) ॥ ८ ईशानाय नमः स्वाहा ( २ ) ॥ ९ ब्रह्मणे नमः स्वाहा ( २ ) ॥ १० अनन्ताय नमः स्वाहा ( २ ) ॥

एवं ग्रहहोमं विधाय ततः प्रधानं श्रीकृष्णमुद्दिश्य पायसतिलव्रीहियवद्रव्यैः प्रतिद्रव्यम् "ह्रीं नमो भगवते वासुदेवाय" इति मन्त्रेण (१०८) अष्टोत्तरशताहुतीर्जुहुयात् ॥ पुनः पञ्चखाद्येन "ह्रीं विष्णवे नमः" इति मन्त्रेण ( १०८ ) अष्टोत्तरशतं जुहुयात् ॥

पुनः पुरुषसूक्तेन वा "ह्रीं विष्णवे नमः" इति मन्त्रेण (१६) षोडशाहुतीर्जुहुयात् ॥ ततो ब्रह्मादिदेवताः मण्डूकादिपीठदेवताश्च परिवारदेवता उद्दिश्य प्रत्येकमेकैकामाज्याहुतिं जुहुयात् ॥ यथा—

---

॥ ब्रह्मादिसर्वतोभद्रमण्डलदेवतानां होमः ॥

१ ब्रह्मणे नमः स्वाहा ॥
२ सोमाय नमः स्वाहा ॥
३ ईशानाय नमः स्वाहा ॥
४ इन्द्राय नमः स्वाहा ॥
५ अग्नये नमः स्वाहा ॥
६ यमाय नमः स्वाहा ॥
७ निर्ऋतये नमः स्वाहा ॥
८ वरुणाय नमः स्वाहा ॥
९ वायवे नमः स्वाहा ॥
१० अष्टवसुभ्यो नमः स्वाहा ॥
११ एकादशरुद्रेभ्यो नमः स्वाहा।
१२ द्वादशादित्येभ्यो नम स्वाहा।
१३ अश्विभ्यां नमः स्वाहा ॥
१४ सपैतृकविश्वेभ्यो देवेभ्यो नमः स्वाहा ॥
१५ सप्तयक्षेभ्यो नमः स्वाहा ॥

१ "जित ते पुण्डरीकाक्ष॰" (५६ पृष्ठे द्रष्टव्यम्) अथवा "सहस्रोर्वङ्घ्रि" (७८ पृष्ठे द्रष्टव्यम्) इति पुरुषसूक्तेन ॥

१६ भूतनागेभ्यो नमः स्वाहा ॥
१७ गन्धर्वाप्सरोभ्यो नमः स्वाहा।
१८ स्कन्दाय नमः स्वाहा ॥
१९ नंदीश्वराय नमः स्वाहा ॥
२० शूलमहाकालाभ्यां नमः स्वाहा ॥
२१ सप्तप्रजापतिभ्यो नमः स्वाहा।
२२ विष्णवे नमः स्वाहा ॥
२३ दुर्गायै नमः स्वाहा ॥
२४ स्वधासहितपितृभ्यो नमः स्वाहा ॥
२५ मृत्युरोगाभ्यां नमः स्वाहा ॥
२६ गणपतये नमः स्वाहा ॥
२७ अद्भ्यो नमः स्वाहा ॥
२८ मरुद्भ्यो नमः स्वाहा ॥
२९ पृथिव्यै नमः स्वाहा ॥
३० गंगादिनदीभ्यो नमः स्वाहा।
३१ सप्तसागरेभ्यो नमः स्वाहा ।
३२ मेरवे नमः स्वाहा ॥
३३ गौतमाय नमः स्वाहा ॥
३४ भरद्वाजाय नमः स्वाहा ॥
३५ विश्वामित्राय नमः स्वाहा ॥
३६ कश्यपाय नमः स्वाहा ॥
३७ जमदग्नये नमः स्वाहा ॥
३८ वशिष्ठाय नमः स्वाहा ॥
३९ अत्रये नमः स्वाहा ॥
४० अरुन्धत्यै नमः स्वाहा ॥
४१ गदायै नमः स्वाहा ॥
४२ त्रिशूलाय नमः स्वाहा ॥
४३ वज्राय नमः स्वाहा ॥
४४ शक्तये नमः स्वाहा ॥
४५ दंडाय नमः स्वाहा ॥
४६ खड्गाय नमः स्वाहा ॥
४७ पाशाय नमः स्वाहा ॥
४८ अंकुशाय नमः स्वाहा ॥
४९ ऐन्द्र्यै नमः स्वाहा ॥
५० कौमार्यै नमः स्वाहा ॥
५१ ब्राह्म्यै नमः स्वाहा ॥
५२ वाराह्यै नमः स्वाहा ॥
५३ चामुण्डायै नमः स्वाहा ॥
५४ वैष्णव्यै नमः स्वाहा ॥
५५ माहेश्वर्यै नमः स्वाहा ॥
५६ वैनायक्यै नमः स्वाहा ॥

## ॥ मण्डूकादिपीठदेवतानां होमः ॥

१ मंडूकाय नमः स्वाहा ॥
२ आधारशक्त्यै नमः स्वाहा ॥
३ मूलप्रकृत्यै नमः स्वाहा ॥
४ कालाग्निरुद्राय नमः स्वाहा ॥
५ अमृतार्णवाय नमः स्वाहा ॥
६ रत्नद्वीपाय नमः स्वाहा ॥
७ हेमगिरये नमः स्वाहा ॥
८ नंदनोद्यानाय नमः स्वाहा ॥
९ कल्पवृक्षाय नमः स्वाहा ॥
१० मणिभूतलाय नमः स्वाहा ॥
११ दिव्यमंडपाय नमः स्वाहा ॥
१२ स्वर्णवेदिकायै नमः स्वाहा ॥
१३ रत्नसिंहासनाय नमः स्वाहा ॥
१४ धर्माय नमः स्वाहा ॥
१५ ज्ञानाय नमः स्वाहा ॥
१६ वैराग्याय नमः स्वाहा ॥
१७ ऐश्वर्याय नमः स्वाहा ॥
१८ अनैश्वर्याय नमः स्वाहा ॥
१९ सत्वाय प्रबोधात्मने नमः स्वाहा ॥
२० रजसे प्रकृत्यात्मने नमः स्वाहा ॥
२१ तमसे मोहात्मने नमः स्वाहा ॥
२२ सोममंडलाय नमः स्वाहा ॥
२३ सूर्यमंडलाय नमः स्वाहा ॥
२४ वह्निमंडलाय नमः स्वाहा ॥
२५ मायातत्त्वाय नमः स्वाहा ॥
२६ विद्यातत्त्वाय नमः स्वाहा ॥
२७ शिवतत्त्वाय नमः स्वाहा ॥
२८ ब्रह्मणे नमः स्वाहा ॥
२९ महेश्वराय नमः स्वाहा ॥
३० आत्मने नमः स्वाहा ॥
३१ अन्तरात्मने नमः स्वाहा ॥
३२ परमात्मने नमः स्वाहा ॥
३३ जीवात्मने नमः स्वाहा ॥
३४ ज्ञानात्मने नमः स्वाहा ॥
३५ कन्दाय नमः स्वाहा ॥
३६ नीलाय नमः स्वाहा ॥
३७ पद्माय नमः स्वाहा ॥
३८ महापद्माय नमः स्वाहा ॥
३९ रत्नेभ्यो नमः स्वाहा ॥
४० केसरेभ्यो नमः स्वाहा ॥
४१ कर्णिकायै नमः स्वाहा ॥

॥ वसुदेवादिपरिवारदेवतानां होमः ॥

१ वसुदेवाय नमः स्वाहा ॥
२ बलदेवाय नमः स्वाहा ॥
३ नन्दाय नमः स्वाहा ॥
४ यशोदायै नमः स्वाहा ॥
५ सुभद्रायै नमः स्वाहा ॥
६ रोहिण्यै नमः स्वाहा ॥
७ चन्द्राय नमः स्वाहा ॥
८ मत्स्यादिदशरूपेभ्यो नमः स्वाहा ॥
९ आदित्यादिग्रहेभ्यो नमः स्वाहा ॥
१० अश्विन्यादिसप्तविंशतिनक्षत्रेभ्यो नमः स्वाहा ॥
११ देवेभ्यो नमः स्वाहा ॥
१२ नागेभ्यो नमः स्वाहा ॥
१३ यक्षेभ्यो नमः स्वाहा ॥
१४ विद्याधरेभ्यो नमः स्वाहा ॥
१५ उरगेभ्यो नमः स्वाहा ॥
१६ यमुनायै नमः स्वाहा ॥
१७ कालियाय नमः स्वाहा ॥
१८ कंसाय नमः स्वाहा ॥
१९ गोभ्यो नमः स्वाहा ॥
२० योगनिद्रायै नमः स्वाहा ॥
२१ सात्यकये नमः स्वाहा ॥
२२ उद्धवाय नमः स्वाहा ॥
२३ अक्रूराय नमः स्वाहा ॥
२४ उग्रसेनादियादवेभ्यो नमः स्वाहा ॥
२५ शङ्खाय नमः स्वाहा ॥
२६ चक्राय नमः स्वाहा ॥
२७ गदायै नमः स्वाहा ॥
२८ पद्माय नमः स्वाहा ॥
२९ त्रुट्यै नमः स्वाहा ॥
३० कालात्मने नमः स्वाहा ।
३१ अहोरात्राय नमः स्वाहा ॥
३२ मासाय नमः स्वाहा ॥
३३ संवत्सराय नमः स्वाहाः
३४ सर्वात्मने नमः स्वाहा ॥
३५ द्वारपालेभ्यो नमः स्वाहा ॥
३६ पुण्यशीलाय नमः स्वाहा ॥
३७ सुशीलाय नमः स्वाहा ॥
३८ जयाय नमः स्वाहा ॥
३९ विजयाय नमः स्वाहा ॥
४० गरुडाय नमः स्वाहा ॥

॥ इति ब्रह्मादिदेवता–पीठदेवता–परिवारदेवतानां होमः ॥

फलहोमः—तत आचारात् नवग्रहानुद्दिश्य नवग्रहाणामुक्तफलैराज्येन वा तत्तमन्त्रैर्नवाहुतीर्दद्यात् यथा—१ जपाकुसुम०। सूर्याय नमः स्वाहा ॥ २ दधिशंखतु०। चन्द्राय नमः स्वाहा ॥ ३ धरणीगर्भ०। भौमाय नमः स्वाहा ॥ ४ प्रियंगुकलिका०। बुधाय नमः स्वाहा ॥ ५ देवानां च ऋषी०। बृहस्पतये नमः स्वाहा ॥ ६ हिमकुंदमृणा०। शुक्राय नमः स्वाहा ॥ ७ नीलांजनसमा०। शनैश्चराय नमः स्वाहा ॥ ८ अर्धकायं महावीर्यं०। राहवे नमः स्वाहा ॥ ९ पलाशपुष्प०। केतवे नमः स्वाहा ॥ ततो गुग्गुलहोमं कुर्यात् ॥

गुग्गुलहोमः—" मृत्युंजय महादेव त्राहि मां शरणागतम् ।' जन्ममृत्युजराव्याधिपीडितं कर्मबन्धनैः " " मृत्युञ्जयाय नम स्वाहा " इति मन्त्रेण गुग्गुलहोमं विदध्यात् ॥

सर्षपहोमः—ततः " सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ॥ एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् " इति मन्त्रेण सर्षपहोमं कृत्वा उदकोपस्पर्शं कृत्वा लक्ष्मीहोमं कुर्यात् ॥ यथा—

लक्ष्मीहोमः—यजमानो हस्ते जलमादाय " प्रारिप्सितकर्मणः साङ्गतासिद्ध्यर्थं दशविधलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्म्याश्चिरकालसंरक्षणार्थं यथाशक्ति लक्ष्मीहोमं करिष्ये " इति संकल्प्य " या श्रीः स्वयं० ॥ किंवर्णयाम० ॥ हेतुः समस्त० ॥ यस्याः समस्तसुरता० ॥ " इति मन्त्रचतुष्टयेन ( वा यथाचारमन्त्रैः ) लक्ष्मीहोमं कुर्यात् ॥

संकल्पः— अनेन लक्ष्मीहवनेन श्रीमहालक्ष्मीः प्रीयताम् ॥

---

१ द्राक्षेक्षुपूगनारींगजम्बीरबीजपूरकम् ॥ उत्तत्री नारिकेलं च दाडिमं क्रमशः फलम् ॥ १ द्राक्षा २ इक्षु ३ पूगम् ४ नारींगम् ५ जम्बीरम् ६ बीजपूरकम् ७ उत्तत्री ( खारेक ) ८ नारिकेलम् ९ दाडिम ॥ इति ग्रहहोमफलानि ॥

व्याहृतिहोमः—ततो हस्ते जलमादाय "न्यूनातिरिक्तदोषपरिहारार्थं यथाशक्ति व्याहृतिहोमं करिष्ये" इति संकल्प्य "ह्रीं अग्निवायुसूर्येभ्यः स्वाहा" इति मन्त्रेण अष्टोत्तरशतम् अष्टाविंशतीर्वा आहूतीर्दद्यात् ॥

उत्तरपूजनम्—ततो हस्ते जलमादाय "प्रारिप्सितकर्मणः साङ्गतासिद्ध्यर्थं स्थापितदेवतानां मृडाग्नेश्चोत्तरपूजनं करिष्ये" इति संकल्पं विधाय क्रमेण गणपतेः, मातृकाणाम्, ब्रह्मादिसर्वतोभद्रमंडलदेवतानाम्, मंडूकादिपीठदेवतानाम्, वसुदेवादिपरिवारदेवतासहितभगवतः श्रीकृष्णस्य, अग्नेः, ब्रह्मणः, आदित्यादिग्रहमंडलदेवतानां च तत्तन्मंत्रैरुत्तरपूजनं विदध्यात् ॥ यथा—

विघ्नेश्वराय वरदाय सुरप्रियाय लंबोदराय सकलाय जगद्धिताय ॥ नागाननाय श्रितयज्ञविभूषिताय गौरीसुताय गणनाथ नमो नमस्ते ॥ सिद्धिबुद्धिसहितमहागणपतये नमः उत्तरपूजनार्थे सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥

वसोर्द्धारान्विताः सर्वा मातृगौर्यादिषोडश । सर्वकार्यसुसिद्ध्यर्थं सगणेशा नमाम्यहम् ॥ वसोर्द्धारासमन्वितसगणेशगौर्यादिमातृभ्यो नमः उत्तरपूजनार्थे सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥

ब्रह्मादिसर्वतोभद्रमंडलस्थदेवताभ्यो नमः उत्तरपूजनार्थं सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥

मंडूकादिपीठदेवताभ्यो नमः उत्तरपूजनार्थं सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥

वेदानुद्धरते० ॥ वसुदेवादिपरिवारदेवतासहिताय भगवते श्रीकृष्णाय नमः उत्तरपूजनार्थं सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥

१ प्रतिदेवतापूजनं भिन्नसंकल्पेन कर्तव्यं चेत्तथा कर्तव्यम् ॥

अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ हिरण्यवर्णममलं समिद्धं विश्वतो मुखम् ॥ अग्नये नमः उत्तरपूजनार्थं सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥

चतुर्भुज चतुर्बाहुं सृष्टेरुत्पत्तिकारकम् ॥ सावित्रीस्वामिनं देवं ब्रह्माणं प्रणमाम्यहम् ॥ ब्रह्मणे नमः उत्तरपूजनार्थं सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥

आदित्यं च विधुं च भूमितनयं चन्द्रात्मजं सद्गुरु
देवानां तु बृहस्पतिं त्वथ भृगु दैत्याधिपानां गुरुम् ॥
छायापुत्रशनिं च वक्रगतिग राहुं च दैत्याधिपं
केतुं सर्वजनार्तिहान् तु नितरां वन्दे नवैतान् ग्रहान् ॥

अधिदेवताप्रत्यधिदेवतादिसहितनवग्रहदेवताभ्यो नमः उत्तरपूजनार्थे सर्वोपचारार्थे गंधाक्षतपुष्पाणि समर्पयामि ॥

संकल्पः—अनेनावाहितदेवतानामुत्तरपूजनेनावाहितदेवताः प्रीयन्ताम् ॥

( एवमुत्तरपूजनं विधाय ब्रह्मणाऽन्वारब्धः स्विष्टकृद्धोमं कुर्यात् नवाहुतीश्च दद्यात् ॥ )

स्विष्टकृद्धोमः—" अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्ट कृते न मम " त्याग ॥ इति स्विष्टकृद्धोम विधाय ततो आज्येन ब्रह्मणाऽन्वारब्धो निम्नलिखितमन्त्रैर्नवाहुतीर्दद्यात् ॥

नवाहुतयः—( १ ) ह्रीं अग्नये स्वाहा इदम् अग्नये नमम ॥ ( २ ) ह्रीं वायवे स्वाहा इद वायवे नमम ॥ ( ३ ) ह्रीं सूर्याय स्वाहा इदं सूर्याय नमम ॥ ( ४ ) ह्रीं अग्नीवरुणाभ्यां स्वाहा इदम् अग्नी-

२ स्विष्टकृदाहुतिं नवाहुतीश्च ब्रह्मणाऽन्वारब्ध एव दद्यात् ॥

वरुणाभ्यां नमम ॥ (५) ह्रीं अग्नीवरुणाभ्यां स्वाहा इदम् अग्नीवरुणाभ्यां नमम ॥ (६) ह्रीं अग्नये अयसे स्वाहा इदम् अग्नये अयसे नमम ॥ (७) ह्रीं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च स्वाहा इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्केभ्यश्च नमम ॥ (८) ह्रीं वरुणायादित्यायादितये च स्वाहा इदं वरुणायादित्यायादितये च नमम ॥ (९) प्रजापतये स्वाहा इदम् प्रजापतये नमम ॥ इति नवाहुतयः ॥

ततः पत्रावल्यादिषु बलिपदार्थान् निधाय बलिदानं कुर्यात् ॥

॥ दिक्पालानां स्थापितदेवतादीनां च बलिदानम् ॥

बलिदानम्—ततो यजमानो दशदिक्पालेभ्यो (बल्यर्हावाहितदेवताभ्यश्च पृथक् पृथक् वा) एकतन्त्रेण बलिदानं दद्यात् ॥

यजमानो हस्ते जलं गृहीत्वा। मया प्रारब्धस्य (सग्रहमखश्रीजन्माष्टमीव्रतोद्यापनकर्मणः, प्रारिप्सितकर्मणः) साङ्गतासिद्ध्यर्थं दशदिक्पालदेवतानां स्थापितदेवतादीनाञ्च पूजनपूर्वकबलिदानं करिष्ये ॥

॥ एकतन्त्रेण बलिदानम् ॥

हस्ते गन्धाक्षतपुष्पाण्यादाय इन्द्रादिदशदिक्पालदेवान् साङ्गान् सपरिवारान् सायुधान् सशक्तिकान् एभिर्गन्धाद्युपचारैरहं पूजयामि (इति गन्धाक्षतैः पूजयेत्) ॥

जलमादाय—इन्द्रादिदशदिक्पालदेवेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्य इदमासादितबलिं समर्पयामि (इति जलमुत्सृजेत्) ततो नमस्कृत्वा—

१ यद्देवतायाः कर्म प्रवर्तितं स्यात् तस्य नाम वक्तव्यम् ॥ २ गन्धाक्षतपुष्पाण्यादाय पूजनं कार्यम् ॥ ३ जलमादाय संकल्पः कार्यः ॥

प्रार्थना[1]—भो भो इन्द्रादिदशदिक्पालदेवाः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः इमं बलिं गृह्णीत मम सकुटुम्बस्याभ्युदयं कुरुत। आयुकर्तारः क्षेमकर्तारः शांतिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः कल्याणकर्तारः वरदाः भवत ( इति संप्रार्थ्य ) ॥

संकल्पः[2]—अनेन पूजनपूर्वकबलिदानेन इन्द्रादिदशदिक्पालदेवाः साङ्गाःसपरिवाराःसायुधाः सशक्तिकाः प्रीयन्ताम् (इति संकल्पयेत्)॥

ततो बल्यर्हस्थापितदेवेभ्यो बलिदानं दद्यात् ॥ यथा—

बल्यर्हस्थापितदेवान् साङ्गान सपरिवारान सायुधान सशक्तिकान एभिर्गन्धाद्युपचारैर्वः अहं पूजयामि ॥

बल्यर्हस्थापितदेवेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इममासादितबलिं समर्पयामि ॥

भो बल्यर्हस्थापितदेवाः इमं बलिं गृह्णीत मम सकुटुंबस्याभ्युदयं कुरुत। आयुःकर्तारः क्षेमकर्तारः शांतिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः कल्याणकर्तारः वरदाः भवत ॥

अनेन पूजनपूर्वकबलिदानेन बल्यर्हस्थापितदेवाः प्रीयन्ताम् ॥

---

॥ पृथक् पृथक् बलिदानम् ॥

पूर्वस्याम्—इन्द्रं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैः त्वामहं पूजयामि ॥ इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो इन्द्र ! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥

---

१ नमस्कृत्य प्रार्थना कर्तव्या ॥ २ पुनः संकल्पं कुर्यात् ॥ इति प्रतिदेवताबलिदाने कार्यम् ॥

आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन इन्द्रः प्रीयतां न मम ॥ १ ॥

आग्नेय्याम्–अग्निं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ अग्नये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो अग्ने ! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन अग्निः प्रीयतां न मम ॥ २ ॥

दक्षिणस्याम्–यमं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ यमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो यम ! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन यमः प्रीयतां न मम ॥ ३ ॥

नैर्ऋत्याम्–निर्ऋतिं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । निर्ऋतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो निर्ऋते ! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन निर्ऋतिः प्रीयतां न मम ॥ ४ ॥

पश्चिमायाम्—वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ वरुणाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्प०॥ भो वरुण! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन वरुणः प्रीयतां न मम ॥ ५ ॥

वायव्याम्—वायुं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ वायवे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो वायो! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन वायुः प्रीयतां न मम ॥ ६ ॥

उदीच्याम्—सोमं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ सोमाय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो सोम! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकबलिदानेन सोमः प्रीयतां न मम ॥ ७ ॥

ईशान्याम्—ईश्वरं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । ईश्वराय साङ्गाय सपरिवाराय सायु-

धाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो ईश्वर! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन ईश्वरः प्रीयतां न मम ॥ ८ ॥

पूर्वेशानयोर्मध्ये ऊर्ध्वायाम्–ब्रह्माणं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ ब्रह्मणे साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्पयामि ॥ भो ब्रह्मन्! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन ब्रह्मा प्रीयतां न मम ॥ ९ ॥

निर्ऋतिवरुणयोर्मध्येऽधोदिशि–अनन्तं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ अनन्ताय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं समर्प०॥ भो अनन्त! दिशं रक्ष बलिं भक्ष मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । अनेन पूजनपूर्वकबलिदानेन अनन्तः प्रीयतां न मम ॥ १० ॥ इति दशदिक्पालबलिः ॥

---

॥ अथ स्थापितदेवतादीनां बलिदानम् ॥

आग्नेय्यां गणपतिबलिः—गणपतिं साङ्गं सपरिवारं सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । गणपतये साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं बलिं

समर्प० ॥ भो गणपते ! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव ॥ अनेन पूजनपूर्वकबलिदानेन गणपतिः प्रीयतां न मम ॥

तद्दक्षिणे वसोर्धारासमन्वितसगणेशगौर्यादिमातृकाणां बलिः—वसोर्धारासमन्वितसगणेशगौर्याद्यावाहितमातॄः साङ्गाः सपरिवाराः सायुधाःसशक्तिकाः एभिर्गन्धाद्युपचारैः वः अहं पूजयामि ॥ वसोर्धारासमन्वितसगणेशगौर्याद्यावाहितमातृभ्यः साङ्गाभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीपम् आसादितं बलिं समर्प०॥ भो भो वसोर्धारासमन्वितसगणेशगौर्याद्यावाहितमातरः ! इमं बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरुत । आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः कल्याणकर्त्र्यः वरदा भवत ॥ अनेन पूजनपूर्वकबलिदानेन वसोर्धारासमन्वितसगणेशगौर्याद्यावाहितमातरः प्रीयन्तां नमम ॥

तत ईशान्यां नवग्रहमण्डलदेवेभ्यो बलिं दद्यात् ।

ईशान्यां नवग्रहबलि.—सूर्यादिनवग्रहमण्डलदेवान्साङ्गान्सपरिवारान्सायुधान्सशक्तिकान् एभिर्गन्धाद्युपचारैः व अहं पूजयामि । सूर्यादिनवग्रहमण्डलदेवेभ्यः साङ्गेभ्यः सपरिवारेभ्यः सायुधेभ्यः सशक्तिकेभ्यः इमं सदीपम् आसादितं बलिं समर्पे० ॥ भो भो सूर्यादिनवग्रहमण्डलदेवाः ! इमं बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरुत ॥ आयुःकर्तारः क्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः कल्याणकर्तारः वरदा भवत । अनेन पूजनपूर्वकबलिदानेन सूर्यादिनवग्रहमण्डलदेवाः प्रीयन्तां न मम ॥

---

अथ महाक्षेत्रपालबलि ॥ एकस्मिन्वंशपात्रे यथाशक्ति सर्वं बलिं निधाय बृहद्दीपं प्रज्वाल्य मण्डपाद्बहिः बलिदानं कुर्यात् ॥ हस्ते जलं गृहीत्वा । मया प्रारब्धस्य सग्रहमखश्रीजन्माष्टमीव्रतोद्यापनकर्मण सा-

१ यद्देवतायाः कर्म स्यात् तस्या नाम वक्तव्य वा "प्रारिप्सितकर्मणः साङ्गतासिद्ध्यर्थम्" इति वक्तव्यम् ॥

अन्यस्मिन् शतचंड्यादिकर्मणि देवतान्तराणामपि बलिदानं कर्तव्यं चेत्तिन्नप्रकारेण कर्तव्यम् ॥

नैर्ऋत्यां वास्तोष्पतिबलिः–शिख्यादिवास्तुमण्डलदेवतासहितं वास्तुपुरुषं साङ्गं सपरिवार सायुधं सशक्तिकम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि। शिख्यादिवास्तुमण्डलदेवतासहिताय साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय वास्तुपुरुषाय इम सदीपम् आसादितं बलिं समर्प० ॥ भो शिख्यादिवास्तुमण्डलदेवतासहितवास्तुपुरुष ! इमं बलिं गृहाण। मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु ॥ आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव। अनेन पूजनपूर्वकबलिदानेन शिख्यादिवास्तुमण्डलदेवतासहितवास्तुपुरुषः प्रीयतां नमम ॥

आग्नेय्यां योगिनीबलिः—श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहिता गजाननादिचतुःषष्टियोगिनीः साङ्गाः सपरिवाराः सायुधाः सशक्तिका एभिर्गन्धाद्युपचारैर्वः अहं पूजयामि ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहिताभ्यः गजाननादिचतुःषष्टियोगिनीभ्यः साङ्गाभ्यः सपरिवाराभ्यः सायुधाभ्यः सशक्तिकाभ्यः इमं सदीपम् आसादित बलिं समर्प० ॥ भो भो श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहिता गजाननादिचतुःषष्टियोगिन्यः ! इमं बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरुत ॥ आयुःकर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः कल्याणकर्त्र्यः वरदा भवत ॥ अनेन पूजनपूर्वकबलिदानेन श्रीमहाकालीमहालक्ष्मीमहासरस्वतीसहिता गजाननादिचतुःषष्टियोगिन्यः प्रीयन्तां नमम ॥

क्वतासिद्ध्यर्थं भूतप्रेतपिशाचडाकिनीशाकिनीसमन्वितस्य सपरिवारस्य क्षेत्रपालस्य बलिदानं करिष्ये ॥ ततो हस्ते गन्धाक्षतपुष्पाण्यादाय बलिपात्रे क्षेत्रपालं पूजयेत् ॥ क्षेत्रपालं साङ्गं सपरिवारं सायुधं सशक्तिकं भूतप्रेतपिशाचडाकिनीशाकिनीसहितम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि ॥ भूतप्रेतपिशाचडाकिनीशाकिनीसहिताय क्षेत्रपालाय

---

चतुष्षष्टिभैरवाणां स्थापने-चतुष्षष्टिभैरवान् साङ्गान्० पूजयामि ॥ चतुष्षष्टिभैरवेभ्य. साङ्गेभ्य.० बलिं सम० ॥ भो भो चतुष्षष्टिभैरवाः ! इमं बलिं० वरदा भवत ॥ अनेन पू० पू० व० चतुष्षष्टिभैरवा प्रीयन्ताम् ॥

वायव्यां क्षेत्रपालबलि —क्षेत्रपालसहितान् अजराद्येकपञ्चाशत्क्षेत्रपालदेवान् साङ्गान्सपरिवारान् सायुधान्सशक्तिकान् एभिर्गन्धाद्युपचारैर्वः अहं पूजयामि ॥ क्षेत्रपालसहितेभ्योऽजराद्येकपञ्चाशत्क्षेत्रपालदेवेभ्यः साङ्गेभ्य. सपरिवारेभ्य. सायुधेभ्यः सशक्तिकेभ्यः इमं सदीपम् आसादितं बलिं समर्प० ॥ भो भो क्षेत्रपालसहिता अजराद्येकपञ्चाशत्क्षेत्रपालदेवा ! इमं बलिं गृह्णीत मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदय कुरुत । आयु कर्तारः क्षमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तार निर्विघ्नकर्तार. कल्याणकर्तार वरदा भवत ॥ अनेन पूजनपूर्वकबलिदानेन क्षेत्रपालसहिता अजराद्येकपञ्चाशत्क्षेत्रपालदेवाः प्रीयन्तां न मम ॥

मध्यपीठे प्रधानदेवतायाः बलिः—ब्रह्मादिसर्वतोभद्रमण्डलदेवतासमन्विताम् अमुकदेवतां साङ्गां सपरिवारां सायुधां सशक्तिकाम् एभिर्गन्धाद्युपचारैस्त्वामहं पूजयामि । ब्रह्मादिसर्वतोभद्रमण्डलदेवतासमन्वितायै अमुकदेवतायै साङ्गायै सपरिवारायै सायुधायै सशक्तिकायै इमं सदीपम् आसादित बलिं समर्पयामि ॥ भो भो ब्रह्मादिसर्वतोभद्रमण्डलदेवतासमन्विते अमुकदेवते इम बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयु कर्त्री क्षेमकर्त्री शान्तिकर्त्री पुष्टिकर्त्री तुष्टिकर्त्री निर्विघ्नकर्त्री कल्याणकर्त्री वरदा भव। अनेन पूजनपूर्वकबलिदानेन सर्वतोभद्रमण्डलदेवतासमन्विता अमुकदेवताप्रीयतां नमम ॥

---

साङ्गाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपम् आसादितं महाबलिं सम० ॥ भो क्षेत्रपाल ! इमं बलिं गृहाण मम सकुटुम्बस्य सपरिवारस्य यजमानस्याभ्युदयं कुरु । आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता कल्याणकर्ता वरदो भव । ततःप्रार्थयेत्॥

यं यं यं यक्षरूपं दशदिशि वदनं भूमिकम्पायमानं सं सं संहारमूर्ति शिरमुकुटजटाशेखरं चन्द्रबिम्बम् ॥ दं दं दं दीप्तकायं विकृतनखमुखं चोर्ध्वरेखाकपालं पं पं पं पापनाशं प्रणतपशुपतिं क्षेत्रपालं नमामि ॥ नमामि क्षेत्रपाल त्वां भूतप्रेतगणाधिप । पूजां बलिं गृहाणेमं सौम्यो भवतु सर्वदा ॥ १ ॥ आयुरारोग्यमैश्वर्यं देहि त्वं सर्वदा मम । मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ॥ २ ॥ सर्वदा सर्वकार्येषु क्षेत्रपाल-समन्विताः ॥ सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ॥ ३ ॥ इति सम्प्रार्थ्य । हस्ते जलं गृहीत्वा-अनेन पूजनपूर्वकबलिदानेन भूतप्रेत-पिशाचडाकिनीशाकिनीसहित. महाक्षेत्रपालः प्रीयतां न मम ॥ ततः पश्चादनवेक्षमाणः कश्चित् पुरुषो बलिपात्रं गृहीत्वा चतुष्पथे स्थापयेत् । यजमानश्च बलिं नीत्वा गच्छत पृष्ठभागे द्वारपर्यन्त जलं क्षिपेत् । ततः सपत्नीको यजमानः परावृत्य गृहाद्बहिः पाणिपादं प्रक्षाल्याचम्य प्रविशेत् ॥

॥ इति दिक्पालानां स्थापितदेवतादीनां च बलिदानम् ॥

---

# ॥ अथ पूर्णाहुतिः

यजमानो हस्ते जलमादाय ॥ अत्राद्य० प्रारिप्सितकर्मणः सांगतासिद्ध्यर्थं वसोर्धारासमन्वितं पूर्णाहुतिहोमं करिष्ये ॥ तत्रादौ ( मृडाग्नये नमः " सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि इति ) मृडनामानं वह्निं संपूज्य । ( आज्यमधिश्रित्य स्रुक्स्रुवौ प्रताप्य कुशैः संमृज्य आज्यमुद्वास्य कुशेन उत्पूय अवेक्ष्य अपद्रव्यनिरसन-मित्याज्यसंस्कारं कृत्वा ) स्रुचि चतुर्गृहीतमाज्यं गृहीत्वा स्रुच्युपरि

रक्तक्षौमवस्त्रवेष्टितं श्रीफलं निधाय चंदनमाल्यादिभिस्तद् समलंकृत्य "पूर्णाहुत्यै नमः" इति पंचोपचारैः संपूज्य ॥ उपरि स्रुवं निधाय हस्तद्वयेन गृहीत्वा सपत्नीको यजमानस्तिष्ठन् पूर्णाहुतिं जुहुयात् ॥ (ततः साचार्यकऋत्विजः पूर्णाहुतिमंत्रान्पठेयुः ॥ ) तद्यथा—चतुःशृंगस्त्रिधा बद्धो द्विमूर्द्धा नासिकाद्वयः ॥ षण्नेत्रश्च चतुःश्रोत्रस्त्रिपादः सप्तहस्तकः ॥१॥ याम्यभागे चतुर्हस्तः सव्यभागे त्रिहस्तकः ॥ स्रुवं स्रुचं तथा शक्ति-मक्षमालां च दक्षिणे ॥ २ ॥ तोमरं व्यंजनं चैव घृतपात्रं तु वामके ॥ नियुक्तः सप्तभिर्हस्तैर्द्विमुखः सप्तजिह्वकः ॥ ३ ॥ दक्षिणे च चतुर्जिह्व-स्त्रिजिह्वश्चोत्तरे मुखम् ॥ कोटिद्वादशमूर्त्याख्यो द्विपंचाशत्कलायुतः ॥ ४ ॥ स्वाहास्वधावषट्कारैरंकितो मेषवाहनः ॥ रक्तमाल्यांबरधरो रक्तपद्मासनस्थितः ॥५॥ पिंगाक्षो लोहितग्रीवः कृष्णवर्त्मा हुताशनः ॥ ज्वालामालाव्रततनुः सप्तार्चिरमितद्युतिः ॥ ६ ॥ रुद्रतेजःसमुद्भूतो वरदो हव्यवाहनः ॥ अग्निर्वैश्वानरः साक्षात्तस्मै नित्यं नमोनमः ॥७॥

---

## ॥ श्रीशक्रादिस्तुतिः ॥

ऋषिरुवाच ॥ १ ॥ शक्रादयः सुरगणा निहतेऽतिवीर्ये तस्मिन्दु-रात्मनि सुरारिबले च देव्या ॥ तां तुष्टुवुः प्रणतिनम्रशिरोधरांसा वाग्भिः प्रहर्षपुलकोद्गमचारुदेहाः ॥ २ ॥ देव्या यया ततमिदं जगदात्मशक्त्या निःशेषदेवगणशक्तिसमूहमूर्त्या ॥ तामंबिकामखिलदेवमहर्षिपूज्यां भक्त्या नताः स्म विदधातु शुभानि सा नः ॥ ३ ॥ यस्याः प्रभावमतुलं भगवाननंतो ब्रह्मा हरश्च नहि वक्तुमलं बलं च ॥ सा चंडिकाऽखिलजग-त्परिपालनाय नाशाय चाशुभभयस्य मतिं करोतु ॥४॥ या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः ॥ श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि

विश्वम् ॥ ५ ॥ किं वर्णयाम तव रूपमचिंत्यमेतत्किं चातिवीर्यमसुरक्षयकारि भूरि ॥ किं चाहवेषु चरितानि तवाद्भुतानि सर्वेषु देव्यसुरदेवगणादिकेषु ॥ ६ ॥ हेतुः समस्तजगतां त्रिगुणापि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा ॥ सर्वाश्रयाखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥ ७ ॥ यस्याः समस्तसुरताः समुदीरणेन तृप्तिं प्रयांति सकलेषु मखेषु देवि ॥ स्वाहासि वै पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्वमत एव जनैः स्वधा च ॥ ८ ॥ या मुक्तिहेतुरविचिंत्यमहाव्रता त्वमभ्यस्यसे सुनियतेंद्रियतत्त्वसारैः ॥ मोक्षार्थिभिर्मुनिभिरस्तसमस्तदोषैर्विद्यासि सा भगवती परमा हि देवि ॥ ९ ॥ शब्दात्मिका सुविमलर्ग्यजुषां निधानमुद्गीथरम्यपदपाठवतां च साम्नाम् ॥ देवि त्रयी भगवती भवभावनाय वार्तासि सर्वजगतां परमार्तिहंत्री ॥ १० ॥ मेधासि देवि विदिताखिलशास्त्रसारा दुर्गासि दुर्गभवसागरनौरसंगा ॥ श्रीः कैटभारिहृदयैककृताधिवासा गौरी त्वमेव शशिमौलिकृतप्रतिष्ठा ॥ ११ ॥ ईषत्सहासममलं परिपूर्णचंद्रबिंबानुकारि कनकोत्तमकांति कांतम् ॥ अत्यद्भुतं प्रहृतमात्तरुषा तथापि वक्त्रं विलोक्य सहसा महिषासुरेण ॥ १२ ॥ दृष्ट्वा तु देवि कुपितं भ्रुकुटीकरालमुद्यच्छशांकसदृशच्छवि यन्न सद्यः ॥ प्राणान्मुमोच महिषस्तदतीव चित्रं कैर्जीव्यते हि कुपितांतकदर्शनेन ॥ १३ ॥ देवि प्रसीद परमा भवती भवाय सद्यो विनाशयसि कोपवती कुलानि ॥ विज्ञातमेतदधुनैव यदस्तमेतन्नीतं बलं सुविपुलं महिषासुरस्य ॥ १४ ॥ ते संमता जनपदेषु धनानि तेषां तेषां यशांसि न च सीदति बंधुवर्गः ॥ धन्यास्त एव निभृतात्मजभृत्यदारा येषां सदाभ्युदयदा भवती प्रसन्ना ॥ १५ ॥ धर्म्याणि देवि सकलानि सदैव कर्माण्यत्यादृतः प्रतिदिनं सुकृती करोति ॥ स्वर्गं प्रयाति च ततो भवतीप्रसादाल्लोकत्रयेऽपि फलदा ननु देवि तेन ॥ १६ ॥ दुर्गे स्मृता हरसि भीतिमशेषजंतोः स्वस्थैः स्मृता मतिमतीव शुभां ददासि ॥ दारिद्र्यदुःखभयहारिणि का त्वदन्या सर्वोपकारकरणाय सदार्द्रचित्ता ॥ १७ ॥ एभिर्हतैर्जगदुपैति सुखं तथैते कुर्वन्तु नाम नरकाय चिराय पापम् ॥ संग्राममृत्युमधिगम्य दिवं प्रयांतु मत्वेति नूनमहितान्विनिहंसि देवि ॥ १८ ॥ दृष्ट्वैव किं न भवती प्रकरोति भस्म सर्वासुरानरिषु यत्प्रहिणोपि शस्त्रम् ॥ लोकान् प्रयांतु रिपवोऽपि हि शस्त्रपूता

इत्थं मतिर्भवति तेष्वहितेषु साध्वी ॥ १९ ॥ खड्गप्रभानिकरविस्फुरणैस्तथोग्रैः शूलाग्रकांतिनिवहेन दृशोऽसुराणाम् ॥ यन्नागता विलयमंशुमदिंदुखंडयोग्याननं तव विलोकयतां तदेतत् ॥ २० ॥ दुर्वृत्तवृत्तशमनं तव देवि शील रूप तथैतदविचिंत्यमतुल्यमन्यैः ॥ वीर्यं च हंतृ हृतदेवपराक्रमाणां वैरिष्वपि प्रकटितैव दया त्वयेत्थम् ॥२१॥ केनोपमा भवतु तेऽस्य पराक्रमस्य रूपं च शत्रुभयकार्यतिहारि कुत्र ॥ चित्ते कृपा समरनिष्ठुरता च दृष्टा त्वय्येव देवि वरदे भुवनत्रयेऽपि ॥२२॥ त्रैलोक्यमेतदखिलं रिपुनाशनेन त्रातं त्वया समरमूर्द्धनि तेऽपि हत्वा ॥ नीता दिवं रिपुगणा भयमप्यपास्तमस्माकमुन्मदसुरारिभवं नमस्ते॥२३॥ शूलेन पाहि नो देवि पाहि खड्गेन चांबिके ॥ घंटास्वनेन नः पाहि चापज्यानिस्वनेन च ॥ २४ ॥ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥ भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ २५ ॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरंति ते ॥ यानि चात्यतघोराणि तै रक्षास्मांस्तथा भुवम् ॥ २६ ॥ खड्गशूलगदादीनि यानि चास्त्राणि तेंऽबिके ॥ करपल्लवसंगीनि तैरस्मान्रक्ष सर्वतः ॥ २७ ॥ ऋषिरुवाच ॥ २८ ॥ एवं स्तुता सुरैर्दिव्यैः कुसुमैर्नंदनोद्भवैः ॥ अर्चिता जगतां धात्री तथा गधानुलेपनैः ॥ २९ ॥ भक्त्या समस्तैस्त्रिदशैर्दिव्यैर्धूपैः सुधूपिता ॥ प्राह प्रसादसुमुखी समस्तान्प्रणतान्सुरान् ॥ ३० ॥ श्रीदेव्युवाच ॥ ३१ ॥ व्रियतां त्रिदशाः सर्वे यदस्मत्तोऽभिवांछितम् ॥ ३१ ॥ देवा ऊचुः ॥ ३३ ॥ भगवत्या कृतं सर्वं न किंचिदवशिष्यते ॥ यदयं निहतः शत्रुरस्माकं महिषासुरः ॥ ३४ ॥ यदि चापि वरो देयस्त्वयाऽस्माकं महेश्वरि ॥ संस्मृता संस्मृता त्वं नो हिंसीथाः परमापदः ॥ ३५ ॥ यश्च मर्त्यः स्तवैरेभिस्त्वां स्तोष्यत्यमलानने ॥ तस्य वित्तर्द्धिविभवैर्धनदारादिसंपदाम्॥३६॥ वृद्धयेऽस्मत्प्रसन्ना त्वं भवेथाः सर्वदांबिके ॥ ३७ ॥ ऋषिरुवाच ॥ ३८ ॥ इति प्रसादिता देवैर्जगतोऽर्थे तथाऽऽत्मनः ॥ तथेत्युक्त्वा भद्रकाली बभूवांतर्हिता नृप ॥ ३९ ॥ इत्येतत्कथितं भूप संभूता सा यथा पुरा ॥ देवी देवशरीरेभ्यो जगत्त्रयहितैषिणी ॥४०॥ पुनश्च गौरीदेहात्सा समुद्भूता यथाऽभवत् ॥ वधाय दुष्टदैत्यानां तथा शुम्भनिशुंभयोः ॥ ४१ ॥ रक्षणाय च लोकानां देवानामुपकारिणी ॥ तच्छृणुष्व मया ख्यातं यथावत्कथयामि

ते ॥ ४२ ॥ इति श्रीमार्कण्डेयपुराणे देवीमाहात्म्ये एकाशीतितमोऽध्यायः ॥ ८१ ॥ ( स. अ. ४ ) ॥ इति श्रीशक्रादिस्तुतिः ॥

इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये अद्भ्यश्च नमम ॥ इति नारिकेलं जुहुयात् । त्यागः ॥ इति पूर्णाहुतिः ॥

वसोर्द्धाराहोमः— ततः स्रुचि पूगीफलं निधाय "जितं ते पुंडरीकाक्ष०" (पृष्ठ ५६) इति पुरुषसूक्तं वा "विश्वेश्वरीं जगद्धात्रीम्०" इति । सत्रिसूक्तं ( समये सति अग्निसूक्तं च ) पठित्वा वसोर्द्धारां जुहुयात् ॥ ब्राह्मणा वसोर्धारामंत्रान् पठेयुः ॥ यथा—

---

॥ श्रीरात्रिसूक्तम् ॥

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ॥ निद्रां भगवतीं विष्णोरतुलां तेजसः प्रभुः ॥ १ ॥ ब्रह्मोवाच ॥ ( ७१ ) त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ॥ सुधा त्वमक्षरे नित्ये त्रिधामात्रात्मिका स्थिता ॥ २ ॥ अर्धमात्रा स्थिता नित्या यानुच्चार्याविशेषतः ॥ त्वमेव संध्या सावित्री त्वं देवि जननी परा ॥ ३ ॥ त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ॥ त्वयैतत्पाल्यते देवि त्वमत्स्यंते च सर्वदा ॥ ४ ॥ विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ॥ तथा संहृतिरूपाऽन्ते जगतोऽस्य जगन्मये ॥ ५ ॥ महाविद्या महामाया महामेधा महास्मृतिः ॥ महामोहा च भवती महादेवी महेश्वरी ॥ ६ ॥ प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ॥ कालरात्रिर्महारात्रिर्मोहरात्रिश्च दारुणा ॥ ७ ॥ त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ॥ लज्जा पुष्टिस्तथा तुष्टिस्त्वं शान्तिः क्षान्तिरेव च ॥ ८ ॥ खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ॥ शंखिनी चापिनी बाणभुशुंडीपरिघायुधा

॥ ९ ॥ सौम्या सौम्यतराशेषसौम्येभ्यस्त्वतिसुंदरी ॥ परापराणां परमा त्वमेव परमेश्वरी ॥ १० ॥ यच्च किंचित्क्वचिद्वस्तु सदसद्वाखिलात्मके ॥ तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥ ११ ॥ यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत् ॥ सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥ १२ ॥ विष्णुः शरीरग्रहणमहमीशान एव च ॥ कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥ १३ ॥ सा त्वमित्थं प्रभावैः स्वैरुदारैर्देवि संस्तुता ॥ मोहयैतौ दुराधर्षावसुरौ मधुकैटभौ ॥ १४ ॥ प्रबोधं च जगत्स्वामी नीयतामच्युतो लघु ॥ बोधश्च क्रियतामस्य हंतुमेतौ महासुरौ ॥ १५ ॥

॥ इति रात्रिसूक्तम् ॥

---

## ॥ अग्निसूक्तम् ॥

[ मार्कण्डेय उवाच ॥ बहुधैव विचिन्त्यासौ भीतस्तस्य सदा गुरो ॥ ययौ मतिमतां श्रेष्ठः शरणं जातवेदसम् ॥ १ ॥ ( २९ ) ॥ स चकार तदा स्तोत्रं तत्रैवैकतमानसः ॥ स चैकचित्तो मेदिन्यां न्यस्तजानुः कृताञ्जलिः ॥२॥] शान्तिरुवाच ॥ ओं नम सर्वभूतानां साधनाय महात्मने ॥ एकद्विपञ्चधिष्ण्याय राजसूये षडात्मने ॥ ३॥ नमः समस्तदेवानां वृत्तिदाय सुवर्चसे ॥ शुक्ररूपाय जगतामशेषाणां स्थितिप्रद ॥४॥ त्वं मुखं सर्वदेवानां त्वयात्तं भगवन्हविः ॥ प्रीणयस्यखिलान्देवांस्त्वत्प्राणाः सर्वदेवताः ॥ ५ ॥ हुतं हविस्त्वय्यनल मेघत्वमुपगच्छति ॥ ततश्च जलरूपेण परिणाममुपैति यत् ॥६॥ तेनाखिलौषधीजन्म भवत्यनिलसारथे ॥ औषधीभिरशेषाभिः सुखं जीवन्ति जन्तवः ॥ ७ ॥ वितन्वते नरा यज्ञांस्त्वत्सृष्टास्वोषधीषु च ॥ यज्ञैर्देवास्तथा दैत्यास्तद्वद्रक्षांसि पावक ॥ ८ ॥ आप्याय्यन्ते च ते यज्ञास्त्वदाधारा हुताशन ॥ अतः सर्वस्य योनिस्त्वं वह्ने सर्वमयस्तथा ॥ ९ ॥ देवता दानवा यक्षा दैत्या गन्धर्वराक्षसाः ॥ मानुषा

पशवो वृक्षा मृगपक्षिसरीसृपाः ॥ १० ॥ आप्यायन्ते त्वया सर्वे संवर्ध्यन्ते च पावक ॥ त्वत्त एवोद्भवं यान्ति त्वय्यन्ते च तथा लयम् ॥ ११ ॥ अपः सृजसि देव त्वं त्वमत्सि पुनरेव ताः ॥ पच्यमानास्त्वया ताश्च प्राणिनां पुष्टिकारणम् ॥ १२ ॥ देवेषु तेजोरूपेण कान्त्या सिद्धेष्ववस्थितः ॥ विषरूपेण नागेषु वायुरूपः पतत्रिषु ॥ १३ ॥ मनुजेषु भवान्क्रोधो मोहः पक्षिमृगादिषु ॥ अवष्टम्भोऽसि तरुषु काठिन्यं त्व महीं प्रति ॥ १४ ॥ जले द्रवस्त्वं भगवाञ्जवरूपी तथाऽनिले ॥ व्यापित्वेन तथैवाग्ने नभसि त्वं व्यवस्थित ॥ १५ ॥ त्वमग्ने सर्वभूतानामन्तश्चरसि पालयन् ॥ त्वामेकमाहुः कवयस्त्वामाहुस्त्रिविधः पुनः ॥ १६ ॥ त्वमष्टधा कल्पयित्वा यज्ञवाहमकल्पयन् ॥ त्वया सृष्टमिदं विश्वं वदन्ति परमर्षय ॥ १७ ॥ त्वामृते हि जगत्सर्वं सद्यो नश्येद्धुताशन ॥ तुभ्यं कृत्वा द्विजः पूजां स्वकर्मविहितां गतिम् ॥ १८ ॥ प्रयान्ति हव्यकव्याद्यैः स्वधास्वाहाभ्युदीरणात् ॥ परिणामात्मवीर्याणि प्राणिनाममरार्चित ॥ १९ ॥ दहन्ति सर्वभूतानि ततो निष्क्रम्य हेतयः ॥ जातवेदस्त्वयैवेदं विश्वं सृष्टं महाद्युते ॥ २० ॥ तवैव वैदिकं कर्म सर्वभूतात्मकं जगत् ॥ नमस्तेऽनल पिङ्गाक्ष नमस्तेऽस्तु हुताशन ॥ २१ ॥ पावकाद्य नमस्तेऽस्तु नमस्ते हव्यवाहन ॥ त्वमेव सर्वभूतानां पावनाद्विश्वपावन. ॥ त्वमेव भुक्तपीतानां पाचनाद्विश्वपाचकः ॥ २२ ॥ सस्यानां पाककर्त्ता त्वं पोष्टा त्व जगतस्तथा ॥ त्वमेव मेघस्त्वं वायुस्त्वं बीज सस्यहेतुकम् ॥ २३ ॥ पोषाय सर्वभूतानां भूतभव्यभवो ह्यसि ॥ त्वं ज्योतिः सर्वभूतेषु त्वमादित्यो विभावसु. ॥२४॥ त्वमहस्त्वं तथा रात्रि समे सन्ध्ये तथा भवान् ॥ हिरण्यरेतास्त्वं वह्ने हिरण्योद्भवकारणम् ॥ २५ ॥ हिरण्यगर्भश्च भवान्हिरण्यसदृशप्रभः ॥ त्व मुहूर्त्तं क्षणश्च त्वं त्वं त्रुटिस्त्वं तथा लव. ॥ २६ ॥ कलाकाष्ठानिमेषादिरूपेणासि जगत्प्रभो ॥ त्वमेतदखिलं कालः परिणामात्मको भवान् ॥ २७ ॥ या जिह्वा भवतः काली कालनिष्ठाकरी प्रभो ॥ तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ २८ ॥ कराली नाम या जिह्वा महाप्रलयकारणम् ॥ तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ २९ ॥ मनोजवा च या जिह्वा लघिमागुणलक्षणा ॥ तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ३० ॥ करोति कामं

भूतेभ्यो या ते जिह्वा सुलोहिता ॥ तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ३१ ॥ सुधूम्रवर्णा या जिह्वा प्राणिनां रोगदायिका ॥ तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ३२ ॥ स्फुलिङ्गिनी च या जिह्वा यतः सकलपुद्गलः ॥ तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ३३ ॥ या ते विश्वसृजा जिह्वा प्राणिनां शर्मदायिनी ॥ तया नः पाहि पापेभ्य ऐहिकाच्च महाभयात् ॥ ३४ ॥ पिङ्गाक्ष लोहितग्रीव कृष्णवर्त्म हुताशन ॥ त्राहि मां सर्वदोषेभ्यः संसारादुद्धरेह माम् ॥ ३५ ॥ प्रसीद वह्ने सप्तार्चिः कृशानो हव्यवाहन ॥ अग्निपावकशुक्रादिनामाष्टाभिरुदीरितः ॥ ३६ ॥ अग्नेऽग्रे सर्वभूतानां समुत्पत्तिर्विभावसो ॥ प्रसीद हव्यवाहाख्य अभिष्टुत मयाव्यय ॥ ३७ ॥ त्वमक्षयो वह्निरचिन्त्यरूपः समृद्धिमान्दुष्प्रसहोऽतितीव्रः ॥ तवाव्ययं भीममशेषलोकसंवर्धकं हन्त्यथवातिवीर्यम् ॥ ३८ ॥ त्वमुत्तमं सत्त्वमशेषसत्त्वहृत्पुण्डरीकस्थमनन्तमीड्यम् ॥ त्वया ततं विश्वमिदं चराचरं हुताशनैको बहुधा त्वमत्र ॥ ३९ ॥ त्वमक्षयः सगिरिवना वसुन्धरा नभः ससोमार्कमहर्दिवाखिलम् ॥ महोदधेर्जठरगतश्च वाडवो भवान्विभुः पिबति पयांसि पावक ॥ ४० ॥ हुताशनस्त्वमिति सदाभिपूज्यसे महाक्रतौ नियमपरैर्महर्षिभिः ॥ अभिष्टुतः पिबसि च सोममध्वरे वषट्कृतान्यपि च हवींपि भूतये ॥ ४१ ॥ त्वं विप्रैः सततमिहेज्यसे फलार्थं वेदाङ्गेष्वथ सकलेषु गीयसे त्वम् ॥ त्वद्धेतोर्यजनपरायणा द्विजेन्द्रा वेदाङ्गान्यधिगमयन्ति सर्वकाले ॥ ४२ ॥ त्वं ब्रह्मा यजनपरस्तथैव विष्णुर्भूतेशः सुरपतिरर्यमा जलेशः ॥ सूर्येन्दू सकलसुरासुराश्च हव्यैः सन्तोष्याभिमतफलान्यवाप्नुवन्ति ॥ ४३ ॥ अर्चिर्भिः परममहोपघातदुष्टं संस्पृष्टं तव शुचि जायते समस्तम् ॥ स्नानानां परममतीव भस्मना सत्सन्ध्यायां मुनिभिरतीव सेव्यसे तत् ॥ ४४ ॥ तत्कृतया त्रिदिवमवाप्नुवन्ति लोकाः सद्भक्त्या सुखनियताः समूहगीतम् ॥ ४५ ॥ प्रसीद वह्ने शुचिनामधेय प्रसीद वायो विमलातिदीप्ते ॥ प्रसीद मे पावक वैद्युताग्र प्रसीद हव्याशन पाहि मां त्वम् ॥ ४६ ॥ यत्ते वह्ने शिवं रूपं ये च ते सत हेतयः ॥ तैः पाहि न स्तुतो देव पिता पुत्रमिवात्मजम् ॥ ४७ ॥ (७१) ॥

[ मार्कण्डेय उवाच ॥ एवं स्तुतस्ततस्तेन भगवान्हव्यवाहनः ॥ ज्वालामालावृततनुस्तस्यासीदग्रतो मुने ॥ ४८ ॥ ( १ ) ॥ देवो विभावसुः प्रीतः स्तोत्रेणानेन वै द्विज ॥ तं शान्तिमाह प्रणतं मेघगम्भीरया गिरा ॥ ४९ ॥]

अग्निरुवाच ॥ परितुष्टोऽस्मि ते विप्र भक्त्या या ते स्तुतिः कृता ॥ वरं ददामि भवते प्रार्थ्यतां यत्तवेप्सितम् ॥५०॥ शान्तिरुवाच ॥ भगवन्कृतकृत्योऽस्मि यत्त्वां पश्यामि रूपिणम् ॥ तथापि भक्तिनम्रस्य भवता श्रूयतां मम ॥ ५१ ॥ भ्रातृयज्ञं गतो देव ममाचार्यो निजाश्रमात् ॥ आगतश्चाश्रमं धिष्ण्यं त्वत्सनाथं स पश्यतु ॥ ५२ ॥ ममापराधात्सन्त्यक्तं धिष्ण्यं यत्ते विभावसो ॥ तत्त्वयाधिष्ठितं सोऽद्य पूर्ववत्पश्यतु द्विजः ॥ ५३ ॥ तथान्यदपि मे देव प्रसादं कुरुषे यदि ॥ पुत्रो विशिष्टो भवतु तद्पुत्रस्य मे गुरोः ॥ ५४ ॥ तथा च मैत्रीं तनये स करिष्यति मे गुरुः ॥ तथा समस्तसत्त्वेषु भवतस्य मनो मृदु ॥ ५५ ॥ यश्च त्वां स्तोष्यतेऽनेन प्रीतिं यातोऽसि मेऽव्यय ॥ स्तोत्रेण तस्य वरदो भवेथा मत्प्रसादितः ॥ ५६ ॥ मार्कण्डेय उवाच ॥ एतन्मत्वा वचस्तस्य तमाह द्विजसत्तम ॥ स्तोत्रेणाराधितस्तेन गुरुभक्त्या च पावकः ॥५७॥ अग्निरुवाच ॥ गुरोरर्थे यतो ब्रह्मन्याचितं ते वरद्वयम् ॥ नात्मार्थं तेन मे प्रीतिस्त्वय्यतीव महामुने ॥ ५८ ॥ भविष्यत्येतदखिलं गुरोर्यत्प्रार्थितं त्वया ॥ मैत्री समस्तभूतेषु पुत्रश्चास्य भविष्यति ॥५९॥ मन्वन्तराधिपः पुत्रो भौत्यो नाम भविष्यति ॥ महाबलो महावीर्यो महाप्राज्ञो गुरोस्तव ॥ ६० ॥ अनेन यश्च स्तोत्रेण स्तोष्यते मां समाहितः ॥ तस्याभिलषितं सर्वं पुण्यं चास्य भविष्यति ॥ ६१ ॥ यज्ञेषु पर्वकालेषु तीर्थेज्याहोमकर्मसु ॥ धर्माय पठतामेतन्मम पुष्टिकरं परम् ॥ ६२ ॥ अहोरात्रकृतं पापं श्रुतमेतत्सकृद्द्विज ॥ नाशयिष्यत्यसन्दिग्धं मम तुष्टिकरं परम् ॥ ६३ ॥ अहोमकालदोषादीनयोग्यैरपि तत्कृतैः ॥ ये दोषास्तानिदं सद्यः शमयिष्यति संश्रुतम् ॥ ६४ ॥ पौर्णमास्याममावास्यापर्वस्वन्येषु च स्तवः ॥ ममैष संश्रुतो मर्त्यैर्भविता पापनाशनः ॥ ६५ ॥ [ मार्कण्डेय उवाच ॥ इत्युक्त्वा भगवानग्निः पश्यतस्तस्य वै मुने ॥ बभूवादर्शनः सद्यो दीपस्थो निर्वृतो यथा ॥ ६६ ॥(१९) ]

॥ इत्यग्निसूक्तम् ॥

---

"भो भो अग्ने ! महाशक्ते सर्वकर्मप्रसाधक ॥ कर्मान्तरेऽपि संप्राप्य सान्निध्यं कुरु सर्वदा" इति पठित्वा "इदमग्नये नमम" इति पूगीफलं जुहुयात् ॥ रुद्रकलशसमीपे कुशोपरि त्यागः ॥.

स्थंडिलस्येशानकोणाद्भस्म गृहीत्वा "श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम्॥ तेज आयुष्यमारोग्यं देहि मे हव्यवाहन॥१॥ "यथाशस्त्र० वारणम्" इत्युक्त्वा ललाटे ग्रीवायां दक्षिणांसे वामांसे हृदि च भस्मधारणम् ।

हस्ते जलमादाय" आघारादिपूर्णाहुतिपर्यन्तं यद् यद् द्रव्यं यावद्यावत्संख्याकं यस्यै यस्यै देवतायै यावत्यो यावत्य आहुतयः सा सा देवता प्रीयताम्" इति स्रुचि जलं निःक्षिपेत् ॥ "संस्रवप्राशनम् ॥ पवित्राभ्यां मार्जनम् ॥ अग्नौ पवित्रप्रतिपत्तिः ॥"

ब्रह्मणे पूर्णपात्रदानम्—जलं गृहीत्वा "कृतस्य कर्मणः साङ्गतासिद्धयर्थं ब्रह्मन् इदं पूर्णपात्रं तुभ्यमहं संप्रददे" इत्युक्त्वा सदक्षिणाकं पूर्णपात्रं ब्रह्मणे दद्यात् ॥ ब्रह्मा "स्वस्ति" इत्युक्त्वा गृह्णीयात् ॥

पश्चिमस्यां प्रणीताविमोकः— विमोकोदकेन सपत्नीकयजमानमूर्ध्नि "सहस्राक्षं शतधारमृषिभिः पावनं कृतम् ॥ तेन त्वामभिषिचामि पावमानाः पुनन्तु ते ॥१॥ भगं ते वरुणो राजा भगं सूर्यो भगं वसुः॥ भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः॥२॥ यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्धनि॥ ललाटे कर्णयोरक्ष्णोरापो निघ्नन्तु ते सदा॥३॥" इत्यभिषिंचेत् ॥ तत आवाहितदेवान् परिवारदेवतासहितं प्रधानदेवं भगवन्तं श्रीकृष्णं च गन्धाक्षतादिपंचोपचारैः पूजयेत् ॥

अनेन पूजनेन आवाहितदेवास्तथाच परिवारदेवतासहितः भगवान् श्रीकृष्णः प्रीयताम् ॥ इति संकल्पयेत् ॥

श्रेयःसंपादनम्—तत आचारात् यजमानो हस्ते जलमादाय "आचार्याच्छ्रेयोग्रहणं करिष्ये ।।" इति संकल्पयेत् ॥ आचार्यः यजमानहस्ते सुप्रोक्षणादिकं कुर्यात् ॥ यथा—यजमानहस्ते सुप्रोक्षितमस्तु । शिवा आप सन्तु । सन्तु शिवा आप ॥ सौमनस्यमस्तु । अस्तु सौमनस्यम् ॥ अक्षतं चारिष्टं चास्तु । अस्त्वक्षतमरिष्टं च ॥ यत्पाप रोगमशुभमकल्याणं तद्दूरे प्रतिहतमस्तु।।३।। इति सुप्रोक्षणादिकरणं कृत्वा सजलं साक्षतं फलद्वयं गृहीत्वा ॥ " भवन्नियोगेन मया एभिर्ब्राह्मणैः सह यत्कृतं सग्रहमखं जन्माष्टमीव्रतोद्यापनाख्यं कर्म तदुत्पन्नं यच्छ्रेयस्तदमुना साक्षतेन सजलेन फलद्वयेन तुभ्यमहं संप्रददे तेन त्वं श्रेयस्वी भव।।" इत्युक्त्वा यजमानहस्ते फलद्वयं समर्पयेत् ॥ यजमानः " भवामि " इत्युक्त्वा फलद्वयं गृहीत्वा पत्न्याः परिहितवस्त्रे पत्न्यै दद्यात् जलं च पिबेत् ॥ ( अयमाचारः ) ॥

दानानि—ततो यजमानो हस्ते जलमादाय—कृतस्य कर्मणः साङ्गतासिद्ध्यर्थम् आचार्याय गोनिष्क्रयीभूतं द्रव्यं तथा च तिलपूरितं रुद्रदैवतं ताम्रपात्रम्, घृतपूरितं सूर्यदैवतं कांस्यपात्रम्, जलपूरितं वरुणदैवतं ताम्रपात्रम्, पददानम्, सुखशय्यादानम्, उमामहेश्वरवस्त्राणि, छत्रोपानहौ, छायापात्रदानं च यस्मै कस्मैचिद् ब्राह्मणायाहं दास्य इति संकल्प्य दानानि कुर्यात् ।

ततो यजमानो हस्ते जलमादाय " कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं व्रतेभ्य आचार्यादिभ्यो यथोत्साहं दक्षिणां दास्ये " इति आचार्यादिभ्यो दक्षिणां दद्यात् ॥

पुनर्जलमादाय—कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं यथासंख्याकान् ब्राह्मणान् सुवासिनीर्बटुकान् कुमारिकाश्च यथान्नेन तर्पयिष्ये ॥

पुनर्जलमादाय—अस्मिन् कर्मणि न्यूनातिरिक्तदोषपरिहारार्थं व्रतेभ्यो ब्राह्मणेभ्यो भूयसीं दास्ये तेन कर्माधीशः श्रीकृष्णः प्रीयताम् ॥

पुनर्जलमादाय "कृतस्य कर्मणः साङ्गतासिद्ध्यर्थम् इदं मण्डलं सोपस्करम् आचार्याय दास्ये" तत्रायं विशेषः—श्रीकृष्णः प्रतिगृह्णाति श्रीकृष्णो वै ददाति च ॥ श्रीकृष्णस्तारकोऽस्माकं श्रीकृष्णाय नमो नमः ॥ १ ॥ श्रीकृष्णायानन्तरूपाय दास्यामि प्रतिमामिमाम् ॥ द्रव्यं विष्णुसमुद्भूतमतःशान्तिं प्रयच्छ मे ॥ २ ॥ इति संकल्पजलमाचार्यहस्ते दद्यात् ॥

अभिषेकः—ततः प्रधानदेवताकलशाद्वा सर्वदेवताकलशेभ्यो जलं गृहीत्वा आचार्यादयः सपत्नीकं यजमानमभिषिंचेयुः ॥ अभिषेके पत्नी वामतः इति पत्नीं वामत उपवेशयेत् ॥ ततोऽभिषेकं कुर्युः ॥ यथा—"सुरास्त्वामभिषिञ्चन्तु०(पत्र २६)" "आपो निघ्नन्तु ते सदा" इति ॥

आशिर्वादः—ततः सपत्नीकयजमानभाले तिलकं कृत्वाऽऽशिर्वादं दद्युः॥हस्तेऽक्षतान् गृहीत्वा"स्वस्त्यस्तु ते कुशलमस्तु चिरायुरस्तु गोवाजिहस्तिधनधान्यसमृद्धिरस्तु ॥ ऐश्वर्यमस्तु बलमस्तु रिपुक्षयोऽस्तु वंशे सदैव भवतां हरिभक्तिरस्तु ॥ १ ॥ मंत्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ॥ शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ ॥ २ ॥ यावद्भागीरथी गंगा यावद्देवो महेश्वरः ॥ यावद्वेदाः प्रवर्तन्ते तावत्त्वं विजयी भव ॥ ३ ॥ धनं धान्यं पशुबहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ इत्याशिर्वादः ॥

[ ततः ( सति समये ) यजमानो हस्ते गन्धाक्षतपुष्पाण्यादाय हृदि एकाग्रमनसा भगवन्तं श्रीकृष्णं ध्यायन् भक्तिपुरःसरं भगवतः श्रीमानसपूजां कुर्यात् ॥ ]

# ॥ श्रीभगवन्मानसपूजा ॥

श्रीगणेशाय नमः ॥ ॥ हृदम्भोजे कृष्णः सजलजलदश्यामलतनुः सरोजाक्षः स्रग्वी मुकुटकटकाद्याभरणवान् । शरद्राकानाथप्रतिमवदनः श्रीमुरलिकां वहन्ध्येयो गोपीगणपरिवृतः कुंकुमचितः ॥ १ ॥ पयोम्भोधेर्द्वीपान्मम हृदयमायाहि भगवन्मणिव्रातभ्राजत्कनकवरपीठं भज हरे । सुचिह्नौ ते पादौ यदुकुलज नेनेज्मि सुजलैर्गृहाणेदं दूर्वाफलजलवदर्घ्यं मुररिपो ॥ २ ॥ त्वमाचामोपेन्द्र त्रिदशसरिदम्भोऽतिशिशिरं भजस्वेमं पञ्चामृतरचितमाप्लावमघहन् । द्युनद्याः कालिन्द्या अपि कनककुम्भस्थितमिदं जलं तेन स्नानं कुरु कुरु कुरुष्वाचमनकम् ॥ ३ ॥ तडिद्वर्णे वस्त्रे भज विजयकान्ताधिहरण प्रलम्बारिभ्रातर्मृदुलमुपवीतं कुरु गले । ललाटे पाटीरं मृगमदयुत धारय हरे गृहाणेदं माल्यं शतदलतुलस्यादिरचितम् ॥ ४ ॥ दशाङ्गं धूपं सद्वरदचरणाग्रेऽर्पितमये मुखं दीपेनेन्दुप्रभवरजसा देव कलये । इमौ पाणी वाणीपतिनुत सकर्पूररजसा विशोध्याग्रे दत्तं सलिलमिदमाचाम नृहरे ॥ ५ ॥ सदातप्तार्घं षड्रसवदखिलव्यञ्जनयुतं सुवर्णामत्रे गोघृतचषकयुक्ते स्थितमिदम् । यशोदासूनो तत्परमदययाऽशान सखिभिः प्रसादं वाञ्छद्भिः सह तदनु नीरं पिब विभो ॥ ६ ॥ सचन्द्रं ताम्बूलं मुखरुचिकरं भक्षय हरे फलं स्वादु प्रीत्या परिमलवदास्वादय चिरम् । सपर्यापर्याप्त्यै कनकमणिजातं स्थितमिदं प्रदीपैरारार्तिं जलधितनयाश्लिष्ट रचये ॥७। विजातीयैः पुष्पैरभिसुरभिभिर्बिल्वतुलसीयुतैश्चेमं पुष्पाञ्जलिमजित ते मूर्ध्नि निदधे । तव प्रादक्षिण्यक्रमणमघविध्वंसि रचितं चतुर्वारं विष्णो जनिपथगतिश्रान्तविदुषा ॥ ८ ॥ नमस्कारोऽष्टाङ्गः सकलदुरितध्वंसनपटुः कृतं नृत्यं गीतं स्तुतिरपि रमाकान्त त इयम् । तव प्रीत्यै भूयादहमपि च दासस्तव विभो कृतं छिद्रं पूर्णं कुरु कुरु नमस्तेऽस्तु भगवन् ॥ ९ ॥ सदा सेव्यः कृष्ण सजलघननीलः करतले दधानो दध्यन्नं तदनु नवनीतं मुरलिकाम् । कदाचित्कान्तानां कुचकलशपत्रालिरचनासमासक्तं स्निग्धैः सह शिशुविहारं विरचयन्

॥ १० ॥ मणिकर्णीच्छया जातमिदं मानसपूजनम् । यः कुर्वीतोपति प्रातस्तस्य कृष्णः प्रसीदति ॥ ११ ॥

॥ इति श्रीशंकराचार्यविरचितं भगवन्मानसपूजनम् ॥

---

देवताविसर्जनम्——यजमानो हस्तेऽक्षतानादाय " यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ॥ इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ इति पीठोपरि अक्षतान् प्रक्षिप्य देवता विसर्जयेत् ॥

पुनस्तांबूले पूगीफलं निधाय हस्ते धृत्वा " गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने परमेश्वर ॥ यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥" इत्यग्निविसर्जनं कुर्यात् ॥

क्षमापनम्—— ततो यजमानः अंजलिं बद्ध्वा " यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम् ॥ १ ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥२॥ जपच्छिद्रं तपश्छिद्रं यच्छिद्रं व्रतकर्मणि ॥ पूर्णं भवतु यच्छिद्रं ब्राह्मणानां प्रसादतः ॥ इति क्षमापनं विधाय प्रसादं भक्षयित्वा ब्राह्मणान् वृद्धान् नमस्कृत्य सर्वान् भोजयित्वा स्वयं भुञ्जीत ॥ रात्रिं भजनकीर्तनादिना निनयेत् ॥

॥ इति जन्माष्टमीव्रतोद्यापनविधिः समाप्तः ॥

---

## ॥ अथ श्रावणमासकृत्यम् ॥

श्रावणमासे सिंहे सवितरि पूर्वाः षोडश नाड्यः पुण्यकालः । अस्मिन् मासे एकभक्तव्रतं विष्णुशिवाद्यभिषेकश्चोक्तः॥ अन्यच्च-सिंहराशिगते सूर्ये यस्य गेहे गौः प्रसूयते तेन व्याहृतिभिः घृताक्तायुतसंख्यसर्षपहोमं कृत्वा सा गौर्ब्राह्मणाय देया॥ एवं निशीथे गोः क्रन्दनेऽपि (उच्च स्वरे बूम पाडे तो) मृत्युंजयमंत्रेण होमादिरूपशान्तिः कर्तव्या ॥ एवं श्रावणमासे दिवा अश्विनी प्रसवोऽपि निषिद्धः॥ माघे बुधे च महिषी श्रावणे वडवा दिवा ॥ सिंहे गावः प्रसूयन्ते स्वामिनो मृत्युदायकाः ॥ सोमवारव्रतं कार्यं श्रावणे वै यथाविधि ॥ शक्तेनोपासनं कार्यमथवा निशि भोजनम् ॥ इति श्रावणमासकृत्यम् ॥

---

## ॥ अथ स्वर्णगौरीव्रतम् ॥

अथाचारप्राप्तं श्रावणशुक्लतृतीयायां स्वर्णगौरीव्रतम् ॥ ( एतच्च कर्णाटकदेशे भाद्रपदशुक्लतृतीयायां प्रसिद्धम् ॥ ) तत्र संकल्पः ॥ मम इह जन्मनि जन्मान्तरे च अक्षय्यसौभाग्यप्राप्तिकामायाः पुत्रपौत्रादिधनधान्यैश्वर्यप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं स्वर्णगौरीव्रतमहं करिष्ये ॥ देवदेवि समागच्छ प्रार्थयेऽहं जगत्पते ॥ इमां मया कृतां पूजां गृहाण सुरसत्तमे ॥ भवानि त्वं महादेवि सर्वसौभाग्यदायिके ॥ इदं रत्नसमायुक्तमासनं प्रतिगृह्यताम् ॥ इति देवीम् आवाह्य यथाशक्त्या संपूज्य प्रार्थयेत् ॥ पुत्रान् देहि धनं देहि सौभाग्यं देहि सुव्रते ॥ अन्यांश्च सर्वकामांश्च देहि देवि नमोऽस्तु ते ॥ इति संप्रार्थ्य ॥

---

१ घोडी । २ "स्वर्णगौर्यै नम" इति पूजयेत्

भवान्याश्च महादेव्या व्रतसंपूर्तिहेतवे ॥ प्रीतये द्विजवर्याय वायनं प्रददाम्यहम् ॥ नानापोडशपक्वान्नैर्वेणुपात्राणि पोडश ॥ कुर्याद्वस्त्रादिभिर्युक्तान्याहूय द्विजदंपतीन् ॥ व्रतोद्यापनसिद्ध्यर्थं तेभ्यो दद्याद् व्रती नरः ॥ स्वलंकृताः सुवासिन्यः पातिव्रत्येन भूपिताः ॥ मम कामसमृद्ध्यर्थं प्रतिगृह्णन्तु वायनम् ॥ इति वेणुपात्राणि दद्यात् ॥ एवं पूजनं कृत्वा कथाश्रवणं रात्रौ जागरणं च कुर्यात् ॥

"अथोद्यापनविधिः" द्वितीयेऽह्नि-"अर्चयेद् पूर्ववद्देवं पश्चाद्धोमं समाचरेत् ॥ स्वगृह्योक्तविधानेन कृत्वाऽग्निस्थापनं ततः ॥ प्रारभेत ततो होमं नवग्रहपुरःसरम् ॥ तिलांश्च यवसंमिश्रानाज्येन च परिप्लुतान् ॥ जुहुयाद्रुद्रमंत्रेण गौरीमंत्रेण वेदवित् ॥ अष्टोत्तरशतं वापि अष्टाविंशतिमेव वा ॥ एवं समाप्य होमं तु तत्राचार्यं प्रपूजयेत् ॥ सवत्सामव्रणां भद्रां धेनुं दद्यात् प्रयत्नतः ॥ अन्येभ्यो ब्राह्मणेभ्यश्च दक्षिणां च प्रयत्नतः ॥ बंधुभिः सह भुंजीत नियतश्च परेऽहनि ॥"

॥ इति स्वर्णगौरीव्रतम् ॥

## ॥ अथ दूर्वागणपतिव्रतम् ॥

श्रावणे कार्तिके वा शुक्लचतुर्थ्यां दूर्वागणपतिव्रतम् ॥ चतुर्थी या भवेच्छुक्ला नभोमासस्य पुण्यदा ॥ तस्यां व्रतमिदं कुर्यात् कार्तिक्यां वा पडानन ॥ १ ॥ गजाननं चतुर्बाहुमेकदन्तं विपाटितम् ॥ विधाय हेम्ना विघ्नेशं हेमपीठासनस्थितम् ॥ २ ॥ तथा हेममयीं दूर्वां तदाधारे[1] व्यवस्थिताम् ॥ संस्थाप्य विघ्नहर्तारं कलशे ताम्रभाजने ॥३॥ वेष्टितं रक्तवस्त्रेण सर्वतोभद्रमंडले ॥ पूजयेद्रक्तकुसुमैः पत्रिकाभिश्च पंचभिः ॥४॥ बिल्वपत्रमपामार्गः शमी दूर्वा हरिप्रिया[2] ॥ उपचारैश्च विधिना

१ आसने। २ तुलसी।

पूजयेद् गिरिजासुतम् ॥५॥ एवं संपूज्य विघ्नेशं यथाविभवविस्तरैः ॥ सोपस्करं गणाध्यक्षमाचार्याय निवेदयेत् ॥६॥ गृहाण भगवन्ब्रह्मन् गणराजं सदक्षिणम् । व्रतं त्वद्वचनादद्य पूर्णतां यातु सुव्रत ॥७॥ एवं यः पंच वर्षाणि कृत्वोद्यापनमाचरेत् ॥ ईप्सितांल्लभते कामान्देहान्ते शांकरं पदम् ॥८॥ कुर्याद्वर्षत्रयं त्वेवं सर्वसिद्धिप्रदायकम् ॥ उद्यापनं विना यस्तु करोति व्रतमुत्तमम् ॥९॥ तेन शुक्लतिलैः कार्यं प्रातः स्नानं षडानन ॥ हेम्ना वा राजतेनापि कृत्वा गणपतिं बुधः ॥९॥ पंचगव्यैस्तु संस्नाप्य दूर्वाभिः संप्रपूजयेत् ॥ मंत्रैस्तु दशभिर्भक्त्या दूर्वायुग्मैः शिखिध्वज ।१०। दशनाममंत्रा उक्ताः स्कंदपुराणे ॥ गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन ॥ विनायकेशपुत्रेति सर्वसिद्धिप्रदायक ॥१॥ एकदन्तेभवक्त्रेति तथा मूषकवाहन ॥ कुमारगुरवे तुभ्यमेभिर्नामपदैः पृथक् ॥२॥ इत्येवं कथितं सम्यक् सर्वसिद्धिप्रदं शुभम् ॥३॥ इति दूर्वागणपतिव्रतम् ॥

---

## ॥ अथैकविंशतिदिनं गणपतिपूजनव्रतम् ॥

श्रावणशुक्लचतुर्थीमारभ्य श्रावणकृष्णदशमीपर्यन्तम् ॥ तत्र
ाह्नव्यापिनी ग्राह्या ॥ आचम्य प्राणानायम्य ॥ हस्ते जलं
म सकलकामनासिद्ध्यर्थम् एकविंशतिदिनकं गणपतिपूजन-
ष्ये" इति संकल्प्य "एकदंतं शूर्पकर्णं गजतुंडं चतुर्भुजम् ॥
रं देवं मोदकं विभ्रतं करे" ॥ एवं गणपतिं ध्यात्वा आवाह-
त्वापर्यन्तं संपूज्य अंगपूजनं कुर्यात् ॥ यथा— गणेशाय नमः
मि॥गौरीपुत्राय० गुल्फौ पूज०॥ विश्वेश्वराय० जानुनी०॥
० उरू पूज० ॥ लंबोदराय० वक्षःस्थलं० ॥ गणनाथाय०
स्तनौ० ॥ द्वैमातुराय० कंठं० ॥ वक्रतुंडाय० शिरः पूजयामि ॥

एकविंशतिपत्रपूजा ॥ गणाधिपाय० भृंगराजपत्रं सम०॥ उमापुत्राय० विल्वपत्रं०॥ गजाननाय० दूर्वापत्रं० ॥ लंबोदराय० बदरीपत्रं० ॥ हरसूनवे० मधुपत्रं० ॥ गजवक्त्राय० तुलसीपत्रं० ॥ गुहाग्रजाय० अपामार्गपत्रं० ॥ एकदन्ताय० बृहतीपत्रं०॥ इभवक्त्राय० शमीपत्रं०॥ विकटाय० करवीरपत्रं० ॥ विनायकाय० अश्वत्थपत्रं० ॥ कपिलाय० अर्कपत्रं० ॥ वटवे० चंपकपत्रं० ॥ अभयप्रदाय० अर्जुनपत्रं० ॥ पत्नीहिताय० विष्णुक्रान्तापत्रं० ॥ सुराधिपतये० देवदारुपत्रं० ॥ भालचन्द्राय० अगरुपत्रं०॥ हेरंबाय० श्वेतदूर्वापत्रं०॥ शूर्पकर्णाय० जातीपत्रं०॥सुरनाथाय० धत्तुरपत्रं० ॥ एकदन्ताय० केतकीपत्रं सम० ॥ २१ ॥

एकविंशतिनामपूजा ॥ हस्तेऽक्षतान् गृहीत्वा-गजाननाय० । विघ्नराजाय० । लंबोदराय० । शिवात्मजाय० । वक्रतुंडाय० । शूर्पकर्णाय० । कुब्जाय० । विनायकाय० । विघ्ननाशनाय० । विकटाय० । वामनाय० । सर्वार्त्तिनाशिने० । भगवते० । विघ्नहर्त्रे० । धूम्रकाय० । सर्वदेवाधिदेवाय० । एकदन्ताय० । कृष्णपिंगाय० । भालचंद्राय० । गणेश्वराय० । गणपाय० । ॥ २१ ॥ ततः पुष्पधूपदीपादिभिः संपूज्य एकविंशतिसंख्याकाः प्रदक्षिणाः कृत्वा प्रार्थयेत् ॥ दीनानाथ दयानिधे सुरगणैः संसेव्यमानं द्विजैर्ब्रह्मेशानमहेन्द्रशेषगिरिजागंधर्वसिद्धैः स्तुतः ॥ सर्वारिष्टनिवारणैकनिपुण त्रैलोक्यनाथ प्रभो भक्तिं मे सफलां कुरुष्व सकलान क्षान्त्वाऽपराधान्मम ॥ इति संप्रार्थ्य एकविंशत्यर्घान् दद्यात् ॥ यथा-"गौरीसुत नमस्तेऽस्तु सर्वसिद्धिप्रदायक ॥ सर्वसंकष्टनाशार्थमर्घो मे प्रतिगृह्यताम् ॥" इत्यर्घान् दत्त्वा ॥ "पूजासांगतासिद्ध्यर्थं ब्राह्मणाय वायनप्रदानं करिष्ये" इति संकल्प्य ॥ दशमोदकसंयुक्तं वायनं च फल-

प्रदम् ॥ गणेशप्रीणनार्थाय गृहाण त्वं द्विजोत्तम ॥ (कर्त्तव्या मोदकास्तत्र एकविंशतिसंख्यकाः ॥ दश विप्राय दत्त्वा तु एकं देवे नियोजयेत् ॥ अवशिष्टाः स्वयं भक्ष्याः श्रुतमेव मया विभो ) ॥ इति वायनं दत्त्वा व्रतसांगतासिद्धये ब्राह्मणान् भोजयेत् ॥ इदं व्रतं गणेशस्य करिष्यति च मानवः ॥ तस्य कार्याणि सर्वाणि सिद्धिं यास्यन्ति सत्वरम् ॥

( एतदेव शिष्टाचारेण श्रावणशुक्लचतुर्थीमारभ्य माघशुक्लचतुर्थी-पर्यन्तं क्रियमाणं दृश्यते ॥ ) यथाविधि स्नात्वा धौते वाससी परिधाय आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम समस्तपापक्षय-पूर्वकं सप्तजन्मराज्यसौभाग्यादिवृद्ध्ये महागणपतिप्रीतिद्वारा उमा-महेश्वरसालोक्यसिद्ध्ये षण्मासपर्यन्तं दूर्वागणपतिव्रतमहं करिष्ये ॥ इति संकल्प्य प्रतिदिनं गणेशं षोडशोपचारैः पूजयेत् ॥ इति ॥

" अथोद्यापनविधिः "—एवं चरित्वा षण्मासान् शुचिः सत्य-परायणः ॥ पश्चाद् गंधादिदूर्वाभिरर्चयेत्तं सदा पुनः ॥१॥ उद्यापनं प्रकर्तव्यं देशकालानुसारतः ॥ ततो मगधदेशस्य मानेन यवपिष्टकम् ॥२॥ दशमानकमादाय दशाष्टावपि मोदकान् ॥ कृत्वा घृतप्लुतान् सम्यक् षड् देवाय षडात्मने ॥३॥ षड् च विप्राय दातव्याः श्रोत्रियाय कुटुंबिने ॥ विनायकं गणाध्यक्षं विघ्नेशं श्रीगणाधिपम् ॥४॥ वरदं सुमुखं चैव दूर्वा-पट्कैः प्रपूजयेत् ॥ षड् दूर्वाश्च तथा दद्यान्महापूजां प्रकल्पयेत् ॥५॥ व्रतं दूर्वागणेशस्य सर्वसिद्धिकरं परम् ॥ इह लोके सुखी भूत्वा पश्चाच्छिवपुरं व्रजेत् ॥ ६ ॥ ॥ इति एकविंशतिदिनं गणपतिपूजनव्रतम् ॥

---

## ॥ अथ कपर्दिविनायकव्रतम् ॥

श्रावणस्य सिते पक्षे चतुर्थ्यामेकभुग् व्रती ॥ व्रतं कुर्याद् गणेशस्य मासमेकं समाचरेत् ॥ आचम्य प्राणानायम्य देशकालौ संकीर्त्य मम चतुर्विधपुरुषार्थसिद्ध्यर्थं कपर्दिगणेशव्रतमहं करिष्ये ॥ इति संकल्प्य " गं गणेशाय नमः " इति मूलमंत्रेण षडंगन्यासं कृत्वा ॥ पीठपूजनम् ॥ हस्ते अक्षतान् गृहीत्वा नमो भगवते सकलगुणात्मशक्तियुतानन्तयोगपीठाय नमः ॥ ( अष्टदलकेसरेषु ॥ ) तीव्रायै नमः। ज्वालिन्यै०। नंदायै०। भोगदायै०। कामरूपिण्यै०। उग्रायै०। तेजोवत्यै०। सत्यायै०। मध्ये विघ्नविनाशिन्यै० ॥ इति पीठं संपूज्य ध्यायेत् ॥ एकदन्तं महाकायं लंबोदरं गजाननम् ॥ विघ्ननाशकरं देवं गणेशं प्रणमाम्यहम् ॥ इमां पूजां गृहाणेश कपर्दिगणनायक ॥ इति ध्यात्वा आवाहनाद्युपचारैः संपूज्य ॥ पुष्पमालान्ते अंगपूजां कुर्यात् ॥ यथा—कपर्दिगणनाथाय नमः पादौ पूजयामि ॥ गणेशाय० जानुनी पूज० ॥ गणनायाय० ऊरू पूज० ॥ गजक्रीडाय० कटी पू०॥ वक्रतुंडाय० हृदयं पूज० ॥ लंबोदराय० कंठं पूज० ॥ गजाननाय० स्कन्धौ पूज० ॥ हेरंबाय० हस्तौ पूज० ॥ विकटाय० मुखं पूज० ॥ विघ्नराजाय० नेत्रे पूज० ॥ धूम्रवर्णाय० शिरः पूज० ॥ कपर्दिने० सर्वांगं पूजयामि ॥ हस्तेऽक्षतान् गृहीत्वा—

अथावरणपूजा ॥ (१) ईशानाय०। अघोराय०। तत्पुरुषाय०। वामदेवाय०। सद्योजाताय०। इति प्रथमावरणम् ॥ (२) वक्रतुंडाय०। एकदन्ताय०। महोदराय०। गजाननाय०। विकटाय०। विघ्नराजाय०। धूम्रवर्णाय०। विनायकाय० ॥ इति द्वितीयावरणम् ॥ (३) ब्राह्म्यै०।

माहेश्वर्यै०। कौमार्यै०। वैष्णव्यै०। वाराह्यै०। इंद्राण्यै०। चामुंडायै०। महालक्ष्म्यै०। इति तृतीयावरणम् ॥ (४) इंद्राय०। अग्नये०। यमाय०। निर्ऋतये०। वरुणाय०। वायवे०। सोमाय०। ईशानाय०। ब्रह्मणे०। अनन्ताय० ॥ इति चतुर्थावरणम् ॥ (५) वज्राय०। शक्तये०। दंडाय०। खड्गाय०। पाशाय०। अंकुशाय०। गदायै०। त्रिशूलाय०। चक्राय०। पद्माय०। इति पंचमावरणम् ॥ ततो धूपदीपनैवेद्याद्युपचारैः संपूज्य ब्रह्मचारिपूजां कुर्यात् ॥ अरुणान्मुष्टिगणितांस्तंडुलान्सवराटकान् ॥ विप्राय बटवे दद्याद्गंधपुष्पार्चिताय च ॥ १ ॥ तंडुलान् वै ततो दद्यात्पाके चान्ने च शोभवान् ॥ कपर्दिगणनाथोऽसौ प्रीयतां तंडुलैः सदा ॥ २ ॥ कथां श्रुत्वा विधानेन देवमुद्वासयेत्ततः ॥ ३ ॥

॥ इति कपर्दिविनायकव्रतम् ॥

---

## ॥ अथ नागपंचमीव्रतम् ॥

श्रावणशुक्लपंचम्यां व्रतविधिः ॥ यथाविधि स्नात्वा धौते वाससी परिधाय शुभासने उपविश्य आचम्य प्राणानायम्य ॥ सुमुखश्चेत्यादि पठित्वा ॥ जलमादाय ॥ अद्येत्यादि० तिथौ ममात्मनः पुत्रपौत्राद्यनवच्छिन्नसन्ततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थं

---

१ ईश्वर उवाच-शृणु भार्गव यत्नेन पूजानागविधिं तथा ॥ वन्ध्यत्वं विलयं याति दुःखवैधव्यनाशनम् ॥ मृतवत्सा च या नारी गर्भस्रावा च या भवेत् ॥ काकवन्ध्या भवेत् स्त्री या तथा ऋतुविवर्जिता ॥ मृतवत्सा च या स्त्री तु विध्युक्तः प्रसवायते ॥ तासां दोषविनाशार्थाय पूजां कुर्यात् विधानतः ॥ " नागदेवि महादेवि पातालेऽमृतरक्षिणि ॥ अपत्यं च तथा देहि शिशूनां कुरु रक्षणम् ॥ " एतद्व्रतमुपासीत सुखसंतानवर्धनम् ॥ सर्वदुःखहरं वत्स सर्वसौभाग्यवर्धनम् ॥ यावद्गर्भसमुद्भूति-

वन्ध्यत्वनिरसनपूर्वकं दीर्घायुःपुत्रप्राप्त्यर्थं नागदेव्या विधानमहं करिष्ये ॥ तदंगभूतं दिग्रक्षणं कलशार्चनं दीपपूजनं गणपतिपूजनं-स्वस्तिपुण्याहवाचनं(मातृकापूजनं वसोर्द्धारां नांदीश्राद्धम्) आचार्यादिब्राह्मणवरणम् अग्निप्रतिष्ठापनं प्रधानदेवतास्थापनं च करिष्ये ॥ इति

---

मासे षष्ठाष्टमे तथा ॥ कुर्यात् पूजां महाभाग गर्भरक्षाकरी भवेत् ॥ चैत्रे श्रावणमासे च वैशाखे कार्तिकेऽथवा ॥ माघे शुक्ले च रहसि कर्त्तव्यं नागपूजनम् ॥ शुक्लपक्षे तु संप्राप्ते पंचम्यां या तिथिर्भवेत् ॥ अथवा कृष्णपक्षे तु भानुभौमदिने तथा ॥ माषकैर्नागसंख्याकैर्देवीं कुर्यात्प्रयत्नतः ॥ तदर्थे तु विशेषेण तक्षकं कारयेत्तथा ॥ सुवर्णं रजतं वापि ताम्रं वापि च कारयेत् ॥ पूजयेत्तां विधानेन मणिरत्नविभूषणैः ॥ फलैश्च विविधैश्चैव नैवेद्यैर्वलिकर्मभिः ॥ गोधूमैर्माषकैर्युक्तं तण्डुलैश्च कणमिय ॥ दुग्धैश्च घृतसंयुक्तैर्गुडमिश्रं समन्ततः ॥ यंत्रं च प्रतिमा कृत्वा कंठदेशे तु धारयेत् ॥ दपतीस्नानमादाय मंत्रपूतेन वारिणा ॥ नागलोकेषु पुत्रेषु व्रतं गुप्तं तु कारयेत् ॥ अरण्ये वल्मिकं चैव सर्पाणां गेहमुत्तमम् ॥ तत्स्थानमुत्तमं ज्ञात्वा पूजां कृत्वा विधानतः ॥ पुण्याहे शुभनक्षत्रे ग्राह्ये चन्द्रे सुशोभने ॥ ब्राह्मणांश्च समाहूय कुलीनान् वेदपारगान् ॥ नागसंख्यान् सुसंपूज्यान् अर्घ्यपाद्यैः समर्चयेत् ॥

१ दिग्रक्षणादि(९पृष्ठे)द्रष्टव्यम्।२ केटलाक देशमां स्त्रियो नागपगलां परम्परा प्रमाणे धारण करे छे तो नागपांचमे नागपगलां धारण करवां होय ते स्त्रियोए गोरित देवडाववुं ॥ तेमां अढार गोरणीने भोजन करावी नाडाछडी चांल्ला दक्षिणा आपवी। केटलाएक देशमां सुपडामां काळी गजी पाथरी अडदथी नागमंडळ करी पूजा करे छे, होम विगेरे करतां नथी, अने पांचथी अढार सुधीनी गोरणी करे छे, अने भोजन पण कंसारनुंज करे छे. देशाचाल प्रमाणे व्यवस्था करवी ३ केटलाक देशमां भींते सुखडना चंदनथी समचोरस मंडल करी वचमां नागनुं स्थापन करे छे, अने सुपडामां काळी गजी मूकी अडदथी नवनागनुं स्थापन करी नागपगलां मूकी पहेरनारी स्त्री पासे पूजा करावे छे.

१ पुण्य वेसे तोज नान्दीश्राद्ध कराववुं ॥

संकल्प्य दिग्रक्षणादि[1] ब्राह्मणवरणान्तं कृत्वा॥स्थंडिले पंचभूसंस्कारपूर्वकं वह्निं (पृ. १४९) संस्थाप्य पीठे कृष्णवस्त्रं प्रसार्य तदुपरि माषैः (अडद) षट्कोणं तदुपरि वृत्तं तदुपरि अष्टपत्रं तदुपरि चतुर्द्वारोपेतं चतुरस्रं कृत्वा तन्मध्ये पूर्णपात्रान्तं कलशं संस्थाप्य तदुपरि प्रधानमूर्ति (नागदेवतानां पगलां) कृताग्न्युत्तारणप्राणप्रतिष्ठां च संस्थाप्य॥ अक्षतान् गृहीत्वा (मध्ये) वैश्यवर्गं नीलवर्णं फणैः पंचशतैर्युतम्॥ युक्तमुत्तुंगकायं च तक्षकं प्रणमाम्यहम्॥१॥ तक्षकाय नमः तक्षकमावाहयामि स्थापयामि॥१॥ (पूर्वपत्रे) क्षत्रवर्गं पीतवर्णं फणैः सप्तशतैर्युतम्॥ युक्तमुत्तुंगकायं च वासुकिं प्रणमाम्यहम्॥ २॥ वासुकये० वासुकिमावा०॥२॥ (अग्निकोणे) शूद्रवर्गं श्वेतवर्णं शतत्रयफणायुतम्॥ युक्तमुत्तुंगकायं च कर्कोटं च नमाम्यहम्॥ ३॥ कर्कोटकाय० कर्कोटकमावा०॥३॥ (दक्षिणे) अनन्तं विप्रवर्गं च तथा कुंकुमवर्णकम्॥ फणासहस्रसंयुक्तं तं देवं प्रणमाम्यहम्॥ ४॥ अनन्ताय० अनन्तमावा०॥४॥ (नैर्ऋत्ये) शंखपालं क्षत्रियं च पीतं सप्तशतैः फणैः॥ युक्तमुत्तुंगकायं च शिरसा प्रणमाम्यहम्॥ ५॥ शंखपालाय० शंखपालमावा०॥५॥ (पश्चिमे) वैश्यवर्गं नीलवर्णं फणैः पंचशतैर्युतम्॥ युक्तमुत्तुंगकायं च महापद्मं नमाम्यहम्॥ ६॥ महापद्माय० महापद्ममावा०॥ ६॥ (वायव्ये) वैश्यवर्गं नीलवर्णं फणैः पंचशतैर्युतम्॥ युक्तमुत्तुंगकायं च तन्नीलं प्रणमाम्यहम्॥ ७॥ नीलाय० नीलमावा०॥७॥ (उत्तरे) कंबलं शूद्रवर्गं च शतत्रयफणैर्युतम्॥ आवाहयामि नागेशं प्रणमामि पुनः पुनः॥८॥ कंबलाय० कंबलमावा०॥८॥ (ऐशाने) विप्रवर्गं श्वेतवर्णं सहस्रफणसंयुतम्॥ आवाहयाम्यहं देवं

१ दिग्रक्षणादि (६-४५ पृष्ठे द्रष्टव्यम्॥)

शेषं वै विश्वरूपिणम् ॥ ९ ॥ शेषाय० शेषमावा० ॥ ९ ॥ इत्यावाह्य " तक्षकाद्यावाहितदेवेभ्यो नमः " इति मंत्रेण यथाशक्त्या पूजयेत् ॥ जलमादाय— अनेन पूजनेन तक्षकादिनवनागाः प्रीयन्ताम् ॥ इति ॥ ततस्तदुत्तरे पीठोपरि श्वेतवस्त्रं प्रसार्य तदुपरि अष्टतरष्टदलं कृत्वा कलशोपरि "अमृतरक्षिण्यै नमः अमृतरक्षिणीमावा० स्था०॥" इत्यावाह्य अमृतरक्षिणीं यथाशक्त्या संपूज्य । अनेन पूजनेनामृतरक्षिणी प्रीयताम् ॥ इति ॥ ततः सर्पसूक्तं पठेत् वा " महिम्नः पारं ते० " इति रुद्रसूक्तं पठेत् ॥ ततो दक्षिणतो ब्रह्मासनादि कृत्वा आघारावाज्यभागौ हुत्वा ॥ बलवर्धननामाग्निं संपूज्य प्रधानहोमः ॥ " ह्रीं तत्कारिणी विषहारिणी विषरूपिणी विषं हन इन्द्रस्य वज्रेण नमः ॥ " इति मंत्रेण चरुतिलाज्यगुग्गुलद्रव्यैरष्टोत्तरशतसंख्यया जुहुयात् ॥ ततः तक्षकादीनां एकैकामाज्याहुतिं जुहुयात् ॥ एवं प्रधानहोमं समाप्य ॥ अष्टाविंशतिसंख्यया

---

१ नागण ते रूपानी गोळ ॥

२ " सर्पसूक्तम्— ' ब्रह्मलोके च ये सर्पा शेषनागपुरोगमा ॥ नमोऽस्तु तेभ्य सुप्रीता प्रसन्ना सन्तु मे सदा ॥ १ ॥ विष्णुलोके च ये सर्पा वासुकिप्रमुखाश्च ये ॥ नमोऽस्तु० ॥ २ ॥ रुद्रलोके च ये सर्पास्तक्षकप्रमुखास्तथा ॥ नमोस्तु० ॥ ३ ॥ खाण्डवस्य तथा दाहे स्वर्गं ये च समाश्रिता ॥ नमोस्तु० ॥ ४ ॥ सर्पसत्रे च ये सर्पा आस्तिकेन च रक्षिता ॥ नमोस्तु० ॥ ५ ॥ प्रलये चैव ये सर्पा कर्कोटप्रमुखाश्च ये ॥ नमोस्तु० ॥ ६ ॥ धर्मलोके च ये सर्पा वैतरण्या समाश्रिता ॥ नमोस्तु० ॥ ७ ॥ ये सर्पा पार्वतीयेषु दरीसंधिषु संस्थिता ॥ नमोस्तु० ॥ ८ ॥ ग्रामे वा यदि वाऽरण्ये ये सर्पा प्रचरन्ति हि ॥ नमोस्तु० ॥ ९ ॥ पृथिव्या चैव सर्पा ये सर्पा ये वलिसंस्थिता ॥ नमोस्तु० ॥ १० । रसातले च ये सर्पा अनन्ताद्या महाबला ॥ नमोस्तु० ॥ ११ ॥ अनेन ब्राह्मणद्वारा सर्पसूक्तजप कृतेन अनन्तादिदेवा प्रीयन्ताम् ॥ इति ॥

तिलद्रव्येण व्याहृतिहोमम् "अग्निवायुसूर्येभ्यो नमः" इत्यनेन कृत्वा उत्तरपूजनमारभ्य प्रणीताविमोकान्तं (पृ. १६६/१८८) कृत्वा *आनिरीक्षणीयां महिषीं "महिष्यै नमः" इति मंत्रेण पूजयेत्॥ ततः स्थापितदेवताभ्यः पुनः गंधं पुष्पं धूपं दीपं महानैवेद्यं (थाल) दक्षिणां नीराजनं प्रदक्षिणं कृत्वा प्रार्थयेत्॥ "नवकुलाय विद्महे विषदन्ताय धीमहि॥ तन्नः सर्पः प्रचोदयात्॥" इति संप्रार्थ्य॥ ततः अमृतरक्षिणीमंडलाग्रे मृदा तडागं कृत्वा तत्र दुग्धं पूरयित्वा मध्ये वटं करीरं च रोपयेत्॥ करीरवृक्षमूलान्मृदमानीतां तत्समीपे संस्थाप्य तत्र वल्मीकं विभाव्य ततो यजमानो दुग्धेन वल्मीकं सिंचेत्॥ तत्र मंत्रः॥ "अंतरिक्षे च ये सर्पा ये सर्पा भूमिपालकाः॥ तेभ्यो दुग्धं मया दत्तं प्रजामृतमसिंचये॥ इति मंत्रेण वल्मीकं तडागं च सिंचयेत्॥ ततस्तन्मध्ये पूजितां प्रतिमां रक्तसूत्रेण प्रोतां निधाय तदग्रे बलिदानार्थं दुग्धं निधाय "तक्षकाद्यावाहितदेवेभ्यो नमः बलिं सम०" इति बलिं दत्वा ततः स्थापितकलशोदकेन सपत्नीकयजमानं सुरास्त्वेत्यादिमंत्रैरभिषिच्य तिलपात्रादिकं दत्वा आचार्यपूजनपूर्वकं तेभ्यो दक्षिणां दद्यात्॥ ततो वल्मीकाग्रे

---

* झोरण — रूपानी चोरस भेस.

१ केटलीक न्यातमां एवो रीवाज छे के पाडीने घेर लावी तेने वेड आंखे पाटा बांधी "महिष्यै नमः" ए नाममन्त्रथी पूजा करावे छे अने पछी नागदेवता पासे आवी पाटो छोडी उत्तरपूजा करावबामां आवे छे. २ दीप कोपरानी वाटीमां करवो अने नाडाछळीना नव तारनी दीवेट करवी ॥ ३ नैवेद्यमां कथरोटमां नेवखंड पुरावी तेमां नवदीवडा मूकवा ॥ ४ नैवेद्यना नवदीपडाथीज आरती करवी अथवा रीवाज प्रमाणे करवु ॥ ५ केराना झाडनी डाखडी ॥ ६ राफडो ॥ ७ सुरास्त्वेति मंत्रा (२६ पृष्ठे) द्रष्टव्याः ॥

दीपं निधाय दंडवत्प्रणमेत् ॥ ततो वल्मीकात् मूर्तिमादाय शुद्धोदकेन संस्नाप्य कंठे धारयेत् ॥ आशिषो गृहीत्वा प्रधानपीठादिकमाचार्याय दत्त्वा—कृतेनानेन नागपूजनविधानेन नागदेवताः प्रीयन्ताम् ॥ ततो "यान्तु देव०" इति स्थापितदेवान् अग्निं च विसृज्य ब्राह्मणान् सुवासिनीश्च भोजयित्वा स्वयं भुंजीत ॥

॥ इति नागदेवता ( गौरित ) व्रतविधिः ॥

---

## ॥ अथ प्रतिवार्षिकनागपञ्चमीव्रतम् ॥

तच्च श्रावणशुक्लपंचम्यां मध्याह्नव्यापिन्यां कार्यम् ॥ नद्यादौ स्नात्वा ॥ अद्येत्यादि० मम सन्तानवृद्धिपूर्वकं सुखाद्यभिवृद्धिद्वारा श्रीनागरूपपरमेश्वरप्रीत्यर्थं नागपंचमीव्रतं करिष्ये ॥ इति संकल्प्य । पट्टे कुड्ये[1] वा चंदनादिना नागान् विलिख्य मृन्मयान् वा कृत्वा तान् क्षीरदधिदूर्वाक्षतकुशादिभिः पूजयेत् ॥ तत्र मंत्रः ॥ "अनन्तं वासुकिं शेषं पद्मनाभं महाबलम् ॥ कालियं तक्षकं चैव कर्कोटकधनंजयौ ॥" इति मंत्रेण यथाशक्त्या आवाहनादिप्रार्थनान्तं पूजनं कृत्वा विप्रेभ्यो भोजनं दत्वा स्वयं तैलपक्वविवर्जितं भोजनं कृत्वा रात्रौ तद्ध्यानरतः स्वप्यात् ॥ इति नागपंचमीव्रतम् ॥

---

## ॥ अथ शीतलासप्तमीव्रतम् ॥

श्रावणशुक्ले[2]सप्तम्यां शीतलाव्रतम् ॥ तच्च मध्याह्न[3]व्यापिन्यां कार्यम् ॥ अथ व्रतविधिः स्कान्दे ॥ अद्येत्यादि० ममेह जन्मनि जन्मा-

---

१ भींत उपर। २ केचित् कृष्णपक्षे कुर्वन्ति। ३ माधवीये हारितः— पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः ॥

न्तरे च अवैधव्यप्राप्तये अखंडितभर्तृसंयोगपुत्रपौत्रादिधनधान्यप्राप्तये च शीतलाव्रतं तदङ्गत्वेन पूजनं च करिष्ये ॥ इति संकल्प्य तत्र अष्टदलयुते पीठे अव्रणं कलशं संस्थाप्य तदुपरि सौवर्णादिनिर्मितां शीतलामूर्तिं संस्थाप्य ध्यायेत् ॥ वंदेऽहं शीतलां देवीं रासभस्थां दिगंबराम् ॥ मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ॥ शीतले दह मे पापं पुत्रसौख्यफलप्रदे ॥ धनधान्यप्रदे देवि पूजां स्वीकुरु ते नमः ॥ "शीतलादेव्यै नमः" ध्यायामि ॥ इति शीतलादेवीं ध्यात्वा ततः "ह्रीं शीतलायै नमः" इति मंत्रेणावाहनादिदीपान्तोपचारैः संपूज्य समीपे दधिघृतमिश्रपक्वान्ननैवेद्यं निधाय "शीतले पंचपक्वान्नदध्योदनयुतं शुभम् ॥ नैवेद्यं गृह्यतां देवि घृतमिश्रं च सुंदरि" ॥ इति नैवेद्यं निवेद्य नीराजनं प्रदक्षिणां कृत्वा प्रार्थयेत् ॥ "शीतले दह मे पापं पुत्रपौत्रसुखप्रदे। धनधान्यप्रदे देवि पूजां गृह्ण नमोऽस्तु ते" ॥ इति संप्रार्थ्य ॥ (अत्र सति समये शीतलास्तोत्रेण प्रार्थना कर्तव्या वाऽनन्तरं पाठः

---

१ कुंभे संस्थापयेद्देवीं पूजयेन्नाममंत्रतः ॥

* श्रीगणेशाय नमः ॥ ॥ (अस्य श्रीशीतलास्तोत्रस्य महादेव ऋषिः ॥ अनुष्टुप् छन्दः ॥ शीतला देवता । लक्ष्मीः बीजम् ॥ भवानी शक्ति ॥ सर्वविस्फोटकनिवृत्तये जपे विनियोगः ) ॥ ईश्वर उवाच ॥ वंदेऽहं शीतलां देवीं रासभस्थां दिगम्बराम् ॥ मार्जनीकलशोपेतां शूर्पालंकृतमस्तकाम् ॥ १ ॥ वंदेऽहं शीतलां देवीं सर्वरोगभयापहाम् ॥ यामासाद्य निवर्तेत विस्फोटकभयं महत् ॥ २ ॥ शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः ॥ विस्फोटकभयं घोरं क्षिप्रं तस्य प्रणश्यति ॥ ३ ॥ यस्त्वामुदकमध्ये तु धृत्वा पूजयते नरः ॥ विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ ४ ॥ शीतले ज्वरदग्धस्य पूतिगंधयुतस्य च ॥ प्रनष्टचक्षुषः पुंसस्त्वामाहुर्जीवनौषधम् ॥ ५ ॥ शीतले तनुजान्रोगान्नृणां हरसि दुस्त्यजान् ॥ विस्फोटकविदीर्णानां त्वमेकाऽमृतवर्षिणी ॥ ६ ॥ गल-

कार्यः ॥) विशेषार्घः ॥ शीतले शीतलाकारे अवैधव्यसुतप्रदे ॥ श्रवणस्यासिते पक्षे गृहाणार्घ्यं नमोस्तु ते ॥ इत्यर्घ्यं समर्प्य ॥ व्रतसंपूर्णफलावाप्तये ब्राह्मणाय वायनं दद्यात् ॥ तत्र मंत्रः ॥ दध्यन्नं दक्षिणायुक्तं वायनं फलसंयुतम् ॥ शीतलाप्रीतये तुभ्यं ब्राह्मणाय ददाम्यहम् ॥ अनेन पूजनेन शीतलादेवी प्रीयताम् ॥ इति शीतलाव्रतम् ॥

गंडग्रहा रोगा ये चान्ये दारुणा नृणाम् ॥ त्वदनुध्यानमात्रेण शीतले यांति संक्षयम् ॥ ७ ॥ न मन्त्रो नौषधं तस्य पापरोगस्य विद्यते ॥ त्वामेकां शीतले धात्रीं नान्यां पश्यामि देवताम् ॥ ८ ॥ मृणालतंतुसदृशीं नाभिहृन्मध्यसंस्थिताम् ॥ यस्त्वां संचिंतयेद्देवि तस्य मृत्युर्न जायते ॥ ९ ॥ अष्टकं शीतलादेव्यो यो नरः प्रपठेत्सदा ॥ विस्फोटकभयं घोरं गृहे तस्य न जायते ॥ १० ॥ श्रोतव्यं पठितव्यं च श्रद्धाभक्तिसमन्वितैः ॥ उपसर्गविनाशाय परं स्वस्त्ययनं महत् ॥ ११ ॥ शीतले त्वं जगन्माता शीतले त्वं जगत्पिता ॥ शीतले त्वं जगद्धात्री शीतलायै नमो नमः ॥ १२ ॥ रासभो गर्दभश्चैव खरो वैशाखनंदनः ॥ शीतलावाहनश्चैव दूर्वाकंदनिकृंतनः ॥ १३ ॥ एतानि खरनामानि शीतलाग्रे तु यः पठेत् ॥ तस्य गेहे शिशूनां च शीतलारुङ् न जायते ॥ १४ ॥ शीतलाष्टकमेवेदं न देयं यस्य कस्यचित् ॥ दातव्यं च सदा तस्मै श्रद्धाभक्तियुताय वै ॥ १५ ॥
॥ इति श्रीस्कंदपुराणे शीतलाष्टकस्तोत्रं संपूर्णम् ॥

---

## ॥ अथ पवित्रारोपणविधिः ॥

विधिना पवित्राणि निर्माय सर्वाणि पवित्राणि पंचगव्येन प्रोक्ष्य प्रणवेन प्रक्षाल्य मूलेनाष्टोत्तरशतमभिमंत्र्य ग्रंथीन् कुंकुमेन रंजयित्वा

---

१ श्रावणस्य सिते पक्षे कर्कटस्थे दिवाकरे ॥ द्वादश्यां वासुदेवाय पवित्रारोपणं स्मृतम् ॥ द्वादश्यां श्रावणे वापि पंचम्यामथवा द्विज ॥ अनुकूलेषु कर्तव्यं पंचदश्यामथापि वा ॥ पवित्रारोपणं विप्राच्छ्रावणे न भविष्यति ॥ कार्तिक्यवधिशुक्लास्ते कर्तव्यमिति नारद ॥ कार्पाससूत्रस्य

सर्वपवित्राणि वंशपात्रे संस्थाप्य वस्त्रेण पिधाय देवपुरतो न्यस्य ॥ "क्रियालोपविधानार्थं यत्त्वया विहितं प्रभो ॥ मयैतत्क्रियते देव तव तुष्ट्यै पवित्रकम् ॥ न मे विघ्नो भवेद्देव कुरु नाथ दयां मयि ॥ सर्वथा सर्वदा विष्णो मम त्वं परमा गतिः" इति संप्रार्थ्य अधिवासनं कुर्यात् ॥ तद्यथा – अद्येत्यादि० संवत्सरकृतपूजाफलावाप्त्यर्थम् अमुकदेवताप्रीत्यर्थम् अधिवासनविधिपूर्वकं पवित्रारोपणं करिष्ये ॥ इति संकल्प्य देवपुरतः सर्वतोभद्रे जलपूर्णं कुंभं संस्थाप्य कुंभे वंशपात्रं तत्र तानि पवित्राणि निधाय तेषु "संवत्सरस्य यागस्य पवित्रीकरणाय भोः । विष्णुलोकात्पवित्राद्य आगच्छेह नमोस्तु ते ॥" इति मंत्रेण मूलमंत्रेण चावाह्य त्रिसूत्र्यां ॐकार–सोम–वह्नि–ब्रह्म–नागेश–प्रजापति–सूर्य–शिव–विश्वेदेवानुत्तममध्यमकनिष्ठपवित्रेषु ब्रह्मविष्णुरुद्रान् सत्त्वरजस्तमांसि चावाह्य वनमालायां प्रकृतिं चावाह्य मूलमंत्रेण "श्रीपवित्राद्यावाहितदेवताभ्यो नमः" इत्यनेन गंधाद्युपचारैः पूजयेत् ॥ ततः पूर्वसंपादितं वितस्तिमात्रं द्वादशग्रंथिकं गंधपवित्रमादाय "विष्णुतेजोद्भवं रम्यं सर्वपातकनाशनम् ॥ सर्वकामप्रदं देव तवांगे धारयाम्यहम् ॥" इति मंत्रेण मूलसंपुटितेन

---

नवसूत्रीं विधाय अष्टोत्तरशतनवगायत्र्या देवजानुपर्यन्तं चतुर्विंशतिग्रंथिकमुत्तमपवित्रम् ॥ चतुःपंचाशत्सूत्र्या उरलंबि द्वादशग्रंथिकं मध्यमम् ॥ सप्तविंशतिनवसूत्र्या अष्टग्रंथिकं नाभिपर्यन्तं कनिष्ठं पवित्रं च कृत्वा ॥ विंशत्युत्तरशतेन सप्तत्या वा नवसूत्र्या पादलंबिनीं वनमालामष्टोत्तरशतचतुर्विंशत्यन्यतरग्रंथिकां कृत्वा द्वादशनवसूत्र्या द्वादशग्रंथिकं गंधपवित्रं सप्तविंशतिनवसूत्र्या गुरुपवित्रं त्रिसूत्र्यांगदेवतापवित्राणि कुर्यात् ॥ शिवपवित्राणि लिंगविस्तारानुसारेण कुर्यात् ॥

देवपादयोः समर्पयेत् ॥ देवस्य करे वा वध्नीयात् ॥ ततो देवं पंचोपचारैः संपूज्य प्रार्थयेत् ॥ " आमंत्रितोऽसि देवेश पुराणपुरुषोत्तम ॥ प्रातस्त्वां पूजयिष्यामि सान्निध्यं कुरु ते नमः ॥" ततः साष्टांगं प्रणम्य पुष्पांजलिं दद्यात् ॥ इत्यधिवासनम् ॥

॥ अथ पवित्रपूजनम् ॥

ततो रात्रिं सत्कथाजागरेण नीत्वा प्रातःकाले सद्योऽधिवासने गोदोहांतरिते वा काले " पवित्रारोपणांगभूतं देवपूजनं पवित्रपूजनं च करिष्ये ॥ " इति संकल्प्य देवं पवित्राणि च फलाद्युपनैवेद्यांतं गंधाद्युपचारैः संपूज्य गंधदूर्वाक्षतयुतं कनिष्ठं पवित्रमादाय ॥ " देवदेव नमस्तुभ्यं गृहाणेदं पवित्रकम् ॥ पवित्रीकरणार्थाय वर्षपूजाफलप्रदम् । पवित्रकं कुरुष्वाद्य यन्मया दुष्कृतं कृतम् ॥ शुद्धो भवाम्यहं देव त्वत्प्रसादात्सुरेश्वर ॥ " इति मंत्रेण मूलसंपुटितेन वा दत्वा ॥ मध्यमोत्तमपवित्रं वनमालां चैवमेवतन्मंत्रावृत्त्या दद्यात् ॥ अंगदेवताभ्यो नाम्ना समर्प्य महानैवेद्यं दत्वा नीराज्य प्रार्थयेत् ॥ " मणिविद्रुममालाभिर्मंदारकुसुमादिभिः ॥ इयं सांवत्सरीपूजा तवास्तु गरुडध्वज ॥ वनमालां यथा देव कौस्तुभं सततं हृदि ॥ तद्वत्पवित्रतंतूस्त्वं पूजां च हृदये वह " ॥ ततो गुरुं संपूज्य पवित्रं दत्वा स्वयमपि सकुटुंबो धारयेत् ॥ ततो ब्राह्मणैः सह भुक्त्वा त्रिरात्रं ब्रह्मचर्यादिनियमान् देवे पवित्राणि धारयेत् ॥ देवस्य स्नानादिकोपचारान् पवित्राणि उत्तार्य कारयेत् ॥ ततस्त्रिरात्रान्ते देवं संपूज्य पवित्राणि विसर्जयेत् ॥ इति पवित्रारोपणविधिः ॥

---

## ॥ अथ उपाकर्मविधिः ॥

श्रीगणेशाय नमः ॥ तत्रादौ मृत्तिकागोमयकुशतिलसुमनोक्षतदूर्वापामार्गधात्रीफलसुगंधितैलकेसरान्वितश्रीखंडयज्ञोपवीतकुंकुमरक्षाधूपदीपनैवेद्यफलतांबूलदक्षिणादिकं गृहीत्वा जलाशयं गच्छेत् ॥ तत्र स्नानविधिं कुर्यात् ॥ नित्यस्नानं नद्यादौ ॥ पाणिपादं प्रक्षाल्याचम्य ॥ "देवदेव जगन्नाथ शंखचक्रगदाधर ॥ आज्ञां देहि च मे विष्णो तव तीर्थावगाहने ॥ १ ॥ नमः पुण्यजले देशे नमः सागरगामिनि ॥ कावेरि नर्मदे सिंधो जलेऽस्मिन् सन्निधिं कुरु ॥ २ ॥ सागरः स्वनानिर्घोषदंडहस्तासुरान्तक ॥ जगत्स्रष्टर्जगन्मार्दिन्नमामि त्वां सुरेश्वर ॥३॥" इत्युच्चार्य तीर्थस्नानं कुर्यात् ॥ ( अन्यथा फलमर्द्धं स्यात् क्षेत्रज्ञो हरते ध्रुवम् ॥) तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि" इति भैरवाय नमस्कृत्वा ॥ आचम्य कुशोपग्रहः ॥ उत्तिष्ठन्तु महद्भूता ये भूता भूमिपालकाः ॥ भूतानामविरोधेन स्नानकर्म समारभे ॥ १ ॥ तीर्थदेवते एष तेऽर्घः ॥ १ ॥ विष्णुपादाग्रसंभूते गङ्गे त्रिपथगामिनि ॥ धर्मद्रवेति विख्याता पापं मे हर जाह्नवि

---

१ तागड सोनी, वैद्य, सुथार, तपोधन, भाट, कायस्थ, लवाणा, भाटिया वगेरे जेने जनोई देवाय छे तेने, अने जेने जनोई नथी देतां छतां जेओ जनोई राखे छे तेमने बळेवने दिवसे जनोई पहेरावावानो आ विधि छे.

१ तत्र बह्वृचानां श्रावणशुक्लपक्षे श्रवणनक्षत्रं पंचमी हस्त इति कालत्रयम् ॥ तत्र श्रवणं मुख्यकालस्तदलाभे पंचम्यादिः ॥ पर्वणि श्रवणे कार्यं ग्रहसंक्रांत्यदूषिते ॥ अध्वर्युभिर्बह्वृचैश्च कथंचित्तदसंभवेः ॥ एवं भाद्रपदशुक्लपक्षेऽपि श्रवणं पंचमीहस्तकालत्रयनिर्णयो ज्ञेयः ॥ एतद्बह्वृचैः पूर्वाह्णे कार्यम् । यजुर्वेदिनां श्रावणपौर्णमासी मुख्यः कालः हिरण्यकेशीयतैत्तिरीयाणां श्रावणी पूर्णमासी मुख्यः कालस्तदभावे श्रावणे

॥ २ ॥ गङ्गे एष तेऽर्घः ॥ २ ॥ जाह्नवी सर्वतः पुण्या ब्रह्महत्यौघहारिणी ॥ वाराणस्यां विशेषेण गङ्गा ह्युत्तरवाहिनी ॥ ३ ॥ गङ्गे एष तेऽर्घः ॥ ३ ॥ मज्जन्ति मुनयः सर्वे त्वमेकः किं न मज्जसि ॥ मुक्तिस्त्वद्दर्शनादेवि न जाने स्नानजं फलम् ॥ ४ ॥ नर्मदे एष तेऽर्घः ॥ ४ ॥ प्रभाते वहते गङ्गा मध्याह्ने तु सरस्वती ॥ अपराह्णेऽन्यतीर्थानि रात्रौ वहति नर्मदा ॥ ५ ॥ रुद्रदेहे एष तेऽर्घः ॥ ५ ॥ इत्यादि मंत्रैरर्घ्यं दत्वा ॥ अद्येत्यादि० तिथौ मम कायिकवाचिकमानसिकसांसर्गिकचतुर्विधसकलपापक्षयार्थं कश्यपादिसप्तऋषीणां

---

हस्तः ॥ श्रावणशुक्लपंचमी तत्सूत्रेऽनुक्तत्वान्न ग्राह्या ॥ एतदेव भाद्रपदेऽपि कालद्वयमिति विशेषः ॥ हस्तनक्षत्रमपि औदयिकं संगवस्पर्शि ग्राह्यमन्यथा पूर्वविद्धमेव ॥ आपस्तंबानां श्रावणी पौर्णमासी मुख्या तदभावे भाद्रपदीति विशेषः ॥ बौधायनानां श्रावणी पूर्णमासी मुख्या दोषसंभावनया तदभावे आषाढीति विशेषः ॥ कण्वमाध्यंदिनादिकात्यायनानां श्रवणयुता श्रावणपूर्णिमा केवला वा हस्तयुक्ता पंचमी केवला वा मुख्यः कालः ॥ अतः केवलश्रवणे केवलहस्ते च तैर्न कार्यम् ॥ श्रावणमासे विघ्नदोषे भाद्रपदगतपूर्णिमापंचम्योः कार्यम् ॥ तिथेः खंडत्वे षण्मुहूर्ताधिक्ये उत्तरा षण्मुहूर्तन्यूनत्वे पूर्वा ग्राह्येत्यादि ॥ सामवेदिनां भाद्रपदशुक्लहस्तनक्षत्र मुख्यः कालः ॥ संक्रान्त्यादिदोषे तन्नासंभवे श्रावमासे हस्तो ग्राह्यः ॥ अन्ये तु भाद्रपदहस्ते दोषसंभवे श्रावणपौर्णमास्यामुपाकर्म कृत्वा भाद्रपदस्य हस्तपर्यन्तं न पठनीयं ततः परं पठनीयमिति वदन्ति ॥ अथर्ववेदिनां तु श्रावण्यां भाद्रपदगतायां वा पौर्णमास्यां उपाकर्म ॥ तिथिखंडे औदयिकसंगवकालव्यापिनी तिथिर्ग्राह्येत्युक्तम् ॥ सर्वशाखिनां श्रावणभाद्रपदमासगतस्वगृह्योक्तकालेषु ग्रहणसंक्रान्त्याशौचादिदोषसंभावनायां सर्वथा कर्मलोपप्राप्तौ शाखान्तरोक्तकालानां ग्राह्यत्वमावश्यकम् ॥ इति ॥

प्रीत्यर्थममुकतीर्थे दशविधस्नानसहितहेमाद्रिश्रवणपूर्वकं स्नानविधिना स्नानमहं करिष्ये ॥ इति संकल्प्य श्रीफलकुशतुलसीतिलयवाक्षतान् गृहीत्वा हेमाद्रिं शृणुयात् ॥

॥ अथ हेमाद्रिप्रयोगः ॥

॥ तद्यथा ॥ स्वस्तिश्रीजगदुत्पत्तिस्थितिलयकारणस्यानन्तवीर्यस्य रक्षाशिक्षाविचक्षणस्यादिनारायणस्य प्रणतपारिजातस्याचिन्त्यापरिमितशक्त्याध्रियमाणस्य महाजलौघमध्ये परिभ्रममाणानामनेककोटिब्रह्माण्डानामेकतमे व्यक्तमहदहंकारपृथिव्यप्तेजोवाय्वाकाशाद्यावरणैरावृतेऽस्मिन्महति ब्रह्माडे आधारशक्तिकूर्मानन्तोपरि प्रतिष्ठितस्यातलवितलसुतलतलातलरसातलमहातलपातालेतिसप्तपातालोकस्योपरितने भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनलोकतपोलोकसत्यलोकस्याधोभागे चक्रवालशैलमहावलयनागमध्यवर्तिनो महाकालमहाफणिराजशेषसहस्रफणानां मणिमडलमंडिते ऐरावतपुडरीकवामनकुमुदाञ्जनपुष्पदंतसार्वभौमसुप्रतीकाख्याष्टदिग्दन्तिशुण्डोत्तम्भिते अमरावत्यशोकवतीभोगवतीसिद्धवतीगांधर्वत्रतीकाचनवत्यलकावतीयशोवतीतिपुण्यपुरीप्रतिष्ठिते इंद्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानादिदिक्प्रतिष्ठिते लोकालोकाचलवलयिते लवणेक्षुरससुरासर्पिर्दधिक्षीरोदकयुक्तसप्तार्णवपरिवृते जंबूप्लक्षशाल्मलीकुशक्रौंचशाकपुष्कराख्यसप्तद्वीपयुते इंद्रकांस्यताम्रगभस्तिनागसौम्यगंधर्वचारणभारतेतिनवखडमडिते महेंद्रमलयसह्याद्रिहिमवत्कृक्षविन्ध्याद्रिपारियात्राद्यसप्तकुलपर्वतविराजिते मातंगहिरण्यशृंगमाल्यवन्तकिष्किन्धचित्रकूटादिपचमहानगरसहिते हेमशैलहेमकूटसुधाचलश्वेताचलशृंगावताख्ये महाशैलसमधिष्ठिते सुमेरुनिषधाद्रिश्रीकूटरजतकूटाभ्रकूटचित्रकूटहिमविंध्याचलादिसहिते हरिवर्षकिंपुरुषयोर्दक्षिणयोर्नवसहस्रविस्तीर्णे मलयाचलादुत्तरतः स्वर्णप्रस्थादारभ्येन्द्रद्युम्नलावृतकृतस्थितमहारण्यशुक्लपाचजन्यासिंहललंकाख्यनवभागात्मके महासरोरुहाकारपंचाशत्कोटियोजनविस्तीर्णे भारतकिंपुरुषहरीलावर्तकुरुभद्राश्वरमणकहिरण्मयकेतुमालाख्ये नवसहस्रयोजनविस्तीर्णे स्वर्णप्रस्थचंद्रप्रस्थसूक्तिकआवन्तकरमणकमहारमणकपांचजन्यसिंहलकेति-

नवखंडमंडितेऽशोकवत्यलकावतीसिद्धवतीगांधर्ववत्यादिपुण्यपुरीविराजिते भूमंडले भरतवर्षे भरतखंडे कर्मभूमौ कुमारिकानाम्नि क्षेत्रे जंबूद्वीपे लंकाकुरुक्षेत्रादिसमस्तभूमध्यरेखाया पश्चिमदिग्भागे श्रीतपतीनर्मदयोर्दक्षिणतटे पेक्ष्वारण्यदंडकारण्यविंध्यारण्यनैमिषारण्यगुहारण्यबदरिकारण्यचंपकारण्यद्वैतारण्यार्बुदारण्यदारुकारण्यकाम्यकारण्येत्येकादशारण्ययुते स्वाम्यधतिकुरुक्षेत्रे गंगाकावेरीयमुनासरस्वत्यादिमहानदीपुण्यतीर्थविलसिते अयोध्यामथुरामायाकाशीकांचीअवन्तिकागयाद्वारावतीख्याते महामुक्तिप्रदस्थले सगरनगरवत्सनगरकूर्मनगरस्वाम्यनगरमहामानससरोवराकारअमरावतीसेतुमाललोहिताक्षचकोरश्रीशैलकैलासानामुपरि समभूमध्यरेखाया· पूर्वदिग्भागे श्रीशैलपश्चिमदिग्भागे कृष्णागोदावर्योरन्तरे पवित्रतमदेशे शालिग्रामविश्वेश्वरादिसकलदेवताना सन्निधौ अस्य भगवत· श्रीमज्जलनिधिमध्यमध्यासितभुजंगभोगपर्यंकशयनस्यादिनारायणस्य लक्ष्मीपतेर्नाभिमंडलोत्थितस्य पद्मजस्य चतुराननस्य सकलजगत्स्रष्टुः परार्धद्वयजीविनो ब्रह्मणो द्वितीये परार्धे एकपंचाशत्तमे वर्षे प्रथममासे प्रथमपक्षे प्रथमदिवसे अह्नो द्वितीये यामे तृतीये मुहूर्ते रथान्तरादिद्वात्रिंशत्कल्पानां मध्ये अष्टमे श्वेतवराहकल्पे स्वायंभुवस्वारोचिषोत्तमतामसरैवतचाक्षुषाख्यषण्मन्वंतरेषु व्यतीतेषु सत्सु सप्तमे वैवस्वतमन्वन्तरे कृतत्रेताद्वापरकलिसंज्ञकानां चतुर्णां युगानां मध्ये वर्तमानाष्टाविंशतितमे कलियुगे प्रथमचरणे गोदावर्या उत्तरे भागे श्रीमन्नृपविक्रमार्कात् श्रीमन्नृपशालीवाहनाद्वा यथासंख्यागमेन चान्द्रसावनसौरादिमानपर्याप्ते प्रभवादि संवत्सराणामन्यतमे व्यावहारिकसंवत्सरे अमुकायने अमुकऋतौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं ग्रहगणविशेषेण विशिष्टायां शुभपुण्यतिथौ अस्मिन् महापुण्यकाले दुस्तरसंसारचक्रे नानाविधकर्मविपाकविचित्रैर्विविधादृष्टविचित्रासु चतुरशीतिलक्षभेदभिन्नासु योनिषु प्रत्येकमनेकविधपरिभ्रममाणस्य केनापि सुकृताविर्भावविशेषेणेदानीं मनुष्ययोनौ द्विजादिजन्मप्राप्तवतो ममानेक-

जन्माभ्यासादेरेतज्जन्मप्रभृत्येतत्क्षणपर्यन्तं बाल्यकौमारयौवनवार्द्धकेषु जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनोवाक्कायेन्द्रियव्यापारैः कामक्रोधलोभमोहमदमत्सरकृतानां वाक्पाणिपादपायुचक्षु-श्रोत्रजिह्वानासिकाभिश्च कृतानां प्रकाशाप्रकाशज्ञानाज्ञानकृतब्रह्महत्यासुरापानस्वर्णस्तेयगुरुदारगमनादितत्संसर्गिणां संसर्गेण च महापातकानां मातृपितृगुरुभ्रात्रादिनां ताडन-तर्जन-ब्राह्मणमर्मदोषकथनदेवद्विजगोसंबंधिद्रव्यापहरण-गुरुवधक्षेपण-तडागाधारामछेदन विषमप्रयोगादिछंदोनिंदाकरण-अकृत्याकरणान्यायकरण-धरणिवित्तापहरणादिविप्राचरणात्मोत्कर्षपरनिंदापरापवादानृतभाषण-पंक्तिभेदप्रतिश्रुताप्रदानादीनां ब्रह्महत्यासमानानां पलाण्डुलशुनगृंजनादिभक्षण-पुष्पिणीमुखास्वादन-क्षालनोदकपान-मुखनिसृतकपिलापयःपान-यज्ञोपवीतपरित्याग-कूटसाक्षीप्रदादीनां मद्यपानसमानानां पितृस्वसृमातृस्वसृभ्रातृभार्यातनयाभगिन्याचार्यतनयासेवक— सखिभार्याप्रव्रजिताशरणागताधात्रीवर्णोत्तमांत्यजाद्यगम्यागमनजनितानां गुरुदारसमानानां पशुसेवनप्रतिपत्प्रभृत्यनध्यायाध्यापनानश्रित्यपौरोहित्यदेवालयासंरक्षणीकरणकृषिकर्मशिल्पविद्याभ्यासादिजनितानां स्वर्णस्तेयसमानानां ब्राह्मणस्त्रीगमन-विधवागमन-शूद्रस्त्रीगमन-वेश्यागमनसाधारणस्त्रीगमनवधूगमनप्रतिलोमजागमनस्वस्त्रीऋतावगमन- पशुयोनिगमन-मनसाभिलापपरस्त्रीनिरीक्षण-परस्त्रीस्पर्शनसंभाषणागम्यागमन - अभक्ष्याभक्षणाभोज्याभोजनासेव्यसेवनालेह्यालेहनाश्राव्यश्रावणाहिंस्यहिंसनाचोष्यचोषणापेयपेयास्पृश्यस्पर्शनपरमर्मोद्घाटन-देवब्राह्मणवृत्तिछेदन भार्याविसर्जन मातृपितृतिरस्कारात्मस्तुति-गुरुनिंदाद्विजनिन्दा-ब्राह्मणनिंदा-यतिनिंदा-परनिंदा-द्विजभेद-पितृभेद-स्त्रीपुरुषभेद-स्थूलसूक्ष्मजीवहिंसन-क्रूरकर्मान्वितसर्वलुब्धकपिशुन-चौरपाखंडचांडालशवास्थिस्पर्शन-दिवामिथुन-एकादश्यान्न- सूतकान्न-गर्हितान्न- पतितान्न-राजार्पितान्न - भिक्षुकान्न - कांस्यपात्रभोजन - वटाश्वत्थार्ककुंभीतिन्दुकपत्रभोजन-ऋणानपाकरण- पर्णविक्रय - परभेदन -गर्भपातन-हिंसामंत्रविधान-भ्रूणहत्या संकरीकरण-मलिनीकरणापात्रीकरण-जातीभ्रंशकरणायाज्ययाजन - ब्राह्मणस्त्रीबालगोपशुकृमिकीटादिजीववध-मिथ्याक्रमुकभक्षण-असाक्षीभोजनतांबूलभक्षणाहःखट्वारोहतोयपान-

देवगुरुब्राह्मणाग्रे पादुकारोहण-गोयान-वृषभयान महिषीयान-गर्दभयानो ष्ट्रयान-ब्राह्मणयान-अजयान- भृत्यामरण-स्वग्रामत्याग-गोत्रियत्याग- दूरस्थनिमरण-विप्राशाभेदन-अवदिताशीर्वाद-हयविक्रय- रसविक्रय- गोविक्रय कन्याविक्रय दासीविक्रय-राजप्रतिग्रह- परद्रव्यापहरण शौच विरहित स्नानविरहित-आपोशनविरहित- वैश्वदेवविरहित- ( शूद्र श्वेत्पचभागविरहित ) भोजन-सहापत्यभोजन- पतितसभाषणभोजन- क्रमुकपानभोजन-मार्जारोच्छिष्टभोजन-पतितपंक्तिभोजन परस्परस्पर्श- भोजनेत्यादि - स्वर्गेन्द्रियनिपाताद्यष्टमीचतुर्दशीदिवाभोजन - भानु वारपर्वदिनरात्रिभोजन - गर्भिणीस्त्रीमनोरथाकरण-काराग्रहनिवासा मेध्यनिवास-नदीलंघन-समुद्रस्नानादीना पापाना परिहारार्थं मम सम स्तपितृणा स्वस्य च पुनरावृत्तिरहितशाश्वतब्रह्मलोकफलप्राप्त्यर्थं च ( अत्र विशेषः ।। ) मम समस्तपितृणाम् आत्मनश्च तथा विष्णुलोक प्राप्त्यर्थम्, अधीतानामध्येष्यमाणानां चाध्यायानां स्थापनविच्छे- दाक्रोशघोषणदन्तविश्लिष्टदुष्टसद्रुतोच्चारितवर्णानां पूर्वसवर्णानां गलोप- लंम्वितावितोच्चारितवर्णानां श्लिष्टास्पृष्टवर्णविघट्टनादिभिः पठितानां श्रुतीनां यद्यातयामत्व तत्परिहारार्थम् अष्टत्रिंशदनध्यायाध्ययने रथ्या संचरतः शूद्रस्य शृण्वतोऽध्ययने म्लेच्छान्त्यजादेः शृण्वतोऽअध्ययने अशुचिदेशेऽध्ययने आत्मनोऽशुचित्वेऽध्ययने अक्षरस्वरानुस्वारपद- च्छेदकंडिकाव्यंजनह्रस्वदीर्घप्लुतकंठतालुमूर्द्धन्योष्ठदन्त्यनासिकानुना सिकरेफजिह्वामूलीयोपध्मानीयोदात्तानुदात्तस्वरितादीनां व्यत्ययेनो च्चारे माधुर्याक्षरव्यक्तिहीनत्वाद्यनेकमत्ययत्रायपरिहारपूर्वकं सर्वस्य वेदस्य सवीर्यत्वसंपादनद्वारा यथावत्फलप्राप्त्यर्थं मद्वश्यानां दश पूर्वेषां दश परेषां नरकादुत्तारणार्थं मासोपवासादिमहाव्रतानां तुलापुरुषादि- महादानानां च कोटिगुणितफलप्राप्त्यर्थमैहिकसकलभोगमाप्तये धर्मार्थ काममोक्षाणां सिद्ध्यर्थं मम च वालखिल्यादिसप्तऋषिमंडलपर्यन्तं

सर्वराश्यपकर्षसंमिते काले रुद्रलोकनिवाससिद्ध्यर्थं महापातकव्यतिरिक्तानां पापानां निर्बर्हणार्थं ( मनसोद्दिष्टं देहशुद्धिप्रायश्चित्तं सुवर्णं तन्निष्क्रयभूतं मनसोद्दिष्टं द्रव्यमहमुत्सृजे तेन पापहा महाविष्णुः प्रीयताम् ॥ ततो ) गंगादितीर्थे स्नानमहं करिष्ये ॥ इति हेमाद्रिं श्रुत्वा भस्मादि दशविधस्नानं कुर्यात् ॥

---

॥ अथ दशविधस्नानम् ॥

१ प्रथमं भस्मस्नानम् ॥ यथाग्निर्दहते भस्म तृणकाष्ठादिसंचयम् ॥ तथा मे दहतां पापं कुरु भस्म शुचे शुचिम् ॥ १ ॥ २ मृत्तिकास्नानम् ॥ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुंधरे ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ मृत्तिके ब्रह्मदत्तासि काश्यपेनाभिमंत्रिता ॥ २ ॥ ३ गोमयस्नानम् ॥ गोमये वसते लक्ष्मीः पवित्रं सर्वमंगलम् ॥ स्नानार्थं संस्कृतं देव पापं मे हर गोमय ॥ अग्रमग्रं चरन्तीनामौषधीनां वने वने ॥ तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥ यन्मे रोगं च शोकं च तन्मे दहतु गोमय ॥ ३ ॥ ४ पंचगव्यस्नानम् ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ सर्वपापविशुद्ध्यर्थं पंचगव्यं पुनातु माम् ॥ ४ ॥ ५ गोरजस्नानम् ॥ गवां क्षुरेण *निर्धूतं यद्रेणुगगने गतम् ॥ शिरसा तेन संलेपो महापातकनाशनम् ॥५॥* ६ धान्यस्नानम् ॥ धान्यौषधी मनुष्याणां जीवनं परमं स्मृतम् ॥ तेन स्नानेन देवेश मम पापं व्यपोहतु ॥ ६ ॥ ७ फलस्नानम् ॥ वनस्पतिरसो दिव्यः फलपुष्पभृत् सदा ॥ तेन स्नानेन मे देव फलं पुष्पमनन्तकम्॥७॥ ८ सर्वौषधीस्नानम् ॥ औषध्यः सर्ववृक्षाणां तृणगुल्मलतोद्भवाः ॥ दूर्वासर्षपसंयुक्ताः सर्वौषध्यः पुनन्तु माम् ॥ ८ ॥ ९ हिरण्यस्नानम् ॥ हिरण्यं गर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदं मम पापं व्यपोहतु ॥९॥ १० (कुशोदकस्नानं) गंगोदकस्नानम् ॥ विष्णुपादाग्रसंभूते गंगे त्रिपथगामिनि ॥ धर्मद्रवेति विख्याता पापं मे हर जाह्नवि ॥ १० ॥

॥ इति दशविधस्नानम् ॥

---

•

## ॥ अथ मृत्तिकास्नानम् ॥

एवं दशविधिस्नानं कृत्वा स्नात्वा आचम्य "वरुणाय नमः" इति मंत्रेण जलस्पर्शनम् ॥ यानि कानि च पापानि जन्मान्तरकृतानि च ॥ तानि तानि विनश्यन्तु प्रदक्षिणपदे पदे ॥ "वरुणाय नमः" इति मंत्रेण जलमावर्त्तयेत् ॥ ततो हस्ते जलं गृहीत्वा "अद्भ्यो नमः" इति "मम पापं यातु" इति कामक्रोधलोभमोहमदमात्सर्याणां त्यागार्थं वामभागे-जलप्रक्षेपः ॥ ततः "अमुकतीर्थाय नमः" इत्यंजलिं दत्वा मृत्तिकाग्रहणं कुर्यात् ॥ मृत्तिकायाः त्रिभागं कृत्वा आद्यभागमादाय प्रार्थना ॥ अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे ॥ उद्धृतासि वराहेण कृष्णेन शतबाहुना ॥ १ ॥ मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम् ॥ त्वया हृतेन पापेन सर्वपापैः प्रमुच्यते ॥ २ ॥ कटिबस्त्यूरुजंघाः चरणौ करौ मृदा त्रिभिस्त्रिभिः प्रक्षाल्य ॥ आचम्य पुनर्द्वितीयभागमादाय ॥ कटिबस्त्यूरु० प्रक्षाल्य उदकं नमस्कृत्य ॥ पुनर्मृत्तिकां गृहीत्वा "विष्णवे नमः" इति मंत्रेण सर्वांगे मृदमनुलिंपेत् ॥ ततः सूर्याभिमुखः सन् निमज्जेत् ॥ "अद्भ्यो नमः" इति मंत्रेण द्विवारं स्नात्वा निमज्ज्य उन्मज्ज्य आचामेत् ॥ ततो गोमयग्रहणम् ॥ अग्रमग्रं चरन्तीनामौषधीनां वने वने ॥ तासामृषभपत्नीनां पवित्रं कायशोधनम् ॥ १ ॥ यन्मे रोगं च शोकं च पापं मे हर गोमय ॥ गोमयेन नरः स्नायादापादतलमस्तकम् ॥ २ ॥ सुस्नातः सर्वतीर्थेषु पुनः संवत्सरं भवेत् ॥ ३ ॥ "रुद्राय नमः" इति मंत्रेण सर्वांगं गोमयेन विलिंपेत् ॥ स्नात्वाऽऽचम्याभिषिंचेत् ॥ इति मृत्तिकास्नानम् ॥

---

१ जलमा अगुठो फेरववो । २ केडथी नीचेना भागमा पग सुधी त्रण वार मृत्तिका चोपडवी

## ॥ अथ मार्जनम् ॥

तत्रादौ कुशैर्मार्जनं कुर्यात् ॥ "वरुणाय नमः" इत्यष्टवारम् ॥ परमात्मने०। अग्नये०। वायवे०। सूर्याय०। सवित्रे०। यज्ञाय०। निमज्ज्य उन्मज्ज्य आचम्य ॥ "अद्भ्यो नमः" इति द्वाविंशति ( २२ ) वारम् ॥ जातवेदसे०। सवित्रे०। आदित्येभ्यो०। इत्येतैर्नामभिः ऊर्ध्वं दर्भैः पावयित्वा ॥ ततो दूर्वापामार्गग्रहणम् । दूर्वे ह्यमृतसंपन्ने शतमूले शतांकुरे ॥ शतपातकसंहर्त्रि शतमायुष्यवर्द्धिनी ॥ १ ॥ अपामार्गाय० । पुनः । परमात्मने०। अग्नये०। वायवे० । सूर्याय० । सवित्रे०। इति पावयित्वा ॥ हस्ते जलं गृहीत्वा ॥ "परमात्मने नमः"॥ इत्याघ्राय वामभागे प्रक्षेपः॥ एवमघमर्षणं कृत्वा "विष्णवे नमः" इति॥ ततः स्नानांगतर्पणम् ॥ देवतीर्थेन ब्रह्मादयो देवास्तृप्यन्ताम् ॥ देवपत्न्यस्तृ० ॥ देवगणास्तृ० ॥ देवबंधवस्तृ०॥ देवसुतास्तृ०॥ सर्वे देवास्तृ०॥ ततः उपवीतं कंठ्यं कृत्वा द्वौ द्वौ अंजली दद्यात्॥ कृष्णद्वैपायनादिऋषयस्तृ० ॥ ऋषिपत्न्यस्तृ० ॥ ऋषिगणास्तृ० ॥ ऋषिबंधवस्तृ० ॥ ऋषिसुतास्तृ० ॥ सर्वऋषयस्तृ० ॥ ततोऽपसव्यं कृत्वा अंजलित्रयं दद्यात् ॥ कव्यवाडनलादयः पितरस्तृ० ॥ पितृपत्न्यस्तृ०॥ पितृगणास्तृ० ॥ पितृबंधवस्तृ० ॥ पितृसुतास्तृ० ॥ सर्वे पितरस्तृप्यन्ताम् ॥ सव्यम् । आचमनम् ॥ ये च वृक्षेपु गुह्येपु पितरो मे व्यवस्थिताः ॥ ते सर्वे तृप्तिमायान्तु मयोच्छिष्टैः शिखोदकैः ॥ १ ॥ इति मंत्रेण शिखां निष्पीड्य ॥ ततः—यन्मया दुष्कृतं तोयं शारीरं मलसंयुतम् ॥ तस्य पापस्य शुद्ध्यर्थं यक्ष्माणं तर्पयाम्यहम् ॥ इति मंत्रेण तीर्थतटे अंजलिप्रक्षेपः ॥ उत्तीर्य धौते वाससी परिधाय मृदा ऊरू करौ

प्रक्षाल्याचम्य ॥ ततो वर्तुलं तिलकं मुद्रादिकं ललाटे कुर्यात् ॥ एवं स्नानं प्रातर्मध्याह्ने च कार्यम् ॥ अशक्तौ मध्याह्ने एव कुर्यात् ॥

॥ इति हेमाद्रिसहितस्नानविधिप्रयोगः ॥

---

## ॥ अथ वैश्यसंध्यावंदनविधिः ॥

" ह्रीं ब्रह्मणे नमः " इति नमस्कृत्य " ह्रीं कृष्णाय विद्महे दामोदराय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ " इति शिखां बद्ध्वा "ह्रीं गंगाविष्णुः" इति मंत्रेण ऐशान्याभिमुख आचम्य ॥ "अपवित्रः पवित्रो वा०" इति मंत्रेणात्मानं जलेन संप्रोक्ष्य पुनः शिखां संस्पृश्य ॥ " ह्रीं अनिरुद्धाय नमः " इति मंत्रेण पुनराचामेत् ॥ ततो वारिणाऽऽत्मानं वेष्टयित्वा समणवगायत्र्या रक्षां कुर्यात् ॥ ह्रींकारं बिंदुसंयुक्तं नित्यं ध्यायन्ति योगिनः ॥ कामदं मोक्षदं चैव ह्रींकाराय नमो नमः॥ हरये० । अच्युताय० । गोविंदाय० । हृषीकेशाय० ॥ इति सर्वानेतान् स्मृत्वा बद्धासनः संमीलितनयनो मौनी प्राणायामत्रयं[1] कुर्यात् "ह्रीं कृष्णाय विद्महे० इति ॥ सूर्याय० । आचमने विनियोगः॥ " ह्रीं नीलकंठाय नमः । " इति प्रातराचामेत् ॥ " ह्रीं विष्णवे नमः " आचमने विनियोगः॥ " ह्रीं सर्वात्मने नमः " इति मध्याह्ने आचामेत् ॥ " ह्रीं रुद्रऋषये नमः " आचमने विनियोगः ॥ " ह्रीं प्रद्युम्नाय नमः।"

---

१ तत्र वायोरादानकाले पूरकनामा प्राणायामः ॥ तत्र श्यामवर्णं चतुर्भुजं विष्णुं नाभौ ध्यायेत् ॥ धारणकाले कुंभकनामा प्राणायामस्तत्र रक्तवर्णं चतुर्मुखं ब्रह्माणं हृदि ध्यायेत् ॥ त्यागकाले रेचकनामा प्राणायामस्तत्र श्वेतवर्णं शिवं त्रिनेत्रं ललाटदेशे ध्यायेत् ॥ प्रत्येकं त्रिर्मंत्राभ्यासं कुर्यात् ॥

इति सायमाचामेत् ॥ अथ मार्जनम् ॥ ॐ ह्रीं विष्णुः पुनातु मार्जने विनियोगः ॥ केशवाय० । माधवाय० । वामनाय० । त्रिविक्रमाय० । श्रीधराय० । पद्मनाभाय० । वासुदेवाय० । (भूमौ) विष्णवे०॥ (पुनः शिरसि मार्जनम् ॥ ) "वरुणाय नमः" इति त्रिः पठित्वा शिरसि जलं क्षिपेत् ॥ "संकर्षणाय० ।" अघमर्षणे विनियोगः ॥ ततः करस्थं जलं नासिकायां संयोज्य आयतासुरनायतासुर्वा ॥ "ह्रीं दामोदराय नमः" इति त्रिः पठित्वा तज्जलं भूमौ क्षिपेत् ॥ "परमात्मने नमः" इत्याचामेत् ॥ तत उत्थाय गंधपुष्पमिश्रितं जलं हस्ताभ्यां चादाय गायत्र्या सूर्याभिमुखं क्षिपेत् ॥ "ह्रीं कृष्णाय विद्महे दामोदराय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ ह्रीं नमो नारायणाय" इत्यर्घ्यदानम् ॥ ततः प्रातः सायं च कृतांजलिर्मध्याह्ने ऊर्ध्वबाहुः सूर्याभिमुखमुपतिष्ठेत् । हस्तयोर्गन्धपुष्पे चादाय– नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयाय त्रिगुणात्मधारिणे विरिंचिनारायणशंकरात्मने ॥ १ ॥ इत्युपस्थानं पठित्वा न्यासान् कुर्यात् ॥ ह्रीं कृष्णाय अंगुष्ठाभ्यां नमः ॥ विद्महे तर्जनीभ्यां० ॥ दामोदराय मध्यमाभ्यां० ॥ धीमहि अनामिकाभ्यां० ॥ तन्नो विष्णुः कनिष्ठिकाभ्यां० ॥ प्रचोदयात् करतलकरपृष्ठाभ्यां नमः ॥ एवं हृदयादिषडंगन्यासं कृत्वा ॥ पूर्वोक्तम् ऋष्यादिकं स्मृत्वा गायत्रीस्वरूपं ध्यायेत् ॥ इति ध्यात्वा गायत्रीमावाहयेत् ॥ आगच्छ वरदे देवि-

---

१ गायत्रीं भावयेद्देवीं सूर्यासनकृताश्रयाम् ॥ उद्यदादित्यसंकाशां पुस्तकाक्षधरां वराम् ॥ १ ॥ इति प्रातर्ध्यानम् ॥ चतुर्भुजां श्यामवर्णां शंखचक्रलसत्कराम् ॥ गदापद्मधरां देवीं पद्मासनकृताश्रयाम् ॥ २ ॥ इतिमध्याह्नध्यानम्॥ सायाह्ने वरदां देवीं गायत्रीं संस्मरेद्द्युतिम्॥ शुक्लांवरधरां देवीं वृषासनकृताश्रयाम् ॥ ३ ॥ इति सायं ध्यानम् ॥ १ सूर्योपस्थानसमये केचित् "सहस्त्रोर्वङ्घ्रिबाह्वक्षः सहस्त्राननशीर्षवान्" ॥ इति पूर्वोक्तं (पृष्ठ ५८) द्वितीयं पुरुषसूक्तं पठन्ति ॥

त्र्यक्षरे ब्रह्मवादिनि ॥ गायत्रि जगतां मातर्विश्वयोने नमोऽस्तु ते ॥४॥ इत्यावाह्य ततो " ह्रीं कृष्णाय विद्महे० " इति गायत्रीं यथाशक्ति जप्त्वा सूर्याय नमस्कारं कुर्यात् ॥ तत्र मंत्राः ॥ नमोऽस्तु सूर्याय सहस्रभानवे नमोऽस्तु वैश्वानर जातवेदसे ॥ त्वमेव चार्घ्यं प्रतिगृह्ण सूर्य देवाधिदेवाय नमो नमस्ते ॥ १ ॥ अग्रतश्च नमस्तुभ्यं पृष्ठतश्च सदा नमः ॥ पार्श्वतश्च नमस्तुभ्यं नमस्ते चास्तु सर्वदा ॥ २ ॥ यन्मंडलं गूढमतिप्रबोधं धर्मस्य वृद्धिं कुरुते जनानाम् ॥ तत्सर्वपापक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम् ॥ ३ ॥ इति उपस्थाय प्रदक्षिणां कुर्यात् ॥ यानि कानि च पापानि जन्मान्तरकृतानि च ॥ तानि सर्वाणि नश्यन्ति प्रदक्षिणं पदे पदे॥१॥ इति प्रदक्षिणां कृत्वा नमस्कृत्योपविशेत् ॥ जल मादाय ॥ कृतं कर्म श्रीकृष्णार्पणमस्तु ॥

॥ इति वैश्यसंध्यावन्दनविधिः ॥

---

## ॥ अथ ब्रह्मयज्ञविधिः ॥

तत्रादौ दर्भासने उपविश्याचम्य । जलमादाय ॥ अद्येत्यादि० तिथौ परमेश्वरप्रीत्यर्थं यथाशक्ति ब्रह्मयज्ञं करिष्ये ॥ सजलयवाक्षत-कुशान्वितं करसंपुटं कृत्वा दक्षिणजानोरुपरि निधाय ॥ ह्रीं यो देवः सविताऽस्माकं मनः प्राणेन्द्रियक्रियाः ॥ प्रचोदयाति तद्भर्गो वरेण्यं समुपास्महे ॥ ह्रीं स्वस्ति ॥ इति गायत्रीमंत्र ( ३ ) त्रिवारं पठित्वा ॥ ऋग्वेदाय नमः । यजुर्वेदाय० । सामवेदाय० । अथर्ववेदाय० । शिक्षायै० । कल्पाय० । व्याकरणाय० । निरुक्ताय० । ज्योतिषे० । छन्दोविचित्यै० । अध्यात्मविद्यायै० । इतिहासपुराणेभ्यो० । तर्कविद्यायै० । पूर्वमीमांसायै० । इति जपित्वा ॥ देवताभ्यः पितृभ्यश्च महायोगिभ्य

एव च ॥ नमः स्वाहायै स्वधायै नित्यमेव नमो नमः ॥ इति त्रिवारं ( ३ ) पठेत् ॥ इति विद्यातपोयोनिरयोनिर्विष्णुरीडितः ॥ वाग्यज्ञेनार्चितो देवः प्रीयतां मे जनार्दनः ॥ १ ॥ नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ॥ देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ २ ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ३ ॥ जलमादाय–अनेन ब्रह्मयज्ञाख्येन कर्मणा भगवान् परमेश्वरः प्रीयताम् ॥ इति ब्रह्मयज्ञविधिः ॥

---

## ॥ अथ नित्यतर्पणप्रयोगः ॥

हस्ते जलमादाय–नित्यकर्मांगभूतं देवऋषिमनुष्यपितृतर्पणमहं करिष्ये॥ इति संकल्प्य शुद्धपात्रे जलं प्रपूर्य तन्मध्ये गंधाक्षतपुष्पं प्रक्षिप्य दक्षिणं जान्वाच्य प्राङ्मुखः समदर्भाक्षतैर्हस्तद्वयेन देवतीर्थेन पात्रान्तरे ब्रह्मादिदेवान् तर्पयेत् ॥ ब्रह्मा तृप्यताम् । विष्णुस्तृ०। रुद्रस्तृ०। प्रजापतिस्तृ० । देवास्तृ० । छंदांसि तृ० । वेदास्तृ० । ऋषयस्तृ० । पुराणाचार्यास्तृ० । गंधर्वास्तृ० । इतराचार्यास्तृ० । संवत्सरः सावयवस्तृ० । देव्यस्तृ० । अप्सरसस्तृ० । देवानुगास्तृ० । नागास्तृ० । सागरास्तृ० । पर्वतास्तृ० । सरितस्तृ० । मनुष्यास्तृ० । यक्षास्तृ० । रक्षांसि० । पिशाचास्तृ० । सुपर्णास्तृ० । भूतानि तृ० । पशवस्तृ० । वनस्पतयस्तृ० । ओषधयस्तृ० । भूतग्रामश्चतुर्विधस्तृप्यताम् ॥ उपवीतं कंठे कृत्वा उदगग्रदर्भमध्येन प्रजापतितीर्थेन तिलाक्षतमिश्रौ द्वौ द्वावंजली मंत्रावृत्त्या दद्यात् ॥ सनकस्तृप्यतु ॥ २ ॥ सनंदनस्तृ० ॥ २ ॥

---

१ जमणो घूंटण ऊंचो वाळवो

सनातनस्तृ० ॥ २ ॥ कपिलस्तृ० ॥ २ ॥ आसुरिस्तृ० ॥ २ ॥ वोढुस्तृ० ॥ २ ॥ पंचशिखस्तृ० ॥ २ ॥ इति मनुष्यतर्पणम् ॥ अथ पितृतर्पणम् ॥ दक्षिणाभिमुखः सव्य जान्वाच्य अपसव्यं कृत्वा पितृतीर्थेन द्विगुणदर्भैस्तिलमिश्रैस्त्रींस्त्रीनंजलीन् दद्यात् ॥ कव्यवाडनलस्तृप्यताम् ॥३॥ सोमस्तृ० ॥ ३ ॥ यमस्तृ० ॥३॥ अर्यमास्तृ० ॥३॥ अग्निष्वात्ताः पितरस्तृ० ॥ ३ ॥ सोमपाः पितरस्तृ० ॥ ३ ॥ बर्हिषदः पितरस्तृ० ॥ ३ ॥ यमाय नमः ॥ ३ ॥ धर्मराजाय० ॥ ३ मृत्यवे० ॥ ३ ॥ अन्तकाय० ॥ ३ ॥ वैवस्वताय० ॥ ३ ॥ कालाय० ॥३॥ सर्वभूतक्षयाय० ॥ ३ औदुंबराय० ॥ ३ ॥ दध्नाय० ॥ ३ ॥ नीलाय० ॥ ३ ॥ परमेष्ठिने० ॥ ३ ॥ वृकोदराय० ॥ ३ ॥ चित्राय० ॥ ३ ॥ चित्रगुप्ताय० ॥ ३ ॥ ( जीवत्पितृकोप्येतदन्तान्सर्वांस्तर्पयेत् ॥ ) ततः स्वपितृतर्पणम् ॥ तिलान्गृहीत्वा ॥ काश्यपगोत्रः अस्मत्पिता अमुकदासः वसुरूपः इदं जलं तस्मै स्वधा नमः ॥ इदं जलं तस्मै स्वधा नमः ॥ इदं जलं तस्मै स्वधा नमः ॥ एवं सर्वत्र त्रिवारोच्चारणम् ॥ का० गो० अ० पितामहः रुद्ररूपः इदं० ॥ ३ ॥ का० गो० अ० प्रपितामहः आदित्यरूपः इदं० ॥ ३ ॥ का० गो० अ० माता वसुरूपा इद जलं तस्यै० ॥३॥ का० गो० अ० पितामही रुद्र० इदं० ॥३॥ का०गो०अ० प्रपितामही आदित्य०इदं०॥ द्वितीयगोत्रः अस्म०मातामहः सपत्नीकः ससुतः वसु०॥३॥ अ०प्रमातामह० रुद्र०॥३॥ अस्मद्वृद्धप्रमा-

---

१ ताताम्बात्रितय सपत्नजननी मातामहादित्रय सस्त्रि स्त्रीतनयादि तातजननीस्वभ्रातर सस्त्रिय ॥ ताताम्बात्मभगिन्यपत्यधवयुग्जा यापिता सद्गुरु शिष्याप्ता पितरो महालयविधौ तीर्थे तथा तर्पणे ॥ १ ॥

तामह०आदित्य०॥३।अस्मत्पत्नी व०।अस्मत्पुत्रः व०। अस्मत्कन्या व०। अस्मत्पितृव्यकःसपत्नीकःव०।अस्मन्मातुलःसपत्नीकःव०।अस्मद्भ्राता सपत्नीकः व०। अ०पितृस्वसा सभर्तृकासापत्यका व०। अ० मातृस्वसा सभ० सापत्यका व०।अ०भगिनी सभ०।अ० श्वशुर०।अ०शिष्य०।अ० आप्त०।३। पितृवंशे मृता ये च मातृवंशे तथैव च॥गुरुश्वशुरबंधूनां ये चान्ये बांधवाःस्मृताः॥ ये मे कुले लुप्तपिंडाः पुत्रदारविवर्जिताः॥ क्रियालोपगता ये च जात्यन्धाःपंगवस्तथा॥ विरूपा आमगर्भाश्च ज्ञाताज्ञाताःकुले मम॥ तेषां जलं मया दत्तमक्षय्यमुपतिष्ठतु ॥ आब्रह्मस्तंबपर्यन्तं देवर्षिपितृमानवाः॥ ते सर्वे तृप्तिमायान्तु इदमस्तु तिलोदकम्॥ इत्यञ्जलीन् दत्वा॥ ये के चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः॥ ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम्॥ इति वस्त्रनिष्पीडनोदकं दद्यात् ॥ सव्यम् ॥ ॥ आचमनम् । जलमध्ये षट्कोणं विलिख्य देवानर्चयेत् ॥ ब्रह्मणे नमः गंधं पुष्पं सम० । विष्णवे० । रुद्राय० । सवित्रे० । मित्राय० । वरुणाय० । ततः सूर्यायार्घं दद्यात् ॥ चंदनाक्षतपुष्पैर्युतमर्घं गृहीत्वा ॥ नमो विवस्वते तुभ्यं भास्वते विष्णुतेजसे ॥ नमः सवित्रे शुचये सवित्रे कर्मदायिने ॥ सूर्याय एष तेऽर्घः ॥ उपस्थानम् ॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयाय त्रिगुणात्मधारिणे विरिंचिनारायणशंकरात्मने॥इत्युपस्थानम्॥ नमस्कारः पूर्वादिदिक्षु–इन्द्राय० ।अग्नये०।यमाय०।निर्ऋतये०। वरुणाय०। वायवे० । सोमाय० । ईशानाय० । ब्रह्मणे० । अनन्ताय० ॥ इति हस्तद्वयेन नमस्कारः ॥ ब्रह्मणे० । अग्नये० । पृथिव्यै० । ओषधिभ्यो० । वायवे० । वाचस्पतये० । विष्णवे० । मरुद्भयो० । अपांपतये० । वरुणाय०॥ जलेन मुखं विमृज्य ॥ "देवेभ्यो नमः" इति विसर्जयेत् ॥

जलमादाय ॥ अद्येत्यादि० तिथौ ब्रह्मयज्ञपूर्वकदेवऋषिमनुष्यपितृतर्पणाख्येन कर्मणा भगवान्परमेश्वरः प्रीयताम् ॥ ततो यथालाभोपचारैः विष्णोः सप्तऋषीणां च एकतंत्रेण पूजनं कुर्यात् ॥ इति ॥

॥ इति देवऋषिमनुष्यपितृतर्पणम् ॥

---

## ॥ अथ सप्तर्षिपूजनम् ॥

जलमादाय ॥ अद्येत्यादि० तिथौ ममात्मनः सर्व कामनासिद्ध्यर्थं कश्यपादिसप्तऋषिप्रीतये नूतनयज्ञोपवीतधारणांगकर्मनिमित्त विष्णवरुन्धतीसहितसप्तर्षीणां स्थापनप्रतिष्ठापूजनमहं करिष्ये ॥ इति संकल्प्य हस्ते सर्षपानक्षतान् वा गृहीत्वा "अपसर्पंतु०" इति दिग्रक्षणं कृत्वा स्ववामभागे कलशं संस्थाप्य "कलशस्य०" इति कलशाराधनं च कृत्वा अंगन्यासांश्च कुर्यात् । न पादाभ्यां नमः । मों जानुभ्यां० । भ कटिभ्यां० । गं नाभ्यै० । वं हृदयाय० । तें बाहुभ्यां० । वां कठाय० । सं मुखाय० । दें नेत्राभ्यां० । वां ललाटाय० । य मूर्ध्ने० । एवं देहन्यासं कृत्वा शखघंटाद्यर्चनं पूर्ववत् कुर्यात् ॥ तत आत्मसन्मुखः विष्णुमूर्तिर्मा दर्भवटु वा संस्थाप्य तत्पूर्वे काष्ठमयपीठे श्वेतवस्त्रं प्रसार्य तदुपरि अष्टतंडुलपुंजान् उदक्संस्थान् कृत्वा तदुपरि दर्भमयान् सप्तर्षीन् अरुधन्तीं च संस्थाप्य ॥ हस्ते अक्षतान् गृहीत्वा ॥ कश्यपः सर्वलोकाढ्यः सर्वभूतदयाकरः ॥ अतस्त्वं प्रार्थयामीश पूजेयं प्रतिगृह्यताम् ॥१॥ कश्यपाय नमः कश्यपमावाहयामि स्थापयामि ॥ १॥ अत्रये तु नमस्तुभ्यं सर्वलोकहितैषिणे ॥ तपोरूपाय सत्याय ब्रह्मणेऽमिततेजसे ॥ २ ॥ अत्रये० अत्रिमावा० स्था० ॥ २ ॥ भरद्वाज नमस्तेऽस्तु सदाध्ययनतत्परम् ॥ आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रति-

गृह्यताम् ॥ ३ ॥ भरद्वाजाय० भरद्वाजमावा० स्था० ॥ ३ ॥ विश्वामित्र नमस्तुभ्यं ज्वलदग्निसमप्रभम् ॥ अध्यक्षीकृतगायत्रीतपोरूपेण संस्थितम् ॥ ४ ॥ विश्वामित्राय० विश्वामित्रमावा० स्था० ॥ ४ ॥ गौतमः सर्वभूतानामृषीणां च महाप्रियः ॥ श्रौतानां कर्मणां चैव संप्रदायप्रवर्त्तकः ॥ ५ ॥ गौतमाय० गौतममावा० स्था० ॥ ५ ॥ जमदग्निर्महातेजास्तपसा ज्वलति ध्रुवम् ॥ आवाहयामि यज्ञेऽस्मिन्पूजेयं प्रतिगृह्यताम् ॥ ६ ॥ जमदग्नये० जमदग्निमावा० स्था० ॥ ६ ॥ नमस्तुभ्यं वसिष्ठाय कर्मकर्त्रे महामुने ॥ धर्मरूपाय महते लोकानां हितकारिणे ॥ ७ ॥ वसिष्ठाय० वसिष्ठमावा० स्था० ॥ ७ ॥ अरुन्धत्यै नमस्तुभ्यं सर्वसौख्यप्रदायिनि॥एहि मंडलमध्यस्था पूजां स्वीकुरु ते नमः ॥ ८ ॥ अरुन्धत्यै० अरुन्धतीमावा० स्था०॥ ८ ॥इत्यावाह्य "प्रतिष्ठा०" इति प्रतिष्ठां कृत्वा ध्यायेत् ॥ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ॥ जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुन्धती ॥ मूर्तिर्ब्रह्मण्यदेवस्य ब्रह्मण्यतेज उत्तमम् ॥ सूर्यकोटिप्रतीकाशमृषिवृंदं विचिन्तये ॥ विष्णवरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमो ध्यायामि॥[1] आवाहनम्—आगच्छन्तु महाभागाश्चतुर्वेदपरायणाः ॥ कर्म यावदिदं कुर्वे कृपया भवतामहम् ॥ आसनम् —ऋग्यजुःसामवेदानां स्वरूपेभ्यो नमो नमः ॥ पुराणपुरुषेभ्यो हि देवर्षिभ्यो नमो नमः ॥ पाद्यम्—गंधपुष्पाक्षतैर्युक्तं पाद्यं गृह्णन्तु भो द्विजाः ॥ प्रसादं कुरुत प्रीतास्तुष्टाः सन्तु सदा मम ॥ अर्घ्यम् ॥ नभस्ये शुक्लपंचम्यामर्चिता ऋषिसत्तमाः ॥ दहन्तु पापं मे सर्वं गृह्णन्त्वर्घ्यं नमो नमः ॥

१ "विष्णवरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः" इति सर्वत्र वक्तव्यम्॥
२ आसनं समर्पयामि । पाद्यं स० । इत्यादि वक्तव्यम् ॥ पूर्वोक्तमन्त्रैः ( पृष्ठ १० ) वा ऋषिपंचमीव्रतस्था पूजा कार्या ॥

आचमनम्–लोकानां तुष्टिकर्त्तारो यूयं सर्वे तपोधनाः ॥ नमः सुधर्मविज्ञेभ्यो महर्षिभ्यो नमो नमः ॥ ततः पंचामृतस्नानम् । पयो दधि घृतं चैव मधु च शर्करां तथा ॥ स्नानार्थं संप्रयच्छामि गृह्णन्तां ऋषिसत्तमाः ॥ इति समर्प्य ॥ शुद्धोदकस्नानम् ॥ मंदाकिन्याः समानीतं यमुनागौतमीजलम् ॥ कृष्णा च नर्मदा तापी ताभ्यः स्नानार्थमाहृतम् ॥ वस्त्रम्–सर्वे नित्यं तपोनिष्ठा ब्रह्मज्ञाः सत्यवादिनः ॥ वस्त्राणि प्रतिगृह्णन्तु मुक्तिदाः सन्तु मे सदा ॥ यज्ञोपवीतम् ॥ नानामंत्रैः समुद्भूतं त्रिवृत्यद्ब्रह्मसूत्रकम् ॥ प्रत्येकं च प्रयच्छामि ऋषयः प्रतिगृह्यताम् ॥ गन्धः–कुंकुमागरुकर्पूरसुगन्धैर्निर्मितं शुभम् ॥ गन्धाढ्यं चन्दनं दिव्यं गृह्णन्तु ऋषिसत्तमाः ॥ अक्षताः–शुभ्राक्षताश्च संपूर्णाः प्रक्षाल्य विनियोजिताः ॥ पूजार्थं वो मया दत्ता गृह्णन्तां मुनिसत्तमाः ॥ ततः पुष्पाणि–माल्यादीनि० ॥ सौभाग्यद्रव्यम्–श्वेतचूर्णं रक्तचूर्णं० ॥ धूपः–वनस्पतिरसोद्भ० ॥ दीपः–साज्यं च वर्ति० ॥ नैवेद्यम्–अन्नं चतुर्विधं स्वादु० ॥ प्राणाय० ॥ मध्येपा० । उत्तरा० । हस्तम० । मुखम० । करोद्वर्तना० ग० ॥ पूगीफलतांबूलम्–पूगीफलं० ॥ दक्षिणा–हिरण्यगर्भ० ॥ ततो 'ह्रीं' इति मन्त्राल्य 'नमः' इति संपूज्य महानीराजनं कुर्यात् ॥

"नीराजनम्" जयदेव जयदेव जय मुनयो देवा जय मुनयो देवाः । सप्तर्षय ऐलामर (२) कल्मषहर देवाः ॥ जयदेव जयदेव ॥१॥ वंदे वसिष्ठकश्यपविश्वामित्रमुनीन् (२) । भारद्वाजं गौतम (२) मत्रिं जमदग्निम् ॥ जयदेव० ॥२॥ पश्यत भोभो ऋषयः करुणामिह दीने (२) । कृत्वा मयि च ममार्चन (२) काले मतिहीने ॥ जयदेव० ॥३॥ सारुन्धतीवसिष्ठादय ईप्सितवरदाः (२) । यूयं शरणायातं (२)मामवतैव सदा ॥ जयदेव० ॥ ४ ॥ पुनन्तु सप्तव्याहृतिमुनयो ये विशदाः (२) ।

भक्त्या मद्विहिताचां (२) मंगीकृत्य मुदा ॥ जयदेव० ॥५॥ धनदा-
भिदकाविरचितं नीराजनमपरं (२)। सप्तर्षीणामेतत् (२)पठितं पापहरम् ॥
जयदेव० ॥ ६ ॥ कर्पूरगौरं० । मंगलं भगवान्० ॥ इति नीराजनं
कृत्वा प्रदक्षिणं पुष्पांजलिं विशेषार्घं च समर्प्य ॥ नमोऽस्तु ऋषिवृन्देभ्यो
देवर्षिभ्यो नमो नमः ॥ सर्वपापहरेभ्यश्च वेदविद्भ्यो नमो नमः ॥
विष्णवरुन्धतीसहितसप्तर्षिभ्यो नमः प्रार्थनापूर्वकनमस्कारान् सम०॥
अनया पूजया विष्णवरुन्धतीसहितकश्यपादिसप्तर्षयः प्रीयन्ताम् ॥
चरणामृतमन्यपात्रे गृहीत्वा कर्मान्ते पिबेत् ॥ इति सप्तर्षिपूजनम् ॥

---

## ॥ अथ यज्ञोपवीतधारणम् ॥

तत्रादा आचार्याय यज्ञोपवीतदानं कार्यम् ॥ ततो यज्ञोपवीतं
प्रक्षाल्य " यो देवः सवि० " इति गायत्रीमंत्रेण दशवारमभिमंत्र्य ॥
उभयजान्वोरुपरि धृत्वा ॥ अक्षतान् गृहीत्वा ॥ प्रथमतन्तौ नारायणाय
नमः नारायणम् आवाहयामि स्थापयामि ॥१॥ द्वितीयतन्तौ अग्नये न०
अग्निम् आ० स्था० ॥२॥ तृतीयतन्तौ नागेभ्यो न० नागान् आवाह०
स्था० ॥३॥ चतुर्थतन्तौ सोमाय न० सोमम् आ० स्था० ॥४॥ पंचम-
तन्तौ इंद्राय न० इंद्रम् आ० स्था० ॥ ५ ॥ षष्ठतन्तौ प्रजापतये न०
प्रजापतिम् आ०स्था०॥६॥ सप्तमतन्तौ वायवे न० वायुम् आ० स्था०।
अष्टमतन्तौ सूर्याय न० सूर्यम् आ० स्था० ॥८॥ नवमतन्तौ विश्वेभ्यो
देवेभ्यो न० विश्वान् देवान् आ०स्था०॥ ग्रंथिमध्ये ब्रह्मणे नमः ब्रह्मा-
णम् आ० स्था० ॥ विष्णवे न० विष्णुम् आ० स्था० ॥ रुद्राय नमः
रुद्रम् आ० स्था० ॥ इत्यावाह्य आवाहितदेवताभ्यो नमः सर्वोप-

चारार्थे गन्धाक्षतपुष्पाणि सम० ॥ इति गन्धाक्षतपुष्पैः संपूज्य ॥ सूर्याय दर्शयेत् ॥ तत्र मंत्रः ॥ यन्मंडलं दीप्तिकरं विशालं रत्नप्रभं तीव्रमनादिरूपम् ॥ दारिद्र्यदुःखक्षयकारणं च पुनातु मां तत्सवितुर्वरेण्यम् ॥ इति मंत्रेण सूर्याय दर्शयित्वा धारयेत् ॥ धारणमंत्रः ॥ ह्रीं यज्ञोपवीतं परमं यत् षण्णवतितंतुकम् ॥ परिधास्यामि तच्छुद्धं ब्रह्मादिदशदैवतम् ॥ दक्षिणहस्तेनोर्ध्वकृतेन दक्षिणकरमध्ये यज्ञोपवीतं प्रक्षिप्य वामेन वामस्कंधे धारयेत् ॥ आचम्य एवमन्यानि धारयेत् ॥ इति ॥

---

## ॥ अथोत्सर्गतर्पणम् ॥

शुद्धपात्रे जलं प्रपूर्य तन्मध्ये गंधाक्षतपुष्पाणि प्रक्षिप्य सप्तऋषीणामुपरि तर्पयेत् ॥ देवास्तृप्यन्ताम् ॥ वेदास्तृ० । छंदांसि तृ० । ऋषयस्तृ० । सनातनपुराणाचार्यास्तृ० । गंधर्वास्तृ० । इतराचार्यास्तृ० । अहोरात्राणि तृ० । अर्धमासास्तृ० । चैत्रादयो द्वादशमासास्तृ० । वसन्तादयः षड्ऋतवस्तृ० । संवत्सरास्तृप्यन्ताम् ॥ अपसव्यम् ॥ गोत्रः अस्मत्पिता अमुकदासः वसुरूपस्तृप्यतु इदं जलं तस्मै० ॥ अस्मत्पितामहप्रपितामहाः मातृपितामहीप्रपितामह्यः मातामहप्रमातामहवृद्धप्रमातामहाः सपत्निकास्तथाच पितृव्यकादिसमस्तपितरः तृप्यन्ताम् इदं जलं तेभ्यः स्वधा न मम ॥ सव्यम् ॥ ऋषयस्तृ० । ऋग्वेदस्तृ० । यजुर्वेदस्तृ० । सामवेदस्तृ० । अथर्ववेदस्तृ० । कश्यपादिसप्तर्षयस्तृप्यन्तु ॥ इत्युत्सर्गतर्पणम् ॥

---

१ उत्सर्गतर्पण ऋषि उपर करवु अथवा तरभाणामां करवुं

## ॥ अथ सांकल्पिकऋषिश्राद्धम् ॥

ततः सांकल्पेन विधिना ऋषिश्राद्धं कुर्यात् ॥ विष्ण्वरुंधतीसहितकश्यपादिसप्तर्षयः एतद्वः पाद्यम् । एष वोऽर्घः । इदमत्र गंधं पुष्पम् ॥ आचमनम् ॥ अक्षतैर्दिग्बंधनम् ॥ अपस० । उपकल्पितविष्ण्वरुन्धतीसहितसप्तर्षिदैवतश्राद्धोपहाराणां पवित्रतास्तु ॥ जलमादाय ॥ अद्येत्यादि० नूतनयज्ञोपवीतधारणाख्यकर्मसिद्ध्यर्थं सांकल्पेन विधिना सप्तर्षिश्राद्धं करिष्ये ॥ विष्ण्वरुन्धतीसहितसप्तर्षिभ्यो नमः इदमासनं नमः ॥ हस्तप्रक्षालनमुपग्रहविष्टरार्थमिमे कुशाः ॥ विष्ण्व० यथादत्तं गंधाद्यर्चनं नमः ॥ अस्य श्राद्धस्यार्चनविधेः परिपूर्णतास्तु ॥ इदं वो ज्योतिः। सूर्यो ज्योतिः । शेषोपचाराः संपूर्णा विधिवद्भवन्तु ॥ विष्ण्वरुन्धती० ब्राह्मणाय आमान्ननिष्क्रयीभूतं द्रव्यं दास्ये तेन सप्तर्षयः प्रीयन्ताम् ॥ विष्ण्व० मुखवासार्थे पूगीफलतांबूलं नमः। विष्ण्व० श्राद्धप्रतिष्ठासिद्ध्यर्थं रजतदक्षिणां नमः॥ अद्येत्यादि० सांकल्पिकः सप्तर्षिदैवतश्राद्धविधिःपरिपूर्णोऽस्तु । उत्तरे कर्मणि निर्विघ्नमस्तु ॥ बहुपुत्रं बहुधनं चायुष्यं चास्तु ॥ रक्षाबंधनम् ॥ येन बद्धो बली राजा दानवेन्द्रो महाबलः ॥ तेन त्वामभि-

---

१ रक्षाबंधनमस्यामेव पूर्णिमायां भद्रारहितायां त्रिमुहूर्ताधिकोदयव्यापिन्यामपराह्णे प्रदोषे वा कार्यम् ॥ " भद्रायां द्वे न कर्तव्ये श्रावणी फाल्गुनी तथा ॥ श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी ॥ " ॥ १ ॥ उदये त्रिमुहूर्तन्यूनत्वे पूर्वेद्युर्भद्रारहिते प्रदोषादिकाले कार्यम् ॥ इदं ग्रहणसंक्रान्तिदिनेऽपि कार्यम् ॥ अत्रैव पूर्णिमायां हयग्रीवोत्पत्तिः ॥ संप्राप्ते श्रावणे मासि पौर्णिमास्यां दिनात्यये ॥ स्नानं कुर्वीत मतिमान् श्रुतिस्मृतिविधानतः ॥ १ ॥ ततो देवान् पितॄंश्चैव तर्पयेत्परमांभसा ॥ उपाकर्मादि चैवोक्तऋषीणां चैव तर्पणम् ॥ २ ॥ कुर्वीत ब्राह्मणैः सार्धं

बध्नामि रक्षे मा चल मा चल॥ आशीर्वादः॥ विसर्जनम्। यान्तु ऋषिगणाः सर्वे पूजामादाय मामकीम् ॥ इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ आवाहितदेवाः स्वस्थानं गच्छत ॥ इति ऋषीन् जलाशये प्लावयेत् ॥ यस्य स्मृत्या० ॥ तुलसीदलं समर्प्य गृहे गत्वा सुहृद्युक्तो भुंजीत ॥

॥ इति उपाकर्मविधिः ॥

---

## ॥ अथ वरदलक्ष्मीव्रतम् ॥

तत्र श्रावणे शुक्रवारे वरदलक्ष्मीव्रतम् ॥ आचम्य प्राणानायम्य। अद्याद्य० तिथौ श्रीवरदलक्ष्मीप्रीत्यर्थं वरदलक्ष्मीव्रतं करिष्ये। तदङ्गत्वेन दिग्रक्षणादिगणपतिपूजनान्तं कर्म करिष्ये इति संकल्प्य तद् दिग्रक्षणकलशदीपगणेशपूजनं कृत्वा वरदलक्ष्मीमूर्तेः प्राणप्रतिष्ठां कृत्वा ततः पूजामारभेत ॥ तत्रादौ लक्ष्मीध्यानम् ॥ क्षीरसागरसंभूतां क्षीरवर्णसमप्रभाम् ॥ क्षीरवर्णसमं वस्त्रं दधानां हरिवल्लभाम् ॥ वरद-

---

वेदानुद्दिश्य शक्तितः ॥ शूद्राणां मंत्ररहितं स्नानं दानं च शस्यते ॥ ३॥ ततोऽपराह्णसमये रक्षापोटलिकां शुभाम् ॥ कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैर्हेमभूषिताम् ॥ ४ ॥कार्पासैः क्षौमवस्त्रैर्वा विचित्रैर्मलवर्जितैः ॥ विचित्रतन्तुग्रथितां स्थापयेद्भाजनोपरि ॥ ५ ॥ कार्या गृहस्य रक्षा गोमयरचितैः सुवृत्तमंडलकैः ॥ दूर्वावर्णकसहितैश्चित्रैर्दुरितोपशमनाय ॥ ६ ॥ उपलिप्ते गृहदेशे दत्तचतुष्के न्यसेत्कुंभम् ॥ पीठस्योपरि निविशेद्राजाऽमात्यैर्युतश्च सुमुहूर्ते ॥ ७ ॥ वेश्याजनेन सहितो मंगलशब्दैः समुच्छ्रितैश्चिह्नैः ॥ रक्षाबंधः कार्यः प्रशान्तिदः सर्वविघ्नानाम् ॥८॥ देवद्विजातिशस्तान् वस्त्रै रक्षाभिरर्चयेत्प्रथमाम् ॥ तदनु पुरोधा नृपते रक्षां बध्नीत मन्त्रेण ॥ ९ ॥ 'येन बद्धो बली राजा दानवेन्द्रो महाबलः ॥ तेन त्वामभिबध्नामि रक्षे मा चल मा चल ॥१॥ " ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैरन्यैश्च मानवैः ॥ कर्तव्यो रक्षिकाबंधो द्विजान् संपूज्य भक्तितः ॥२॥ अनेन विधिना यस्तु रक्षाबंधं समाचरेत् ॥ स सर्वदोषरहितः सुखी संवत्सरं भवेत् ॥ ३ ॥ इति ॥

क्ष्म्यै नमः ध्यायामि ॥ आवाहनम् ॥ ब्राह्मी हंससमारूढा धारिण्यक्ष-कमंडलुम् ॥ विष्णुतेजोधिका देवी सा मां पातु वरप्रदा ॥ इत्यावाह्य आसनं पाद्यम् अर्घ्यम् आचमनं स्नानं वस्त्रं कंठसूत्रम् आभरणानि गंधम् अक्षतान् पुष्पाणि समर्प्य ॥ अंगपूजा ॥ वरदलक्ष्म्यै नमः पादौ पूजयामि ॥ कमलवासिन्यै० गुल्फौ० ॥ पद्मालयायै० जंघे पूज० ॥ श्रियै० जानुनी पूज० ॥ इंदिरायै० उरू पूज० ॥ हरिप्रियायै० नाभिं पूज० ॥ लोकधात्र्यै० स्तनौ पूज० ॥ विधात्र्यै० कंठं पूज० ॥ धात्र्यै० नासिकां पूज० ॥ सरस्वत्यै० मुखं पूज० ॥ पद्मनिधये० नेत्रे पूज० ॥ मांगल्यायै० कर्णौ पूज० ॥ क्षीरसागरजायै० ललाटं पूज० श्रीमहालक्ष्म्यै० शिरः पूज० ॥ श्रीमहाकाल्यै० सर्वांगं पूज०॥ ततो धूपं दीपं नैवेद्यं तांबूलं दक्षिणां समर्प्य महानीराजनं कृत्वा ॥ दोरकग्रहणं ( दोरो ) दोरकं प्रतिगृह्णामि सुप्रीता हरिवल्लभे ॥ सर्व-मंगलमांगल्ये सर्वपापप्रणाशिनी ॥ दोरकबंधनम् ॥ श्रियं देहि यशो देहि सौभाग्यं देहि मे शुभे ॥ करिष्यामि व्रतं देवि त्वद्भक्त-स्त्वत्परायणः ॥ अर्घ्यम् ॥ क्षीरार्णवसुते लक्ष्मीश्चंद्रस्य च सहोदरि ॥ गृहाणार्घ्यं महालक्ष्मीर्देवी तुभ्यं नमोऽस्तु मे ॥ बिल्वपत्रार्पणम् ॥ श्रीवृक्षस्य दलं देवि महादेवि प्रियं सदा ॥ बिल्वपत्रं प्रयच्छामि पवित्रं ते सुनिर्मलम् ॥ क्षमापनम् ॥ वरलक्ष्मीर्महादेवि सर्वकाम-प्रदायिनि ॥ यन्मया च कृतं देवि परिपूर्णं कुरुष्व तत् ॥ वायनदानम् ॥ एकविंशतिपक्कान्नशर्कराघृतसंयुतम् ॥ वायनं ते प्रयच्छामि इंदिरा

---

१ "वरदलक्ष्म्यै नमः आसन समर्पयामि"। इत्यादिकं सर्वत्र वक्तव्यम्। अस्य विशेषविधिस्तु ग्रन्थान्तरे द्रष्टव्यः॥ वा१०दि पृष्ठस्था सामान्यपूजा कार्या ॥

प्रीयतामिति ॥ पञ्चवायनकानेवं दद्याद्दक्षिणया युतान् ॥ विप्राय चाथ यतये देव्यै तु ब्रह्मचारिणे ॥ सुवासिन्यै ततस्त्वेकं दापयेच्च यथाविधि ॥ व्रतं करोति या नारी नरो वापि शुचिव्रतः ॥ धनं धान्यमवाप्नोति वरलक्ष्मीप्रसादतः ॥ अनेन पूजनेन वरदलक्ष्मीः प्रीयताम् ॥

॥ इति वरदलक्ष्मीव्रतम् ॥

## ॥ अथ शनैश्चरव्रतम् ॥

श्रावणमंदवारे शनैश्चरव्रतम् ॥ अश्वत्थमूले वेदिकां[1] कृत्वा तत्र धनुष्याकारं मंडलं विलिख्य तत्र कृष्णायसनिर्मितां महिषासनां द्विभुजां दंडपाशधरां शनैश्चरमूर्तिं स्थापयित्वा पूजयेत् ॥ आचम्य प्राणानायम्य । जलमादाय ॥ अद्येत्यादि० मम समस्तरोगपरिहारार्थं दृष्टयुदरलत्तागतादिशनैश्चरपीडानिरासार्थं शनैश्चरपूजनमहं करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशाराधनादि गणपतिपूजन ब्राह्मणवरणं च कृत्वा शनैश्चर पूजयेत् ॥ कृष्णांगाय नमः आवाहनं समर्पयामि ॥ नीलाय० आसनं० । श्वेतकंठाय० पाद्यं० । नीलमयूखाय० अर्घ्यं० । नीलोत्पलदलाय० आचमनं० । नीलदेहाय० स्नानं० । कुब्जाय० पंचामृतस्नानं० । शनैश्चराय० शुद्धोदकस्नानं० । दीप्यमानजटाधराय० वस्त्रं० । पुरुषगात्राय० यज्ञोपवीतं० । स्थूलरोम्णे० अलंकारान्० । नित्याय० गंधं० । नित्यधूर्त्ताय० अक्षतान्० । सदातृप्ताय० पुष्पं० । मंदाय० धूपं० । निःस्पृहाय० दीपं० । तामसाय० नैवेद्यं० । नीलोत्पलाय० आचमनं० । कृष्णवपुषे० करोद्वर्त्तनं० । दीर्घदेहाय० तांबूलं० । मंदगतये० दक्षिणां० । ज्ञाननेत्राय० प्रदक्षिणा० । सूर्यपुत्राय०

१ अथवा समन्त्रकपूजा कार्या ।

नमस्कारं कृत्वा प्रार्थयेत् ॥ कोणस्थः पिंगलो बभ्रुः कृष्णो रौद्रोऽतको यमः ॥ सौरिः शनैश्चरो मंदः पिप्पलादेन संस्तुतः ॥ एतानि शनिनामानि जपेदश्वत्थसन्निधौ ॥ शनैश्चरकृता पीडा न कदाचिद्भविष्यति ॥ ततो मूलतो "ब्रह्मणे नमः" इत्यश्वत्थस्य सप्तप्रदक्षिणाः सप्तनमस्कारांश्च कुर्यात् ॥ य इमं प्रातरुत्थाय सौरिवारे सदाऽर्चयेत् ॥ तस्याभीष्टप्रदो मंदो भविष्यति न संशयः ॥ अनेन पूजनेन शनैश्चरः प्रीयताम् ॥ इति शनैश्चरव्रतम् ॥

---

## ॥ अथ दर्भग्रहणम् ॥

श्रावणस्य भाद्रपदस्यामायां वा यत्र दर्भाः समुत्पन्नास्तत्र गच्छेत् ॥ गत्वा च दर्भान् संप्रार्थ्य दर्भग्रहणं कुर्यात् ॥ यथा—"विरिंचिना सहोत्पन्न परमेष्ठिनिसर्गज ॥ नुद सर्वाणि पापानि दर्भ स्वस्तिकरो भव।" एवं मंत्रं समुच्चार्य ततः पूर्वोत्तरामुखः "हुंफट्" इति मंत्रेण सकृच्छित्त्वा दर्भान् समुद्धरेत् ॥ चतुर्भिर्दर्भैर्विप्रस्य पवित्रं क्षत्रियादेरेकैकन्यूनम् ॥ सर्वेषां वा भवेद् द्वाभ्यां पवित्रं ग्रथितं न वा ॥ इति दर्भग्रहणम् ॥

---

## ॥ अथ भाद्रपदमासनिर्णयः ॥

तत्र कन्यासंक्रान्तौ पराः षोडश नाड्यः पुण्यकालः ॥ भाद्रपदमासे एकान्नाहारव्रताद्धनारोग्यादिफलम् ॥ अत्र मासे हृषीकेशप्रीत्यर्थं पायसगुडौदनलवणादेर्दानम् ॥

---

१ नभो मासस्य दर्शे तु शुचिर्दर्भान्समाहरेत् ॥ अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः ॥ केचिद्भाद्रपदामायां दर्भग्रहणमाहुः ॥ कुशाः काशा यवा दूर्वा उशीराश्च सकुंदकाः ॥ गोधूमा व्रीहयो मौञ्जा दश दर्भाः सबल्वजाः ॥

## ॥ अथ हरितालिकाव्रतविधिः ॥

भाद्रपदशुक्लतृतीयायां हरितालिकाव्रतम् ॥ तत्र मुहूर्तमात्रा ततो न्यूनापि परा ग्राह्या । मुहूर्तमात्रसत्त्वेऽपि दिने गौरीव्रतं परे । इति माधवोक्तेः ॥ हरितालिकाव्रतसत्त्वे पुरस्कारेणापि परविद्धाग्रहणवचनाद् दिवोदासीये उदाहृतत्वाच्च ॥ यदा क्षयवशात्परदिने नास्ति तदा द्वितीयायुतापि ग्राह्या ॥ यदा शुद्धाधिका तदा पूर्वदिने षष्टिघटीमितामपि त्यक्त्वा परदिने स्वल्पापि चतुर्थीयुतैव ग्राह्या ॥ गणयोगमाशस्त्यात् ॥ अत्र व्रते भवानीशिवयोः पूजनमुपवासश्च स्त्रीणां नित्यः ॥ इति ॥

अथ व्रतविधिः— ॥ शुद्धतृतीयायां प्रातस्तिलामलककल्केन स्नात्वा पट्टवस्त्रं परिधाय सुवासिनी शुभासन उपविश्य॥सुमुखश्चेत्यादि० पठित्वा विष्णुर्विष्णुः० श्रीम० ॥ एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम आत्मनः पुराणोक्तफलप्राप्त्यर्थं मम इह जन्मनि जन्मांतरे च समस्तपापक्षयपूर्वकसप्तजन्मराज्याखंडितसौभाग्यपुत्रपौत्रादिवृद्धये उमामहेश्वरदेवताप्रीत्यर्थं प्रतिवार्षिकविहितं हरितालिकाव्रतं करिष्ये । तदंगत्वेन यथाज्ञानेन यथामिलितषोडशोपचारैः उमामहेश्वरयोः पूजनमहं करिष्ये ॥ तत्रादौ निर्विघ्नतासिद्ध्यर्थं महागणपतिपूजनं च करिष्ये ॥ तथा च आसनविधिं कलशाराधनं दीपघंटापूजनं च करिष्ये ॥ "अपसर्पंतु ते भूता०" इत्यासनविधिं कृत्वा॥ "कलशस्य मुखे०" इति कलशपूजनम् ॥ "अपवित्रः पवित्रो वा सर्वा०" इतिमंत्रेण पूजाद्रव्याणि आत्मानं च संप्रोक्ष्य "भो दीप०" इति दीपं संपूज्य॥ "आगमार्थं तु देवाना" मित्यादि घंटापूजनं च कुर्यात् ॥ ततः यथाविधि पंचोपचारैर्वा गणेशपूजनं कुर्यात् । तत उमामहेश्वरपूजनं कुर्यात् ॥ तत्र

उमामहेश्वरयोर्मूर्तौ सत्यां प्राणप्रतिष्ठां कृत्वा ध्यानं कुर्यात् ॥ वालुकाया मूर्त्योः सत्योः ध्यानं कुर्यात् ॥

यथा—ध्यानम्—पीतकौशेयवसनां हेमाभां कमलासनाम् ॥ भक्तानां वरदां नित्यं पार्वतीं चिंतयाम्यहम् ॥ विधाय वालुकालिंगमर्चयंतीं महेश्वरम् ॥ पूर्णेंदुवदनां ध्यायेद्धरितालीं वरप्रदाम् ॥ १ ॥ मंदारमालाकुलितालकायै कपालमालांकितशेखराय ॥ दिव्यांबरायै च दिगंबराय नमःशिवायै च नमः शिवाय ॥ श्रीउमामहेश्वराभ्यां नमः ध्यायामि ॥ देवि देवि समागच्छ प्रार्थयेऽहं जगन्मये ॥ इमां मया कृतां पूजां गृहाण सुरसत्तमे ॥ श्रीउमामहेश्वराभ्यां नमः आवाहयामि ॥ प्रतिष्ठा सर्वे० । इति प्रतिष्ठाप्य । भवानि त्वं महादेवि सर्वसौभाग्यदायिके ॥ अनेकरत्नसंयुक्तमासनं प्रतिगृह्यताम् ॥ श्रीउमामहे ० ॥ आसनं सम० ॥ सुचारुशीतलं दिव्यं नानागंधसमन्वितम् ॥ पाद्यं गृहाण देवेशि महादेवि नमोऽस्तु ते ॥ श्रीउमामहे० ॥ पाद्यं स० ॥ श्रीपार्वति महाभागे शंकरप्रियवादिनि ॥ अर्घ्यं गृहाण कल्याणि भर्त्रा सह पतिव्रते ॥ श्रीउमामहे० अर्घ्यं सम० ॥ गंगाजलं समानीतं सुवर्णकलशे स्थितम् ॥ आचम्यतां महाभागे रुद्रेण सहितेऽनघे ॥ श्रीउमामहे० ॥ आचमनीयं सम० ॥ दध्याज्यमधुसंयुक्तं मधुपर्कं मयाऽनघे ॥ दत्तं गृहाण देवेशि भव पाशविमुक्तये ॥ श्रीउमामहे० ॥ मधुपर्कं सम० ॥ गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः ॥ स्नापिताऽसि मया देवि तथा शांतिं कुरुष्व मे ॥ श्रीउमामहे० ॥ मलापकर्षस्नानं० ॥ सौरभेयं महद्दिव्यं पवित्रं पुष्टिवर्धनम् ॥ स्नानार्थं ते मया दत्तं दुग्धं गृह्णीष्व ते नमः ॥ श्रीउमामहे० ॥ पयःस्नानं स० ॥ शुद्धोदकस्नानं० ॥ आचमनीयं स० ॥ जगदेतद्दधासि त्वं त्वमेव

जगतां हितम् ॥ दधि वामनरूपेण दधि स्नानाय गृह्यताम् ॥ श्रीउमामहे० ॥ दधिस्नानं सम० ॥ शु० स्ना० स० ॥ आच० स० ॥ घृतकुंभसमायुक्तं घृतयोने घृतप्रिये ॥ घृतभुग्घृतधामासि घृतं स्नानाय गृह्यताम् ॥ श्रीउमामहे० ॥ घृतस्नानं सम० ॥ शु० स्ना० स० ॥ आच० स० ॥ सर्वोपधिसमुत्पन्नं पीयूषसदृशं मधु ॥ स्नानाय ते मया दत्तं गृहाण परमेश्वरि ॥ श्रीउमामहे० ॥ मधुस्नानं समर्प० ॥ शु० स्ना० स० ॥ आच० स० ॥ इक्षुदंडसमुत्पन्ना रस्या स्निग्धतरा शुभा ॥ शर्करेयं समादत्ता स्नानार्थं प्रतिगृह्यताम् ॥ श्रीउमामहे० ॥ शर्करास्नानं स० ॥ शु० स्ना० स० ॥ आच० स० ॥ काश्मीरागरुकस्तूरीकर्पूरमलयान्वितम् ॥ उद्वर्तनं मया दत्तं गृह्यतां परमेश्वरि ॥ श्री उमामहे० ॥ उद्वर्तनं सम० ॥ कर्पूरैलाकुंकुमादिसुगंधिद्रव्यसंयुतम् ॥ गंधोदकमुमे शुद्धं स्नानार्थं प्रतिगृह्यताम् ॥ श्रीउमामहे० ॥ गंधोदकस्नानं सम० ॥ शुद्धोदकस्नानं सम० ॥ आचमनं सम० ॥ ततः "श्रीउमामहेश्वराभ्यां नम सर्वोपचारार्थं गंधाक्षतपुष्पाणि स० ॥" इति गंधादिना संपूज्य ॥ उत्तरे निर्माल्यं विसृज्य ॥ किरणा धूतपापा च पुण्यतोया सरस्वती ॥ मणिकर्णिजलं शुद्धं स्नानार्थं प्रतिगृह्यताम् ॥ "महिम्नः पारं ते पर० ॥" इति स्तोत्रेण महाभिषेकं कुर्यात् ॥ श्रीउमामहेश्वराभ्यां नमः अभिषेकस्नानं समर्पयामि ॥ अभिषेकस्नानानंतरं शुद्धो० स्ना० स० ॥ आचमनीयं समर्प० ॥ सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे ॥ मयोपपादिते तुभ्यं गृह्येतां वाससी त्वया ॥ श्रीउमामहे० ॥ वस्त्रोपवस्त्रे सम० ॥ मया मंत्रमयं दत्तं परब्रह्ममयं शुभम् ॥ उपवीतमिदं सूत्रं गृहाण जगदंबिके ॥ श्रीउमामहे० ॥ उपवीतं समर्प० ॥ कुंकुमागरुकर्पूरकस्तूरीचंदनैर्युतम् ॥ विलेपनं

महादेवि तुभ्यं दास्यामि भक्तितः ॥ श्रीउमाम० ॥ चंदनं स० ॥ रंजिताः कुंकुमौघेन अक्षताश्चातिशोभनाः ॥ भक्त्या समर्पितास्तुभ्यं प्रसन्ना भव पार्वति ॥ श्रीउमाम० ॥ अक्षतान् स० ॥ करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैः शुभैः ॥ शतपत्रैश्च कल्हारैरर्चये परमेश्वरीम् ॥ सेवंतिकाबकुलचंपकपाटलाब्जपुन्नागजातिकरवीररसालपुष्पैः ॥ बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वरि मे प्रसीद ॥ नानाविधानि पुष्पाणि ह्यनेकपुष्पजातिभिः ॥ मया समर्पितानि त्वं गृहाण परमेश्वरि ॥ श्रीउमाम० ॥ पुष्पाणि सम० ॥

ततो हस्ते अक्षतान् गृहीत्वा अङ्गपूजां कुर्यात् ॥ अथांगपूजा ॥ उमायै नमः पादौ पूजयामि ॥ गौर्यै नमः गुल्फौ पूज० ॥ पार्वत्यै० जानुनी पूज०॥ जगद्धात्र्यै० जंघे पू० ॥ जगत्प्रतिष्ठायै० ऊरू पू० ॥ शांतिरूपिण्यै० कटी पू० ॥ हरायै नमः गुह्यं पूज० ॥ माहेश्वर्यै नमः नाभिं पूज० ॥ शांभव्यै नमः हृदयं पू० ॥ शूलपाणये० कंठं पूज० ॥ पिनाकधृषे० बाहू पूज० ॥ शिवायै० मुखं पूज० ॥ पशुपतिप्रियायै० ॥ नेत्रे पूज० ॥ गंगायै० ललाटं पूज० ॥ महालावण्यायै० शिरः पूज० ॥ सच्चिदानंदरूपिण्यै० सर्वांगं पू० ॥

अथ पत्रपूजा ॥ अशोकायै नमः अशोकपत्रं समर्पयामि ॥ जगद्धात्र्यै न० धात्रीप० स०॥ माहेश्वर्यै न० दूर्वाप० स० ॥ कपर्दिने० करवीरप० स० ॥ कपालधारिण्यै० कदंबप० स० ॥ पार्वत्यै० ब्राह्मीपत्रं स० ॥ धूर्जटायै० धत्तूरपत्रं स० ॥ त्रिपुरांतकायै० अपामार्गप० स० ॥ सर्वेश्वर्यै० नानाविधपत्राणि समर्पयामि ॥

अथ पुष्पपूजा ॥ चतुर्वर्गप्रदायै नमः चंपकपुष्पं स० ॥ बुद्धि-

प्रियायै० केतकीपुष्पं स०॥ कौमार्यै० करवीरपुष्पं स० ॥कुमार्यै न० वकुलपुष्पं स०॥ धनदायै० धत्तूरपुष्पं स०॥ शांभव्यै नमः शतपत्रपुष्पं स० ॥ चामुंडायै० पद्मपुष्पं सम० ॥ जगद्धात्र्यै० जपापुष्पं सम० ॥ माहेश्वर्यै० मल्लिकापुष्पं स० ॥ मेरुमंदारवासिन्यै० अशोकपुष्पं स० ॥

अथ नामपूजा ॥ अक्षतान् गृहीत्वा ॥ उमायै नमः ॥ कात्यायन्यै० ॥ गौर्यै० ॥ काल्यै० ॥ हिमवत्यै० ॥ शिवायै० ॥ भवान्यै० ॥ रुद्राण्यै०॥ सर्वमंगलायै०॥ अपर्णायै०॥ पार्वत्यै०॥ दुर्गायै०॥ मृडायै०॥ चामुंडायै० ॥ कौबेर्यै० ॥ भगवत्यै० ॥ सरस्वत्यै० ॥ शारदायै०॥ वागीश्वर्यै० ॥ चंडिकायै०॥ आर्यायै०॥ दाक्षायण्यै०॥ गिरिजायै०॥ मेनकात्मजायै० ॥ पद्मिन्यै० ॥ पद्माकरवासिन्यै०॥ महिषमर्दिन्यै०॥ सिंहवाहिन्यै०॥ शक्तिदायै० ॥ ललितायै० ॥ त्रिदलं त्रिगुणाकारं त्रिनेत्रं च त्रयायुधम् ॥ त्रिजन्मपापसंहारमेकबिल्वं शिवार्पणम् ॥ तुलसीबिल्वनिर्गुंडीजंबीरामलकं तथा ॥ पंचबिल्वमितिख्यातमेकबिल्वं शिवार्पणम् ॥ ( शिवाष्टोत्तरशतनामभिर्बिल्वदलैः समर्चयेत् ) श्रीउमामहे०॥ बिल्वपत्राणि स०॥ हरिद्रां कुंकुमं चैव सिंदूरं कज्जलान्वितम् । सौभाग्यद्रव्यसंयुक्तं गृहाण परमेश्वरि ॥ श्रीउमायै नमः ॥ सौभाग्यद्रव्याणि स०॥ ( अथवा सौभाग्यद्रव्याणां समर्पणे पृथक्पृथग् मंत्रा योज्याः॥ ते यथा ॥) नवरत्नादिभिर्बद्धां सौभावर्णेन तंतुभिः॥ निर्मितां कंचुकीं भक्त्या गृहाण परमेश्वरि ॥ श्रीउमायै नमः ॥ कंचुकीं सम०॥ पट्टसूत्रभवं दिव्यं स्वर्णपूर्णाकृतियुतम् ॥ सौमंगल्याभिवृद्ध्यर्थं कंठसूत्रं ददामि ते ॥ श्रीउमायै नमः ॥ कंठसूत्रं स० ॥ ताडपत्राणि दिव्यानि विचित्राणि शुभानि च ॥ कराभरणयुक्तानि गौरि त्वं हि गृहाण मे ॥ श्रीउमायै नमः॥ ताडपत्राणि सम०॥ हरिद्रा रंजिता दिव्या सुखसौभाग्य-

संपदा ॥ अतस्त्वां पूजयिष्यामि गृहाण परमेश्वरि ॥ श्रीउमायै नमः ॥ हरिद्रां सम०॥ कुंकुमं कामदं दिव्यं कामिनीकामसंभवम् ॥ कुंकुमेनार्चिते देवि सौभाग्यं प्रतिगृह्यताम् ॥ श्रीउमायै नमः ॥ कुंकुमं समर्प० ॥ सुनीलभ्रमराभासं कज्जलं नेत्रमंडनम् ॥ मया दत्तमिदं भक्त्या कज्जलं प्रतिगृह्यताम् ॥ श्रीउमायै० ॥ कज्जलं सम० ॥ विद्युदरुणसंकाशं जपाकुसुमसन्निभम् ॥ सिंदूरादि प्रदास्यामि सौभाग्यं देहि मे चिरम्॥ श्रीउमायै नमः ॥ सिंदूरादि स०॥ स्वभावसुंदरांगी त्वं नानारत्नादिभिर्युता ॥ भूषणानि विचित्राणि गृह्यन्तां प्रीतिहेतवे ॥ श्रीउमाम० ॥ आभरणानि स० ॥ नानासुगंधिकं द्रव्यं चूर्णीकृत्वा प्रयत्नतः ॥ ददामि ते महादेवि प्रीत्यर्थं प्रतिगृह्यताम् ॥ श्रीउमा० ॥ नानापरिमलद्रव्यं समर्पयामि ॥ देवद्रुमरसोद्भूतः कृष्णागरुसमन्वितः ॥ आनीतोऽयं मया धूपो भवानि प्रतिगृह्यताम् ॥ श्रीउमाम० ॥ धूपं स० ॥ त्वं ज्योतिः सर्वदेवानां तेजसां तेज उत्तमम् ॥ आत्मज्योतिः परं धाम दीपोऽयं प्रतिगृह्यताम् ॥ श्रीउमाम० ॥ दीपं स० ॥ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ॥ भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम्॥ श्रीउमाम०॥ नैवेद्यं समर्पयामि॥ नैवेद्यं जलेन संप्रोक्ष्य धेन्वा अमृतीकृत्य ग्रासमुद्रया प्राणाय नमः॥ अपानाय नमः॥ व्यानाय नमः ॥ उदानाय नमः ॥ समानाय नमः ॥ नमस्ते देवदेवेशि सर्वतृप्तिकरं परम्॥ मया निवेदितं तुभ्यं गृहाण जलमुत्तमम्॥ श्रीउमाम०॥ मध्ये पानीयं स० ॥ उत्तरापोशानं स० ॥ हस्तप्रक्षालनं स० ॥ मुखप्रक्षालनं स० ॥ आचमनीयं स० ॥ मलयाचलसंभूतं कर्पूरेण समन्वितम्॥ करोद्वर्तनकं चारु गृह्यतां जगतःपते ॥ करोद्वर्तनार्थे चंदनं स०॥ कर्पूरैलालवंगादितांबूलीदलसंयुतम् ॥ क्रमुकस्य फलं चैव तांबूलं

प्रतिगृह्यताम् ॥ श्रीउमाम० तांबूलं स०॥ इदं फलं मया देवि स्थापितं पुरतस्तव॥ तेन मे सुफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ श्रीउमामहे०॥ फलं सम० ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनंतपुण्यफलदमतः शांतिं प्रयच्छ मे ॥ श्रीउमामहे० ॥ सुवर्णपुष्पदक्षिणां सम०॥ (वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितम्॥ पुष्परागसमायुक्तं भूषणं प्रतिगृह्यताम्॥ श्रीउमामहे०॥ भूषणं सम०॥) चंद्रादित्यौ च धरणी विद्युदग्निस्तथैव च ॥ त्वमेव सर्वज्योतींषि ह्यार्तिक्यं प्रतिगृह्यताम् ॥ श्रीउमामहे०॥ नीराजनं सम०॥ कर्पूरार्तिक्यं सम० ॥ (सति संभवे राजोपचारार्पणम्॥ तद्यथा ॥ स्तुतिभिः सहितं गीतं निर्मितं दिव्यमुत्तमम् ॥ नित्यशः कल्पितं भक्त्या गृहाण करुणानिधे॥ श्रीउमामहे० ॥ गीतं सम० ॥ वीणातालमृदंगादिखंढभेरी च घंटिका ॥ दुंदुभिर्वेणुनादश्च श्रूयतां सुरसत्तमे ॥ श्रीउमामहे० ॥ वाद्यं सम० ॥ उभयोश्चरणे बद्ध्वा क्षुद्रघंटाः सुभक्तितः ॥ तुष्ट्यर्थं सर्वदेवानां कृत नृत्यं विलोकय ॥ श्रीउमामहे०॥ नृत्यं समर्पयामि ॥ हरिन्मणिगणाबद्धं दंडशक्तिकरप्रभम् ॥ सुवर्णछत्रं शोभाढ्यं गृहाण करुणानिधे ॥ श्रीउमामहे० ॥ छत्रं सम० ॥ सुवेणुदंडसंयुक्तं चमर्याः केशसंयुतम् ॥ चामरं कल्पितं भक्त्या गृहाण सुरसत्तमे ॥ श्रीउमामहे० ॥ चामरं सम० ॥ सवितृकिरणस्पर्धि स्फुरत्किरणमंडलम् ॥ आदर्शं मणिभिर्युक्तं प्रतिरूपं विलोकय ॥ श्रीउमामहे० ॥ दर्पणं सम०॥ प्रवालनालसद्गात्रे मुक्तामणिविभूषिते॥ पट्टसूत्रमये देवि मंचके शयनं कुरु ॥ श्रीउमामहे० ॥ मचकं समर्पया०॥ उशीरनिर्मितं दिव्यं हेमदंडसमन्वितम् ॥ व्यजनं च मया दत्तं गृहाण परमेश्वरि ॥ श्रीउमामहे० ॥ व्यजनं सम० ॥ सर्वराजोपचारान्कल्पयामि ॥ ) नमः सर्वहितार्थाय जगदाधारहेतवे ॥ उमाकांताय शांताय

शंकराय नमो नमः ॥ श्रीउमामहे० ॥ नमस्कारं सम० ॥ प्रदक्षिणा ॥ यानि कानि च पापानि ब्रह्महत्यासमानि च ॥ तानि सर्वाणि नश्यंतु प्रदक्षिणपदेपदे ॥ श्रीउमामहे० ॥ प्रदक्षिणां सम० ॥

अथ नामपूजा ॥ उमायै नमः ॥ गौर्यै० ॥ पार्वत्यै० ॥ जगद्धात्र्यै० ॥ जगत्प्रतिष्ठायै नमः ॥ शांतिरूपिण्यै नमः ॥ हराय० ॥ महेश्वराय० ॥ शंभवे नमः ॥ शूलपाणये नमः ॥ पिनाकधृषे नमः ॥ शिवाय० ॥ पशुपतये नमः ॥ महादेवाय नमः ॥ वेदैः पुराणपटलैर्बहुशास्त्रविद्भिर्मानं त्वमेव कथितं खलु भिन्नवृत्त्या ॥ तुभ्यं तदेव गिरिजाधिप ते सुखत्वात् तस्मै नमामि सततं परमेश्वराय ॥ श्रीउमामहे० न० ॥ मंत्रपुष्पांजलिं स० ॥ अथ प्रार्थना ॥ हरितालि नमस्तेऽस्तु सशिवे भक्तवत्सले ॥ संसारभयभीताऽहं त्वमेव शरणं मम ॥ जन्मजन्मानि सौभाग्यमक्षय्यं देहि मेऽव्यये ॥ यशस्विनमुदारं च गांभीर्यादिगुणान्वितम् ॥ सदाचारं परं शांतं विष्णुभक्तिपरायणम् ॥ शिवभक्तिपरं चैव वेदशास्त्रविशारदम् ॥ लक्ष्मीवंतं पुत्रवंतमारोग्यादिगुणान्वितम् ॥ भर्तारं देहि मे देवि प्रीतिमंतं सदा मयि ॥ तथा पुत्रांश्च पौत्रांश्च कन्याश्चान्वयशोभिनीः ॥ धनधान्यादिसंपत्तिमैश्वर्यं रुचिरं शिवे ॥ लक्ष्मीं मनोरमां देहि सुरूपाद्यखिलान्गुणान् ॥ धर्मबुद्धिं च मे देहि पातिव्रत्यमखंडितम् ॥ भोगान् सुविपुलान् शश्वदिह लोके परत्र च ॥ त्वयि भक्तिं च मे देहि भृशं भर्तरि शंकरे ॥ संसारहारिणीं बुद्धिमंते देहि नमोऽस्तु ते ॥ तव सान्निध्यमेवास्तु मम श्रीहरितालिके ॥ यथा त्वं देवदेवेशि सौभाग्यादिसमन्विता ॥ तथा मां कुरु सर्वेशि जन्मजन्मानि पार्वति ॥ आवाहनं न जानामि० ॥ मंत्रहीनं क्रियाहीनं भक्तिहीनं० ॥ अन्यथा शरणं० ॥ गतं पापं गतं० ॥ रूपं देहि ज० ॥ श्रीउमामहे० ॥

प्रार्थनां सम० ॥ अनेन यथाज्ञानेन यथामीलितोपचारपूजनेन श्री-उमामहेश्वरौ प्रीयेताम् ॥ रात्रिं जागरणं कृत्वा कीर्तनादिना निनयेत् ॥

"द्वितीयदिने" स्नात्वा यथाशक्ति देवानां पूजनं कृत्वा वायनदानं कुर्यात् । यथा—अद्य पूर्वोच्चरित एवं० पुराणोक्तफलप्राप्त्यर्थं हरितालिकाव्रतांगत्वेन पूजासांगतासिद्ध्यर्थं ब्राह्मणाय वायनप्रदानं करिष्ये ॥ तदंगत्वेन ब्राह्मणपूजनं च करिष्ये ॥ नमोऽस्त्वनंताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुबाहवे । सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटीयुगधारिणे नमः ॥ इति मंत्रेण विप्रं गंधाक्षतैः संपूज्य ॥ वायनदानमंत्रः ॥ उपायनमिदं देवव्रतसंपूर्तिहेतवे ॥ वायनं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥ १ ॥ अन्नं सुवर्णपात्रस्थं सवस्त्रफलदक्षिणम् ॥ वायनं गौरि विप्राय ददामि प्रीतये तव ॥ २ ॥ सौभाग्यारोग्यकामानां सर्वसंपत्समृद्धये ॥ गौरीगिरीशतुष्ट्यर्थं वायनं ते ददाम्यहम् ॥३॥ विप्राय वेदविदुषे श्रोत्रियाय कुटुंबिने ॥ नरकोत्तारणार्थाय अच्युतः प्रीयतामिति ॥४॥ इदम् अमुकवायनप्रदानं सदक्षिणाकं सतांबूलम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे तेन श्रीउमामहेश्वरौ प्रीयेताम् ॥ "प्रतिगृह्णामि" इत्याचार्यो ब्रूयात् विप्रो वा ॥ यांतु देवगणाः सर्वे पूजामादाय मामकीम् ॥ इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥ इति मंत्रेण देवताविसर्जनं कुर्यात् ॥

॥ इति हरितालिकाव्रतपूजनविधिः समाप्तः ॥

## ॥ अथ हरितालिकाव्रतोद्यापनविधिः ॥

स्नानसाहित्यं गृहीत्वा तीर्थे गत्वा तत्र देहशुद्धिं[१] विधाय गृह-

---

१ देहशुद्धि प्रायश्चित्तनो प्रयोग स्त्रीपुरुषनो भिन्नभिन्न छे ते प्रमाणे जे होय तेने माटेनो करावबो ॥

मागत्य तत्र पूर्वं चतुरस्रं चतुर्द्वारं कदलीस्तंभमंडितं मंडपं कुर्यात् ॥ मध्ये वितानं बध्नीयात् ॥ मंडपमध्ये उक्तविधिना चतुर्लिंगतोभद्रं वा लिंगतोभद्रं पंचवर्णैः प्रपूर्य तत्पश्चिमे शुभासने उपविश्य आचम्य सुमुखश्चेत्यादि पठित्वा जलमादाय—अद्येत्यादि० तिथौ ममात्मनः समस्तपापक्षयपूर्वकं सप्तजन्मसु सौभाग्यादिविविधभोगप्राप्तिद्वारा पुत्रपौत्राद्यनवाच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थमुमामहेश्वरप्रीत्यर्थं मया (मम भार्यया) आचरितस्य आचरिष्यमाणस्य हरितालिकाव्रतस्य संपूर्णफलावाप्त्यर्थमेकरात्राधिवासपक्षाश्रयेण हरितालिकाव्रतोद्यापनं करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशाराधनं गणपतिपूजनं पुण्याहवाचनं (मातृकापूजनं वसोर्धारामायुष्यमंत्रजपं नान्दीश्राद्धम्) आचार्यादिब्राह्मणवरणं सर्वतोभद्रमंडले ब्रह्मादिदेवतानां तथा च लिङ्गतोभद्रमंडले लिंगतोभद्रमंडलदेवतानां स्थापनप्रतिष्ठापूजनं च करिष्ये । इति संकल्प्य दिग्रक्षणादिस्थापनपूजनं च पूर्वोक्तरीत्या कुर्यात् ॥ ततस्तन्मध्ये द्रोणपरिमितं व्रीहिराशिं कृत्वा तस्योपरि पूर्णपात्रान्तं कलशं निधाय तदुपरि क्षौमं वस्त्रं प्रसार्य चंदनेनाष्टदलं कृत्वा मंडूकादिपीठदेवता आवाह्य गंधाद्युपचारैः संपूज्य ततो राजतं शिवं हैमीं गौरीं पुरतः राजतं वृषभं च कृताग्न्युत्तारणपूर्वकप्राणप्रतिष्ठां कृत्वा कलशोपरि संस्थाप्य व्रतविधिवत् आवाहयेत् ॥ पीतकौशेयवसनां० ॥ १ ॥ मंदारमालाकुलिता० ॥२॥ इति उमामहेश्वरौ आवाह्य "महिम्नः स्तोत्रेण" रुद्राभिषेकपूर्वकं षोडशो-

---

१ स्त्रीपुरुष बंने बेसे तो पुरुष माटे ॥ २ दिग्रक्षणादि (६–४५) पृष्ठे द्रष्टव्यम् ॥ ३ ब्रह्मादिदेवतानां स्थापनं ( ९९ ) पृष्ठे द्रष्टव्यम् ॥
४ मंडूकादिपीठदेवताः (१०७) पृष्ठे द्रष्टव्याः ॥
५ ध्यानादिसर्वपूजनं पूर्वोक्तव्रतोक्तपूजनवत् (पृष्ठ ११५) कर्तव्यम्॥

पचारैः संपूज्य प्रार्थयेत् ॥ नमः शिवाय सांगाय पंचवक्त्राय शूलिने ॥ नंदिभृंगिमहाकालगणयुक्ताय शंभवे ॥ १ ॥ शिवायै हरकान्तायै प्रकृत्यै सृष्टिहेतवे ॥ नमस्ते ब्रह्मरूपिण्यै जगद्धात्र्यै नमो नमः ॥ २ ॥ येन कामेन देवि त्वं पूजितासि महेश्वरि ॥ संपूर्णं कुरु मे कामं सौभाग्यं च प्रयच्छ मे ॥ ३ ॥ इति संप्रार्थ्य आचार्यादीन् संपूज्य दक्षिणादिकं दत्वा आशिषो गृहीत्वा सुवासिनीमपि संपूज्य कथाश्रवणादिना रात्रिं निनयेत् ॥ इति ॥

"अथ द्वितीयदिनकृत्यम्"—प्रातर्नित्यकर्म समाप्य आचम्य सुमुखश्चेत्यादि पठित्वा ॥ अद्येत्यादि० ममात्मनः हरितालिकाव्रतोद्यापनस्य संपूर्णफलावाप्त्यर्थं ग्रहमखसहितं स्थापितदेवतानामुक्तद्रव्यैर्होमं करिष्ये ॥ तत्रादौ "दिग्रक्षणादि प्रधानदेवतापूजनं च करिष्ये" इति संकल्प्य दिग्रक्षणादि प्रधानोमामहेश्वरपूजनान्तं कर्म कृत्वा ॥ ततः समचतुरस्रमरत्निमात्रं होमानुसारेणाधिकं वा तत्र मृदा चतुरंगुलोत्सेधं स्थंडिलं विधाय अग्निप्रणयनादिकं कृत्वा ॥ जलं गृहीत्वा—प्रारब्धस्य कर्मणः साङ्गतासिद्ध्यर्थं ब्राह्मणद्वारा पञ्चभूसंस्कारपूर्वकमग्निप्रतिष्ठापनं करिष्ये इति संकल्पयेत् ॥ आचार्यः यथाविधि पञ्चभूसंस्कारपूर्वकमाग्निं प्रतिष्ठाप्य संपूज्य नवग्रहाणां स्थापनप्रतिष्ठापूजनं कारयेत् (कुर्यात् ।) ततः दक्षिणतो ब्रह्मासनादि कुशकंडिकां कृत्वा ग्रहहोमान्तं कर्म कुर्यात् ॥ ततः प्रधानहोमः ॥ प्रधानमुमामहेश्वरं तिलयवमिश्राज्येनाष्टोत्तरशतसंख्याकाभिः "शिवाय नमः" इति मंत्रेण हुत्वा "गौर्यै नमः" इति मंत्रेण तैरेव द्रव्यैरष्टोत्तरशतं जुहुयात् ॥ ततो ब्रह्मादिमंडलदेवतानां (पृष्ठ १६४)

---

१ तदुक्तं मानवसंहितायाम् ॥ कर्तुं शाखोक्तमार्गेण आचार्यस्याथवा पुनः ॥ कुर्यादग्निप्रणयनं हवनादिविधिस्तथा ॥ )

१ अग्निप्रतिष्ठापनादिमहहोमान्तं कर्म (१४२–१६४) पृष्ठेषु द्रष्टव्यम् ।

मंडूकादिपरिवार(नंदिकेश्वराय नम इति विशेषः) देवतानां (पृष्ठ १६६) चैकैकामाज्याहुतिं जुहुयात् ॥ ततो व्याहृतिहोमं समाप्य फलहोमादिकं कृत्वा उत्तरपूजनमारभ्य प्रणीताविमोकान्तं कर्म (पृष्ठ १६८–१८८) कुर्यात् ॥ ततो यथासमयम् उमामहेश्वरं पंचोपचारैः संपूज्य महानीराजनं पुष्पांजलिं स्तुतिपाठं च कृत्वा तिलपात्रादिदानं दत्वा शक्तिश्चेद् उमामहेश्वरप्रतिमयोर्वस्त्रादिपदशय्यादानानि कार्याणि ॥ छायापात्रदानम्॥ततः षोडशाष्टौ वा द्विजयुग्मानि संपूज्य भोजनोत्तरं तेभ्यः सौभाग्यवस्त्रदक्षिणायुतानि षोडशवंशपात्राणि षोडशकुंभांश्च दद्यात् ॥ तत्र मंत्रः ॥ सौभाग्यारोग्यकामानां सर्वसंपत्समृद्धये ॥ गौरीगौरीशतुष्टयर्थं वायनं ते ददाम्यहम् ॥ कृतस्य हरितालिकाव्रतोद्यापनाख्यस्य कर्मणः सांगतासिद्ध्यर्थम् इमानि षोडशवंशपात्राणि सौभाग्यवस्त्रसहितानि षोडशकुंभसहितानि सदक्षिणानि नानागोत्रेभ्यो नानानामभ्यः सपत्नीकेभ्यो विभज्य विभज्य दास्ये ॥ तत आचार्यादीन् संपूज्य दक्षिणादिकं दत्वा आशिषो गृहीत्वा "यान्तु देव०" इति देवान् अग्निं च विसृज्य सुहृद्युक्तो भुंजीत ॥

॥ इति हरितालिकाव्रतोद्यापनविधिः ॥

---

## ॥ अथ सिद्धिविनायकव्रतम् ॥

अथ भाद्रपदशुक्लचतुर्थ्यां सिद्धिविनायकव्रतं हेमाद्रौ स्कांदे ॥ तच्च मध्याह्नव्यापिन्यां कार्यम् ॥ प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने पूजयेन्नृप ॥ पार्थिवस्य गणेशस्य तत्रैवं पूजनं चरेत् ॥ दिनद्वये तद्व्याप्तौ एकदेशव्याप्तौ वा पूर्वाऽन्यथा परा ॥ चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते ॥ मध्याह्नव्यापिनी सा तु परतश्चेत्परेऽहनि॥इतिबृहस्पत्युक्तेः ॥

अथ व्रतविधिः ॥ आचम्य प्राणायामं कृत्वा ॥ सुमुखश्चेत्यादि पठित्वा ॥ हस्तेजलमादाय—अत्राद्य० एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम आत्मनः श्रुतिस्मृतिपुराणोक्तफलप्राप्त्यर्थं मम इह जन्मनि जन्मांतरे च पुत्रपौत्रधनविद्याजययशःश्रीकामायुष्याभिवृद्ध्यर्थं सिद्धिविनायकदेवताप्रीत्यर्थं यथाज्ञानेन यथामीलितोपचारैः (पुरुषसूक्त) पुराणोक्तमंत्रैर्ध्यानावाहनादिषोडशोपचारैः पार्थिवगणपतिपूजनं करिष्ये ॥ तत्रादौ आसनादिकलशाराधनं शंखघंटापूजनं दीपपूजनं षडंगन्यासांश्च तथा गणेशमूर्तौ प्राणप्रतिष्ठादिकं करिष्ये ॥ इति संकल्प्य " पृथ्वि त्वया०" इत्यासनशुद्धिं विधाय "अपसर्पन्तु०" इति दिग्रक्षणं कृत्वा "कलशस्य मुखे विष्णुः०"इति कलशपूजनम् ॥"त्वं पुरा सागरोत्पन्नो०" इति शंखपूजनम् । "आगमार्थं तु देवानाम्०" इति घंटापूजनम् ॥ " भो दीप०" इति दीपपूजनम् ॥ ततः " गं गणपतये नमः " इति षडंगन्यासान्कुर्यात् ॥ पार्थिवमूर्तौ देवस्थापनम् ॥"हेरंबाय नमः" मुदाहरणम्॥"सुमुखाय नमः"संघट्टनम् ॥"गौरीसुताय नमः" स्थापनम् ॥ गणपतिमूर्तेः प्राणप्रतिष्ठां (५१ पृष्ठे) कुर्यात् ॥ अथ ध्यानम्। एकदंतं शूर्पकर्णं गजवक्त्रं चतुर्भुजम् । पाशांकुशधरं देवं ध्यायेत्सिद्धिविनायकम् ॥ ध्यायेद्देवं महाकायं तप्तकांचनसन्निभम् ॥ रुद्राक्षमालाहस्तं च सर्वाभरणभूषितम् ॥ शुंडाग्रे मोदकं चैव गृहाण करुणानिधे ॥ श्रीसिद्धिविनायकाय नमः ध्यायामि ॥ आवाहयामि विघ्नेश सुरराजार्चितेश्वर ॥ अनाथनाथ सर्वज्ञ पूजार्थं गणनायक ॥ (सहस्रशीर्षा-पुरुषः०॥) श्रीसिद्धिवि० आवाहनं समर्प०॥ विचित्ररत्नरचितं दिव्या-

१ जेने वैदिक षोडशोपचार पूजन करवुं होय तेणे (कौंस) मां बतावेला पुरुषसूक्तना मंत्रोथी पूजन करवु. ॥

भरणसंयुतम् ॥ स्वर्णसिंहासनं चारु गृहाण सुरपूजित ॥ (पुरुषएवेद०) श्रीसिद्धिवि० ॥ आसनं सम० ॥ सर्वतीर्थसमुद्भूतं पाद्यं गंधादिसंयुतम् ॥ विघ्नराज गृहाणेदं भगवन् भक्तवत्सल ॥ (एतावानस्य० ॥) श्रीसिद्धि० ॥ पाद्यं स० ॥ अर्घ्यं च फलसंयुक्तं गंधपुष्पाक्षतैर्युतम् ॥ गणाध्यक्ष नमस्तेऽस्तु गृहाण करुणानिधे ॥ (त्रिपादूर्ध्व०॥) श्रीसिद्धिवि० ॥ हस्तयोः अर्घ्यं स० ॥ दध्याज्यमधुसंयुक्तं मधुपर्कं मया हृतम् ॥ गृहाण सर्वलोकेश गणनाथ नमोऽस्तु ते ॥ (यन्मधु०) श्रीसिद्धिवि० ॥ मधुपर्कस्नानं सम० ॥ विनायक नमस्तुभ्यं त्रिदशैरभिवंदित ॥ गंगोदकेन तोयेन शीघ्रमाचमनं कुरु ॥ (ततोविरा० ॥) श्रीसिद्धिवि० । आचमनं स० ॥ पयो दधि घृतं चैव शर्करा मधुसंयुतम् ॥ पंचामृतेन स्नपनं क्रियतां गणनायक ॥ (पंचामृतस्नाने भिन्नमंत्राः–) सुरभेस्तु समुत्पन्नं देवानामपि दुर्लभम् ॥ पयो ददामि देवेश स्नानार्थं प्रतिगृह्यताम् ॥ (पयःपृथि० ॥) श्रीसिद्धिवि० ॥ पयःस्नानं स० ॥ पयःस्नानांते शुद्धोदकस्ना० सम० ॥ आचमनं सम० ॥ चंद्रमंडलसंकाशं सर्वदेवप्रियं हि यत् ॥ ददामि दधि देवेश स्नानार्थं प्रतिगृह्यताम् ॥ (दधिक्राव्णो० ॥) श्रीसिद्धि० ॥ दधिस्नानं स० । शुद्धो० स० । आचमनं स० ॥ आज्यं सुराणामाहार आज्यं यज्ञे प्रतिष्ठितम् ॥ आज्यं पवित्रं परमं स्नानार्थं प्रतिगृह्यताम् ॥ (घृतंमिमिक्षे० ॥) श्रीसिद्धिवि० ॥ घृतस्नानं स० ॥ शुद्धो० सम० ॥ आचमनं स० ॥ सर्वौषधिसमुत्पन्नं पीयूषसदृशं मधु ॥ स्नानाय ते मया दत्तं गृहाण परमेश्वर ॥ (मधु व्वाता० ॥) श्रीसिद्धिवि० मधुस्नानं सम० ॥ शुद्धो० स्नानं स० ॥ आच० स० ॥ इक्षुदंडसमुत्पन्नां शर्करां मधुरां शुभाम् ॥ स्नानाय ते मया दत्तां गृहाण परमेश्वर ॥ (अपाᳬरस० ॥) श्रीसिद्धिवि० ॥ शर्करा-

स्नानं स० ॥ शुद्धो० स्ना० स० ॥ आचमनं स० ॥ काश्मीरागरुकस्तूरी कर्पूरमलयान्वितम् ॥ उद्वर्तनं मया दत्तं गृह्यतां परमेश्वर ॥ श्रीसिद्धिवि० ॥ उद्वर्तनस्नानं स० ॥ गंगा च यमुना चैव गोदावरी सरस्वती ॥ तापी पयोष्णी रेवा तज्जलं स्नानाय गृह्यताम् ॥ श्रीसिद्धिवि० ॥ शुद्धो० स० ॥ आचमनं स० ॥ गंधादिना पूजयित्वा निर्माल्यं विसृज्य ॥ पुनः गंधपुष्पैः संपूज्य (महाभिषेकस्नाने यथाकालं गणपत्यथर्वशीर्षेण रुद्राभिषेकेण वा पुरुषसूक्तेन ) महाभिषेकं कुर्यात् ॥ श्रीसिद्धिवि० ॥ महाभिषेकस्नानं समर्प० ॥ स्नानांते आचमनं स० ॥ रक्तवस्त्रद्वयं देव दिव्यं कांचनसंभवम् ॥ सर्वप्रद गृहाणेदं लंबोदर हरात्मज ॥ (तस्माद्यज्ञा०॥) श्रीसिद्धिवि० ॥ वस्त्रद्वयं समर्प० ॥ राजतं ब्रह्मसूत्रं च कांचनं चोत्तरीयकम् ॥ गृहाण चारु सर्वज्ञ भक्तानां वरदो भव ॥ ( तस्मादश्वा० ॥ ) श्रीसिद्धिवि०॥ यज्ञोपवीतं स० ॥ उद्यद्भास्करसंकाशं संध्यावदरुणं प्रभो ॥ वीरालंकरणं दिव्यं सिंदूरं प्रतिगृह्यताम् ॥ श्रीसिद्धिवि० ॥ सिंदूरं सम० ॥ नानाविधानि दिव्यानि नानारत्नोज्ज्वलानि च ॥ भूषणानि गृहाणेश पार्वतीप्रियनंदन ॥ श्रीसिद्धिवि० ॥ आभरणानि स०॥ कस्तूरीचंदनं चैव केशरेण समन्वितम् । विलेपनं सुरश्रेष्ठ चंदनं प्रतिगृह्यताम् ॥ ( तंयज्ञं ब० ॥ गंधद्वारां०॥ ) श्रीसिद्धिवि० चंदनं स०॥ रक्ताक्षतांश्च देवेश गृहाण द्विरदानन ॥ ललाटपटले चंद्रस्तस्योपरि निधार्यताम् ॥ (अक्षन्नमी०) श्रीसिद्धिवि० ॥ अक्षतान्सम०॥ ( करवीरैर्जा० ) सेवंतिकाबकुलचंपकपाटलाब्जपुन्नागजातिकरवीररसालपुष्पैः ॥ बिल्वप्रवालतुलसीदलमालतीभिस्त्वां पूजयामि जगदीश्वर मे प्रसीद ॥ ( यत्पुरुषं व्यद० ॥ ) श्रीसिद्धिवि० । पुष्पाणि सम० ॥ ततो गणपतिसहस्रनामभिः ( अष्टोत्तरशतनामभिर्वा पृ० २५० ) दूर्वार्पणं कुर्यात् ॥

अथांगपूजा ॥ गणेश्वराय नमः पादौ पूजयामि ॥ विघ्नराजाय० जानुनी पूज० ॥ आखुवाहनाय न० ऊरू पूज० ॥ हेरंबाय नमः कटी पूज० ॥ कामारिसूनवे० नाभिं पूज० ॥ लंबोदराय न० उदरं पूज० ॥ गौरीसुताय० स्तनौ पूज० ॥ गणनायकाय० हृदयं पूज० ॥ स्थूलकर्णाय न० कंठं पूजयामि ॥ स्कंदाग्रजाय नमः स्कंधौ पूज० ॥ पाशहस्ताय नमः हस्तौ पूज० ॥ गजवक्त्राय० वक्त्रं पूज० ॥ विघ्नहर्त्रे० ललाटं पूज० ॥ सर्वेश्वराय० शिरः पूज० ॥ श्रीगणाधिपाय नमः सर्वांगं पूज० ॥ एवमङ्गपूजां विधायावरणपूजां कुर्यात् ॥

अथावरणपूजा । रक्ताक्षतान् गृहीत्वा—गणनाथाय० । हेरंबाय० । इभवक्त्रा० । मूषकवाहना० । शिवप्रिया० । उमापुत्रा० । प्रथमावरणपूजां सम० ॥ १ ॥ वरगणपतये० । सुरगण० । चंडगण० । इभवक्त्रगण० । क्षिप्रगण० । प्रसादगण० । लंबोदरगण० ॥ द्वितीयाव० स० ॥ २ ॥ इंद्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणा० । वायवे० । कुबेरा० । ईशानाय० ॥ तृतीया० स० ॥३॥ विनायकाय० । द्वैमातुरा० । विघ्नराजा० । गणाधिपा० । हेरंबा० । एकदंता० । लंबोदरा० ॥ चतुर्था० स० ॥ ४ ॥ तीक्ष्णदंष्ट्रा० । सूतरूपा० । गजास्या० । त्रिनेत्रा० । रक्तप्रिया० । बृहदुदरा० । सुरवंद्या० । शिवसुता० ॥ पंचमा० स० ॥५॥ भद्रकालिने० । भैरवा० । शेषा० । वरुणा० । वरेण्या० । सतांपतये० । संवत्सरा० । शांता० ॥ षष्ठा० स० ॥६॥ सरस्वत्यै० । लक्ष्म्यै० । भारत्यै० । ब्रह्मणे० । विष्णवे० । रुद्रा० । आकाशा० । वेदा० । वास्तुपुरुषा० ॥ सप्तमा० स० ॥ ७ ॥ एवमावरणपूजां विधाय पत्रपूजां कुर्यात् ॥

अथ पत्रपूजा ॥ सुमुखाय नमः मालतीपत्रं सम० ॥ गणाधिपाय० भृंगराजपत्रं सम० ॥ उमापुत्राय० बिल्वपत्रं सम० ॥ गजान-

नाय० श्वेतदूर्वापत्रं स० ॥ लंबोदराय० बदरीपत्रं सम० ॥ हरसूनवे० धत्तूरपत्रं स० ॥ गजकर्णाय० तुलसीपत्रं स० ॥ वक्रतुंडाय० शमीपत्रं स० ॥ गुहाग्रजाय० अपामार्गपत्रं स० ॥ एकदंताय० बृहतीपत्रं ० ॥ विकटाय० करवीरपत्रं स० ॥ कपिलाय न० अर्कपत्रं स० ॥ गजदंताय० अर्जुनपत्रं स० ॥ विघ्नराजाय० विष्णुक्रांतपत्रं स०॥ वटवे न० दाडिमीपत्रं स० ॥ सुराग्रजाय० देवदारुपत्रं स० ॥ भालचंद्राय० मरुपत्रं स०॥ हेरंबाय० अश्वत्थपत्रं स० ॥ चतुर्भुजाय० जातीपत्रं समर्प० ॥ विनायकाय० केतकीपत्रं स० ॥ सर्वेश्वराय० अगस्तिपत्रं स० ॥२१॥ ततः सिद्धिविनायकाय निम्नलिखितमत्येकनामभिः दूर्वायुग्मं समर्पयेत् ॥ तद्यथा। गणाधिपाय० दूर्वायुग्मं सम० (एवं सर्वत्र) उमापुत्राय०। अघनाशनाय०। एकदन्ताय०। इभवक्त्राय०। मूषकवाहनाय०। विनायकाय०। ईशपुत्राय०। सर्वसिद्धिप्रदायकाय०। कुमारगुरवे० ॥ १० ॥ दूर्वायुग्मं गृहाणेदं गंधपुष्पाक्षतैर्युतम् ॥ ( पूजयेत् सिद्धिविघ्नेशं प्रत्येकं सर्वनामभिः ॥ विनायकेश-पुत्रेति सर्वसिद्धिप्रदायक ॥ कुमारगुरवे तुभ्यं दत्ता पूजा प्रयत्नतः ॥) इति दूर्वायुग्मार्पणं कृत्वा अष्टोत्तरशतनामपूजा कर्तव्या ॥ ( ह्रीं विनायकाय नमः इत्यारभ्य ह्रीं सर्वसिद्धिप्रदायकाय नमः इत्यन्तम् अष्टोत्तरशतनाम्ना दूर्वाक्षतपुष्पादिना सिद्धिविनायकं संपूजयेत्) यथा ॥

जलमादाय। अस्य श्रीगणपत्यष्टोत्तरशतदिव्यनाममंत्रस्य गृत्समदऋषिः गणपतिर्देवता अनुष्टुप्छंदः गं बीजं नं शक्तिः मं कीलकं श्रीगणपतिप्रीत्यर्थं दूर्वार्पणे (जपे) विनियोगः। ॐ विनायकाय नमः। विघ्नराजाय०। गौरीपुत्राय०। गणेश्वराय०। स्कन्दाग्रजाय०। अव्ययाय०। पूताय०। दक्षाध्यक्षाय०। द्विजप्रियाय०। अग्निगर्वच्छिदे० ॥ १० ॥ इन्द्रश्रीप्रदाय०। वाणीबलप्रदाय०। सर्वसिद्धिप्रदाय०। शर्वतनयाय०।

शिवप्रियाय० । सर्वात्मकाय० । सृष्टिकर्त्रे० । देवानीकार्चिताय० । शिवाय० । शुद्धाय० ॥ २० ॥ बुद्धिप्रियाय० । शान्ताय० । ब्रह्मचारिणे० । गजाननाय० । द्वैमातुराय० । मुनिस्तुत्याय० । भक्तविघ्नविनाशनाय० । एकदन्ताय० । चतुर्बाहवे० । चतुराय० ॥ ३० ॥ शक्तिसंयुताय० । लंबोदराय० । शूर्पकर्णाय० । हेरंबाय० । ब्रह्मवित्तमाय० । कालाय० । ग्रहपतये । कामिने० । सोमसूर्याग्निलोचनाय० । पाशांकुशधराय० ॥ ४० ॥ चंडाय० । गुणातीताय० । निरंजनाय० । अकल्मषाय० । स्वयंसिद्धाय० । सिद्धार्चितपदांबुजाय० । बीजपूरप्रियाय० । अव्यक्ताय० । वरदाय० । शाश्वताय० ॥ ५० ॥ कृतिने० । विद्वत्प्रियाय० । वीतभयाय० । गदिने० । चक्रिणे० । इक्षुचापधृते० । अब्जोत्पलकराय० । श्रीशाय० । श्रीपतिस्तुतिहर्षिताय० । कुलाद्रिभृते० ॥ ६० ॥ जटिने० । चंद्रचूडाय० । अमरेश्वराय० । नागोपवीतिने० । श्रीकंठाय० । रामार्चितपदाय० । व्रतिने० । स्थूलकंठाय० । त्रयीकर्त्रे० । सामघोषप्रियाय० ॥ ७० ॥ अग्रण्याय० । पुरुषोत्तमाय० । स्थूलतुंडाय० । ग्रामण्ये० । गणपाय० । स्थिराय० । वृद्धिदाय० । शुभगाय० । शूराय० । वागीशाय० ॥ ८० ॥ सिद्धिदायकाय० । दूर्वाबिल्वप्रियाय० । कान्ताय० । पापहारिणे० । कृतागमाय० । समाहिताय० । वक्रतुंडाय० । श्रीपदाय० । सौम्याय० । भक्तकांक्षितदात्रे० ॥ ९० ॥ अच्युताय० । केवलाय० । सिद्धिदाय० । सच्चिदानंदविग्रहाय० । ज्ञानिने० । मयायुताय० । दान्ताय० । ब्रह्मिष्ठाय० । भयवर्जिताय० । प्रमथदैत्यभयदाय० ॥ १०० ॥ व्यक्तमूर्तये० । अमूर्तिकाय० । पार्वतीशंकरोत्संगखेलनोत्सवलालसाय० । समस्तजगदाधाराय० । वरमूषकवाहनाय० । हृष्टचित्ताय० । प्रसन्नात्मने० । सर्वसिद्धिप्रदायकाय नमः ॥ १०८ ॥

( यः पूजयेदनेनैव भक्त्या सिद्धिविनायकम् ॥ दूर्वादलैर्बिल्वदलैः पुष्पैर्वा चंदनाक्षतैः ॥ सर्वान्कामानवाप्नोति सर्वापद्भ्यः प्रमुच्यते) ॥ ततः सौभाग्यादिकं दद्यात् ॥ नानासुगंधिकं द्रव्यं चूर्णीकृत्वा प्रयत्नतः ॥ ददामि ते नमस्तुभ्यं प्रीत्यर्थं प्रतिगृह्यताम् ॥ ( अहिरिवभोगैः० ॥ ) श्रीसिद्धिवि० नानापरिमलद्रव्यं स० ॥ दशांगं गुग्गुलं धूपं सुगंधं च मनोहरम् ॥ गृहाण सर्वदेवेश उमापुत्र नमोऽस्तु ते ॥ (ब्राह्मणोस्य० ॥ )

श्रीसिद्धिविनाय० धूपं सम० ॥ सर्वज्ञ सर्वलोकेश त्रैलोक्यतिमिरापह ॥ गृहाण मंगलं दीपं रुद्रप्रिय नमोऽस्तु ते ॥ ( चंद्रमा मन० ) श्रीसिद्धिविना०॥ दीपं समर्प०॥ नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु॥ ईप्सितं मे वरं देहि परत्र च परां गतिम्॥ नानाखाद्यमयं देव तुष्ट्यर्थं ते निवेदितम् ॥ मया भक्त्या शिवापुत्र गृहाण गणनायक॥ ( नाभ्याऽआसीद० ) श्रीसिद्धिवि० नैवेद्य सम० ॥ नैवेद्यं जलेन संप्रोक्ष्य धेन्वा अमृतीकृत्य ग्रासमुद्रया, प्राणाय नमः० इत्यादि ॥ एलोशीरलवंगादिकर्पूरपरिवासितम् ॥ प्राशनार्थं कृतं तोयं गृहाण गणनायक ॥ श्रीसिद्धिवि० मध्येपानीयं सम०॥ उत्तरापोशानं सम० ॥ हस्तप्रक्षालनं सम० ॥ मुखप्रक्षालनं सम०॥ मलयाचलसंभूतं कर्पूरेण समन्वितम्॥ करोद्वर्तनकं चारु गृह्यतां जगतःपते ॥ श्रीसिद्धिवि० करोद्वर्तनार्थे चंदनं समर्पयामि ॥ बीजपूराम्रपनसखर्जूरीकदलीफलम् ॥ नारीकेलफलं दिव्यं गृहाण गणनायक ॥ इदं फलं मया० ॥ श्रीसिद्धिवि० फलं सम० ॥ एकविंशतिसंख्याकान् मोदकान् घृतपाचितान् ॥ नैवेद्यं सफलं दद्यान्नमस्ते विघ्ननाशिने ॥ श्रीसिद्धिवि० मोदकान स०॥ पूगीफलं महद्दिव्यं नागवल्ल्या दलैर्युतम् ॥ कर्पूरैलासमायुक्तं तांबूलं प्रतिगृह्यताम् (यत्पुरुषे०॥)श्रीसिद्धिवि० तांबूलं सम०॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनंतपुण्यफलदमतःशांतिं प्रयच्छ मे ॥ ( हिरण्यगर्भः) श्रीसिद्धिवि० दक्षिणां समर्प०॥ वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितम् ॥ पुष्परागसमायुक्तं भूषणं प्रतिगृह्यताम् ॥ श्रीसिद्धिवि० भूषणानि सम०॥ दूर्वायुग्मं गृहाणेदं गंधपुष्पाक्षतैर्युतम्॥ (पूजयेत्सर्वविघ्नेशं प्रत्येकं पूर्वनामभिः ॥) गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन ॥ एकदंतेभवक्त्रेति तथा मूषकवाहन ॥ विनायकेशपुत्रेति सर्वसिद्धिप्रदायक ॥

कुमारगुरवे तुभ्यं पूजनीयाः प्रयत्नतः ॥ श्रीसिद्धिवि० दूर्वायुग्मं स०॥ चंद्रादित्यौ च धरणी विद्युदग्निस्तथैव च ॥ त्वमेव सर्वतेजांसि आर्तिक्यं प्रतिगृह्यताम् ॥ ( इदं९ हविः० ॥ ) श्रीसिद्धिवि०नीराजनदीपं स०॥ कर्पूरगौरं करुणावतारं संसारसारं भुजगेंद्रहारम् ॥ सदावसंतं हृदयारविंदे भवं भवानीसहितं नमामि ॥ श्रीसिद्धिवि० कर्पूरार्तिक्यं सम०॥ विघ्नेश्वर विशालाक्ष सर्वाभीष्टफलप्रद ॥ प्रदक्षिणां करोम्यत्र सर्वान्कामान्प्रयच्छ मे ॥ यानि कानि च पापानि० ॥ (सप्तास्यास० ) श्रीसिद्धिविना० ॥ प्रदक्षिणां सम० ॥ नमस्ते विघ्नसंहर्त्रे नमस्ते ईप्सितप्रद ॥ नमस्ते देवदेवेश नमस्ते गणनायक ॥ श्रीसिद्धिवि० ॥ नमस्कारान्स० ॥ विनायकेशपुत्रेति गणराज सुरोत्तम ॥ देहि मे सकलान् कामान् वंदे सिद्धिविनायक ॥ ( यज्ञेनयज्ञमयज० ॥ ) श्रीसिद्धिवि० ॥ मंत्रपुष्पाञ्जलिं स० ॥ श्रीसिद्धिवि० गीतं वाद्यं नृत्यं छत्रं चामरं दर्पणं मंचकं व्यजनं सर्वराजोपचारान् कल्पयामि ॥ प्रार्थना ॥ विनायक गणेशान सर्वदेवनमस्कृत ॥ पार्वतीप्रिय विघ्नेश मम विघ्नं विनाशय ॥ अपराधसहस्राणि०॥ आवाहनं न जानामि०॥ अन्यथा शरणं नास्ति त्वमेव०॥गतं पापं गतं दुःखं०॥ मंत्रहीनं क्रियाहीनं०॥ अनेन यथाज्ञानेन यथामीलितोपचारकृतपूजनेन श्रीसिद्धिविनायकदेवता प्रीयताम् ॥ अद्यपूर्वोचरित० पूजासांगतासिद्ध्यर्थं वायनप्रतिपादनानि करिष्ये ॥ तदंगं ब्राह्मणपूजनं च करिष्ये॥ गणेशस्वरूपिणे ब्राह्मणाय नमः॥ नमोस्त्वनंताय सहस्रमूर्तये सहस्रपादाक्षि०॥ इतिमंत्रेण गंधाक्षतैः पूजयेत् ॥ सकलाराधनैः स्वर्चितमस्तु ॥ अस्तु स्वर्चितम् ॥ अथैकविंशतिं गृह्य मोदकान् घृतपाचितान् ॥ स्थापयित्वा गणाध्यक्षसमीपे कुरुनंदन ॥ दश विप्राय दातव्याः स्थापयेद्दश चात्मनि ॥ एकं गणा-

धिपे दद्यात् सघृतं मोदकं शुभम् ॥ अथ वायनमंत्रः ॥ दशानां मोदकानां च फलदक्षिणया युतम् ॥ विप्राय तव तुष्ट्यर्थं वायनं ते ददाम्यहम् ॥ इदं वायनदानं सदक्षिणाकं सतांबूलम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ प्रतिगृह्यताम् ॥ प्रतिगृह्णामि ॥ अथ-प्रतिमादानमंत्रः ॥ विनायकस्य प्रतिमां वस्त्रयुग्मेन वेष्टिताम् ॥ तुभ्यं संप्रददे विप्र प्रीयतां मे गजाननः॥ गणेशः प्रतिगृह्णाति गणेशो वै ददाति च ॥ गणेशस्तारकोभाभ्यां गणेशाय नमो नमः॥ इदं प्रतिमादानं सदक्षिणाकं सतांबूलम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे ॥ तेन श्रीसिद्धिविनायकः प्रीयतां नमम ॥ इति सिद्धिविनायकव्रतपूजा समाप्ता ॥

---

॥ अथ सिद्धिविनायकव्रतोद्यापनम् ॥

एवं एकविंशतिवर्षं सिद्धिविनायकव्रतं कृत्वा अन्ते उद्यापनं कुर्यात् ॥ प्रात शुक्लतिलैः स्नात्वा मध्याह्ने संकल्पं कृत्वा पूजयेत् ॥ अद्येत्यादि० मम विजयपुत्रादिकामनासिद्धिद्वारा श्रीसिद्धिविनायक-प्रीत्यर्थमाचरितस्य आचरिष्यमाणस्य सिद्धिविनायकव्रतस्य संपूर्ण-फलावाप्त्यर्थं सिद्धिविनायकव्रतोद्यापनं करिष्ये ॥ पुनर्जलमादाय-तदंगभूतं दिग्रक्षणं कलशाराधनं दीपपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमंत्रजपं नान्दीश्राद्धम् आचार्यादीनां वरणादिकं च करिष्ये ॥ इति दिग्रक्षणादिकं ( ६-४५ पृष्ठेषु ) कृत्वा ॥ सर्वतोभद्रे देवान् रक्तवस्त्रवेष्टितरक्तकलशे हैमं गणेशं च संस्थाप्य पूर्ववत् संपूज्य वृत आचार्यः अग्निं प्रतिष्ठाप्य अग्निप्रतिष्ठापनादिग्रहहोमान्तं

१ यदि सुवर्णादिधातुप्रतिमा स्याचेद्दानं कर्तव्यम् ॥

कर्म (१४९-१६४ पृष्ठेषु) कृत्वा गणेशं दूर्वापायसलड्डुकैः प्रतिद्रव्यमष्टोत्तरशतसंख्याकाभिर्जुहुयात् ॥ ततोऽधिकफलप्राप्तये एकविंशतिनामभिरेकविंशतिब्राह्मणान् दक्षिणापुरःसरं संपूज्य एकविंशतिवंशपात्राणि सौभाग्यवस्त्रसहितानि दद्यात् ॥ अन्यानपि यथाविभवं संपूज्य भूयसीं दद्यात् व्रतपूर्तये गां च दद्यात् ॥ इति ॥ अनेन सिद्धिविनायकव्रतोद्यापनेन सिद्धिविनायकः प्रीयताम् ॥

॥ इति सिद्धिविनायकव्रतोद्यापनम् ॥

---

## ॥ अथ ऋषिपञ्चमीव्रतम् ॥

अथ भाद्रपदशुद्धपंचम्याम् ऋषिपंचमीव्रतम् । तच्च मध्याह्नव्यापिन्यां कार्यम् ॥ तथा माधवीये हारीतः। पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः । दिनद्वये तद्व्याप्तौ अव्याप्तौ वा पूर्वविद्धायां कार्यम् इति मदनरत्नात् । प्राप्ते भाद्रपदे मासि शुक्लपक्षस्थपंचमी । तस्यां मध्याह्नसमये नद्यादौ विमले जले । कृत्वाऽपामार्गसमिध अष्टोत्तरशताधिकाः॥ अथवा कारयेत्सप्त दंतधावनमादितः॥ वनस्पतिप्रार्थना- आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च॥ ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते ॥ संप्रार्थ्यानेन मंत्रेण कुर्याद्वै दंतधावनम् ॥ तत्र मंत्रः ॥ मुखदुर्गंधिनाशाय दंतानां च विशुद्धये ॥ ष्ठीवनाय च गात्राणां कुर्वेऽहं दंतधावनम् ॥ अनेन दंतान्संशोध्य स्नायान्मृत्स्नानपूर्वकम् ॥ अथ- च केशवादिनाममंत्रेण स्त्रीणां शुद्ध्यर्थं पंचगव्यं वा कुर्यात् ॥

आचम्य श्रीमन्महागणाधिपतये नमः। श्रीअरुंधतीसहितकश्यपादिसप्तर्षिभ्यो नमः॥अविघ्नमस्तु॥सुमुखश्चैकदंतश्चेत्यादि० ॥ जलमा-

दाय—मम इह जन्मनि जन्मान्तरे च भर्त्रा सह अखंडितसौभाग्यादिपुत्र-पौत्राद्यभिवृद्ध्यर्थं रजोदोषकृतभांडादिसंपर्कजनितपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थम् अरुंधतीसहितकश्यपादिसप्तऋषिप्रीत्यर्थम् ऋषिपञ्चमीव्रतं करिष्ये। तदङ्गत्वेन कलशाराधनादिकं गणपतिपूजनं च यथामिलितोपचारैः सप्तऋषिपूजनं च करिष्ये॥ इति संकल्प्य कलशस्य मुखे विष्णुः कंठे रुद्र०॥ इति कलशपूजनम्॥ अपवित्रः पवित्रो वा० इति मंत्रेण पूजाद्रव्याणि संप्रोक्ष्य आत्मानं प्रोक्षयेत्॥ ततो दीपपूजनं गणपतिपूजनं स्मरणं वा कृत्वा शुद्धभूमौ काष्ठमयपीठे वस्त्रं प्रसार्य तदुपरि तंडुलैरष्टदलं कृत्वा पूर्णपात्रान्तं कलशं संस्थाप्य तदुपरि क्षौमवस्त्रं प्रसार्य चंदनेनाष्टदलं विलिख्य तत्र ऋषीनावाहयेत्॥

अथावाहनम्—कश्यपः सर्वलोकेशः सर्वदेवेषु पूजितः॥ नराणां पापनाशाय ऋषिरूपेण तिष्ठति॥ कश्यपाय नमः कश्यपम् आवाहयामि स्था०॥१॥ अत्रये च नमस्तुभ्यं सर्वभूतहितैषिणे॥ तपोरूपाय सत्याय ब्रह्मणेऽमिततेजसे॥ अत्रये० अत्रिम् आवा० स्था०॥२॥ भरद्वाज नमस्तुभ्यं सदाध्यानपरायण॥ महाजटिलधर्मात्मा पापं हरतु मे सदा॥ भरद्वाजाय० भरद्वाजम् आवा० स्था०॥३॥ विश्वामित्र नमस्तुभ्यं वालमुखमहाव्रत॥ अध्यक्षीकृतगायत्रीतपोरूपेण संस्थितः॥ विश्वामित्राय० विश्वामित्रम् आवा० स्था० ४॥ गौतमः सर्वभूतानामृषीणां च महाप्रियः॥ श्रौतानां कर्मणां चैव संप्रदायप्रवर्तकः॥ गौतमाय० गौतमम् आवा० स्था०॥५॥ जमदग्निर्महातेजास्तपसा ज्वलितप्रभः॥ लोकेषु सर्वसिद्ध्यर्थं सर्वपापनिवर्तकः॥ जमदग्नये० जमदग्निम् आवा० स्था०॥६॥ नमस्तुभ्यं वसिष्ठाय लोकानां वरदाय च॥ सर्वपापप्रणाशाय सूर्यान्वयहितैषिणे॥ वसिष्ठाय० वसिष्ठम् आ० स्था०॥७॥

॥ ७ ॥ अरुंधति नमस्तुभ्यं महापापप्रणाशिनि ॥ पतिव्रतानां सर्वासां धर्मशीलप्रवर्तके ॥ अरुंधत्यै० अरुंधतीम् आवा० स्था० ॥८॥ एवमावाह्य ध्यानादिकं कुर्यात् यथा—॥ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः॥ जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुंधती ॥ श्रीअरुंधतीसहितकश्यपादिसप्तऋषिभ्यो नमः ॥ ध्यानं समर्पयामि ॥ १ ॥ पुष्पाक्षतसमायुक्तं नानारत्नैः समन्वितम् ॥ आसनं कल्पितं भक्त्या गृह्णन्तु मुनिसत्तमाः । आसनं स० ॥ २ ॥ नानातीर्थसमानीतं सुवर्णकलशे स्थितम् ॥ पुष्पाक्षतैर्युतं तोयं पाद्यार्थं प्रतिगृह्यताम् ॥ पाद्यं स० ॥ ३ ॥ सप्तर्षयः शुभाः श्रेष्ठाः सर्वेषां च शुभप्रदाः ॥ पूजिता भक्तियुक्तेन गृह्णंत्वर्घ्यं मयाऽऽहृतम् ॥ अर्घ्यं स० ॥ ४ ॥ गंगादिसर्वतीर्थेभ्यो मया प्रार्थनयाऽऽहृतम् ॥ तोयमाचमनीयार्थं शीतलं प्रतिगृह्यताम् ॥ आचमनीयं स० ॥ ५ ॥ नानातीर्थसमानीतं सुवर्णकलशैर्भृतम् ॥ सर्वे गृह्णन्तु तत्तोयं स्नानार्थं हि सुवासितम् ॥ मलापकर्षस्नानं स० ॥ ६ ॥ ततः पंचामृतैः स्नानम् ॥ सुरभेस्तु समुत्पन्नं देवानामपि दुर्लभम् ॥ पयो ददामि संप्रीत्या स्नानार्थं प्रतिगृह्यताम् ॥ पयःस्नानं समर्पयामि॥ १॥ शुद्धो० स० । आच० स० ॥ चंद्रमंडलसंकाशं सर्वदेवप्रियं दधि ॥ भक्त्या ददामि मधुरं स्नानार्थं प्रतिगृह्यताम् ॥ दधिस्नानं स० ॥ २ ॥ शुद्धो० स०। आच० स०॥ आज्यं सुराणामाहार आज्यं यज्ञे प्रतिष्ठितम् ॥ आज्यं पवित्रं परमं स्नानार्थं प्रतिगृह्यताम् ॥ घृतस्नानं स० ॥३॥ शुद्धो० स०। आच० स० ॥ सर्वौषधिसमुत्पन्नं पीयूषसदृशं मधु ॥ ददामि परया भक्त्या मधु स्नानाय गृह्यताम् ॥ मधुस्नानं स० ॥ ४ ॥ शुद्धो० स०। आच० स०॥ इक्षुदंडात्समुत्पन्ना शर्करा मधुरा

१ एवं सर्वोपचारेषु वक्तव्यम् ।

सिता ॥ देवदेवप्रिया स्वादुः स्नानार्थं प्रतिगृह्यताम् ॥ शर्करास्नानं स० ॥ ५ ॥ शुद्धो० स० । आच० स० ॥ स्वच्छोदकैस्तु संपूर्णं स्वर्णकुंभसमाहृतम् ॥ गंधोदकैर्युतं भक्त्या तोयं स्नानाय गृह्यताम् ॥ गंधोदकस्नानं समर्पयामि ॥ ६ ॥ ( पंचोपचारपूजा ॥ ) श्रीअरुंधतीसहितकश्यपादिसप्तऋषिभ्यो नमः विलेपनार्थे चंदनं समर्पयामि ॥ श्रीअरुंधतीसहितक० ॥ अलंकारार्थे अक्षतान स० ॥ पूजार्थे पुष्पं स० ॥ धूप स० ॥ दीपं स० ॥ नैवेद्यार्थे पंचामृतशेषनैवेद्यं स० ॥ हस्तप्रक्षालनं स० ॥ मुखप्रक्षालनं स० ॥ करोद्वर्तनार्थे चंदनमर्पयामि ॥ मुखवासार्थे पूगीफलतांबूलं स० ॥ सुवर्णपुष्पदक्षिणां स० ॥ श्रीअरुंधतीसहितकश्यपादिसप्तऋषिभ्यो नमः सर्वोपचारार्थे अक्षतान् समर्पयामि ॥ अनेन कृतपंचामृताङ्गपूजनेन अरुंधतीसहितकश्यपादिसप्तऋषयः प्रीयंताम् ॥ उत्तरे निर्माल्यं विसृज्य पुनः गंधाक्षतपुष्पैः समभ्यर्च्य अभिषेकं कुर्यात् ॥ महिम्नः पारं ते० ॥ (अथवा सुरास्त्वेत्यभिषेकं कुर्यात् ॥)

१ ( सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः ॥ वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयायते ॥ आखंडलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः ॥ ब्रह्मणा सहिताः सर्वे दिक्पालाः पांतु ते सदा ॥ कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः ॥ बुद्धिर्लज्जा वपुः शांतिः कांतिस्तुष्टिश्च मातरः ॥ एतास्त्वामभिषिंचंतु देवपत्न्यः समागताः ॥ आदित्यश्चंद्रमा भौमो जीवबुधसितार्कजाः । ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च पूजिताः ॥ देवदानवगंधर्वा यक्षराक्षसपन्नगाः ॥ ऋषयो मुनयो गावो देवमातर एव च ॥ देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां गणाः ॥ अस्त्राणि सर्वशस्त्राणि राजानो वाहनानि च ॥ औषधानि च रत्नानि कालस्यावयवाश्च ये ॥ सरितः सागराः शैलास्तीर्थानि जलदानदाः ॥ एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये ॥ )

अमृताभिषेकोऽस्तु ॥ महाभिषेकस्नानं स० ॥ स्नानांते आचमनीयं स० वृक्षत्वचासमायुक्तं मेषस्याजिनमुत्तमम् ॥ गृह्णंतु वस्त्रमेतत्तु सर्वपापापनुत्तये ॥ वस्त्रं स० ॥ कार्पाससूत्रजनितमुपवीतं मुनीश्वराः ॥ उत्तरीयकेण संयुक्तं गृह्यतां मुनिपुंगवाः ॥ यज्ञोपवीतं स० ॥ मलयाचलसंभूतं कर्पूरादिसमायुतम् ॥ हृदयानंदनं चारु चंदनं प्रतिगृह्यताम् ॥ विलेपनार्थे चंदनं स० ॥ अक्षताश्च सुरश्रेष्ठाः कुंकुमाक्ताः सुशोभिताः ॥ पूजासंरक्षणार्थाय गृह्णन्तां मुनिपुंगवाः ॥ अक्षतान् स० ॥ हारकंकणकेयूरमेखलाकुंडलादिकम् ॥ अनेकभूषणार्थाय देवि तत् प्रतिगृह्यताम् ॥ भूषणानि स० ॥ मांगल्यतंतुमणिभिर्मुक्ताफलविराजितम् ॥ कंठस्य भूषणं देवि प्रीत्यर्थं प्रतिगृह्यताम् ॥ कंठसूत्राद्याभरणं स० ॥ माल्यादीनि सुगंधीनि० ॥ पूजार्थे पुष्पाणि समर्पयामि ॥

अथांगपूजा ॥ कश्यपाय नमः पादौ पूजयामि ॥ अत्रये नमः जानुनी पूजयामि ॥ भरद्वाजाय नमः कटी पूजयामि ॥ विश्वामित्राय नमः नाभिं पूजयामि ॥ गौतमाय नमः हृदयं पूजयामि ॥ जमदग्नये नमः कंठं पूजयामि ॥ वसिष्ठाय नमः मुखं पूजयामि ॥ अरुंधत्यै नमः ललाटं पूजयामि ॥ वेदव्रतांगाय नमः शिरः पूजयामि ॥ अथ पत्रपूजा ॥ कश्यपाय नमः मुनिपत्रं समर्पयामि ॥ अत्रये नमः वटपत्रं समर्पयामि ॥ भरद्वाजाय नमः अश्वत्थपत्रं समर्पयामि ॥ विश्वामित्राय नमः अर्कपत्रं समर्पयामि ॥ गौतमाय नमः अपामार्गपत्रं समर्पयामि ॥ जमदग्नये नमः ताडपत्रं समर्पयामि ॥ वसिष्ठाय नमः केतकीपत्रं समर्पयामि ॥ अरुंधत्यै नमः नानाविधपत्राणि स० ॥ हरिद्रा रंजिता दिव्या सौभाग्यसुखदायिनी ॥ अतस्त्वामर्पयिष्यामि हरिद्रां सर्वकामदाम् ॥ हरिद्रां स० ॥ कुंकुमं कांचनं दिव्यं कामनाकामसंभवम् ॥ कुंकुमेनार्चिते देवि गृहाण

परमेश्वरि ॥कुंकुमं स० ॥ कज्जलं कामिकं रम्यं कामनाकामसंभवम् ॥ नेत्रयोर्भूषणार्थाय कज्जलं प्रतिगृह्यताम् ॥ कज्जलं स० ॥ नानाभरणशोभाढ्यैर्नानाद्रव्यैः सुपूजितम् ॥ अर्पितं च मया देवि ताडपत्रं प्रगृह्यताम् ॥ ताडपत्रं स० ॥ वनस्पति० ॥ धूपं स० ॥ साज्यं च वर्ति० ॥ दीपं समर्पयामि ॥ आहृत्य पच्यनैवेद्यं नानाशाकैस्तु संयुतम् ॥ लेह्यपेयसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥ नैवेद्यार्थे नानाशाकनैवेद्यं स० ॥ नैवेद्यमध्ये पानीयं स०॥ उत्तरापोशानं स०॥ हस्तप्रक्षालनं समर्पयामि ॥ मुखप्रक्षालनं स० ॥ करोद्वर्तनार्थे चंदनं स० ॥ पूगीफलं महद्दिव्यं नागवल्या दलैर्युतम् ॥ कर्पूरैलासमायुक्तं तांबूलं प्रतिगृह्यताम् ॥ मुखवासार्थे पूगीफलतांबूलं स० ॥ हिरण्यगर्भ० इति दक्षिणां स० ॥ इदं फलम्० इति फलं स० ॥ चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् ॥ आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वर ॥ कर्पूरगौरं०नीराजनं सम०॥ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ॥ जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुंधती ॥ मंत्रपुष्पांजलिं सम० ॥ यानि कानि० इति प्रदक्षिणाम् ॥ शरणागतदीनार्तपरित्राणपरायणाः ॥ रक्षंतु ऋषयः सर्वे मां पुरा शरणागतम् ॥नमस्कारान् स० ॥ येषां प्रभावेण दिवौकसश्च महाप्रभावास्तपसो बलेन ॥ लोकत्रयारिष्टविनाशकानां तेषामृषीणां तु ममास्तु पूजा ॥ प्रार्थनां स० ॥ आवाहनं न०॥ यस्य स्मृत्या च०॥ "पूजासंपूर्णफलावाप्त्यर्थम् अर्घ्यप्रदानं करिष्ये।" कश्यपाय नमःइदमर्घ्यं स० अत्रये०इदमर्घ्य स०।भरद्वाजाय०इदम०स०।विश्वामित्राय०इदम०स०। गौतमाय० इदम०स०॥ जमदग्नये०इदम०स०॥ वसिष्ठाय०इदम० स०। अरुंधत्यै० इदम० स० ॥ अनेन अर्घ्यप्रदानेन श्रीअरुंधतीसहितकश्यपादिसप्तऋषयः प्रीयंताम्॥ मंत्रहीनं क्रिया०॥ अपराधसह०। अनेन

षोडशोपचारपूजनेन कर्मणा श्रीअरुंधतीसहितकश्यपादिसप्तऋषयः प्रीयंताम्॥ वायनदानम्। अद्यपूर्वोच्चरित० एवंगुणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम आत्मनः पुराणोक्तफलप्राप्त्यर्थम् अरुंधतीसहितकश्यपादिसप्तऋषिप्रीत्यर्थं ब्राह्मणाय नानाशाकवायनप्रदानं करिष्ये॥ तथा च ब्राह्मणपूजनम्॥ वायनदानमंत्रः॥ नानाशाकसमायुक्तं दक्षिणाफलसंयुत॥ वायनं द्विजवर्याय सहिरण्यं ददाम्यहम्॥ विप्राय वेदविदुषे०॥ इदं नानाशाकवायनं सदक्षिणाकं सतांबूलम् अमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे तेन श्रीअरुंधतीसहितकश्यपादिसप्तऋषयः प्रीयंताम्॥ स्वस्त्यस्तु। दीर्घमायुः श्रेयःशांतिः पुष्टिस्तुष्टिश्चास्तु॥

॥ इति ऋषिपंचमीपूजा समाप्ता॥

---

## ॥ अथ ऋषिपंचमीव्रतोद्यापनविधिः॥

नद्यादौ स्नात्वा गृहमागत्य एकान्तस्थले मंडपादिकं सर्वतोभद्रमंडलं च पूर्ववत् कृत्वा॥ शुभासने उपविश्य शांतिसूक्तं पठित्वा आचम्य सुमुखश्चेत्यादि पठित्वा॥ अद्येत्यादि०ममात्मन० ज्ञानतः अज्ञानतो वा रजस्वलावस्थायां कृतसंपर्कजनितदुर्योनित्वदोषपरिहारद्वारा शुभफलप्राप्त्यर्थम् आचरितस्य आचरिष्यमाणस्य ऋषिपंचमीव्रतस्य संपूर्णफलावाप्त्यर्थमेकरात्राधिवासपक्षाश्रयेण ऋषिपंचमीव्रतोद्यापनं करिष्ये॥ तदंगभूतं दिग्रक्षणं कलशाराधनं दीपपूजनं गणपतिपूजनं पुण्याहवाचनं (मातृकापूजनं[1] वसोर्द्धारामायुष्यमन्त्रजपं नान्दीश्राद्धं) ब्रह्माचार्यवरणं सर्वतोभद्रमंडले देवतास्थापनादिकं च

१ बे जण बेठां होय तोज मातृकापूजन अने नांदीश्राद्ध करवुं।

करिष्ये ॥ इति संकल्प्य दिग्रक्षणादिकं (पृष्ठ ६-४५) कृत्वा ततो भद्रमंडलमध्ये पूर्णपात्रान्तान् सप्तकलशान् एककलशं वा संस्थाप्य क्षौमवस्त्रोपरि चंदनेनाष्टदलं विलिख्य मंडूकादिपीठदेवता(पृष्ठ १०७)आवाह्य गंधादिना संपूज्य ततो हैमीनाम् अरुन्धतीसहितसप्तर्षिप्रतिमानां प्राणप्रतिष्ठां कृत्वा सप्तकलशेषु वा एकस्मिन् कलशे ताः संस्थाप्य आवाहयेत् ॥ कश्यपाय० कश्यपमावा०स्था०।अत्रये० अत्रिम् आवा०स्था०। भरद्वाजाय० भरद्वाजम् आ०स्था०॥ विश्वामित्राय० विश्वामित्रम् आ०स्था०॥ गौतमाय० गौतमम् आ०स्था०॥जमदग्नये० जमदग्निम् आ०स्था०॥ वासिष्ठाय० वासिष्ठम् आ० स्था०॥ अरुन्धत्यै० अरुन्धतीम् आ०स्था० ॥ इत्यावाह्य प्रतिष्ठां कृत्वा "अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः" ध्यायामि इति ध्यानपूर्वकं आसनं पाद्यम् अर्घ्यम् आचमनं पंचामृतम् अभिषेकस्नानं शुद्धोदकस्नानं वस्त्रं यज्ञोपवीतं गंधं अक्षतान् पुष्पं धूपं दीपं नैवेद्यं पूगीफलताम्बूलं दक्षिणां नीराजनं पुष्पांजलिं च पूर्ववत् समर्प्य प्रार्थयेत् ॥ कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ॥ जमदग्निर्वसिष्ठश्च साध्वी चैवाप्यरुन्धती ॥ नमोस्तु ऋषिवृंदेभ्यो देवर्षिभ्यो नमोनमः ॥ सर्वपापहरेभ्यश्च वेदविद्भ्यो नमो नमः ॥ इति संप्रार्थ्य ॥ अनया पूजया अरुन्धतीसहितकश्यपादिसप्तर्षयः प्रीयन्ताम् ॥ तत आचार्यादिकं संपूज्य दक्षिणां दत्वा आशिषो गृहीत्वा कथाश्रवणादिना रात्रिं निनयेत् ॥ इति ॥

"अथ द्वितीयदिनकृत्यम्"-द्वितीयदिने प्रातर्नित्यकर्म आवाहितदेवतानां पूजनं च विधाय अग्निस्थापनग्रहस्थापनादि ग्रहहोमान्तं (१४९-१६४) कर्म कृत्वा प्रधानहोमं कुर्यात् ॥ प्रधानमरुन्धतीसहितकश्यपादि-

---

१ ऋषिपञ्चमीव्रतवत् पूजनं कार्यम् ॥

सप्तर्षीन् मूलमंत्रेण तिलव्रीहियवसर्पिर्द्रव्यैः प्रतिद्रव्यमष्टोत्तरशतमष्टाविंशतिसंख्यया वा जुहुयात् ॥ एवम् "अरुन्धतीसहितकश्यपादिसप्तर्षिभ्यो नमः" इति मंत्रेणाष्टोत्तरशतं हुत्वा ब्रह्मादिमंडलदेवतानामेकैकामाज्याहुतिं च मंडूकादिदेवतानामेकैकामाज्याहुतिं (पृ.१६६-१६८) जुहुयात् ॥ ततः फलहोमादिकम् उत्तरपूजनादिकं व्याहृतिहोमं प्रणीताविमोकान्तं (पृ.१६८-१८८) च कर्म कृत्वा ततः छायापात्रदानादिकं दत्वा सप्तकलशोपरि प्रतिमापूजां कृत्वा सपत्नीकान् सप्तब्राह्मणान् वस्त्रादिना संपूज्य तेभ्यः क्रमेण दक्षिणाप्रतिमायुतसप्तकलशान् दद्यात् ॥ तत्र मंत्रः- गृहाण त्वं द्विजश्रेष्ठ प्रतिमादिसमन्वितम् ॥ कलशमृषिसंप्रीत्यै व्रतसंपूर्तिहेतवे ॥ यदैककुंभे सर्वप्रतिमापूजनं कृतं चेत्तदा सर्वप्रतिमायुतं कलशमाचार्याय दद्यात् ॥ अन्येभ्यः दक्षिणावस्त्रयुतान् पक्वान्नपूरितान् कलशान् दद्यात् ॥ तत आचार्यादिकं संपूज्य दक्षिणां दत्वा आशिषो गृहीत्वा "यान्तु देव०" इति देवताविसर्जनं कृत्वा ब्राह्मणान् भोजयित्वा बंधुभिः सह भुंजीत ॥

॥ इति ऋषिपञ्चमीव्रतोद्यापनविधिः ॥

---

## ॥ अथ ललिताव्रतम् ॥

भाद्रपदशुक्लषष्ठ्यां ललिताव्रतं हेमाद्रौ भविष्ये ॥ सा मध्याह्नव्यापिनी ग्राह्या तद्व्याप्तावव्याप्तौ वा जागरणप्रधानत्वात् ॥ ( इदं गुर्जरदेशे प्रसिद्धम् ॥ ) नारी स्नात्वा प्रभाते तु शुक्लमाल्यांबरा शुचिः ॥ सुवेषाऽऽभरणोपेता भूत्वा संगृह्य वालुकाम् ॥ कृत्वा तस्या वंशपात्रे पंचपिंडाकृतिं शुभाम् ॥ ध्यात्वा तु ललितां देवीं

तपोवननिवासिनीम् ॥ पंकजं करवीरं च नेवालीं मालतीं तथा ॥ नीलोत्पलं केतकं च संगृह्य तगरं तथा ॥ एकैकाष्टशतं ग्राह्य अष्टाविंशतिरेव वा ॥ अक्षताः कलिका ग्राह्यास्ताभिर्देवीं समर्चयेत् ॥ प्रार्थयेदग्रतो भूत्वा देवीं तां गिरिशप्रियाम् ॥ गंगाद्वारे कुशावर्त्ते बिल्वके नीलपर्वते ॥ स्नात्वा कनखले तीर्थे हरं लब्धवतीं पतिम् ॥ ' ललिते ललिते देवि सौख्यसौभाग्यदायिनि । अनंतं देहि सौभाग्यं पुत्रपौत्रविवर्धनम् ॥" अनेन मंत्रेणाभ्यर्च्य सामान्यपूजामन्त्रैः "ललितादेव्यै नमः" ध्यानं स०॥ आवाहनं स०॥ इत्यादिकमुक्त्वा विधिपुरःसरं पूजां कुर्यात् ॥ ततो रात्रौ सखिभिः सहिता जागरणं कुर्यात् ॥ न च संमीलयेन्नेत्रे नारी यामचतुष्टयम् ॥ दुर्भगा दुःखिता वंध्या नेत्रसंमीलनाद्भवेत् ॥ एवं जागरणं कृत्वा सप्तम्यां नद्यादौ स्नायात् ॥ ततो गृहे समागत्य हुत्वा वैश्वानरं क्रमात् ॥ देवान्पितॄन्न्‍ ब्राह्मणांश्च पूजयित्वा सुवासिनीः ॥ कन्यकाश्चैव संभोज्य दीनानाथांश्च भोजयेत् ॥ भक्ष्यभोज्यैर्बहुविधैर्दत्वा दानानि भूरिशः ॥ ललिता मेऽस्तु सुप्रीता इत्युक्त्वा तु विसर्जयेत् ॥ यः कश्चिदाचरेदेतद्व्रतं सौभाग्यदायकम् ॥ षष्ठ्यां तु ललितासंज्ञं सर्वपापनिबर्हणम् ॥ नरो वा यदि वा नारी तस्य पुण्यमनन्तकम् ॥ इति ॥ एवं व्रते उद्यापने च अन्यव्रतवद्ग्रिहक्षणादिकं पूजनं होमादिकं च कर्तव्यम् ॥

॥ इति ललिताव्रतम् ॥

---

## ॥ अथ चंपाषष्ठीव्रतम् ॥

भाद्रपदे वा मार्गशीर्षे शुक्ले चंपाषष्ठीव्रतम् ॥ सोचरयुता ग्राह्या ॥ षष्ठी भाद्रपदे शुक्ला वैधृत्या च समन्विता ॥ विशाखाभौमयोगेन सा

" चंपा " इति विश्रुता ॥ पंचम्यां नियमं कुर्यादाचार्यवचनाद् व्रती ॥ षष्ठ्यां स्नानं प्रकुर्वीत संतर्प्य पितृदेवताः ॥ अभ्येत्य स्वगृहं मौनी सूर्यं मनसि चिन्तयेत् ॥ स्थापयेदव्रणं कुंभं मृत्पात्रं च तथोपरि ॥ तस्योपरि न्यसेत्सूर्यं पलेकेन विनिर्मितम् ॥ सौवर्णं भक्तिसंयुक्तं रथं सारथिना युतम् ॥ तमर्चयेज्जगन्नाथं गृहीत्वाऽऽज्ञां गुरोः स्वयम् ॥ षडक्षरेण मंत्रेण गंधपुष्पाक्षतादिभिः॥("ॐ नमः सूर्याय " इति मंत्रः॥) संपूज्य विधिवद्देवं फलपुष्पादिकं च यत्॥ सूर्यायावेदयेत्सर्वं "सूर्यो मे प्रीयतामि"ति॥ ततः प्रभाते विमले गत्वा गुरुगृहं व्रती ॥सर्वोपकरणैः सूर्यमाचार्याय निवेदयेत् ॥ धान्यं पुष्पं फलं वस्त्रं रत्नधेन्वादिकं च यत् ॥ गवां कोटिसहस्रं तु कुरुक्षेत्रेऽर्कपर्वणि ॥ चंपादानस्य राजेन्द्र कलां नार्हति षोडशीम् ॥ तिलहोमं ततः कुर्यात्सावित्र्याऽष्टोत्तरं शतम् ॥ ततस्तां कल्पयेद्धेनुमर्को मे प्रीयतामिति ॥ एवं यः कुरुते चंपां सोत्यंतं पुण्यमश्नुते ॥ प्रभूणां च विधिः प्रोक्तस्तत्प्रभूणां च गोचरः॥ इति ॥ अत्रापि विधिना पूजनार्थं सर्वव्रतवत् दिग्रक्षणादिकं तथा चोद्यापने पूजनं होमादिकं च सामान्यतया उद्यापनवत् कर्तव्यम् ॥

॥ इति चंपाषष्ठीव्रतम् ॥

---

## ॥ अथ मुक्ताभरणव्रतम् ॥

भाद्रपदशुक्लसप्तम्यां मुक्ताभरणव्रतं हेमाद्रौ भविष्ये ॥ सा मध्याह्नव्यापिनी ग्राह्या ॥ तद्व्याप्तावव्याप्तौ वा परा ॥ आचम्य अत्राद्य० तिथौ ममेह जन्मनि जन्मान्तरे वा अखंडितसंततिपुत्रपौत्र-

विवृद्धये मुक्ताभरणव्रतांगम् उमामहेश्वरपूजनं करिष्ये ॥ इति संकल्प्य तदंगत्वेन दिग्रक्षणादिकं कृत्वा शिवाग्रे नूतनदोरकं न्यस्य उमामहेश्वरं सपूज्य ॥ देवदेव जगन्नाथ सर्वसौभाग्यदायक ॥ गृह्णीयां दोररूपं त्वां पुत्रपौत्रप्रवर्द्धनम् ॥ इति दोरकं गृहीत्वा ॥ "सप्तसामोपगीतं त्वां धारयामि जगद्गुरो ॥ सूत्रग्रंथिस्थितं नित्य धारयामि स्थिरो भव ॥" इति दोरकं बद्ध्वा ॥ "हर पापानि सर्वाणि तुष्टिं कुरु दयानिधे ॥ प्रसन्नः सन् उमाकांत दीर्घायुः पुत्रदो भव"। इति जीर्णदोरकोत्तारणं ततो वायनदानम् ॥ मंडकान् वेष्टकान् वाथ सघृतान् दक्षिणायुतान् ॥ एकादशशतं कृत्वा ब्राह्मणाय कुटुंबिने ॥ वेदशास्त्रप्रवीणाय दद्यात्सोमस्य तुष्टये ॥ शंकरः प्रतिगृह्णाति शंकरो वै ददाति च ॥ शंकरस्तारकोभाभ्यां शंकराय नमोनमः ॥ इति वायनं दद्यात् ॥ एवं या पूजनं कुर्यात्सोमस्य सुखदस्य च ॥ सर्वान्कामानवाप्नोति पुत्रपौत्रैश्च मोदते इति ॥ अत्रापि व्रते पूजनादिकं सामान्यव्रतवत् कर्तव्यं चोद्यापनेऽपि पूजनहोमादिकमपि उद्यापनवत् कार्यम् ॥ इति मुक्ताभरणव्रतम् ॥

---

## ॥ अथ ज्येष्ठादेवीव्रतम् ॥

भाद्रपदशुक्लाष्टम्या ज्येष्ठार्क्षे ज्येष्ठाव्रतमुक्तं कालादर्शे ॥ दिनद्वये नक्षत्रयोगे तु परदिने ॥ मध्याह्नादूर्ध्वं नक्षत्रसत्वे परा ग्राह्या। अन्यथा रात्रावपि नक्षत्रयोगे पूर्वैव ॥ यस्मिन्दिने भवेज्ज्येष्ठा मध्याह्नादूर्ध्वमप्यणुः ॥ तस्मिन्हविष्यं पूजा च न्यूना चेत्पूर्ववासरे ॥ नवमीसहिता कार्या अष्टमी नात्र संशयः ॥ तथा च स्कंदे ॥ मैत्रेणा-

वाहयेद्देवीं ज्येष्ठायां तु मपूजयेत्॥ मूले विसर्जयेद्देवीं त्रिदिनव्रतमुत्तमम्॥

आचम्य अत्राद्य० इति तिथ्यादि संकीर्त्य मम मृतवालवंध्यात्वादिदोषपरिहारार्थं पुत्रपौत्रादिविवृद्धये दारिद्र्यनाशार्थं यथालाभोपचारैः ज्येष्ठापूजनमहं करिष्ये ॥ "तदङ्गत्वेन दिग्रक्षणादिकं करिष्ये" इति संकल्प्य तत् कृत्वा ज्येष्ठादेवीं ध्यायेत् ॥ध्यानम्॥ त्रिलोचनां शुक्लदंतीं बिभ्रतीं कांचनीं तनुम् ॥ विरक्तां रक्तनयनां ज्येष्ठां ध्यायामि सुंदरीम् ॥ इति ध्यात्वा आसनाद्युपचारैः सामान्यपूजामंत्रैः संपूज्य प्रार्थयेत् ॥ ज्येष्ठे श्रेष्ठे तपोनिष्ठे धर्मिष्ठे सत्यवादिनि ॥ समुद्रमथनोत्पन्ने ज्येष्ठायै ते नमोनमः ॥ एवं संप्रार्थ्य आचार्यपूजनादिकं कृत्वा रात्रिं जागरणादिना निनयेत् ॥

"अथोद्यापनम्"—उद्यापने तु प्रतिमां सुवर्णपलसंमिताम् ॥ कृत्वा चाष्टदले पद्मे स्थापयेत्कलशोपरि ॥ तामग्निवर्णामिति च मंत्रेणावाहयेद् व्रती ॥ नाममंत्रेण कुर्वीतासनं पाद्यमथार्घ्यकम् ॥ आपोहिष्ठेति तिसृभिर्हिरण्यवर्णाश्चतसृभिः॥ अभिषेकं चाचमनं मधुपर्कं च कंचुकीम् ॥ वस्त्रगंधाक्षतान्पुष्पधूपदीपान् प्रयत्नतः ॥ नैवेद्याचमनीये च करोद्वर्त्तनकं शुभम् ॥ तांबूलं दक्षिणां दत्त्वा ततो नीराजयेच्च ताम् ॥ "यस्याः सिंहो रथे युक्तो व्याघ्रश्चापि महाबलः ॥ ज्येष्ठामहमिमां देवीं प्रपद्ये शरणं तव ॥" इति संप्रार्थ्य ॥ स्थापितेऽग्नौ ततः पश्चाद्धोममष्टोत्तरं शतम् ॥ द्रव्यैर्दधिमधुक्षीरघृतैः कुर्यात्

---

१ ततो द्वादशवर्षाणि पूजनीया प्रयत्नतः ॥ यावज्जन्माथ वा पूर्वविधिनाऽनेन मानवैः ॥ ददाति वित्तं पुत्रांश्च अर्चनीया सदा स्त्रिया ॥ अनेन विधिना युक्तो यो हि पूजयते नरः ॥ विघ्नास्तस्य प्रणश्यन्ति यथाप्सु लवणं तथा ॥ इति ॥

प्रयत्नतः ॥ तर्पणं च ततः कुर्यादेभिर्मंत्रैर्विचक्षणः ॥ ज्येष्ठायै नमः ज्येष्ठां तर्पयामि ॥ एवं सर्वत्र ॥ श्रेष्ठायै० त०। सत्यायै० त०। कलिनाशिन्यै०। विद्यायै०। वैनायक्यै०। तपोनिष्ठायै०। श्रियै०श्रियं त०। कृष्णायै०। ब्रह्मिष्ठायै० ॥ विसृज्य च ततो देवीं ज्येष्ठायाः प्रतिमां शुभाम् ॥ कृष्णवस्त्रेण संयुक्तामाचार्याय निवेदयेत् ॥ ब्राह्मणान् सुवासिनीः भोजयित्वा स्वयं भुंजीत ॥ एवं कृते व्रते सम्यक् सर्वशान्तिः प्रजायते ॥ धनधान्यसमृद्धिश्च ह्यारोग्यं भवति ध्रुवम् ॥इति॥ विशेषविधिस्तु सामान्यव्रतवत् चोद्यापनवत् कर्तव्यः ॥

॥ इति ज्येष्ठादेवीव्रतम् ॥

---

## ॥ अथ दूर्वाष्टमीव्रतम् ॥

भाद्रपदशुक्लाष्टमी दूर्वाष्टमी सा पूर्वा ग्राह्या॥ इयं ज्येष्ठामूलर्क्षयुता त्याज्या ॥ इदं पूर्वदिने ज्येष्ठादियोगे द्रष्टव्यम् ॥ दूर्वाष्टमी सदा त्याज्या ज्येष्ठामूलर्क्षसंयुता॥इति ॥ तथाच कथितम् ॥ ऐन्द्रर्क्षे पूजिता दूर्वा हन्त्यपत्यानि नान्यथा ॥ भर्तुरायुर्हरा मूले तस्मात्तां परिवर्जयेत् ॥ इदमगस्त्योदये कन्यार्के च न कार्यम् ॥ शुक्ले भाद्रपदे मासि दूर्वासंज्ञा तथाष्टमी ॥ सिंहार्क एव कर्त्तव्या न कन्यार्के कदाचन ॥ अगस्त्ये उदिते तात पूजयेदमृतोद्भवम् ॥ वैधव्यं पुत्रशोकं च दशवर्षाणि पंच चेति ॥ भाद्रपदशुक्लाष्टम्यां अगस्त्योदये भाविनि सति श्रावणकृष्णाष्टम्यां दूर्वाव्रतं कुर्यादिति हेमाद्रिः ॥ इदं व्रतं च स्त्रीणां नित्यम् ॥ या न पूजयते दूर्वां मोहादिह यथाविधि ॥ त्रीणि जन्मानि वैधव्यं लभते नात्र संशयः ॥

तस्मात्संपूजनीया सा प्रतिवर्षं वधूजनैरिति॥ यदा ज्येष्ठादिकं विनाऽष्टमी न लभ्यते तदा पुराणसमुच्चये उक्तम् ॥ कर्त्तव्या चैकभक्तेन ज्येष्ठामूलं यदा भवेत्॥ दूर्वामभ्यर्चयेद्भक्त्या न वन्ध्यं दिवसं नयेत् ॥

अत्र विधिर्मदनरत्ने ॥ शुचौ देशे उत्पन्नायां दूर्वायां लिंगं संस्थाप्य गंधादिपंचोपचारैर्लिंगं संपूज्य ॥ दध्यक्षतयुतफलं गृहीत्वा ॥ " त्रिलोचनाय नमः " इममर्घं मम० इत्यर्घं दत्त्वा ततो दूर्वापूजनम् ॥ तत्र मंत्रः। त्वं दूर्वेऽमृतजन्मासि वंदितासि सुरासुरैः॥ सौभाग्यं संततिं देहि सर्वं कार्यकरी भव ॥ यथा शाखाप्रशाखाभिर्विस्तृताऽसि महीतले ॥ तथा ममापि सन्तानं देहि त्वमजरामरम् ॥ ततो " दूर्वादेव्यै नमः " इति मंत्रेण यथाशक्त्या पूजयेत् ॥ अनग्निपक्वं भक्षयेत् ॥ अधिमासे संप्राप्ते नभस्य उदये मुनेः॥ अर्वाग् दूर्वाव्रतं कार्यं परतो नैव कुत्रचित् ॥

॥ इति दूर्वाष्टमीव्रतम् ॥

---

## ॥ अथ महालक्ष्मीव्रतम् ॥

भाद्रपदशुक्लाष्टमीमारभ्य षोडशदिनपर्यन्तं महालक्ष्मीव्रतम् ॥ तच्चार्द्धरात्रमतिक्रम्य वर्तिन्यामष्टम्यां कार्यम् ॥ अस्यां ज्येष्ठायुतायां व्रतं कार्यम् ॥ तदभावे केवलायामपि कार्यम् ॥ तत् सविधि कर्तव्यं चेत् आचम्य संकल्प्य दिग्रक्षणादिकं कृत्वा " करिष्यामि व्रतं देवि त्वद्भक्तस्त्वत्परायणः॥ तदविघ्नेन मे यातु समाप्तिं त्वत्प्रसादतः" इति षोडशगुणैः षोडशग्रन्थियुतं दोरकं बद्ध्वा ततो महालक्ष्म्याः पूजनं कार्यम् ॥ महालक्ष्मि समागच्छ पद्मनाभपदादिह ॥ पंचोपचारपूजेयं त्वदर्थं देवि संस्कृता ॥ इत्यावाह्य " महालक्ष्म्यै नमः " इति आसनं पाद्यम् अर्घ्यम् आचमनं

पंचामृतस्नानम् अभिषेकस्नानं गंधाक्षतपुष्पं समर्प्य नामपूजां कुर्यात्।

अथ नामपूजा ॥ श्रियै नमः। लक्ष्म्यै०। वरदायै०। विष्णुपत्न्यै०। क्षीरसागरवासिन्यै०। हिरण्यरूपायै०। सुवर्णमालिन्यै०। पद्मवासिन्यै०। पद्मप्रियायै०। मुक्तालंकारिण्यै०। सूर्यायै०। चंद्राननायै०। विश्वमूर्त्यै०। मुक्त्यै०। मुक्तिदात्र्यै०। ऋद्ध्यै०। समृद्ध्यै०। पुष्ट्यै०। तुष्ट्यै०। धनेश्वर्यै०। श्रद्धायै०। भोगिन्यै०। भोगदायै०। धात्र्यै० ॥२४॥ ततः सौभाग्यद्रव्यं धूपं दीपं नैवेद्यं तांबूलं दक्षिणां नीराजनं पुष्पांजलिं समर्प्य प्रार्थयेत् ॥ एवं प्रतिदिनं कृत्वा अन्तिमदिने महालक्ष्म्याः विधिवत्पूजनं कृत्वा ततः- उत्तार्य दोरकं बाहोर्लक्ष्मीपार्श्वे निवेदयेत् ॥ " लक्ष्मीदेवि गृहाण त्वं दोरकं यन्मया धृतम् ॥ व्रतं संपूर्णतां यातु कृपा कार्या मयि त्वया ॥ " कथां श्रुत्वा सुवर्णं च दद्यादाचार्यदक्षिणाम् ॥ एवं निर्वर्त्य विधिवत्पूजनं बटुकश्रियः॥ चातुर्वर्ण्यं च संभोज्य यथाशक्त्या च दक्षिणाम् ॥ दीपांश्च षोडशापूपान् गोधूमानां द्विजातये ॥ दत्त्वा तत्संख्यया भुक्त्वा रात्रौ जागरणं चरेत् ॥ ( ततश्चंद्रायार्घं दद्यात् ॥) चंद्रोदये च संजाते दद्यादर्घं ततो व्रती ॥ मन्त्रेणानेन विप्रेण शंखेनाम्बुफलान्वितम् ॥ "नमोस्तु ते निशानाथ लक्ष्मीभ्रातर्नमोऽस्तु ते ॥ व्रतं संपूर्णतां यातु गृहाणार्घ्यं नमोस्तु ते" इत्यर्घं दत्त्वा॥ प्रातर्विसर्जयेद्देवीं मंत्रेणानेन सुव्रत ॥"पंकजं देवि संत्यज्य मम वेश्मनि संविश ॥ यथा सपुत्रभृत्योऽहं सुखी स्यां त्वत्प्रसादतः ॥" इति ॥ ततो व्रतराजोक्तविधिवदुद्यापनमपि कार्यम् ॥

॥ इति महालक्ष्मीव्रतम् ॥

---

## ॥ अथ अदुःखनवमीव्रतम् ॥

भाद्रपदे शुक्लनवम्यां मुहूर्तमात्रसत्त्वेऽपि परयुतायाम् अदुःखनवमीव्रतम् ॥ आचम्य अद्याद्य० पुण्यतिथौ ममेह जन्मनि जन्मान्तरे च भर्त्रा सह चिरायुःसौभाग्यप्राप्तये सकलपातकदुःखनाशार्थं व्रतकल्पोक्तफलावाप्त्यर्थं श्रीगौरीदेवताप्रीत्यर्थम् अदुःखनवमीव्रतं करिष्ये । तदंगत्वेन कलशपूजनं दीपपू० गणपतिपू० अदुःखनवमीव्रतांगं गौरीपूजनं चाहं करिष्ये ॥ इति संकल्प्य ॥ कलशाराधनादि कृत्वा गोमयेनोपलिप्तभूमौ वेदिकां गुडलिप्ताम् इक्षुच्छादिताम् अपूपपायसान्विताम् उपरि मंडपिकायुतां च कृत्वा तत्र पीठे कलशप्रतिष्ठां कृत्वा अग्न्युत्तारणपूर्विकां गौरीप्रतिमां संस्थाप्य "नमो देव्यै०" इति मंत्रेण गौरीं गणपतिमिन्द्रादिलोकांश्चावाह्य ॥ गौरीं दुःखहरां देवीं शिवस्यार्द्धांगधारिणीम् ॥ सुनीलवस्त्रसंयुक्तामुमामावाहयाम्यहम् ॥ "गौर्यै नमः" इति आसनादि मंत्रपुष्पांजलिपर्यन्तं पूजनं कृत्वा ततो नवपक्वान्नैः पूरितं वायनं दद्यात् ॥ " स्कंदमातर्नमस्तुभ्यं दुःखव्याधिविनाशिनि ॥ उत्तिष्ठ गच्छ भवनं वरदा भव पार्वति ॥ " इति "यान्तु देव०" इति देवता विसर्जयेत् ॥"

॥ इति अदुःखनवमीव्रतम् ॥

---

## ॥ अथ दशावतारव्रतम् ॥

भाद्रपदशुक्लदशम्यां दशावतारव्रतम् ॥ दशम्यां शुक्लपक्षस्य मासे प्रौष्ठपदे शुचिः ॥ स्नात्वा जलाशये स्वच्छे पितृदेवादितर्पणम् ॥ कृत्वा कुरुकुलश्रेष्ठ गृहमागत्य मानवः ॥ गृहीयाद्धान्यचूर्णस्य स्वहस्तप्रसृतित्रयम् ॥ क्रमेण पाययेत्तत्तु पुंसंज्ञं घृतसंयुतम् ॥ वर्षे वर्षे

नाष्टदलं विलिख्य मध्ये मंडूकादिपीठदेवता ( पृ. १०७ ) आवाह्य संपूजयेत्॥ततः पद्मे पूर्वपत्राग्रे गणपतये नमः गणपतिम् आवाहयामिस्थापयामि। दुर्गायै०। क्षेत्रपालाय०। वास्तोष्पतये०॥परितः आदित्यादिनवग्रहदेवताः पूर्वादिदिक्षु इन्द्रादिलोकपानावाह्य शंखघंटाद्यर्चनं न्यासांश्च पूर्ववत् कृत्वा कलशोपरि कृताग्न्युत्तारणमाणप्रतिष्ठां हैमीं वामनमूर्तिं संस्थाप्य॥ अजयाय महेशाय जलजास्याय शंखिने ॥ नमस्ते केशवानन्त वासुदेव नमोऽस्तु ते ॥ साङ्गाय सपरि० वाम० न० ध्यायामि॥ ब्रह्मांडमुदरे यस्य महद्भूतैरधिष्ठितम् ॥ मायावी वामनः श्रीशो समायातु जगत्पतिः ॥ सांग सपरिवार वामन इहागच्छ इह तिष्ठ वामनाय नमः वामनमावा० स्थाप० ॥ नानारत्नसमायुक्तं कार्तस्वरविभूषितम् ॥ आसनं च मया दत्तं गृहाण परमेश्वर ॥ साङ्गाय सपरि० वामनाय नमः आसनं सम० ॥ कमंडलुशिखाधारी कुब्जरूपोऽसि वामन ॥ छत्रहस्त-गृहाणेदं पाद्यं देव नमोऽस्तु ते ॥ साङ्गाय सपरि०वाम०न० पाद्यं स०॥ अर्घ्यम् ॥ सहस्रशीर्षा त्वं देव श्रवणर्क्षसमन्वितः॥ गृहाणार्घ्यं तु देवेश रमया सहितो हरे ॥ साङ्ग०सप०वाम० नमः अर्घ्यं स०॥एवम् आचमनं पंचामृतस्नानं स्नानम् अभिषेकं शुद्धोदकस्नानं वस्त्रं यज्ञोपवीतं गंधं अक्षतान् पुष्पाणि समर्पयेत् ॥

अथांगपूजा ॥ मत्स्याय० पादौ पूज० ॥ कूर्माय० जानुनी पू०॥ वराहाय० गुह्यं पू०॥ नृसिंहाय० नाभिं पू० ॥ वामनाय० हृदयं पू०॥

१ सौवर्णं च यथाशक्त्या शंखशार्ङ्गविभूषितम्॥ सुमगं वस्त्रसंयुक्तं द्वादशांगुलमुच्छ्रितम् ॥ पीतवस्त्रैः शुभैराचेष्ट्याजिनं च कमंडलुम् ॥ अतसीपुष्पसंकाशं तिलकृष्णाजिनोपरि ॥ स्थापयित्वा विधानेन चंदनेनानुलेपयेत् ॥ घृत्वा यालमयं रूपं देवदेवस्य चक्रिणः ॥

२ साङ्गाय सपरिवाराय वामनाय नमः॥ इति प्रत्युपचारं वक्तव्यम् ॥

परशुरामाय० भुजौ पू०॥ रामाय० कर्णौ पू०॥ कृष्णाय मुखं पू०॥ बौद्धाय० नेत्रे पू० ॥ कल्किने० शिरः पूजयामि ॥ ततः सौभाग्यद्रव्यं धूपं दीपं दधिभक्तनैवेद्यं तांबूलं दक्षिणां नीराजनं प्रदक्षिणां पुष्पांजलिं समर्प्य ॥ विशेषार्घ गृहीत्वा ॥ नमस्ते पद्मनाभाय नमस्ते जलशायिने ॥ तुभ्यमर्घ्यं प्रयच्छामि बालवामनरूपिणे ॥ नमः शार्ङ्गधनुर्बाणपाणये वामनाय च ॥ यज्ञभुक्फलदात्रे च वामनाय नमोनमः ॥ श्रीवामनाय नमः विशेषार्घं स० ॥प्रार्थना॥ नमस्तेऽदितिपुत्राय नमस्ते कश्यपात्मज ॥ त्रिविक्रमाय देवाय वामनाय नमोनमः ॥ जगदादिर्जगद्रूपो ह्यनादिर्जगदन्तकृत् ॥ जलाशयो जगद्योनिः प्रीयतां मे जनार्दनः ॥ नमो वामनरूपाय नमस्तेऽस्तु त्रिविक्रम ॥ नमस्ते बलिबन्धाय वासुदेव नमोऽस्तु ते ॥ वामनाय नमः प्रार्थनापूर्वकनमस्कारान् स०॥ ततो न्यग्रोधं संपूज्य ॥ शिक्यदध्यन्नेन युतं जलपूरकं करकं ( तुंबीपात्रं ) संपूज्य प्रार्थयेत् ॥ शिक्योऽसि दधिभक्तोऽसि लंबितोऽसि मयोपरि ॥ सूत्रेणैवाश्रितोऽसि त्वं वामनः प्रीयतामिति ॥ करकं पूजयिष्यामि सरितां संगमे जलैः ॥ पंचरत्नसमायुक्तं तेन तुष्यतु वामनः ॥ अनेन पूजनेन सपरि० वामनः प्रीयताम् ॥ तत आचार्यं संपूज्य दक्षिणां दत्त्वा आशिषो गृहीत्वा पुराणपठनादिना रात्रिं निनयेत् इति ॥

"द्वितीयदिने"—प्रातर्नित्यकर्म समाप्य स्थापितदेवान् संपूज्य अग्निप्रतिष्ठापनादि ग्रहहोमान्तं (पृ. १४९-१६४) पूर्ववत् कृत्वा प्रधानहोमं कुर्यात् ॥ प्रधानं वामनं पायसघृतसमित्तिलैः प्रतिद्रव्यमष्टोत्तरशतसंख्यया "श्रीवामनाय नमः" इति मूलमंत्रेण जुहुयात् ॥ ततो ब्रह्मादिदेवताः मंडूकादिपीठदेवताः ( पृ. १६४-१६६ ) परिवारदेवताश्चैकैकामाज्याहुतिं जुहुयात् । ततः फलादिहोममुत्तरपूजनादिप्रणी-

दिने तस्मिन्नेवं वर्षाणि वै दश ॥ प्रथमेऽपूपकान्वर्षे द्वितीये घृतपूरकान् ॥ तृतीयेऽपूपकासारांश्चतुर्थे मोदकान् शुभान् ॥ सोहालिकान्पंचमेऽब्दे षष्ठेऽब्दे खंडवेष्टकान् ॥ सप्तमेऽब्दे कोकरसानकंपुष्पांस्तथाऽष्टमे ॥ नवमे कर्णवेष्टांश्च दशमे मंडकाञ्छुभान् ॥ दशात्मनो दश हरेर्दश विप्राय दापयेत् ॥ क्रमेण भक्षयेद्दत्वा यथोक्तविधिना नृप ॥ अर्धार्धं विष्णवे देयमर्धार्धं च द्विजातये ॥ स्वत एवार्धमश्नीयाद्दत्वा रम्ये जलाशये ॥ दशावतारानभ्यर्च्य पुष्पधूपविलेपनैः ॥ मंत्रेणानेन मेधावी हरिमभ्युक्ष्य वारिणा ॥ " मत्स्यं कूर्मं वराहं च नारसिंहं च वामनम् ॥ रामं रामं च कृष्णं च बौद्धं चैव सकल्किनम् ॥ " अत्र-हैर्मर्महार्हाश्च दशमूर्तीः सुलक्षणाः॥ गंधपुष्पैश्च नैवेद्यैरर्चयेद्विधिपूर्वकम् ॥ एवं यः कुरुते भक्त्या विधिनाऽनन सुव्रत ॥ व्रतं दशावताराख्यं तस्य पुण्यमनन्तकम् ॥ ये पूजयंति पुरुषो पुरुषोत्तमस्य मत्स्यादिकांस्तु दशमीषु दशावतारान् ॥ मन्ये दशस्वपि दशासु सुखं विहृत्य ते यान्ति यानमधिरुह्य सुरारिलोकम् ॥ इति दशावतारव्रतम् ॥

---

## ॥ अथ वामनद्वादशीव्रतोद्यापनम् ॥

भाद्रपदशुक्लद्वादश्यां श्रवणयुतायां मध्याह्ने वामनोत्पत्तिः अतो मध्याह्नव्यापिनी द्वादशी ग्राह्या ततोऽन्यत्र काले वा श्रवणयुता ग्राह्या ॥ उभयदिने श्रवणयोगे पूर्वैव ॥ बुधवारयोगे प्राशस्त्या ॥ सर्वथा द्वादश्याः श्रवणयोगाभावे एकादश्यामेव श्रवणसत्त्वे मध्याह्नव्यापिनीमपि द्वादशीं विहायैकादश्यामेव व्रतं कार्यम् ॥ शुद्धैकादश्यां श्रवणाभावे दशमीविद्धैकादश्यामपि श्रवणयुतायांव्रतम् ॥ पूर्वं दिने एव

मध्याह्नव्यापिनी द्वादशी परदिने मध्याह्नादन्यत्रकाले श्रवणयुता तदा पूर्वैव ॥ तिथिद्वयेऽपि श्रवणयोगाभावे द्वादश्यामेव मध्याह्नव्यापिन्यां व्रतम्॥दिनद्वये मध्याह्नव्याप्तौ तदव्याप्तौ चैकादशीयुतैव ग्राह्या॥ पारणातु पूर्वोक्तरित्योभयान्तेऽन्यतरान्ते वा कार्या ॥

स्वासने उपविश्य आचम्य प्राणानायम्य ॥ अद्येत्यादि० तिथौ मम सकुटुम्बस्य सदाभीष्टसिद्ध्यर्थं वामनजयन्तीव्रतमहं करिष्ये ॥ ततो वामनपूजनं षोडशोपचारैः प्रतिवर्षवत् कुर्यात् ॥ इति व्रतविधिः ॥

अथोद्यापनविधिः— मध्याह्ने नद्यादौ देहशुद्धिप्रायश्चित्तपूर्वकं विधिवत् स्नात्वा गृहमागत्य मंडपादिकं च पूर्ववत्कृत्वा शुभासने उपविश्य शांतिसूक्तपूर्वकम् आचम्य प्राणानायम्य । अद्याद्य० पुण्यतिथौ इह जन्मनि जन्मान्तरे च कृतदोषप्रायश्चित्तार्थं पिशाचादिदुर्योनिनिरसनद्वारा श्रीविष्णुलोकप्राप्त्यर्थं पुत्रपौत्राद्यनवच्छिन्नसन्ततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थमाचरितस्य आचरिष्यमाणस्य वामनजयन्तीव्रतस्य संपूर्णतासिद्ध्यर्थम् एकरात्राधिवासपक्षाश्रयेण श्रीवामनजयन्तीव्रतोद्यापनं करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशार्चनं दीपपू० गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नान्दीश्राद्धं ब्राह्मणवरणं भद्रमंडले देवतास्थापनं प्रधानदेवतास्थापनं च करिष्ये । इति संकल्प्य दिग्रक्षणादि आचार्यवरणान्तं (पृ० ६–४५) कर्म कृत्वा सर्वतोभद्रमंडलदेवतास्थापन- (पृ. ९९) पूजनान्तं कर्म पूर्ववत् कुर्यात् ॥ ततस्तदुपरि कुशं कृष्णाजिनं च प्रसार्य तत्र द्रोणपरिमिततिलपर्वतं कृत्वा तदलाभे गोधूमपर्वतं कृत्वा तस्योपरि पूर्णपात्रान्तं कलशं संस्थाप्य तदुपरि क्षौमवस्त्रं प्रसार्य चंदने-

१ व्रतराजोक्तं वा जन्माष्टमीव्रते दर्शितक्रमेण यथाशक्ति पूजनं कार्यम् ।

ताविमोकान्तं कर्म कृत्वा ( पृ० १६८-१८८ ) ॥ द्वादशसंख्याकान् ब्राह्मणान् वस्त्रादिना संपूज्य दध्यन्नोपवीतगोपीचंदनयुतान् सुगंधितजलपूरितान् द्वादशकरकांस्तेभ्यो दद्याचत्र मंत्रः ॥ सुगंधिजलसंपूर्णं दधिभक्तयुतं द्विज ॥ करकं ते प्रदास्यामि वामन प्रतिगृह्यताम् ॥ वामनः प्रतिगृह्णाति वामनो वै ददाति च ॥ वामनस्तारकोऽस्माकं वामनाय नमोनमः ॥ इति ॥ ततः सोपस्करं पीठमाचार्याय दद्यात् ॥ ब्राह्मणान् संपूज्य दक्षिणादिकं दत्त्वा आशिषो गृहीत्वा सुहृद्युक्तो स्वयं भुंजीत ॥ ॥ इति वामनद्वादशीव्रतोद्यापनम् ॥

---

## ॥ अथ गोत्रिरात्रव्रतम् ॥

भाद्रपदशुक्लत्रयोदश्यां गोत्रिरात्रिव्रतम् ॥ तच्च वर्षत्रयात्मकम् ॥ तत्र व्रती प्रातर्दन्तधावनपूर्वकं नियमं गृह्णीयात् ॥ गोत्रिरात्रव्रतस्यास्योपवासकरणे मम ॥ शरणं भव देवि त्वं नमस्ते धेनुरूपिणि ॥ प्रसीदतु महादेवो लक्ष्मीनारायणः प्रभुः ॥ समुपोष्य गोत्रिरात्रं भक्त्या कृत्वा व्रतं तव ॥ भोक्ष्येऽहनि चतुर्थेऽहं सौभाग्यं देहि गौर्मम ॥ इति नियममंत्र ॥ ततो नद्यादौ स्नात्वा गृहमागत्य अष्टदलोपरि पूर्णपात्रान्तं कलशं संस्थाप्य तस्योपरि कृताग्न्युत्तारणप्राणप्रतिष्ठां सौवर्णीं लक्ष्मीनारायणमूर्त्तिं संस्थाप्य ॥ "शान्ताकारं भुजगशयनं०" इति ध्यात्वा "लक्ष्मीनारायणाभ्यां नमः" इति मूलमंत्रेण आवाहनादि मंत्रपुष्पांजलिपर्यन्तं पूजनं कुर्यात् ॥ अहोरात्रं दिनत्रयं घृतदीपं प्रज्वाल्य ॥ भो दीप ब्रह्मरूपस्त्वं०॥ इति गंधपुष्पैः पूजयेत् ॥ ततो विधिना धेनुपूजनं कुर्यात् ॥ गावो मे अग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदये सन्तु गवां मध्ये वसाम्य-

हम् ॥ पंचगावः समुत्पन्ना मथ्यमाने महोदधौ ॥ तासां मध्ये तु या नदा तस्यै धेन्वै नमोनमः ॥ इति ध्यात्वा "गवे नमः" इति मंत्रेणावाहनादि मंत्रपुष्पांजलिपर्यन्तं पूजनं कृत्वा दिनत्रयमर्घदानं गवे समर्पयेत् ॥ तत्र प्रथमे दिने बीजपूरं द्वितीये दाडिमं तृतीये नालीकेरम् इति अर्घप्रधाने विशेषः ॥ गोत्रिरात्रव्रतार्थाय सफलं च करे धृतम् ॥ सर्वकामप्रदे देवि गृहाणार्घ्यं नमोऽस्तु ते ॥. गवे नमः विशेषार्घं सम०॥ ततो धेनोः परितो "गावो मे अग्रतः सन्तु०" पञ्चगावः समुत्पन्ना०॥ इति जलधारां प्रदक्षिणां च कृत्वा ततो ब्राह्मणपूजनम् ॥ आशीर्वादः ॥ प्रत्यहं हविष्यान्नपूरितं करकं दंपतीभ्यां दद्यात्॥ पायसोपाहारः ॥ स्वयं दिनत्रयमुपोषणं कार्यम् ॥ तृतीयेऽह्नि धेन्वै भक्षणार्थं यवान् दद्यात्॥ चतुर्थेऽह्नि पीठं धेनुत्रयमेकां गां तन्मौल्यं वा दत्वा ब्राह्मणभोजनपुरःसरं गोमयादागतैर्यवैः स्वयं पारणं कुर्यात्॥ एवं व्रतं चरित्वा चतुर्थे वर्षे उद्यापनं कुर्यात् ॥ इति ॥

---

## ॥ अथ गोत्रिरात्रव्रतोद्यापनम् ॥

तृतीये दिवसे मध्याह्ने नद्यादौ देहशुद्धिप्रायश्चित्तपूर्वकं स्नात्वा गृहमागत्य मंडपादिकं विरच्य शुभासने चोपविश्य आचम्य प्राणानायम्य अद्येत्यादि०स त्पुत्रप्राप्तिपूर्वकंसुखसौख्यसौभाग्याद्यभिवृद्धिद्वारा श्रीलक्ष्मीनारायणप्रीत्यर्थं ( मम भार्यया ) आचरितस्य गोत्रिरात्रव्रतस्य संपूर्णफलावाप्तये एकरात्राधिवासपक्षाश्रयेण गोत्रिरात्रव्रतोद्यापनं करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशाराधनं गणपतिपूजनं पुण्याहवाचनं

---

१ पूनमने दिवसे गायने जे जव खवडाव्या होय ते जव पडवाने दिवसे छाणमांथी धोईने लेई लेवा, पछी तेज जव जेटला होय तेटला दळीने दुधमां नांखी तेनां पारणां करवां ॥

( मातृकापूजनं वसोर्द्धारां नांदीश्राद्धं ) ब्राह्मणवरणं ( पृ० ६-४५ ) सर्वतोभद्रमंडले गौरीतिलकमंडले वा देवतास्थापनादिकं च (पृ०९९) करिष्ये इति पूर्ववत् कृत्वा तस्योपरि पूर्णपात्रान्तं कलशं संस्थाप्य तदुपरि क्षौमवस्त्रं प्रसार्य चंदनेनाष्टदलं विलिख्य मध्ये मंडूकादिदेवता- आवाह्य ( पृ० १०७ ) संपूज्य ततः कृताग्न्युत्तारणप्राणप्रतिष्ठां लक्ष्मी- नारायणमूर्तिंसंस्थाप्य ॥ नमोऽस्तु विष्णवे तुभ्यं भगवन् परमात्मने ॥ कृष्णोसि देवकीपुत्र परमेश्वर उत्तम ॥१॥ अजोऽनादिश्च विश्वात्मा सर्व- लोकपितामहः ॥ क्षेत्रज्ञः शाश्वतो विष्णुः श्रीमान्नारायणः प्रभुः ॥२॥ इत्यावाह्य " प्रतिष्ठा सर्व० " इति प्रतिष्ठाप्य ॥ " लक्ष्मीनारायणाभ्यां नमः " इति मंत्रेण षोडशोपचारैः संपूज्य पूर्ववत् धेनुं च संपूज्य आचार्यपूजनं कृत्वा आशिषो गृहीत्वा कथाश्रवणादिना रात्रिं निन- येत् ॥ इति ॥

" द्वितीयदिने " प्रातर्नित्यकर्म समाप्य अद्याद्य० तिथौ गोत्र- त्रिरात्रव्रतोद्यापनाङ्गभूतं सग्रहमखं विहितहोमं करिष्ये ॥ इति संकल्प्य दिग्रक्षणादिकं कृत्वा अग्निप्रतिष्ठापनादि ग्रहहोमान्तं कर्म ( पृ०१४९- १६४) कृत्वा ॥ प्रधानं लक्ष्मीनारायणं धेनुं चाष्टोत्तरशतसंख्यया " लक्ष्मीनारायणाभ्यां नमः" इति मन्त्रेण (१०८)। " गवे नमः " इति मन्त्रेण (१०८) । च पायसद्रव्येण जुहुयात् ॥ ब्रह्मादिदेवता मंडूकादिपीठदेवताश्चैकैकामाज्याहुतिं ( १६४-१६६ ) जुहुयात् ॥ ततः फलादिहोमम् " अग्निवायुसूर्येभ्यो नमः " इति व्याहृतिहोमपूर्वकम् उत्तरपूजनादि प्रणीताविमोकान्तं कर्म ( पृ०१४९-१६४ ) समाप्य प्रधानं संपूज्य आरार्तिकं मन्त्रपुष्पाञ्जलिं कृत्वा ॥ अनया पूजया लक्ष्मीनारायणौ प्रीयेताम् । इति संकल्प्य गोदानं कुर्यात् ॥

---

## ॥ अथ गोदानप्रयोगः ॥

कर्त्ता कृतनित्यक्रियः पुण्यकाले शुभासने उपविश्य आचम्य० अद्येत्यादि० ममात्मन० आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं पृथ्वीदानसमफलमाप्त्यर्थं श्रीमहाविष्णुप्रीत्यर्थं यथाशक्ति प्रत्यक्षगोदानमहं करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशाराधनं गणपतिपूजनं ( स्मरणं वा ) पूर्ववत्कृत्वा ॥ हस्ते पूगीफलं गृहीत्वा प्रतिग्रहितारं वृणुयात् ॥ काश्यपगोत्रोत्पन्नः अमुकदासः अमुकगोत्रोत्पन्नममुकामुकप्रवरान्वितममुकशर्माणं ब्राह्मणं गोप्रतिग्रहकर्तारं त्वामहं वृणे ॥ इतियजमानो ब्रूयात् ॥ "वृतोस्मि" इति विप्रो ब्रूयात् ॥ ततो वस्त्रकुंडलादिना यथाविभवं वृतं ब्राह्मणं संपूज्य गोपूजनमारभेत ॥ गोमुखदेशादारभ्य परितः धारां दद्यात् ॥ तत्र मंत्रः ॥ या लक्ष्मीः सर्वलोकेषु या च देवेष्ववस्थिता ॥ धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ इति धारां कृत्वा यथाशक्त्या वस्त्रालंकारादिभिः धेनुमलंकुर्यात् ॥ तद्यथा ॥ स्वर्णशृंगीं रौप्यखुरां ताम्रपृष्ठीं घंटाग्रैवेयां मुक्तालांगुलां कांस्योपदोहिनीं सर्वाभरणभूषितां गां सितवस्त्रादिभिर्भूषयित्वा पूजयेत् ॥ क्षिराब्धिसंभवे देवि मुक्तादामविराजिते ॥ सुधारूपे हव्यभुक्ते नमोऽस्तु सुरवंदिते ॥ गवे[2] नमः ध्यायामि ॥ इति ध्यात्वा आसनमर्पयेत् ॥ धेनुके सर्वभूतानां तारके विश्ववंदिते ॥ पवित्रे निर्मले देवि आसनं प्रतिगृह्यताम् ॥ गवे० आसनं स० ॥ पाद्यम् ॥ सौरभेयि सर्वहिते

---

१ गौरेकस्यैव दातव्या श्रोत्रियाय कुटुंबिने ॥ सा हि तारयते पूर्वान् सप्त सप्त च सप्त च ॥ सुशीला लक्षणवतीं युवतीं वत्ससंयुताम् ॥ बहुदुग्धवतीं स्निग्धां धेनुं दद्याद्विचक्षणे ॥

२ "गवे नमः" इति सर्वत्र वक्तव्यम् ॥

पवित्रे पापनाशिनि ॥ गृहाणैतन्मया दत्तं पाद्यं त्रैलोक्यवंदिते ॥ गवे० पाद्यं० स० ॥ अर्घ्यम्–सर्वदेवमये देवि सर्वतीर्थमये शुभे ॥ गृहाणार्घं मया दत्तं सौरभेयि नमोऽस्तु ते ॥ गवे० अर्घं समर्प० ॥ देहे स्थिताऽसि रुद्राणि शङ्करस्य सदा प्रिये ॥ धेनुरूपेण सा देवी मम पापं व्यपोहतु ॥ गवे० आच० स० ॥ या लक्ष्मीः सर्वलोकेषु या च देवेष्ववस्थिता ॥ धेनुरू० ॥ गवे० स्नानं स० ॥ पयो दधि० ॥ गवे० पंचामृतस्नानं स० ॥ ततः गंगादि० ॥ गवे० शुद्धोद० स्ना० स० ॥ सर्वभूषा० ॥ गवे० वस्त्रे स० ॥ ततो शृंगभूषणार्थं सुवर्णं चरणभूषार्थं रजतं भालभूषार्थमादर्शं नेत्रभूषार्थं रत्नद्वयं कंठभूषार्थं घंटां पुष्पस्रजं च सर्वावयवभूषार्थं पट्टदुकूले पृष्ठभूषार्थं ताम्रं पुच्छभूषणार्थं मुक्ताफलस्रजम् ॥ श्रीखंडं० ॥ इति गंधम् ॥ अक्षताश्च० । इति अक्षतान् स० ॥ माल्यादीनि० । इति पुष्पाणि पुष्पमालां च समर्पयेत् ॥

अंगपूजा ॥ गवे० पादौ पूजयामि ॥ जगन्मात्रे० गुल्फौ० । अघापहन्त्र्यै० जानुनी० । सुरभ्यै० ऊरू पू० । विष्णुपदास्थित्यै० कटी० । नंदिन्यै० उदरं० । पंचगव्यमसृत्यै० हृदयं० । वशिष्ठपूजितायै० मुखं० । दिलीपसेवितायै० नासिकां० । पृथ्वीरूपधारिण्यै० नेत्रे० । जगत्पाविन्यै० भ्रूमध्यं० । कपिलायै० भालं० । यमुनायै० शिरः पू० । विष्णुरूपिण्यै० सर्वांगं० ॥ अथ गोशृंगमूलादिस्तनान्तस्थानादिषु देवताः पूजयेत् ॥ शृंगमूले ब्रह्मविष्णुभ्यां० । शृंगाग्रे सर्वतीर्थेभ्यो० । शिरोमध्ये शिवाय० । ललाटे पार्वत्यै० । नासिकायां षण्मुखाय० । नासापुटयोः कंबलाश्वतराभ्यां० । चक्षुषोः शशिभास्कराभ्यां० । दन्तेषु वायवे० । कर्णयोरश्विभ्यां० । जिह्वायां वरुणाय० । हुंकारे सरस्वत्यै० । गंडयोः पक्षमासाभ्यां० । ओष्ठयोः संध्याद्व-

याभ्यां० । ग्रीवायाम् इन्द्राय० । कुक्षिदेशे रक्षोभ्यो० । उरसि साध्येभ्यो० । पादेषु धर्माय० । जंघासु अधर्माय० । खुरमध्ये गंधर्वेभ्यो० । खुराग्रे पन्नगेभ्यो० । खुरपश्चिमाग्रे अप्सरोभ्यो० । पृष्ठे एकादशरुद्रेभ्यो० । सर्वसंधिषु वसुभ्यो० । श्रोणितटे पितृभ्यो० । लांगूले सोमाय० । गुह्ये आदित्यरश्मिभ्यो० । गोमूत्रे गंगायै० । गोमये यमुनायै० । क्षीरे सरस्वत्यै० । दध्नि नर्मदायै० । घृते अग्नये० । रोमस्वष्टाविंशतिकोटिदेवेभ्यो० । उदरे पृथिव्यै० । पयोधरेषु चतुर्भ्यः समुद्रेभ्यो० । एता देवता अंगेषु संपूज्य ॥ श्वेतचूर्णं० । इति सौभाग्यद्रव्यं ॥ वनस्पति० । इति धूपम् ॥ साज्यं च वर्ति० ॥ इति दीपम् ॥ सुरभिस्त्वं जगन्मातर्देवि विष्णुपदे स्थिते ॥ सर्वदेवमयि ग्रासं मया दत्तमिमं ग्रस ॥ गवे० गोग्रासनैवे० स० ॥ पूगीफलम्० इति तांबूलम् ॥ हिरण्यगर्भ० इति दक्षिणाम् ॥ कर्पूरगौरम्० इति नीराजनम् ॥ विद्याबुद्धि० इति पुष्पांजलिं समर्प्य हस्ते श्रीफलं गृहीत्वा प्रदक्षिणां कुर्यात् ॥ गावो मे अग्रतः सन्तु० ॥ यानि कानि च पापानि० ॥ इति प्रदक्षिणां कृत्वा श्रीफलं गोदक्षिणपदे दद्यात् ॥ या लक्ष्मी० पञ्चगाव० इति नमस्कारं कुर्यात् ॥ ( केचन अत्रावसरे गोपुच्छे तर्पणं कुर्वन्ति तन्निर्मूलत्वान्नात्र लिखितम् ॥) गोदानसंकल्पः ॥ ततो यजमानः सजलतिलकुशाक्षतं तिलपात्रे घृताक्तं गोपुच्छं गृहीत्वा ॥ "अद्येत्यादि० अमुकगोत्रोत्पन्नायामुकप्रवरान्विताय अमुकशर्मणे सुपूजिताय पृथ्वीदानफलकामः सर्वपापक्षयकामो[1]

१ पुण्यौषधीमां वैतरणीधेनुदानसंकल्पे विशेषः ॥ सर्वपापक्षयकामः पूयशोणितयुतवैतरणीसंज्ञकनद्युत्तारणपूर्वकं सुखेन वैकुंठभुवनप्राप्तिकामो वा इमां वैतरणीसंज्ञिकां गां "यमद्वारे पथि घोरे घोरा वैतरणी नदी ॥ तां तर्तुकामो यच्छामि कृष्णां वैतरणीं तु गाम् ॥ विष्णुरूप द्विजश्रेष्ठ भूदेव पंक्तिपावन ॥ तर्तुं वैतरणीमेनां कृष्णां गां प्रददाम्यहम् ॥"

विष्णुप्रीतिकामो वा इमां प्रत्यक्षधेनुं सुवर्णशृंगीं रौप्यखुरां ताम्रपृष्ठीं घंटाग्रैवेयां मुक्तालांगूलां कांस्योपदोहिनीं सितवस्त्रद्वयोपेतां सर्वाभरणभूषितां सोपस्करां रुद्रदैवत्यां तुभ्यमहं संप्रददे नमम" इति संकल्प्य ॥ यज्ञसाधनभूता या विश्वस्याघौघनाशिनी ॥ विश्वरूपधरो देवः प्रीयतामनया गवा ॥ इतिमन्त्रमुक्त्वा ( तिलपात्रे घृताक्तगोपुच्छं कृत्वा ) विप्रहस्ते सतिलकुशोदकं दद्यात् ॥ ततो दाता सुवर्णदक्षिणां दत्वा प्रार्थयेत् ॥ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च॥ नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः[1] ॥ ततो यजमानः धेनुं द्विजं च प्रदक्षिणीकृत्य किंचिदनुव्रजेदिति॥ ब्राह्मणं सपूज्य दक्षिणां दत्वा आशिषो गृह्णीयात् ॥ अनेन गोप्रदानकर्मणा भगवन्तौ लक्ष्मीनारायणौ प्रीयेताम् ॥ इति ॥

प्रत्यक्षदानाशक्तौ तन्निष्क्रयं दद्यात् ॥ कृतस्य गोत्रिरात्रव्रतोद्यापनाख्यस्य कर्मणः सांगतासिद्ध्यर्थमिदं गोनिष्क्रयीभूतं द्रव्यमाचार्याय तुभ्यमहं संप्रददे ॥ एवं तिलपात्रादिदानं दत्वा शय्यां

---

ततः पुच्छं स्वकरे धृत्वा अनुव्रजेत् सप्तपदानि ॥ धेनुप्रार्थना ॥ धेनुके त्वं प्रतीक्षस्व यमद्वारे महापथे ॥ उत्तितीर्षुरहं देवि वैतरण्यै नमोऽस्तु ते ॥ इति प्रणम्य दद्यात् ॥ पित्रादेरशक्तौ पुत्रादिर्दद्यात् ॥

१ पूजितासि वशिष्ठेन विश्वामित्रेण धीमता ॥ सुरभि हर मे पापं यन्मया दुष्कृतं कृतम् ॥ २ ॥ गावो ममाग्रतः सन्तु० ॥३॥ गावः सुरभयो नित्यं गावो गोपालरूपिणः॥ गावः प्रतिष्ठाभूताना गावः स्वस्त्ययनं महत् ॥ ४ ॥ गवामंगेषु तिष्ठन्ति भुवनानि चतुर्दश ॥ यस्मात्तस्माच्छिवं मे स्यात्मामुद्धर भवार्णवात् ॥ ५ ॥ यज्ञसाधन० ॥ ६ ॥ विष्णोर्वक्षसि या लक्ष्मीर्या लक्ष्मीर्धनदस्य च ॥ या लक्ष्मीर्लोकपालानां सा धेनुर्वरदा मम ॥७॥ धन्योऽस्मि कृतकृत्योऽस्मि तव दानप्रसादतः ॥ सर्वपापविनिर्मुक्तो यास्यामि तव सन्निधौ ॥ ८ ॥ गावो रक्षंतु मे पुण्यं गावो रक्षंतु मे यशः नमोऽस्तु कामधेनुभ्यो याः पुनन्ति जगत्त्रयम् ॥ ९ ॥ इति गोप्रार्थना ॥

कमंडलुं चामरं सुवर्णं शक्तिश्चेद्देयम् ॥ ततश्चत्वारि वंशपात्राणि सौभाग्य-वस्त्रसहितानि सवस्त्रकुंभसहितानि सदक्षिणानि नानागोत्रेभ्यो नाना-नामभ्यः सपत्नीकेभ्यो विभज्य यथाकाले दास्ये ॥ ततो वेणुपात्रस्थं नारिकेलद्राक्षाखर्जूरदाडिमबीजपुरसौभाग्यद्रव्ययुतं वायनं पूजन-दक्षिणापुरःसरं दंपतीभ्यां दद्यात् ॥ प्रधानपीठं सर्वोपस्करसहित-माचार्याय दद्यात् ॥ गोपालेभ्यः पाथेयं दद्यात् ॥ ततो गवा भक्षित-मन्नं यद् दुग्धेन परिपाचितम् ॥ तेनान्नेन (पृ० २७७ नोट) प्रकर्त्तव्यं देहस्य परिपालनम् ॥ ब्राह्मणान् संतर्प्य स्वयं भुंजीत ॥ इति ॥

॥ इति गोत्रिरात्रव्रतोद्यापनम् ॥

---

## ॥ अथ गोशतदानविधिः ॥

( शतं गावः सवृषभा धेनूपस्करसंयुताः ॥ दत्त्वा तु ब्राह्मणे-भ्यस्तु विशुद्धेनान्तरात्मना ॥ शिवादिसर्वलोकेषु यथेष्टं मोदते तु सः ॥ ) यजमानः शुचिराचम्य देवकालौ संकीर्त्य मम समस्तपापक्षयपूर्वकसिद्ध-चारणसेवितार्कवर्णकिंकिणीजालमालाविमानारोहणोत्तरानेकमन्वन्त-रावच्छिन्नेंद्रादिसकललोकपालाधिकरणकपुत्रपौत्रसमन्वितशिवपुरादि-सर्वलोकनिवासानन्तरमन्ते विष्णुसायुज्यावाप्तिकामो वृषाधिकमलंकृत-गोशतदानं करिष्ये ॥ इति संकल्प्य तदंगत्वेन गणपतिपूजनं पुण्याह-वाचनं च करिष्ये इति संकल्प्य गणपतिपूजनं संक्षिप्तपुण्याहवाचनं च कृत्वा ॥ "गोभ्यो नमः" इति सवृषभाः गाः संपूज्य "ब्राह्मणेभ्यो नमः" इति ब्राह्मणांश्च यथाशक्तिवस्त्रालंकारादिभिः संपूज्य प्रार्थयेत् ॥ तत्र मंत्राः ॥ गावः सुरभयो नित्यं गावो गुग्गुलगंधिकाः ॥ गावः प्रतिष्ठा

नीलसमुद्भवाम् ॥ यमुने त्वामहं ध्याये सर्वकामार्थसिद्धये ॥ ध्यायामि॥ आवाहनम् ॥ सरस्वति नमस्तुभ्यं सर्वकामप्रदायिनि ॥ आगच्छ देवि यमुने व्रतसंपूर्णहेतवे ॥ यमुनायै नमः । आवाहयामि ॥ आसनम् ॥ सिंहासनसमारूढे देवशक्तिसमन्विते ॥ सर्वलक्षणसंपूर्णे यमुनायै नमोऽस्तु ते ॥ पाद्यम् ॥ रुद्रपादे नमस्तेऽस्तु सर्वलोकहितप्रिये ॥ सर्वपापप्रशमनि तरंगिण्यै नमोनमः ॥ अर्घ्यम् ॥ गरुडपादे नमस्तुभ्यं शंकरप्रियभामिनि ॥ सर्वकामप्रदे देवि यमुने ते नमोनमः॥ आचमनम्॥ विष्णुपादोद्भवे देवि सर्वाभरणभूषिते ॥ कृष्णमूर्ते महादेवि कृष्णावेण्यै नमोनमः ॥ मधुपर्कः ॥ सर्वपापहरे देवि विश्वस्य प्रियदर्शिनि ॥ सौभाग्यं यमुने देहि यमुनायै नमोनमः ॥ पंचामृतस्नानम् ॥ नंदिपादे महादेवि शंकरार्द्धशरीरिणि ॥ सर्वलोकहिते देवि भीमरथ्यै नमोऽस्तु ते ॥ शुद्धोदकस्नानम् ॥ सिंहपादोत्तमे देवि नारसिंहसमप्रभे ॥ सर्वलक्षणसंपूर्णे भवनाशिनि ते नमः ॥ श्वेतवस्त्रम् ॥ विष्णुपादाब्जसंभूते गंगे त्रिपथगामिनि ॥ सर्वपापहरे देवि भागीरथ्यै नमोऽस्तु ते ॥ कंचुकी ॥ त्र्यंबकस्य जटोद्भूते गौतमस्याघनाशिनि ॥ सप्तधा सागरं यान्ति गोदावरि नमोऽस्तु ते ॥ आभरणानि ॥ माणिक्यमुक्तावलिकौस्तुभाश्च गोमेदवैडूर्यसुपुष्परागैः ॥ वज्रैश्च नीलैश्च सुशोभितानि गृहाण सर्वाभरणानि देवि ॥ गंधः ॥ चन्दनागरुकस्तूरीरोचनं कुंकुमं तथा ॥ कर्पूरेण समायुक्तं गंधं दद्मि च भक्तितः ॥ अक्षताः ॥ श्वेतांश्च चंद्रवर्णाभान् हरिद्रारागरंजितान् ॥ अक्षतांश्च सुरश्रेष्ठे ददामि यमुने शुभे ॥ पुष्पाणि ॥ मंदारमालतीजातीकेतकीपाटलैः शुभैः ॥ पूजयामि च देवेशि यमुने भक्तवत्सले ॥

१ "यमुनायै नमः" आसनं समर्पयामि इत्यादिकं सर्वत्र वक्तव्यम् ॥

अथांगपूजा॥ चंचलायै० पादौ पूजयामि॥ चपलायै०जानुनी पू०। भक्तवत्सलायै० कटी०। हरायै० नाभिं०। मन्मथवासिन्यै० गुह्यं०। अज्ञानवासिन्यै० हृदयं०। भद्रायै० स्तनौ०। अघहन्त्र्यै० भुजौ०। रक्तकंठायै० कंठं०। भवहन्त्र्यै० मुखं०। गौर्यै० नेत्रे०। भागीरथ्यै० ललाटं०। यमुनायै० शिरः पूज०॥ सरस्वत्यै० सर्वांगं पूजयामि॥

अथ नामपूजा॥ यमुनायै०। सितायै०। कमलायै०। उत्पलायै०। अभीष्टप्रदायै०। धात्र्यै०। हरिहररूपिण्यै०। गंगायै०। नर्मदायै०। गौर्यै०। भागीरथ्यै०। तुंगायै०। भद्रायै०। कृष्णावेण्यै०। भवनाशिन्यै०। सरस्वत्यै०। कावेर्यै०। सिन्धवे०। गोमत्यै०। गायत्र्यै०। गरुडायै०। गिरिजायै०। चंद्रचूडायै०। सर्वेश्वर्यै०। महालक्ष्म्यै०॥ सर्वपापहरे देवि सर्वोपद्रवनाशिनि॥ सर्वसंपत्प्रदे देवि यमुनायै नमोनमः॥ ततः सौभाग्यद्रव्यं धूपं दीपं नैवेद्यं तांबूलं दक्षिणां नीराजनं प्रदक्षिणां पुष्पांजलिं समर्प्य प्रार्थयेत्॥ सुरासुरेन्द्रादिकिरीटमौक्तिकैर्युक्तं सदा यत्तव पादपंकजम्॥ परावरं पातु वरं सुमंगलं नमामि भक्त्या तव कामसिद्धये॥ १॥ भवानि च महालक्ष्मीः सर्वकामप्रदायिनि॥ व्रतं संपूर्णतां यातु यमुनायै नमोऽस्तु ते॥ इति संप्रार्थ्य॥ अनेन पूजनेन यमुना प्रीयताम्॥ ततो यमुनाकलशोपरि पूर्णपात्रं निधाय तस्योपरि सप्तफणायुतं शेषं संस्थाप्य पूजयेत्॥

"अथ शेषपूजनम्"— अद्येत्यादि० श्रीमदनन्तव्रतांगत्वेन शेषपूजनं करिष्ये॥ तत्रादौ ध्यानम्॥ ब्रह्मांडाधारभूतं च यमुनान्तरवासिनम्॥ फणासप्तसमायुक्तं ध्यायेऽनन्तं हरिप्रियम्॥ श्रीशेषाय नमः ध्यायामि॥ शेषं सप्तफणायुक्तं कालपन्नगनायकम्॥ अनन्तशयनार्थं

भूतानां गावः स्वस्त्ययनं महत् ॥ वृषभप्रार्थना ॥ धर्मस्त्वं वृषरूपेण जगदानंदकारक ॥ अष्टमूर्तेरधिष्ठानमतः पाहि सनातन ॥ ततः सजल-तिलकुशानादाय ॥ अद्येत्यादि० मम समस्तपापक्षयपूर्वं० विष्णुसायुज्यावाप्तिकामो वृषाधिकशतं गाः सोपस्कराः सहिरण्यदाक्षिणायुता रुद्रदेवतास्तन्मूल्योपकल्पितनिष्क्रयरजतमुद्रा वा नानानामगोत्रेभ्यो ब्राह्मणेभ्य दातुमहमुत्सृजामि ॥ तेन भगवान् परमेश्वरः प्रीयतामिति ॥ तत्सद्ब्रह्मार्पणमस्तु ॥ कृतस्य० ब्राह्मणभोजनं भूयसीं दक्षिणां च दद्यात् ॥ अथवा अद्येत्यादि० सवृषरुद्रदैवतसहिरण्यदक्षिणा यथाशक्त्यलंकृतगोशतमूल्योपकल्पितनिष्क्रयरजतमुद्राः नानानामगोत्रेभ्यो ब्राह्मणेभ्यो दातुमहमुत्सृजे नममेति ॥ इति गोशतदानविधिः ॥

---

## ॥ अथ अनन्तचतुर्दशीव्रतम् ॥

भाद्रपदशुक्लचतुर्दश्यामनन्तचतुर्दशीव्रतम् ॥ सा परा कार्या पूजनकालव्यापित्वात् ॥ अनन्तं पूजयेद्यस्तु प्रातःकाले समाहितः ॥ अनन्तां लभते सिद्धिं चक्रपाणेः प्रसादतः ॥ तदभावे पूर्वा ॥ उभयदिने सूर्योदयव्यापित्वे पूर्णयुक्तत्वेऽपि परैव ग्राह्या ॥ भाद्रे सति चतुर्दश्यामनन्तं पूजयेत्सुधीः ॥ ह्रासेन सर्वकर्माणि प्रातरेव हि पूजनम् ॥

---

१ अन्नमेव परं गावो देवानां हविरुत्तमम् ॥ पावनं सर्वभूतानां रक्षन्ति च वहन्ति च ॥ २ ॥ हविषा मंत्रपूतेन तर्पयन्त्यमरानपि ॥ महर्षीणां च होतृणां गावो होमे प्रतिष्ठिताः ॥ ॥ ३ ॥ गावः पवित्रं परमं गावो मंगलमुत्तमम् ॥ गावः सर्वस्य लोकस्य गावो धन्याः सवाहनाः ॥ ४ ॥ नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥ ५ ॥ घृतक्षीरप्रदा गावो घृतयोन्यो घृतोद्भवाः ॥ घृतनद्यो घृतावर्तास्ता मे सन्तु सदा गृहे ॥ ६ ॥ इति गाः संप्रार्थ्य वृषभप्रार्थनां कुर्यात् ॥

शुक्ला भाद्रपदस्थाऽपि अनन्ताख्या चतुर्दशी॥ उदयव्यापिनी ग्राह्या घटिकैकापि या भवेत् ॥ तस्मात्परैवेति सर्वसमतम् ॥

[ पूजाविधिः ॥ प्रातर्नद्यादिके स्नात्वा नित्यकर्म समाप्य च ॥ अनन्तं हृदये कृत्वा शुचिस्तत्र समाहितः ॥ अव्रणं कलशं चैव वस्त्रयुग्मेन वेष्टितम् ॥ मुष्टिमात्रकदर्भैस्तु फणिराजं च कारयेत् ॥ स्थापयेत्कलशस्याग्रे जगदाधारमव्ययम् ॥ आराधयेदनन्तं च तस्मिन्कुंभे विशेषतः ॥ गोचर्ममात्रमालिप्य गोमयेन विचक्षणः ॥ तन्मध्ये स्थंडिलं कृत्वा पद्ममष्टदलं लिखेत् ॥ तस्योपरि न्यसेत्कुंभं चूतपल्लवसंयुतम् ॥ प्राणायामं ततः कृत्वा तिथ्यादि परिकल्पयेत् ॥ ]

यजमानः शुभासने उपविश्याचम्य सुमुखश्चेत्यादि पठित्वा ॥ अद्येत्यादि० मम सकुटुंबस्य क्षेमस्थैर्यायुरारोग्यैश्वर्याद्यभीष्टसिद्ध्यर्थं पुत्रपौत्राद्यनवच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थं चतुर्विधपुरुषार्थसिद्ध्यर्थं ममाचरितस्याचरिष्यमाणस्य अनन्तव्रतस्य संपूर्णफलावाप्त्यर्थं श्रीमदनन्तदेवताप्रीत्यर्थं यथाशक्त्या श्रीमदनन्तपूजनमहं करिष्ये ॥ तत्रादौ आसनादि कर्म करिष्ये इति ॥ पृथ्वित्वया० । इति आसनशुद्धिम् अपसर्प० । इति दिग्रक्षणं तथा कलशाराधनं गणपतिपूजनं शंखघंटापूजन च पूर्ववत् कृत्वा यमुनापूजनं कुर्यात् ॥ इति ॥

## (॥ अथ यमुनापूजनम् ॥)

श्रीमदनन्तव्रतांगत्वेन यमुनापूजां करिष्ये ॥ विश्वाधारासि० (पृ. १९) इत्यादिमंत्रेण विधिना अष्टदलोपरि पूर्णपात्ररहितं कलशं संस्थाप्य ॥ कलशमध्ये यमुनां ध्यायेत् ॥ लोकपालस्तुतां देवीमिन्द्र-

नीलसमुद्भवाम् ॥ यमुने त्वामहं ध्याये सर्वकामार्थसिद्धये ॥ ध्यायामि ॥ आवाहनम् ॥ सरस्वति नमस्तुभ्यं सर्वकामप्रदायिनि ॥ आगच्छ देवि यमुने व्रतसंपूर्णहेतवे ॥ यमुनायै नमः । आवाहयामि ॥ आसनम् ॥ सिंहासनसमारूढे देवशक्तिसमन्विते ॥ सर्वलक्षणसंपूर्णे यमुनायै नमोऽस्तु ते ॥ पाद्यम् ॥ रुद्रपादे नमस्तेऽस्तु सर्वलोकहितप्रिये ॥ सर्व-पापप्रशमनि तरंगिण्यै नमोनमः ॥ अर्घ्यम् ॥ गरुडपादे नमस्तुभ्यं शंकरप्रियभामिनि ॥ सर्वकामप्रदे देवि यमुने ते नमोनमः॥ आचमनम्॥ विष्णुपादोद्भवे देवि सर्वाभरणभूषिते ॥ कृष्णमूर्ते महादेवि कृष्णावे-ण्यै नमोनमः ॥ मधुपर्कः ॥ सर्वपापहरे देवि विश्वस्य प्रियदर्शिनि ॥ सौभाग्यं यमुने देहि यमुनायै नमोनमः ॥ पंचामृतस्नानम् ॥ नंदि-पादे महादेवि शंकरार्द्धशरीरिणि ॥ सर्वलोकहिते देवि भीमरथ्यै नमोऽस्तु ते ॥ शुद्धोदकस्नानम् ॥ सिंहपादोत्तमे देवि नारसिंहसमप्रभे ॥ सर्वलक्षणसंपूर्णे भवनाशिनि ते नमः ॥ श्वेतवस्त्रम् ॥ विष्णुपादाब्ज-संभूते गंगे त्रिपथगामिनि ॥ सर्वपापहरे देवि भागीरथ्यै नमोऽस्तु ते ॥ कंचुकी ॥ त्र्यंबकस्य जटोद्भूते गौतमस्याघनाशिनि ॥ सप्तधा सागरं यान्ति गोदावरि नमोऽस्तु ते ॥ आभरणानि ॥ माणिक्यमुक्ताबलिकौ-स्तुभांश्च गोमेदवैडूर्यसुपुष्परागैः ॥ वज्रैश्च नीलैश्च सुशोभितानि गृहाण सर्वाभरणानि देवि ॥ गंधः ॥ चन्दनागरुकस्तूरीरोचनं कुंकुमं तथा ॥ कर्पूरेण समायुक्तं गंधं दद्मि च भक्तितः ॥ अक्षताः ॥ श्वेतांश्च चंद्रवर्णाभान् हरिद्रारागरंजितान् ॥ अक्षतांश्च सुरश्रेष्ठे ददामि यमुने शुभे ॥ पुष्पाणि ॥ मंदारमालतीजातीकेतकीपाटलैः शुभैः ॥ पूजयामि च देवेशि यमुने भक्तवत्सले ॥

१ "यमुनायै नमः" आसनं समर्पयामि इत्यादिकं सर्वत्र वक्तव्यम् ॥

अथांगपूजा॥ चंचलायै० पादौ पूजयामि॥ चपलायै० जानुनी पू०। भक्तवत्सलायै० कटी०। हरायै० नाभिं०। मन्मथवासिन्यै० गुह्यं०। अज्ञानवासिन्यै० हृदयं०। भद्रायै० स्तनौ०। अघहन्त्र्यै० भुजौ०। रक्तकंठायै० कंठं०। भवहन्त्र्यै० मुखं०। गौर्यै० नेत्रे०। भागीरथ्यै० ललाटं०। यमुनायै० शिरः पूज०॥ सरस्वत्यै० सर्वांगं पूजयामि॥

अथ नामपूजा॥ यमुनायै०। सितायै०। कमलायै०। उत्पलायै०। अभीष्टप्रदायै०। धात्र्यै०। हरिहररूपिण्यै०। गंगायै०। नर्मदायै०। गौर्यै०। भागीरथ्यै०। तुंगायै०। भद्रायै०। कृष्णावेण्यै०। भवनाशिन्यै०। सरस्वत्यै०। कावेर्यै०। सिन्धवे०। गोमत्यै०। गायत्र्यै०। गरुडायै०। गिरिजायै०। चंद्रचूडायै०। सर्वेश्वर्यै०। महालक्ष्म्यै०॥ सर्वपापहरे देवि सर्वोपद्रवनाशिनि॥ सर्वसंपत्प्रदे देवि यमुनायै नमोनमः॥ ततः सौभाग्यद्रव्यं धूपं दीपं नैवेद्यं तांबूलं दक्षिणां नीराजनं प्रदक्षिणां पुष्पांजलिं समर्प्य प्रार्थयेत्॥ सुरासुरेन्द्रादिकिरीटमौक्तिकैर्युक्तं सदा यत्तव पादपंकजम्॥ परावरं पातु वरं सुमंगलं नमामि भक्त्या तव कामसिद्धये॥ १॥ भवानि च महालक्ष्मीः सर्वकामप्रदायिनि॥ व्रतं संपूर्णतां यातु यमुनायै नमोऽस्तु ते॥ इति संप्रार्थ्य॥ अनेन पूजनेन यमुना प्रीयताम्॥ ततो यमुनाकलशोपरि पूर्णपात्रं निधाय तस्योपरि सप्तफणायुतं शेषं संस्थाप्य पूजयेत्॥

"अथ शेषपूजनम्"— अद्येत्यादि० श्रीमदनन्तव्रतांगत्वेन शेषपूजनं करिष्ये॥ तत्रादौ ध्यानम्॥ ब्रह्मांडाधारभूतं च यमुनान्तरवासिनम्॥ फणासप्तसमायुक्तं ध्यायेऽनन्तं हरिप्रियम्॥ श्रीशेषाय नमः ध्यायामि॥ शेषं सप्तफणायुक्तं कालपन्नगनायकम्॥ अनन्तशयनार्थं

त्वां भक्त्या चावाहयाम्यहम् ॥ (हस्ते अक्षतान् गृहीत्वा) शेषाय नमः आवाहयामि ॥ प्रतिष्ठा सर्वं० । अनन्त सुमति० वरदो भव ॥ नवनागकुलाधीश शेषोद्धारक काश्यप ॥ नानारत्नसमायुक्तमासनं प्रतिगृह्यताम् ॥ शेषाय० आस० स० ॥ अनन्तप्रिय शेषेश जगदाधारविग्रह ॥ पाद्यं गृहाण भक्त्या त्वं काद्रवेय नमोऽस्तु ते ॥ शेषाय० पाद्यं स०॥ काश्यपानन्दजनक मुनिवन्दित भो प्रभो ॥ अर्घं गृहाण सर्वज्ञ सागरं शंकरोपम ॥ शेषाय० अर्घं समर्प० ॥ सहस्रफणरूपेण वसुधोद्धारक प्रभो ॥ गृहाणाचमनं देव पावनञ्च सुशीतलम् ॥ शेषा० न० आचमनं स० ॥ कुमाररूपिणे तुभ्यं दधिमध्वाज्यसंयुतम् ॥ मधुपर्कं प्रदास्यामि सर्पराज नमोऽस्तु ते ॥ शेषाय० मधुपर्कं स० ॥ पयोदधि० । शेषाय नमः पंचामृतस्ना० स० ॥ गङ्गादिपुण्यतीर्थैस्त्वामभिषिञ्चेयमादरात् ॥ बलभद्रावतारेश नन्दजः श्रीपतेः सखिन् ॥ शेषाय० शुद्धोदकस्ना० स०॥ कौशेययुग्मं देवेश प्रीत्या तव मयाऽर्पितम् ॥ पन्नगाधीश नागेश तार्क्ष्यशत्रो नमोऽस्तु ते ॥ शेषाय० वस्त्रोप० स० ॥ सुवर्णनिर्मितं सूत्रं ग्रथितं कण्ठहारकम् ॥ अनेकरत्नैः खचितं सर्पराज नमोऽस्तु ते ॥ शेषाय ० यज्ञोप० स० ॥ अनेकरत्नान्वितहेमकुण्डले माणिक्यसंकाशितकङ्कणद्वयम् ॥ हेमाङ्गुलीयं कृतरत्नमौलिकं हैमं किरीटं फणिराज तेऽर्पितम् ॥ शेषाय० अलंकारान् स०॥ श्रीखंडं०॥ शेषाय० चन्दनं स० ॥ अक्षताश्च०॥ शेषाय० अक्षतान् स० ॥ माल्यादीनि०॥ शेषाय० पुष्पाणि स०॥ (इति "शेषाय नमः" इति वा मंत्रेणासनादारभ्य पुष्पान्तं संपूज्य) अथांगपूजा॥ सहस्रफणायनमः पादौपू०। गूढगुल्फाय० गुल्फौ० । हेमजंघाय० जंघे० । मंदगतये० जानुनी० । पीतांबरधराय० कटी० । गंभीरनाभाय० नाभिं० । पवनाशनाय० उदरं० । उदाराय०

हस्तौ० । कालिकाय० भुजौ० । कंबुकंठाय० कंठं० । विषवक्त्राय० वक्त्रं० । फणाभूषणाय० ललाटं० । लक्ष्मणाय० शिरः० । अनन्तप्रियाय नमः सर्वांगं पूजयामि ॥ ततो वनस्पति०। धूपमा० ॥ साज्यं च०। शेषाय०दीपं द०॥ अन्नं चतु०। शेषाय० नैवेद्यं नि०॥ प्राणाय०मध्ये०। उत्तरा०हस्त० मुखप्र०करोद्वर्तनार्थे गन्धं स०। पूगीफलम्। पूगी०।शेषा० पू०ताम्बूलं स०॥ हिरण्य०। शेषाय० हिरण्यद० स० ॥ कर्पूरगौरं०। शेषाय०आरार्तिकं स०।नाना कुसुमसंयुक्तः पुष्पाञ्जलिरयं प्रभो॥कश्यपानंद जनक सर्पेश प्रतिगृह्यताम् ॥ ६ ॥ शेषाय० मन्त्रपु० सम०॥ यानि कानि०। शेषाय० प्रदक्षिणां स०॥ यस्य स्मृत्या०नमोऽस्त्वनं०।शेषाय० अनन्तकल्पोक्तफलं देहि मे त्वं महेश्वर ॥ त्वत्पूजारहितश्चार्धं फलं प्राप्नोति मानवः॥ मन्त्रहीनं०। शेषाय० प्रार्थनापूर्वकनमस्कारान् स० । इति॥ अनेन कृतपूजनेन शेषः प्रीयताम् ॥ इति शेषपूजनम् ॥

" अथ द्वारपीठपूजनपूर्वकमनन्तपूजनम् "– तत्रादौ शेषसमीपे अनन्तं न्यस्य मंडपद्वारपूजां कुर्यात् ॥ (प्राग्द्वारे) द्वारश्रियै० । नंदायै० । सुनंदायै० । धात्र्यै० । विधात्र्यै० । चिच्छक्त्यै० । शंखनिधये० । पद्मनिधये० ॥ (दक्षिणद्वारे) द्वारश्रियै० । चंडायै० । प्रचंडायै० । धात्र्यै० । विधात्र्यै० । चिच्छक्त्यै० । मायाशक्त्यै० । शंखनिधये० । पद्मनिधये० ॥ (पश्चिमद्वारे) द्वारश्रियै० । बलायै० । प्रबलायै० । धात्र्यै० । विधात्र्यै० । चिच्छक्त्यै० । मायाशक्त्यै० । शंखनिधये० । पद्मनिधये० ॥ (उत्तरद्वारे) द्वारश्रियै० महाबलायै० प्रबलायै० धात्र्यै० विधात्र्यै० चिच्छक्त्यै० मायाशक्त्यै० शंखनिधये० पद्मनिधये०॥ इति द्वारपूजनं कृत्वा मंडूकादीन् स्थापयेत् ॥ मंडूकाय०। कालाग्निरुद्राय० आधारशक्त्यै०।कूर्माय० । पृथिव्यै०। अमृतवर्णाय०।

श्वेतद्वीपाय० । कल्पवृक्षेभ्यो० । मणिहर्म्याय० । हेमपीठाय० । धर्माय० । ज्ञानाय० । वैराग्याय० । ऐश्वर्याय० । अधर्माय० । अज्ञानाय० । अवैराग्याय० । अनैश्वर्याय० । सहस्रफणान्विताय० । अनन्ताय० । सर्वतत्त्वाय० । पद्माय० । आनन्दमयकन्दाय० । संविन्नालाय० । विकारमयकेसरेभ्यो० । प्रकृतिमयपत्रेभ्यो० । सूर्यमंडलाय० । चन्द्रमंडलाय० । वह्निमंडलाय० । सं सत्त्वाय० । रं रजसे० । तं तमसे० । आं आत्मने० । अं अन्तरात्मने० । पं परमात्मने० । ज्ञां ज्ञानात्मने० । प्रां प्राणात्मने० । कां कालात्मने० । विं विद्यातत्त्वाय० । पं परतत्त्वात्मने० । ( पूर्वादिदशदिक्षु ) जयायै० । विजयायै० । अजितायै० । अपराजितायै० । नित्यायै० । विलासिन्यै० । द्रोग्ध्र्यै० । अघोरायै० । मंगलायै० । आधारशक्तिकमलासनाय० । इति मंडूकादिपीठदेवता आवाह्य यथाशक्त्या संपूज्य अनन्तं पूजयेत् ॥

तत्रादौ ध्यानम् ॥ ततस्तु मूलमंत्रेण नमस्कृत्य जनार्दनम् ॥ नवाम्रपल्लवाभासं पिंगभ्रूश्मश्रुलोचनम् ॥ पीतांबरधरं देवं शंखचक्रगदाधरम् । अलंकृतसमुद्रस्थं विश्वरूपं विचिन्तयेत् ॥ इति ध्यात्वा "श्रीमदनन्ताय नमः" इति मूलमंत्रेण आसनं पाद्यम् अर्घ्यम् आचमनं पंचामृतस्नानं शुद्धोदकस्नानं समर्प्य पंचोपचारैः संपूज्य उत्तरे निर्माल्यं विसृज्य पुनर्गंधपुष्पैः संपूज्य पुरुषसूक्तेन ( पत्र ७३ ) लक्ष्मीसूक्तेन चाभिषेकं कुर्यात् ॥ अभिषेकान्ते शुद्धोदकस्नानं समर्प्य वस्त्रं यज्ञोपवीतं गंधम् अक्षतान् पुष्पाणि समर्प्य ॥ (तुलसीकुंदमंदारपारिजाताम्बुजैस्तथा ॥ पंचभिर्ग्रथिता माला वैजयन्तीति कथ्यते ॥ इति) तुलसीपत्रं पुष्पमालां च समर्प्य ॥ अथाष्टाविंशति (२८) ग्रंथि (गांठ) पूजनम् ॥ एह्येहि नारायण चक्रपाणे समुद्रजाशोभितवामभागः ॥

ब्रह्मादिसंसेवितपादपद्म गृहाण पूजां भगवन्नमस्ते ॥ (प्रथमग्रंथौ) विष्णवे० विष्णुमावा०॥ १ ॥ (द्वितीयग्रंथौ) अग्नये० अग्निमावा०॥ २ ॥ (तृतीयग्रंथौ) सूर्याय० सूर्यमावा०॥ ३ ॥ (चतुर्थग्रंथौ) सहस्राक्षाय० सहस्राक्षमावा० ॥ ४ ॥ (पंचमग्रंथौ) ब्रह्मणे० ब्रह्माणमावा० ॥ ५ ॥ (षष्ठग्रंथौ) इन्द्राय० इन्द्रमावा० ॥ ६ ॥ (सप्तमग्रंथौ) पिनाकिने० पिनाकिनमावा० ॥ ७ ॥ (अष्टमग्रंथौ) विघ्नेशाय० विघ्नेशमावा० ॥८॥ (नवमग्रंथौ) स्कन्दाय० स्कन्दमावा०॥९॥ (दशमग्रंथौ) सोमाय० सोममावा० ॥१०॥ (एकादशग्रंथौ) वरुणाय० वरुणमावा०॥११॥ (द्वादशग्रंथौ) पवनाय० पवनमावा० ॥ १२ ॥ (त्रयोदशग्रंथौ) पृथिव्यै० पृथिवीमावा० ॥ १३ ॥ (चतुर्दशग्रंथौ) वसुभ्यो० वसूनावा० ॥१४॥ (पंचदशग्रंथौ) श्रियै० श्रियमावा० ॥ १५ ॥ (षोडशग्रंथौ) मोहिन्यै० मोहिनीमावा०॥ १६ ॥ (सप्तदशग्रंथौ) पद्मिन्यै० पद्मिनीमावा०॥१७॥(अष्टादशग्रंथौ) महाबलायै०महाबलामावा०॥१८॥ (एकोनविंशतितमग्रंथौ) अजायै० अजामावा०॥ १९ ॥ (विंशतितमग्रंथौ) मंगलायै० मंगलामावा० ॥२०॥ (एकविंशतितमग्रंथौ) वरदायै० वरदामा० ॥२१॥ (द्वाविंशतिग्रन्थौ) शुभायै०शुभामा०॥२२॥ (त्रयोविंशतितमे ग्रंथौ) जयायै० जयामा० ॥२३॥ (चतुर्विंशतितमग्रंथौ) विजयायै० विजयामा० ॥२४॥ (पंचविंशतितमग्रंथौ) जयन्त्यै०

१ विष्णुरग्निस्तथाऽऽदित्यः सहस्राक्षः पितामहः॥ इन्द्रः पिनाकी विघ्नेशः स्कन्दः सोमस्तथैव च ॥ १ ॥ वरुणः पवनश्चैव पृथिवी वसवस्तथा ॥ श्रीर्मोहिनी पद्मिनी च तथैव च महाबला ॥ २ ॥ अजा च मंगला चैव वरदा च शुभा जया ॥ विजया च जयन्ती च तथा च पापनाशिनी ॥ ३ ॥ कथिता विश्वरूपा च तथा च सर्वमंगला ॥ ग्रन्थीनां देवताः प्रोक्ताः क्रमेण सर्वपूजिताः ॥ ४ ॥

जयन्तीमा०॥२५॥(षड्विंशत्यां) पापनाशिन्यै०पापनाशिनीमा०॥२६॥ ( सप्तविंशतितमग्रंथौ ) विश्वरूपायै० विश्वरूपामा० ॥२७॥ ( अष्टाविंशतितमग्रंथौ ) सर्वमंगलायै० सर्वमंगलामावा० ॥२८॥ इत्यावाह्य " ग्रंथिदेवताभ्यो नमः" इति मंत्रेण गंधादिपंचोपचारैः पूजयेत् ॥

अथांगपूजा ॥ मत्स्याय नमः पादौ पूजयामि ॥ कूर्माय० गुल्फौ०। वराहाय० जानुनी० । नारसिंहाय० ऊरू० । वामनाय० कटी० । परशुरामाय० उदरं० । श्रीरामचंद्राय० हृदयं० । श्रीकृष्णाय० मुखं०॥ सहस्रशिरसे० शिरः पूज०॥ श्रीमदनन्ताय०सर्वांगं पूजयामि ॥

" अथ चतुर्दशावरणपूजा "-(१) (अनन्तस्य दक्षिणपार्श्वे) रमायै नमः । (वामपार्श्वे) भूम्यै०॥ प्रथमावरणदेवताभ्यो० गंधं पुष्पं सम०॥ ततो गंधं पुष्पं तर्जनीमध्यमांगुष्ठैर्धृत्वा मध्ये शंखोदकं गृहीत्वा " दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ॥ भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ इत्युच्चार्य शंखस्थं जलं भूमौ निक्षिप्य गंधपुष्पं देवोपरि समर्पयेत् ( एवं सर्वत्र ज्ञेयम् )॥ (२) द्वितीयावरणम्॥ ( पूर्वादिक्रमेण ) वृद्धोल्काय० । महोल्काय० । शतोल्काय० । सहस्रोल्काय० ॥ द्विती० देव० गन्धं० स० । दयाब्धे० द्वितीयावरणार्चनम् ॥ ३ ॥ तृतीयावरणम् ॥ वासुदेवाय० संकर्षणाय० । प्रद्युम्नाय० । अनिरुद्धाय० ॥ तृतीया० देव० गंधं० स० ॥ दयाब्धे० तृतीयावरणार्चनम् ॥ ४ ॥ चतुर्थावरणम् ॥ केशवाय० । नारायणाय० । माधवाय० । गोविंदाय० । विष्णवे० । मधुसूदनाय० । त्रिविक्रमाय० । वामनाय० । श्रीधराय० । हृषीकेशाय० । पद्मनाभाय० । दामोदराय० ॥ चतुर्थो० देव० गधं० स० । दयाब्धे० चतुर्थावरणार्चनम् ॥ ५ ॥ पंचमावरणम् । मत्स्याय० । कूर्माय० । वराहाय० । नारसिंहाय० ।

वामनाय० । परशुरामाय० । श्रीरामचंद्राय० । श्रीकृष्णाय० । बौद्धाय० । कल्किने० । अनन्ताय० । विश्वरूपिणे० ॥ पञ्चमा० देव० गंधं० स० । दयाब्धे० पञ्चमावरणार्चनम् ॥ ६ ॥ षष्ठावरणम् ॥ अनन्ताय० । ब्रह्मणे० । वायवे० । ईशानाय० । वारुण्यै० । गायत्र्यै० । भारत्यै० । गिरिजायै० । गरुडाय० । सुपुण्याय० ॥ षष्ठावरणदेव० गंधं०स० । दयाब्धे० षष्ठावरणार्चनम् ॥ ७ ॥ सप्तमावरणम् ॥ इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । सोमाय० । ईशानाय० ॥ सप्तमाव० देव० गंधं० स० ॥ दयाब्धे० सप्तमावरणार्चनम् ॥ ८ ॥ अष्टमावरणम् ॥ शेषाय० । विष्णवे० । विधये० । प्रजापतये० ॥ अष्टमाव०देव० गंधं० समर्पया० ॥ दयाब्धे० । अष्टमावरणार्चनम् ॥ ९ ॥ नवमावरणम् ॥ गणपतये० । सप्तमातृभ्यो० । दुर्गायै० । क्षेत्राधिपतये० ॥ नवमा० देव० गंधं० स० ॥ दयाब्धे० नवमावरणार्चनम् ॥ १० ॥ दशमावरणम् ॥ ब्रह्मणे० । भास्कराय० । शेषाय० । सर्वव्यापिने० । ईश्वराय० । विश्वरूपाय० । महाकामाय० । सृष्टिकर्त्रे० । कृष्णाय० । हरये० । शिवाय० । स्थितिकराय० । अन्तकाय० ॥ दशमाव० देव० गंधं० स० ॥ दयाब्धे० दशमावरणार्चनम् ॥ ११ ॥ एकादशावरणम् ॥ शौरये० । वैकुंठाय० । महाबलाय० । पुरुषोत्तमाय० । अजाय० । पद्मनाभाय० । मंगलाय० । हृषीकेशाय० । वरदाय० । माधवाय० । मधुसूदनाय० । अच्युताय० । अनन्ताय० । गोविंदाय० । विजयाय० । अपराजिताय० । श्रीकृष्णाय० ॥ एकादशाव० देव० गंधं० स० ॥ दयाब्धे० एकादशसमर्चनम् ॥ १२ ॥ द्वादशावरणम् । अनन्ताय० । कपिलाय० । शेषाय० । संकर्षणाय० । हलायुधाय० । तारकाय० । सीरपाणये० । बलभद्राय० ॥ द्वादशाव०

देव० गन्धं० स०॥ दयाब्धे० द्वादशावरणार्चनम् ॥१३॥ त्रयोदशावरणम् ॥ क्षीराब्धिशायिने० । अच्युताय० । भूम्याधाराय० । लोकनाथाय० । फणामणिविभूषणाय० । सहस्रमूर्ध्ने० । सहस्रार्चिषे० ॥ त्रयोदशाव० देव० गंधं० स०॥ दयाब्धे० त्रयोदशसमर्चनम् ॥१४॥ चतुर्दशावरणम् ॥ केशवाय० । नारायणाय० । माधवाय० । गोविंदाय० । विष्णवे० । मधुसूदनाय० । त्रिविक्रमाय० । वामनाय० । श्रीधराय० । हृषीकेशाय० । पद्मनाभाय० । दामोदराय० । संकर्षणाय० । वासुदेवाय० । प्रद्युम्नाय० । अनिरुद्धाय० । पुरुषोत्तमाय० । अधोक्षजाय० । नारसिंहाय० । अच्युताय० । जनार्दनाय० । उपेन्द्राय० । हरये० । श्रीकृष्णाय० ॥ चतुर्दशाव० देव० गंधं० स०॥ दयाब्धे० चतुर्दशसमर्चनम् ॥ इत्यावरणपूजा ॥

"अथ चतुर्दशपत्रपूजा"—कृष्णाय नमः पलाशपत्रं सम०॥१॥ विष्णवे० औदुंबर० ॥ २ ॥ हरये० अश्वत्थपत्रं० ॥ ३ ॥ शंभवे० भृंगराज० ॥ ४ ॥ ब्रह्मणे० जटाधरपत्रं०॥५॥ भास्कराय० अशोक० ॥ ६ ॥ शेषाय० कपित्थ० ॥ ७ ॥ सर्वव्यापिने० वटपत्रं० ॥ ८ ॥ ईश्वराय० आम्रपत्रं० ॥९॥ विश्वरूपिणे० कदलीपत्रं०॥१०॥ महाकायाय० अपामार्ग० ॥११॥ सृष्टिकर्त्रे० करवीर०॥ १२ ॥ स्थितिकर्त्रे० पुन्नाग० ॥ १३ ॥ अनन्ताय० नागवल्लीपत्रं सम०॥ १४ ॥ इति ॥

"अथ चतुर्दशपुष्पपूजा"—अनन्ताय० पद्मपुष्पं सम० ॥ विष्णवे० जातीपुष्पं० ॥ केशवाय० चंपक० ॥ अव्ययाय० कल्हार० ॥ सहस्रजिते० केतकी० ॥ अनन्तरूपिणे० बकुल० ॥ इष्टाय० शतपुष्पं०॥ विशिष्टाय० पुन्नाग० ॥ शिष्टेष्टाय० करवीर०॥ शिखंडिने० धत्तूर० ॥ नहुषाय० कुन्दपुष्पं० ॥ विश्ववाहवे० मल्लिकापुष्पं० ॥ महीधराय० मालतीपुष्पं० ॥ अच्युताय० कर्णिकापुष्पं सम० ॥ इति ॥

" अथाष्टोत्तरशतनामपूजा "—अनन्ताय० अच्युताय० अद्भुतकर्मणे० अमितविक्रमाय० अपराजिताय० अखंडाय० अग्निनेत्राय० अग्निवपुषे० अदृश्याय० अत्रिपुत्राय० ॥ १० ॥ अनुकूलाय० अघनाशिने० अनघाय० अप्सुनिलयाय० अहरहाय० अष्टमूर्तये० अनिरुद्धाय० अनिर्विष्टाय० अचंचलाय० अब्दादिकाय० ॥२०॥ अचलरूपाय० अखिलधराय० अव्यक्ताय० अनुरूपाय० अभयंकराय० अक्षताय० अवपुषे० अयोनिजाय० अरविंदाक्षाय० अशनवर्जिताय० ॥ ३० ॥ अधोक्षजाय० अदितिपुत्राय० अंबिकापतिपूर्वजाय० अपस्मारनाशिने० अव्ययाय० अनादिने० अप्रमेयाय० अघशत्रवे० अमरारिघ्नाय० अनीश्वराय० ॥ ४० ॥ अजाय० अघोराय० अनादिनिधनाय० अमरप्रभवे० अग्राह्याय० अक्रूराय० अनुत्तमाय० अरूपाय० अर्हते० अमोघाधिपतये० ॥ ५० ॥ अजाय० अक्षमाय० अमृताय० अघोरवीर्याय० अव्यंगाय० अविघ्नाय० अतीन्द्रियाय० अमिततेजसे० अमितये० अष्टमूर्तये० ॥ ६० ॥ अनिलाय० अवशाय० अणोरणीयसे० अशोकाय० अरविन्दाय० अधिष्ठात्रे० अमितनयनाय० अरण्यवासिने० अप्रमत्ताय० अनन्तरूपाय० ॥७०॥ अनलाय० अनिमिषाय० अस्त्ररूपाय० अग्रगण्याय० अप्रमिताय० अन्तकाय० अचिन्त्याय० अपांनिधये० अतिसुंदराय० अमरप्रियाय० ॥ ८० ॥ अष्टसिद्धिप्रदाय० अरविंदप्रियाय० अरविंदोद्भवाय० अनयाय० अर्थाय० अक्षोभ्याय० अर्चिष्मते० अनेकमूर्तये० अनन्तब्रह्मांडपतये० अनन्तशयनाय० ॥९०॥ अमराधिपतये० अनाधाराय० अनन्तनाम्ने० अनन्तश्रिये० अक्षराय० अमाय० आश्रमस्थाय० आश्रमातीताय० अन्नादाय० आत्मयोनये० ॥ १०० ॥ अवनीपतये०

अवनीधराय० अनादिने० आदित्याय० अमृताय० अपवर्गप्रदाय० अनन्ताय० सर्वदेवाधिदेवाय० ॥ १०८ ॥ इत्यष्टोत्तरशतनामपूजा ॥

अथ धूपाद्युपचाराः ॥ श्रीमदनन्ताय नमः सौभाग्यद्रव्यं धूपं दीपं नैवेद्यं तांबूलं दक्षिणां नीराजनं प्रदक्षिणां पुष्पांजलिं समर्प्य प्रार्थयेत् ॥ नमस्ते भगवन् भूयो नमस्ते धरणीधर ॥ नमस्ते सर्वनागेन्द्र नमस्ते मधुसूदन ॥ नमस्ते देवदेवेश नमस्ते गरुडध्वज ॥ नमस्ते कमलाकान्त अनन्ताय नमोनमः ॥ नमोऽस्त्वनन्ताय० ॥ इति संप्रार्थ्य दोरकप्रार्थनां कुर्यात् ॥ अनन्ताय नमस्तुभ्यं सहस्रशिरसे नमः ॥ नमोस्तु पद्मनाभाय नागानां पतये नमः ॥ अनन्तः कामदः श्रीमाननन्तो मे प्रयच्छतु ॥ अनन्तदोररूपेण पुत्रपौत्रान्प्रवर्द्धय ॥ इति दोरकं संप्रार्थ्य दोरकबंधनमंत्रः ॥ अनन्तसंसारमहासमुद्रमग्नं समभ्युद्धर वासुदेव ॥ अनन्तरूपे विनियोजयस्व ह्यनन्तसूत्राय नमो नमस्ते ॥ इति मंत्रेण दोरकं बद्ध्वा ॥ जीर्णदोरकविसर्जनमंत्रः ॥ नमः सर्वहितार्थाय जगदानंदकारक ॥ जीर्णदोरमयुं देव विसृजेऽहं त्वदाज्ञया ॥ इति विसृजेत् ॥ ततो वायनदानम् ॥ गृहाण त्वं द्विजश्रेष्ठ वायनं फलदायकम् ॥ पक्वान्नफलसंयुक्तं दक्षिणाघृतसंयुतम् ॥ अथ जीर्णदोरकदानमंत्रः ॥ अनन्तः प्रतिगृह्णाति अनन्तो वै ददाति च ॥ अनन्तस्तारको द्वाभ्यामनन्ताय नमोनमः ॥ इति दत्वा यथाशक्ति ब्राह्मणान् भोजयेत् आमान्नं वा दद्यात् ॥ ब्राह्मणान् संपूज्य दक्षिणां दत्वा आशिषो गृहीत्वा हस्ते जलं गृहीत्वा—अनेन पूजनेन श्रीमदनन्तः प्रीयताम् ॥ मया अद्य यत्कृतं कर्म तत् श्रीमदनन्तदेवताप्रसादात् सर्वं परिपूर्णमस्त्विति भवन्तो ब्रुवन्तु ॥ अस्तु परिपूर्णम् ॥ इत्यनन्तचतुर्दशीव्रतपूजनविधिः ॥

---

१ दोरके क्वचिन्नष्टे व्रतराजोक्तं प्रायश्चित्तं कृत्वा नूतनं दोरकं बध्नीयात् ॥

## ॥ अथ अनन्तचतुर्दशीव्रतोद्यापनम् ॥

एतच्च भाद्रपदशुक्लचतुर्दश्यां चतुर्दशवर्षात्मकं यावज्जीवं वा व्रतं चरित्वा आदौ मध्येऽन्ते वा उद्यापनं कुर्यात् ॥ पूर्ववन्मंडपादिकं कृत्वा शुभासने उपविश्य आचम्य शांतिपाठपठनपूर्वकं देवब्राह्मणान् नमस्कृत्य सुमुखश्चेत्यादि पठित्वा ॥ अद्येत्यादि० मम निखिलपापक्षयविनिर्मुक्तपूर्वकम् उत्तमसिद्धिपुत्रपौत्रपूरितविविधभोगधनधान्यपरमगतिप्राप्तिकामनया आचरितस्याचरिष्यमाणस्यानन्तव्रतस्य संपूर्णफलावाप्तये एकरात्राधिवासपक्षाश्रयेण अनन्तव्रतोद्यापनं करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशाराधनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धाराम् नांदीश्राद्धं ब्राह्मणवरणं सर्वतोभद्रमंडले देवतास्थापनं च करिष्ये इति संकल्प्य दिग्रक्षणादि ब्राह्मणवरणान्तं कर्म (पृ०६-४५) कृत्वा सर्वतोभद्रमंडले देवतास्थापनं (पृ० ९९) कुर्यात् ॥ ततस्तदुपरि पूर्णपात्ररहितं कलशं संस्थाप्य तत्र पूर्ववत् यमुनां संपूज्य तदुपरि अक्षतपूरितपूर्णपात्रं निधाय तस्योपरि क्षौमवस्त्रं प्रसार्य तत्राष्टदलं विलिख्य तस्योपरि सप्तफणान्वितं शेषं संस्थाप्य पूर्ववत् संपूज्य ततः स्वर्णनिर्मितं चतुर्दशग्रंथियुतमष्टाविंशतिग्रंथियुतं वा अनन्तं कलशोपरि स्थापयेत् ॥ तदुत्तरतः सप्तधान्योपरि विस्तृतशय्यायां शेषाग्रे वा कृताग्न्युत्तारणप्राणप्रतिष्ठां स्वर्णनिर्मितं लक्ष्मीसहितं हैमं हलमुसलयुतमनन्तं देवं विष्णुमंत्रेण स्थापयेत् ॥ अत्रावसरे पुष्पार्पणान्ते वा ग्रंथिदेवता आवाह्य गंधपुष्पैः संपूज्य ततः शय्यायां शेषाग्रे वा प्रतिमायाः परितः शंखादीनावाहयेत् ॥ यथा ॥ शंखाय० शंखमावा० चक्राय० गदायै० पद्माय० ॥ (तद्बहिर्नाममंत्रेण) अनन्ताय० कपिलाय० दक्षाय० मनवे० प्रजापतये० संकर्षणाय० ॥ १० ॥ कालाय० वन-

माश्विने० त्रिविक्रमाय० अहोरात्राय० अर्धमासाय० मासाय० ऋतवे० अयनाभ्यां० संवत्सराय० इद्वत्सराय० ॥ २० ॥ अनुवत्सराय० वत्सराय० प्रजाध्यक्षाय० अजिताय० सर्वभूताय० प्रद्युम्नाय० अनिरुद्धाय० श्रीधराय० पुरुषोत्तमाय० वामनाय० ॥ ३० ॥ पद्मनाभाय० विश्वरूपाय० त्रिविक्रमाय० विष्णवे० अच्युताय० ( तद्बहिः ) अष्टवसुभ्यो० (तद्बहिः) एकादशरुद्रेभ्यो० (तद्बहिः) द्वादशादित्येभ्यो० नवग्रहेभ्यो० अष्टभैरवेभ्यो० ॥ ४० ॥ मेषादिद्वादशराशिभ्यो० अश्विन्यादिसप्तविंशतिनक्षत्रेभ्यो० ब्राह्मयादि मातृभ्यो० चैत्रादिद्वादशमासेभ्यो० दीप्त्यादिशक्तिभ्यो० विष्कंभादियोगेभ्यो० ॥ ४६ ॥ पीठपरितः फलपत्रान्नपूरितान् चतुर्दशकुंभांश्चतुर्दशनामभिः स्थापयेत् ॥ यथा ॥ अनन्ताय० अनन्तम् आवा०स्था० । संकर्षणाय० । कमलाय० । शेषाय० । वासुदेवाय० । विश्वनाथाय० । विश्वरूपाय० । पद्मनाभाय० । दामोदराय० । जगन्नाथाय० चतुर्मुखाय० । श्रीकंठाय० केशवाय० । सर्वात्मने० सर्वात्मानम् आवाह० स्थापयामि ॥ १४ ॥ इति चतुर्दशदेवान् कुंभोपरि आवाह्य ॥ " अनन्ताद्यावाहितदेवताभ्यो नमः " इति मंत्रेण व्रतविधिपूजनवत् पूजनं कृत्वा स्वर्णदोरकप्रतिमयोः पूजनं कृत्वा प्रार्थयेत् ॥ अनन्तकामान् मे देहि सर्वकामफलप्रद ॥ अनन्ताय नमस्तुभ्यं पुत्रपौत्रान्विवर्द्धय ॥ व्रतेनानेन संतुष्टो भव त्विह सदा मम ॥ अनन्ताय नमः प्रार्थनापू० नम० समर्प० ॥ इति संप्रार्थ्य ॥ आचार्यं संपूज्य दक्षिणां दत्त्वा आशिषो गृहीत्वा पुराणपठनादिना रात्रिं निनयेत् ॥ ( अत्र केचित्तद्दिने रात्रौ होममिच्छन्ति ॥ ब्राह्मणभोजनादि सर्वं दिवैव ॥ रात्रिहोमपक्षे संकल्पे एकरात्राधिवासपक्षो नोच्चारणीयः ॥ इति ॥

"अथ द्वितीयदिनकृत्यम्"–प्रातर्नित्यकर्म समाप्याचमनादि विधाय स्थापितदेवतानां पूजनं कृत्वा अग्निप्रतिष्ठापनादि ग्रहहोमान्तं कर्म (पृ० १४९–१६४) कुर्यात् ॥ ततः प्रधानहोमः ॥ अत्र प्रधानं श्रीमदनन्तमश्वत्थसमित्तिलव्रीहियवघृतपायसद्रव्यैः प्रत्येकमष्टोत्तरशत-संख्यया जुहुयात् ॥ विष्णुमंत्रेण वा "श्रीमदनन्ताय नमः" इति मंत्रेण ॥ पीठदेवताः परिवारदेवताः आवरणदेवताः ब्रह्मादिदेवताश्चैकैकामाज्याहुतिं जुहुयात् ॥ ततः "अग्निवायुसूर्येभ्यो नमः" इति व्याहृतिहोमं कृत्वा स्थापितदेवतानाम् उत्तरपूजनमारभ्य प्रणीताविमोकान्तं (पृ० १६८–१८८) सर्वं समाप्य ॥ पीठदाने विशेषः ॥ विप्रं संपूज्य । गृहाण त्वं द्विजश्रेष्ठ समस्तफलदायक ॥ त्वत्प्रसादादहं विप्र विमुच्ये भवबंधनात् ॥ अनन्तः प्रतिगृह्णाति अनन्तो वै ददाति च ॥ अनन्तस्तारकोऽस्माकमनन्ताय नमोनमः ॥२॥ इति पीठदानम् ॥ ततः पूर्वेद्युर्निमंत्रितान् चतुर्दशब्राह्मणान् वस्त्रादिना संपूज्य स्थापितचतुर्दशकलशान् पक्वान्नादिपूरितान् चतुर्दशवंशपात्रसहितान् दक्षिणासहितान् तेभ्यो दद्यात् ॥ मन्त्रहीनं० प्रमादात्० ॥ तत आचार्यादीन् संपूज्य दक्षिणादिकं दत्वा आशिषो गृहीत्वा ब्राह्मणभोजनपुरःसरं सपरिवारः स्वयं भुंजीत ॥ इति अनन्तचतुर्दशीव्रतोद्यापनविधिः ॥

---

## ॥ अथ कदलीव्रतम् ॥

भाद्रपदशुक्लचतुर्दश्यां कार्तिक्यां वा माघ्यां वा वैशाख्यां कदलीव्रतं हेमाद्रौ भविष्योत्तरे ॥ सा पूर्वाह्णव्यापिनी ग्राह्या ॥ अथ रंभारोपणविधिः ॥ रंभावृक्षं रोपयित्वा स्वहस्तेन च तं पुनः ॥ वर्षमेकं तु संपूज्य उदकुंभेन सेचयेत् ॥ यावत्प्रसवपर्यन्तं पूजयेच्च यथा-

विधि ॥ पूर्वस्यां प्रसवः सम्यगुत्तरस्यां तथैव च ॥ दक्षिणे पश्चिमे हानी रंभाप्रसवलक्षणम् ॥

आचम्य अद्याद्य० इति मासपक्षाद्युल्लिख्य मम पापनिर्मुक्त्युत्तमसिद्धिपुत्रपौत्राववैधव्यैप्सितभोगधनधान्यप्राप्तये उमामहेश्वरसहितं कदलीपूजनं करिष्ये ॥ इति संकल्प्य । कदल्यागच्छ हे देवि सौभाग्यफलदायिनि ॥ रूपं देहि जयं देहि यशो देहि सुनिश्चितम् ॥ इत्यावाह्य यथाशक्त्या "उमामहेश्वरसहितकदल्यै नमः" इति कदलीं संपूज्य प्रार्थयेत् ॥ कदल्यै कामदायिन्यै मेधायै ते नमोनमः ॥ रंभायै भूतिसारायै सौख्यदात्र्यै नमो नमः ॥ यथायथा ते प्रसवा वर्द्धन्ते कदलि ध्रुवम् ॥ तथा मनोरथानां मे प्रभवो वर्धते स्वयम् ॥ इति संप्रार्थ्य "कदल्यै नमः ॥" इति मंत्रेण दानमपि कुर्यात् ॥

"अथ कदलीव्रतोद्यापनम्" —कार्तिके माघमासे वा वैशाखे चेतरे तथा ॥ पुण्ये मासि प्रकुर्वीत पौर्णमास्यां शुभे दिने ॥ यस्मिन्देशे न लभ्येत कदली राजसत्तम ॥ सुवर्णस्य शुभां कृत्वा तत्र पूजां समाचरेत् ॥ यदि लभ्येत कदली तामारोप्य प्रपूजयेत् ॥ यावत्तस्यां फलं तावत्सिंचेन्नीरेण भूपते ॥ फलेषु चैव पक्वेषु पश्चाद्विप्रान्समाह्वयेत् ॥ प्रभाते विमले स्नात्वा नद्यादौ विमले जले ॥ अहते वाससी गृह्य कृत्वा संध्यादि कर्म च ॥ अरत्निमात्रं कृत्वा तु स्थंडिलं वाग्यतः शुचिः ॥ अग्निं संस्थाप्य विधिवत् तत्र होमं समाचरेत् ॥ शतमष्टोत्तरं विद्वान् तिलाज्याहुतिभिस्तथा ॥ एकाग्रचित्तः संहृष्टः कृती व्याहृतिभिः पृथक् ॥ ब्रह्मादिदेवताभ्यश्च नाममंत्रैः पृथक् पृथक् ॥ तत आचार्यं संपूज्य सवत्सां गां दद्यात् ॥ षोडश वायनानि दद्यात् ॥ ततः कदलीं—कदल्यै कामदायिन्यै मेधायै ते नमो नमः ॥ रंभायै

भूतिसारायै सर्वसौख्यप्रदे नमः ॥ इति मंत्रेण ब्राह्मणाय दद्यात् ॥ पादुकोपानहौ छत्रमलंकारानपि दद्यात् ॥ ततो ब्राह्मणभोजनपुरःसरं स्वयं भुंजीत ॥ एवं नारी नरो वापि कुरुते कदलीव्रतम् ॥ सर्वान्कामानवाप्नोति स्वर्गलोके महीयते ॥ इति ॥ विशेषस्तु "व्रतराज" द्रष्टव्यः ॥ इति कदलीव्रतोद्यापनम् ॥

---

## ॥ अथ कपिलाषष्ठीव्रतम् ॥

भाद्रे मास्यसिते पक्षे भानौ चैव करे स्थिते ॥ पाते कुजे च रोहिण्यां सा षष्ठी कपिला स्मृता । संयोगे तु चतुर्णां च निर्दिष्टा परमेष्ठिना ॥ उपलिप्ते शुचौ देशे पुष्पाक्षतविभूषिते ॥ स्थापयेदव्रणं कुंभं चंदनोदकपूरितम् ॥ पंचरत्नसमायुक्तं दूर्वापुष्पाक्षतान्वितम् ॥ रक्तवस्त्रयुगच्छन्नं ताम्रपात्रेण संयुतम् ॥ रथं रौप्यपलस्यैव एकचक्रं सुचित्रितम् ॥ सौवर्णीं पलसंयुक्तां मूर्तिं सूर्यस्य कारयेत् ॥ कुंभस्योपरि संस्थाप्य गंधपुष्पैस्तथाऽर्चयेत् ॥ आदित्यं पूजयेद्देवं नामभिः स्वैर्यथोदितम् ॥ आदित्य भास्कर रवे भानो सूर्य दिवाकर ॥ प्रभाकर नमस्तुभ्यं संसारान्मां समुद्धर ॥ एवं संपूज्य विधिवद्देवदेवं दिवाकरम् ॥ पूजयेत् कपिलाधेनुं वस्त्रमाल्यानुलेपनैः ॥ दानमंत्रः ॥ दिव्यमूर्तिर्जगच्चक्षुर्द्वादशात्मा दिवाकरः ॥ कपिलासहितो देवो मम मुक्तिं प्रयच्छतु ॥ यथा त्वं कपिले पुण्ये सर्वलोकस्य पावनी ॥ मद्दत्ता सह सूर्येण मम मुक्तिप्रदा भव ॥ इति स्कन्दपुराणोक्तव्रतम् ॥ अत्र हेमाद्र्युक्तो विशेषप्रकारस्तु "व्रतराजे" द्रष्टव्यः ॥ इति कपिलाषष्ठी।

---

## ॥ अथ पिठोरीव्रतम् ॥

भाद्रपदामावास्यायां पिठोरीव्रतम् ॥ मध्यदेशे तु पोळा इति प्रसिद्धम् ॥ सा प्रदोषव्यापिनी ग्राह्या ॥ यदा पूर्वरात्रौ प्रदोषव्याप्त्यभावस्तदा परा कार्या ॥ प्रात कृत्यं निर्वर्त्य मासपक्षाद्युल्लिख्य मम इह जन्मनि जन्मान्तरे वा सौभाग्यपुत्रपौत्रफलावाप्त्यर्थं पिठोरीव्रतं करिष्ये ॥ इति संकल्प्य संध्याकाले स्नात्वा प्रदोषसमये "नमोदेव्यै०" इति मंत्रेण षोडशोपचारैर्देवीं संपूज्य ब्राह्मणं सुवासिनीं संभोज्य स्वयं भुंजीत ॥ इति पीठोरीव्रतम् ॥

---

## ॥ अथ आश्विनमासकृत्यम् ॥

तुलामेषसंक्रान्तिर्विषुवसंज्ञा । तस्याः पूर्वाः पराश्च पंचदशनाड्यः पुण्यकालः । आश्विनशुक्लप्रतिपादि देवीनवरात्रारंभः ॥ नवरात्रशब्दः आभि-

१ आश्विनशुक्लप्रतिपदा सा परविद्धा ग्राह्या यथा देवीपुराणे-न दर्शकलया युक्ता प्रतिपच्चण्डिकार्चने ॥ उदये द्विमुहूर्तापि ग्राह्या सोदयकारिणी ॥ परदिने प्रतिपदसत्त्वे तु अमायुक्ताऽपि ग्राह्या ॥ यतिश्च ब्रह्मचारी च विधवा च रजस्वला ॥ नवरात्रं चोपवासमेकभुक्तमयाचितम् ॥१॥ चित्रावैधृतियुक्ता च प्रतिपच्चण्डिकार्चने ॥ तयोरन्ते विधातव्यं कलशस्थापनं ध्रुवम् ॥ २ ॥ प्रतिपद्याश्विने मासि भवेद्वैधृतिचित्रयो ॥ आद्यपादौ परित्यज्य प्रारभेन्नवरात्रकम् ॥ ३ ॥ चित्रावैधृतिसंयुक्ता प्रतिपत्तु भवेन्नृप ॥ वैधृत्या चापि युक्ता स्यात्तदा मध्यदिने रवौ ॥ ४ ॥ त्याज्या अंशात्रयस्त्वाद्यास्तुरीयांशे तु पूजनम् ॥ न रात्रौ स्थापनं कार्यं न च कुंभाभिषेचनम् ॥ ५ ॥ भास्करोदयमारभ्य यावत्तु दशनाडिका ॥ प्रात:काल इति प्रोक्तः स्थापनारोपणादिषु ॥ ६ ॥ आद्याः षोडशनाडीस्तु त्यक्त्वा यः कुरुते नर ॥ कलशस्थापनं तत्र ह्यरिष्टं जायते ध्रुवम् ॥७॥ वृद्धौ समाप्तिरष्टम्यां ह्रासेन प्रतिपन्निशि ॥ प्रारम्भो नवचण्ड्यास्तु नवरात्रमतोऽर्थवत् ॥ तिथिवृद्धौ तिथिह्रासे नवरात्रं यथार्थकम् ॥ ८ ॥

नशुक्लप्रतिपदमारभ्य महानवमीपर्यन्तं क्रियमाणं कर्म तस्य नामधेयम् ॥ तत्र कर्मणि पूजैव प्रधानम् उपवासादिकं स्तोत्रं जपादिकं चांगं तथा च यथाकुलाचारमुपवासैकभक्तनक्तायाचितान्यतमव्रतयुक्तं यथाकुलाचारं सप्तशतीलक्ष्मीहृदयादिस्तोत्रजपसहितं प्रतिपदादिनवम्यंतनवतिथ्यधिकतरपूजाख्यं कर्म ॥ अत्र कर्मणि ब्राह्मणादिचतुर्वर्णस्य म्लेच्छादेश्चाधिकारः॥ तत्र विप्रेण जपहोमान्नबलिनैवेद्यैः सात्विकी पूजा कार्या॥नैवेद्यैश्च निरामिषैः ॥ मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते ॥ मद्यमपेयमदेयमित्यादिनिषेधान्मांसमद्यादियुतराजसपूजायां ब्राह्मणस्य नाधिकारः॥ मद्यपाने मरणान्तप्रायश्चित्तोक्तेः ॥ शूद्रेण सप्तशत्यादिजपहोमसहिता सात्विकीपूजा ब्राह्मणद्वारा कार्या ॥ शूद्रादेः स्वतः पौराणमंत्रपाठेऽपि नाधिकारः ॥ अत एव "शूद्रः सुखमवाप्नुयादि"त्यत्र भाष्ये स्त्रीशूद्रयोः श्रवणादेव फलं न तु पाठादित्युक्तम्॥ एतेन स्त्रीशूद्रयोर्गीताविष्णुसहस्रनामपाठो दोषायैवेति ज्ञेयम्॥ कचित्पौराणमंत्रयुक्तपूजायां स्त्रीशूद्रयोः स्वतोऽप्यधिकार उक्तः ॥ जपहोमादौ विप्रद्वारैव ॥ म्लेच्छादीनां तु ब्राह्मणद्वारापि जपहोमे समंत्रकपूजायां च नाधिकारः ॥ किन्तु तैस्तत्तदुपचाराणां देवीमुद्दिश्य मनसोत्सर्गमात्रं कर्त्तव्यम्[1] ॥ इति ॥

आश्विनशुक्लप्रतिपदि प्रातरभ्यंगस्नानं कृत्वा प्रातःकृत्यं समाप्य ततः स्वहस्तपरिमितसमचतुरस्रं स्थंडिलं विधाय तस्योपरि पूर्णपात्रान्तं कलशं संस्थाप्य ॥ आचम्य प्राणा० ॥ अद्येत्यादि० मम सकुटुंबस्य महाकालीमहालक्ष्मीमहासरस्वतीदेवताप्रीतिद्वारा सर्वापच्छान्तिपूर्वकं चतुर्विधपुरुषार्थसिद्धये अद्यप्रभृति नवमीपर्यन्तं प्रत्यहं श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवतापूजनपूर्वकमुपवासाखंडदीपप्रज्वालन (कुमारीपूजनचंडीसप्तशतीपाठादि)सहितं शारदीयनवरात्रोत्सवाख्यं कर्म करिष्ये।

---

१ यद्यत् कर्तव्यं तत्तद् वक्तव्यम्

तत्रादौ दिग्रक्षणं कलशाराधनं गणपतिपूजनं संक्षिप्तपुण्याहवाचनं च करिष्ये इति तद् कृत्वा कलशे वरुणमावाह्य "वरुणाय नमः" इति मंत्रेण यथाशक्त्या संपूज्य विश्वाधारासि०(१९) इति कलशं संस्थाप्य तत्कलशोपरि देवीमावाह्य ॥ खड्गं चक्रगदेषु० इत्यादिभिर्ध्यात्वा ॥ आगच्छ वरदे देवि दैत्यदर्पनिषूदिनि ॥ पूजां गृहाण सुमुखि नमस्ते शंकरप्रिये ॥ सर्वतीर्थमयं वारि सर्वदेवसमन्वितम् ॥ इमं घटं समागच्छ तिष्ठ देवि गणैः सह ॥ दुर्गे देवि समागत्य सान्निध्यमिह कल्पय ॥ बलिं पूजां गृहाण त्वमष्टाभिः शक्तिभिः सह ॥ कल्याणजननीं सत्यां कामदां करुणाकरीम् ॥ अनन्तशक्तिसंपन्नां दुर्गामावाहयाम्यहम् ॥ सांगां सावरणां सायुधां दुर्गामावाहयामि ॥ महाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणि त्रिगुणात्मिके दुर्गादेवि आवाहिता भव ॥ स्थापिता भव ॥ सन्निहिता भव ॥ सन्निरुद्धा भव ॥ सम्मुखीकृता भव ॥ षडंगेन सकलीकृता भव ॥ अवगुंठिता भव ॥ परमीकृता भव ॥ अमृतीकृता भव ॥ प्रार्थिता भव ॥ ॥ १० ॥ प्रतिष्ठा सर्वं० ॥ इति प्रतिष्ठां कृत्वा ॥ दीपपात्रे विंदुत्रिकोणषट्कोणात्मकं यंत्रं विलिख्य "यंत्रस्थदेवताभ्यो नमः ॥" इति संपूज्य तन्मध्ये घृतं तैलं वा यथाविभवं प्रपूर्य दीपं प्रज्वाल्य "दीपस्थदेवतायै नमः" इति संपूज्य प्रार्थयेत् ॥ भो दीप देवीरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ॥ यावद्व्रतसमाप्तिः स्यात् तावत्त्वं सुस्थिरो भव ॥ ततः षोडशोपचारैः पूजनम् ॥ ऐँ ह्रीँ क्लीँ चामुंडायै विच्चे ॥१॥ जयन्ती मङ्गला काली भद्रकाली कपालिनी ॥ दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥ २ ॥ इति मन्त्राभ्यां "श्रीमहाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणीत्रिगुणात्मिकायै श्रीदुर्गादेवतायै नमः" आसनं सम० ॥ एवं

१ आवाहनादिमुद्रा. १३२ पृष्ठे टिपण्ण्यां द्रष्टव्या. ॥

पाद्यम्। अर्घ्यम्। आचमनीयम्। स्नानम्। पंचामृतस्नानम्। अभिषेकः। शुद्धोदकस्ना०। वस्त्रम्। चन्दनम्। अक्षतान्। पुष्पाणि। पुष्पमालिकाम्। सौभाग्यद्रव्यं समर्पयेत्॥ अथाङ्गपूजा॥ दुर्गायै नमः पादौ पूजयामि। महाकाल्यै० गुल्फौ पू०। मङ्गलायै० जानुनी पू०। कात्यायन्यै० ऊरू पू०। भद्रकाल्यै० कटी पू०। कमलायै० नाभिं पू०। शिवायै० उदरं पू०। क्षमायै० हृदयं पू०। स्कन्दायै० कण्ठं पू०। महिषासुरमर्दिन्यै० नेत्रे पू०। उमायै० शिरः पू०। विन्ध्यवासिन्यै० सर्वाङ्गं पू०। इत्यङ्गपूजा॥ ततः ऐंह्रींक्लीं० जयन्ती० इति मन्त्राभ्यां धूपं दीपं नैवेद्यं पूगीफलताम्बूलं हिरण्यदक्षिणाम् आरार्तिकं मन्त्रपुष्पाञ्जलिम् इति पुष्पांजलिपर्यन्तं पूजनं कुर्यात्॥ ततः मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि॥ यत्पूजितं मया देवि परिपूर्णं तदस्तु मे॥ १॥ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि। यशो देहि धनं देहि सर्वान् कामांश्च देहि मे॥ श्रीमहाकाली० नमस्कारान् सम०॥ ततः कुमारीं पूजयेत्॥ यथा जलमादाय—श्रीनवरात्रव्रताङ्गत्वेन कुमारीपूजनमहं करिष्ये। इति संकल्प्य "मंत्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम्॥ नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम्॥" "कुमारिकायै नमः" इतिमन्त्रेण पंचोपचारैः संपूज्य नेत्रे कज्जलं दत्त्वा कुंकुमं कृत्वा वासोलंकारादिभिः यथाशक्ति संतोषयेत्॥ इति कुमारीं पूजयित्वा नियमग्रहणं कुर्यात्

नियमग्रहणम्॥ अद्याहं देवदेवेशि करिष्ये व्रतमुत्तमम्। नवरात्रं करिष्यामि दुःखदारिद्र्यनाशनम्॥ १॥ करिष्ये शास्त्रविधिना निर्विघ्नेन समाप्यताम्॥ नवरात्रमुपोष्येऽहं रक्ष मां त्वं सुरेश्वरि॥२॥ प्रतिपद्दिनमारभ्य व्रतस्थोऽहं (व्रतस्थाऽहं) महेश्वरि॥ नवदुर्गे हि देवेशि

निर्विघ्नं कुरु मे सदा ॥३॥ नवरात्रं यथाशक्त्या सर्वभोगविवर्जितः(ता) ॥ उपोषणं करिष्यामि त्वमेव शरणं मम ॥४॥ इदं व्रतं मया देवि गृहीतं तव सन्निधौ ॥ निर्विघ्नतां समायातु त्वत्प्रसादान्महेश्वरि ॥५॥ अथ स्थित्वा निराहारो (रा) जितक्रोधो (धा) जितेन्द्रियः (या) ॥ दशमेऽहनि भोक्ष्यामि शरणं त्वं सुरेश्वरि ॥६॥ ततः सप्तशती पाठः ॥ इति ॥

## ॥ अथ उपांगललितात्रतम् ॥

आश्विनशुक्लपंचम्यामुपांगललिताव्रतम् ॥ तच्च मध्याह्नव्यापिन्यां कार्यम् । दिनद्वये तद्व्याप्तावव्याप्तौ वा पूर्वा युग्मभूतानामिति युग्मवाक्यात् ॥ प्रातरुत्थायावश्यकं कर्म निर्वर्त्य शुचौ देशे मंडपिकां कृत्वा तन्मध्ये सुवर्णादिनिर्मितां करंडकविधानरूपां प्रतिमां उपांगललितादेव्याः प्रतिमां स्थापयित्वा हिरण्यवर्णामिति लक्ष्मीसूक्तेन पौराणिकमन्त्रैर्वा षोडशोपचारैर्विशेषतो दूर्वामिश्र पूजयेत् ॥ ततो विंशत्यावटकैर्वायनं दत्त्वा तावद्भिर्वटकैः स्वयं भोजनं विधाय ततो रात्रौ जागरणं कृत्वा द्वितीयदिने पूजां विधाय "सवाहना शक्तियुता वरदा पूजिता मया ॥ मातर्मामनुगृह्याय गम्यतां निजमंदिरम् ॥" इति विसर्जनं कुर्यात् ॥ विशेषस्तु व्रतराजे ॥ इति ॥

---

## ॥ अथ बिल्वशाखाप्रवेशपूजनादिस्तथा सरस्वतीपूजनम् ॥

आश्विनशुक्लसप्तम्यां बिल्वशाखाप्रवेशपूजनादि ॥ अत्र च सप्तमी उदयव्यापिनी ग्राह्या ॥ युगाद्या वर्षवृद्धिश्च सप्तमी पार्वतीप्रिया ॥ रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता ॥ वर्षवृद्धिर्जन्मतिथिः ॥(प्र.मा.)

---

१ अष्टरात्रे न दोषोऽय नवरात्रं तिथिक्षये ॥ सूतके पूजनं प्रोक्तं जपदाने विशेषतः ॥ देवीमुद्दिश्य कर्त्तव्यं तत्र दोषो न विद्यते ॥ रजस्वला तथाशौचे ब्राह्मणैश्च सुपूजयेत् ॥ उपवासं न दुष्यन्ति दंतधावनमंजनम् ॥

तत्रैव मूलनक्षत्रे पुस्तकस्थापनमुक्तं रुद्रयामले—"मूलऋक्षे सुराधीश पूजनीया सरस्वती। पूजयेत्प्रत्यहं देव यावद्वैष्णवमृक्षकम्॥ रुद्रयामले-मूलेषु स्थापनं देव्याः पूर्वाषाढासु पूजनम्। उत्तरासु बलिं दद्याच्छ्रवणेन विसर्जयेत् ॥" अत्र पूजयेत्प्रत्यहमिति रुद्रयामलवचनात्प्रत्यहं पूजनम्॥ मूलस्य प्रथमपादे त्रिमुहूर्तव्यापिनि सरस्वत्यावाहनम्। त्रिमुहूर्तन्यूनत्वे रात्रौ वा प्रथमपादसत्वे तस्य विशेषवचनं विना ग्राह्यत्वाभावाद् द्वितीयादिपादे परदिन एवावाहनम्। एवं पूर्वाषाढादिनक्षत्रं पूजादौ दिनव्याप्यत्वे ग्राह्यम्। विसर्जनं तु श्रवणप्रथमपादे रात्रिभागगतेऽपि कार्यं विशेषवचनात्। तच्च रात्रेः प्रथमप्रहरपर्यन्तमेवेति ॥

अथ प्रयोगः। शुद्धपीठे पुस्तकानि संस्थाप्य आचम्य प्रा० सुमुख०। अद्याद्य० तिथौ मम विद्याद्यैश्वर्यप्राप्त्यर्थं श्रीसरस्वतीदेवतापूजनं करिष्ये। अक्षतान् गृहीत्वा—शुद्धां ब्रह्मविचारसारपरमामाद्यां जगद्व्यापिनीं वीणापुस्तकधारिणीमभयदां जाड्यान्धकारापहाम्॥ हस्तैः स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां वन्दे तां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥१॥ "सरस्वत्यै नमः" ध्यायामि। सरस्वत्यै० आवा० स०। प्रतिष्ठा० सरस्वति सुप्रतिष्ठि० वरदा भव ॥ सर० नमः आसनं स०॥ एवं नमस्कारपर्यंतं पूजनं कार्यम्। अनया पूजया सरस्वती प्रीय०॥

द्वितीयदिने—अत्राद्यतिथौ मम वि० श्रीसर० पूर्वाषाढासु पूजनं करिष्ये इति संकल्प्य आवाहनरहितं पूजनं कार्यम्॥ अन० पू० सर० प्रीय० ॥

---

१ नाध्यापयेन्न च लिखेन्नाधीयीत कदाचन॥ पुस्तके स्थापिते देव विद्याकामो द्विजोत्तमः॥ अहं भद्राय भद्राऽहं नावयोरन्तरं क्वचित्॥ सर्वसिद्धिं प्रदास्यामि भद्रायां ह्यर्चितास्म्यहम्॥ आश्विनस्य सिते पक्षे मेधानाम्नसरस्वती॥ मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत्॥ इति॥

तृतीयदिने अद्याद्य० मम विद्या० श्रीसर० प्रीत्य० उत्तराषाढासु बलिदानं तदङ्गभूतां पूजां च करिष्ये इति संकल्प्य पूजनं कुर्यात्। ततो बलिपात्रं निधाय "बलिद्रव्याय नमः" इति बलिं संपूज्य "सरस्वत्यै साङ्गायै सपरिवारायै सायुधायै सशक्तिकायै इमं सदीपमासादितबलिं सम० । भो सरस्वति इमं बलिं गृहाण मम सकुटुम्बस्याभ्युदयं कुरु। आयुःकर्त्री क्षेमकर्त्री शांतिकर्त्री पुष्टिकर्त्री तुष्टिकर्त्री निर्विघ्नकर्त्री वरदा भव ॥ अनेन पूजनपूर्वकबलिदानेन सरस्वती प्रीयताम् ॥

चतुर्थदिने अद्याद्य० मम सरस्व० प्री० श्रवणाद्यपादे विसर्जनं कर्तुं तदङ्गभूतां पूजां करिष्ये इति संकल्प्य पूर्ववत् पूजनं कृत्वा श्रवणाद्यपादे ॥ यान्तु देव० । इति सरस्वत्या विसर्जनं कुर्यात् ॥ इति ॥

॥ इति सरस्वतीपूजनम् ॥

---

## ॥ अथ भद्रकालीव्रतम् ॥

आश्विनशुक्लनवम्यां देव्याः भद्रकालीव्रतम् ॥ पूर्वोत्तरे तु दिग्भागे शिवे वास्तुमनोहरे ॥ भद्रकाल्या गृहं कार्यं चित्रवस्त्रैरलंकृतम् ॥ भद्रकालीं पटे कृत्वा तत्र संपूजयेद् द्विज ॥अष्टादशभुजा कार्या भद्रकाली मनोहरा ॥ आलीढस्थानसंस्थाना चतुःसिंहरथे स्थिता ॥ अक्षमाला त्रिशूलं च खड्गं चर्म च पार्थिव ॥ बाणचापे च कर्तव्ये शंखपद्मे तथैव च ॥ स्रुक्स्रुवौ च तथा कार्यौ तथा वेदिकमंडलू ॥ दंडशक्ती च कर्तव्ये तथा पाशहुताशनौ ॥हस्तानां भद्रकाल्याश्च भवेत् कान्तिपरः परः ॥ एकश्चैव महाभाग रत्नपात्रधरो भवेत् ॥ पुष्पैर्धूपैः फलैर्भक्ष्यैर्भोज्यैश्च सुमनोहरैः ॥बलिभिश्च विचित्रैश्च मेष्यादानैस्तथैव च॥ रात्रौ जागरणं कुर्यात्तत्रैव वसुधाधिप ॥ उपोषितो द्वितीयेऽह्नि पूजयेत्पुनरेव ताम् ॥ एवं संपूजयेद्देवीं वरदां भक्तवत्सलाम् ॥ इति भद्रकालीव्रतम् ॥

---

## ॥ अथ दुर्गाहोमविधिः ॥

आश्विनशुक्लाष्टम्यां होमविधिः ॥ सपत्नीकेन केवलेन वा यजमानेन प्रतिपदमारभ्य समाप्तिपर्यन्तं प्रत्यहं त्रिकालमेककालं वा यथाकुलाचारं दुर्गादेवतां "श्रीमहाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणीश्रीत्रिगुणात्मिकादुर्गादेवतायै नमः" इति मन्त्रेण षोडशोपचारैः पूजनं कार्यम् ॥ एवं होमदिने देवीपूजनादीनि नित्यकर्म विधाय । स्वहस्तपरिमितां होमवेदीं विधाय स्वस्तिकादिकं रचयित्वा होमसामग्रीं संपाद्य आसने उपविश्याचम्य प्रा० शान्तिपाठपूर्वकं सुमुखश्चैक० इत्यादि पठित्वा अद्येत्यादि० ममात्मनः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणीदुर्गाम्बाप्रसादसिद्ध्यर्थं श्रीशारदनवरात्रविहितं ( लक्ष्मीहोमं[1] ) नवचण्ड्याख्यस्य[2] कर्मणः साङ्गतासिद्ध्यर्थं प्रतिमंत्रं घृतपायसतिलद्रव्येण विहितहोमाख्यं कर्म करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशाराधनं गणपतिपूजनं पुण्याहवाचनं[3] ब्राह्मणवरणम् अग्निस्थापनं ग्रहस्थापनं प्रधानदेवतास्थापनं च करिष्ये इति संकल्प्य दिग्रक्षणादि (६—४५) ग्रहस्थापनान्तं कर्म विधाय यथाविधि कलशं संस्थाप्य प्रधानदेवतास्थापनं यथोक्तरीत्या कुर्यात् ॥ ततः प्रधानदेवतां संपूज्य ग्रहहोमपुरःसरं प्रधानहोमं[4] कुर्याद् यथा—

---

१ लक्ष्मीहोम होय तो देवीनु स्थापन होय के न होय तो पण "ऐं ह्रीं क्लीं चामुंडायै विच्चे नमः" ए मूलमंत्रथी १०८ अथवा २८ घीनी आहुति अथवा लक्ष्मीसूक्तथी १६ आहुति आपवी अथवा कुलाचारप्रमाणे होम करवो.

२ मात्र एकपाठनो होम होय त्यां "एकचंड्याख्यकर्मणः" एमबोलवुं॥

३ लक्ष्मीहोममां पुण्याहवाचन न करे तो चाले ॥

४ एक पाठनो होम होय के नव-चंडीनो दशांश होम होय तो पण एज प्रमाणे करवुं.

कवचार्गलाकीलकानां पाठमात्रं नवार्णन्यासान् सप्तशतीन्यासांश्च कृत्वा विद्युद्दाम० इति ध्यानश्लोकांश्च पठित्वा नवार्णमन्त्रेण (१०८) हुत्वा रात्रिसूक्तं पठित्वा होममारभेत ॥ यथा " ह्रीं मार्कण्डेय उवाच " इति प्रथममंत्रमारभ्य "सावर्णिर्भविता मनुः" इत्यन्त होमः । होमे प्रत्यध्यायसमाप्तौ " नमो देव्यै० " इति मन्त्रेण ताम्बूलपूगीफलादियुक्तामेकामाज्याहुतिं दत्त्वा द्वितीयाध्यायहोममारभेत ॥ एवं त्रयोदशाध्यायहोमान्ते सप्तशतीन्यासान् देवीसूक्तं जपित्वा नवार्णेन (१०८) अष्टोत्तरशतं होमः । ततो रहस्यत्रयं पठेत् ॥ एवं प्रधानहोमं समाप्य दुर्गां सपूज्य लक्ष्मीहवनं कृत्वा स्थापितदेवतानां मृडाग्नेश्चोत्तरपूजनं विधाय स्विष्टकृतादिप्रणीताविमोकान्त कर्म कृत्वा ब्राह्मणेभ्यो दक्षिणां भूयसीं च दत्त्वा आशिर्वादं गृहीत्वा "यान्तु देव०" इति देवता विसृज्य "गच्छ०" इत्यग्निं विसृज्य । अन्न० अनेन नवरात्रविहितहोमाख्येन कर्मणा श्रीमहाकाली० देवता प्रीयताम् ॥ इति ॥

" अथ महानवम्यां दुर्गापूजाविधिः ॥ आश्वयुक्शुक्लपक्षस्य नवम्यां प्रयतात्मवान् ॥ भक्त्या संपूजयेद्देव देवीं संप्रार्थयेत्ततः ॥ महिषघ्नि महामाये चामुंडे मुंडमालिनि ॥ द्रव्यमारोग्यविजयं देहि देवि नमोऽस्तु ते ॥ प्रभूतबलिदानं च नवम्यां विधिवच्चरेत् ॥ कूष्मांडमिक्षुदण्ड च मद्यमांसानि चैव हि ॥ एते बलिसमाः प्रोक्तास्तृप्तौ छागसमा मताः ॥ न तत्र देशे दुर्भिक्ष न च दुःखं प्रवर्तते ॥ नाकाले म्रियते कश्चित्पूज्यते यत्र चंडिका ॥ शरत्काले महाष्टम्यां चंडिकां यः प्रपूजयेत् ॥ विमानवरमारुह्य मोदते ब्रह्मणा सह ॥ इति ॥

---

## ॥ अथ दशम्यां पारणाविसर्जनम् ॥

आश्विनशुक्लदशम्यां पारणाविसर्जनयोः कालः ॥ तत्र विस-

जनं दशम्यां कार्यम् ॥ द्विनद्वये दशमीसत्त्वे पूर्वदशम्यां श्रवणान्त्यपादयोगे तत्रैव विसर्जनम् ॥ तत्र तद्योगाभावे तु परदशम्यामेव ॥ परत्र दशम्यभावे पूर्वदशम्यां नक्षत्रयोगे सत्यसति वा कार्यम् ॥ नक्षत्रयोगानुरोधेन क्रियमाणं विसर्जनमपराह्णेऽपि भवति अन्यथा प्रातरेव ॥ तत्र मृदादिप्रतिमाया विसर्जनपूर्वकं जलादौ त्यागः कार्यः ॥ परंपरया पूजिताया धातुप्रतिमायास्तु घटादिस्थापनादुत्तिष्ठेत्यादि मंत्रैरुत्थापनमात्रं कार्यं न तु विसर्जनम् ॥ यद्दिने विसर्जनं तत्रैव नियमत्यागस्यौचित्यात् विसर्जनोत्तरं तद्दिने एव पारणं कार्यम् ॥

प्रयोगः ॥ पूर्ववत् प्रधानदेवतां षोडशोपचारैः संपूज्य ब्राह्मणभोजनसंकल्पं कृत्वा ततो नियममोक्षणं कुर्यात् ॥ "चंडीसंतोषणार्थाय ये मया नियमाः कृताः ॥ अद्याहं मोचयिष्यामि तव तुष्ट्यै महेश्वरि" ॥ गृहीतनियमानां निवृत्तिरस्तु ॥ ततो रूपं देहि जयं देहि भाग्यं भगवति देहि मे ॥ पुत्रान् देहि धनं देहि सर्वान् कामांश्च देहि मे ॥१॥ महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ॥ आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ॥ २ ॥ इति संप्रार्थ्य अक्षतान् गृहीत्वा ॥ उत्तिष्ठ देवि चामुंडे शुभां पूजां प्रगृह्य च ॥ कुरुष्व मम कल्याणमष्टाभिः शक्तिभिः सह ॥ गच्छ गच्छ परं स्थानं स्वस्थानं देवि चंडिके ॥ व्रज स्रोतोजलं वृद्ध्यै स्थीयतां च जले त्विह ॥ दुर्गे देवी जगन्मातः स्वस्थानं गच्छ पूजिते ॥ संवत्सरे व्यतीते तु पुनरागमनाय च ॥ इमां पूजां मया देवि यथाशक्त्युपपादिताम् ॥ रक्षार्थं त्वं समागत्य व्रज स्वस्थानमुत्तमम् ॥४॥ इति विसर्जनं कृत्वा ब्राह्मणं दक्षिणापुरःसरं संपूज्य आशिषो गृहीत्वा तान् भोजयित्वा स्वयं सुहृद्युक्तो भुंजीत ॥ इति ॥

---

## ॥ अथ विजयादशमीव्रतं शमीपूजनं च ॥

अथ विजयादशमीनिर्णयः ॥ सा परदिने एवापराह्णव्याप्तौ परा । दिनद्वयेऽपराह्णव्याप्तौ दिनद्वयेऽपि श्रवणयोगे सत्यसति वा पूर्वा । एवं दिनद्वयेऽपराह्णव्याप्त्यभावेऽपि श्रवणयोगसत्त्वासत्त्वयोः पूर्वैव । दिनद्वयेऽपराह्णव्याप्त्यव्याप्त्योरेकतरादिने श्रवणयोगे यद्दिने श्रवणयोगः सैव ग्राह्या । एवमपराह्णैकदेशव्याप्तावूह्यम् । यदा पूर्वदिने एवापराह्णव्याप्ता परदिने च श्रवणयोगाभावस्तदाऽपि पूर्वैव ॥ यदा तु पूर्वदिने एवापराह्णव्यापिनी पूर्वदिने च मुहूर्तत्रयादिव्यापिनी अपराह्णात् पूर्वमेव समाप्ता परत्रैव श्रवणयोगवती तदा परैव ॥ इति निर्णयः ॥

अत्रापराजितापूजनं सीमोल्लंघनं शमीपूजनं देशान्तरयात्रार्थिनां प्रस्थानं च विहितम् ॥ तत्पूजाप्रकारः । अपराह्णे ग्रामादीशान्यां गत्वा शुचि देशे भुवमुपलिप्य चंदनादिनाऽष्टदलमालिख्य ॥ आचम्य ॥ शांतिपाठपठनपूर्वकं सुमुखश्चै० इति पठित्वा । अद्येत्यादि० मम सकुटुंबस्य क्षेमस्थैर्यायुरारोग्यैश्वर्याद्यभिवृद्ध्यर्थं पुत्रपौत्राद्यविच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारासदभीष्टसिद्ध्यर्थं ( राज्ञःसंकल्पे विशेषो " यात्रायां विजयसिद्ध्यर्थं च ") अपराजितापूजनमहं करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशाराधनं गणपतिपूजनं मैपात्मकं पुण्याहवाचनं च करिष्ये इति संकल्प्य दिग्रक्षणादि कुर्यात् ॥ ततोऽष्टदलमध्ये 'अपराजितायै नमः' आवाहयामि इति अपराजितामावाह्य तद्दक्षिणे क्रियाशक्त्यै० । जयायै० । वामतः उमाशक्त्यै० । विजयायै नमः । इत्यावाह्य ॥ प्रतिष्ठा० ॥ इति प्रतिष्ठां कृत्वा "अपराजिताद्यावाहितदेवताभ्यो नमः" इति मंत्रेण यथालाभोपचारैः षोडशोपचारैः संपूज्य प्रार्थयेत् ॥ "इमां पूजां मया

देवि यथाशक्ति निवेदिताम् ॥ रक्षार्थं तु समादाय व्रजस्व स्थानमुत्तमम् ॥ हारेण तु विचित्रेण भास्वत्कनकमेखला ॥ अपराजिता भद्ररता करोतु विजयं मम ॥" इति नमस्कारपूर्वकं विजयं प्रार्थ्य "यान्तु देव०" इति विसर्जयेत् ॥ ततः सर्वे जनाः ग्रामाद्बहिरीशानदिगवस्थितां शमीं गत्वा तां पूजयेयुः ॥ सीमोल्लंघनं तु शमीपूजनात्पूर्वं पश्चाद्वा कार्यम् ॥ राजा तु अश्वमारुह्य सहपुरोहितः सामात्यः शमीमूलं गत्वा वाहनादवतीर्य मैपात्मकपुण्याहवाचनपूर्वकं शमीं संपूज्य प्रदक्षिणं कुर्यात् ॥ शमीपूजाप्रकारः ॥ शुभासने उपविश्य आचम्य ॥ अद्येत्यादि० मम दुष्टताऽमंगलनिरासार्थं क्षेमार्थं ( यात्रायां विजयार्थं च ) शमीपूजां करिष्ये ॥ तत्रादौ गणपतिं 'लम्बोदर०' इति संस्मृत्य नमस्कृत्य ( शम्यलाभेअश्मन्तकवृक्षपूजनम् ) राजा तु शमीमूले दिक्पालपूजां वास्तुदेवतापूजां च कुर्यात् ॥ ततः "शम्यै नमः" इति मंत्रेण यथाशक्त्या शमीं संपूज्य प्रार्थयेत् ॥ "अमंगलानां शमनीं शमनीं दुष्कृतस्य च ॥ दुःस्वप्ननाशिनीं धन्यां प्रपद्येऽहं शमीं शुभाम् ॥ शमी शमयते पापं शमी लोहितकंटका ॥ धारिण्यर्जुनबाणानां रामस्य प्रियवादिनी ॥ करिष्यमाणयात्रायां यथाकालं सुखं मया ॥ तत्र निर्विघ्नकर्त्री त्वं भव श्रीरामपूजिते ॥" अश्मन्तकपूजने तु "अश्मन्तकाय नमः" इति संपूज्य "अश्मन्तक महावृक्ष महादोषनिवारक ॥ इष्टानां दर्शनं देहि शत्रूणां च विनाशनम् ॥" इति प्रार्थयेत् ॥ इति संप्रार्थ्य ब्राह्मणाय पूजनपुरःसरं दक्षिणां दत्त्वा ॥ राजा शत्रोर्मूर्तिं कृत्वा शस्त्रेण विध्येत् ॥ प्राकृतजना शमीशाखां छित्वा आनयन्ति तन्निर्मूलम् ॥ गृहीत्वा साक्षतामार्द्रां शमीमूलगतां मृदम् ॥ गीतवादित्रनिर्घोषैरानयेत्स्वगृहं प्रति ॥ ततो भूषणवस्त्रादि धारयेत् स्वजनैः सह ॥ नीराज्यमानः

पुण्याभिर्युवतीभिः सुमंगलम् ॥ अत्र देशान्तरं जिगमिषुभिर्विजयमुहूर्ते चंद्राद्यानुकूल्याभावेऽपि प्रयाणं कार्यम् ॥

॥ इति विजयादशमीशमीपूजनप्रयोगः ॥

## ॥ अथ कोजागरव्रतम् ॥

आश्विनपौर्णमास्यां कोजागरव्रतम् ॥ इयं पूर्णिमा परा ग्राह्या ॥ अत्र लक्ष्मीन्द्रयोः पूजनं जागरणमक्षक्रीडा च विहिता ॥ "लक्ष्म्यै नमः" इति मंत्रेण अक्षतपुंजे पद्मासनस्थां लक्ष्मीं षोडशोपचारैः संपूज्य प्रार्थयेत् । नमस्ते सर्वदेवानां वरदासि हरिप्रिये ॥ या गतिस्त्वत्प्रपन्नानां सा मे भूयात्त्वदर्चनात् ॥ ततः "इन्द्राय नमः" इति इंद्रं संपूज्य प्रार्थयेत् ॥ विचित्रैरावतस्थाय भास्वत्कुलिशपाणये ॥ पौलोम्यालिंगितांगाय सहस्राक्षाय ते नमः ॥ इति संप्रार्थ्य ॥ नारिकेलोदकं पीत्वा अक्षक्रीडां समाचरेत् ॥ निशीथे वरदा लक्ष्मीः "कोजागर्तीति" भाषिणी ॥ तस्मै वित्तं प्रयच्छामि अक्षैः क्रीडां करोति यः ॥ नारिकेरान् पृथुकांश्च देवपितृभ्यः समर्प्य लक्षादारभ्य यथाशक्ति शतावधि दीपान् देवतायतनादिषु प्रज्वाल्य जागरणं कृत्वा द्वितीयदिने लक्ष्मीमिन्द्रं च संपूज्य ब्राह्मणान् भोजयित्वा दक्षिणां दत्वा बंधुभिः सह स्वयं पारणं कुर्यात् ॥ अस्यामेव पौर्णमास्यां ज्येष्ठापत्यनीराजनादिकं परविद्धायां कार्यम् ॥ इति कोजागरव्रतम् ॥

## ॥ अथ करकचतुर्थीव्रतम् ॥

आश्विनकृष्णचतुर्थी करकचतुर्थीव्रतम् ॥ तच्च स्त्रीणामेव ॥ अद्येत्यादि० मम सौभाग्यपुत्रपौत्रादिसुस्थिरश्रीप्राप्तये करकचतुर्थी-

व्रतं करिष्ये ॥ पटादौ वटं विलिख्य तदधस्ताच्छिवं स्कन्दयुतां गौरीं गणपतिं च चंदनादिना लिखित्वा आवाहनं कृत्वा "नमः शिवायै सर्वायै सौभाग्यं संततिं शुभाम् ॥ प्रयच्छ भक्तियुक्तानां नारीणां हरवल्लभे" ॥ इत्युक्त्वा "शिवस्कन्दगौर्याद्यावाहितदेवताभ्यो नमः" इति मंत्रेण यथाशक्त्या संपूज्य पिष्टक (खाजा) नैवेद्यं दत्त्वा प्रार्थयेत् ॥ नमः शिवायै सर्वायै सौभाग्यं संततिं शुभाम् ॥ प्रयच्छ भक्तियुक्तानां नारीणां हरवल्लभे ॥ इति संप्रार्थ्य ॥ पक्वान्नपूरितान् दशकरकान् ( करवडा ) ब्राह्मणेभ्यो दद्यात् ॥ चंद्रोदयोत्तरं चंद्रायार्घं दद्यात् ॥ व्रतपूर्तये गां दत्त्वा स्वयं भुंजीत ॥ इति करकचतुर्थीव्रतम् ॥

---

## ॥ अथ दशरथललिताव्रतम्

आश्विनकृष्णचतुर्थ्यां दशरथललिताव्रतम् ॥ तच्च आश्विनशुक्लदशमीमारभ्य आश्विनकृष्णचतुर्थीपर्यन्तं दशदिवसात्मकं कार्यम् ॥ अद्येत्यादि० ममात्मनः पुराणोक्तफलप्राप्त्यर्थं पुत्रपौत्रादिसकलकामनासिद्ध्यर्थं दशरथललिताप्रीत्यर्थं यथामिलितोपचारैः आश्विनशुक्लदशमीमारभ्य कृष्णचतुर्थीपर्यन्तं दशरथललितापूजनमहं करिष्ये ॥ तत्रादौ आसनादि दिग्रक्षणं कलशार्चनं च कृत्वा धान्यराशौ कलशोपरि चतुरंगुलां सौवर्णीं रोहिणीप्रतिमां कृत्वा तस्याः प्राणप्रतिष्ठां कृत्वा ध्यानादिना पूजयेत् ॥ ध्यानम् ॥ नीलकौशेयवसनां हेमाभां कमलासनाम् ॥ भक्तानां वरदां नित्यं ललितां चिन्तयाम्यहम् ॥ आगच्छ ललिते देवि सर्वसंपत्प्रदायिनि ॥ यावत्पूजां करिष्यामि तावत्त्वं संनिधौ भव ॥ " ललितायै नमः ललिताम् आवा० स्था० ॥ ततः प्रतिष्ठा० इति प्रतिष्ठा ॥' सैव ललितेति प्रसिद्धा ॥' ततो "दशरथललितायै नमः" इति

मन्त्रेण आसनाद्युपचारैः पुष्पार्पणान्तं संपूज्य अंगपूजनमारभेत ॥ दशांगललितायै० पादौ पूजयामि ॥ भवान्यै० गुल्फौ० । सिद्धेश्वर्यै० जंघे० । भद्रकाल्यै० जानुनी० । श्रियै० ऊरू० । विश्वरूपिण्यै० कटी० । देव्यै० नाभिं० । वरदायै० कुक्षिं० । शिवायै० । हृदयं० । वागीश्वर्यै० स्कन्धौ० । महादेव्यै० करौ पूज० । पद्मिन्यै० कंठं० । सरस्वत्यै० मुखं० । कमलासनायै० नासिकां पूजयामि । महिषमर्दिन्यै० नेत्रे० । लक्ष्म्यै० कर्णौ पूज० । उमायै० ललाटं पूज० । विन्ध्यवासिन्यै० शिरः पूजयामि । सिंहवाहिन्यै० सर्वांगं पूजयामि ॥ ततो धूपाद्युपचारान् समर्प्य प्रार्थयेत् ॥ दशरथनाम्नी या देवी दशरथपुष्पा दशाक्षरा ॥ पुत्रार्थं कामये देवि सर्वान् कामान् प्रयच्छ मे ॥ इति नमस्कृत्य अन्यथाशरणं० क्षमस्व परमेश्वरि ॥ इति संप्रार्थ्य वायनं दद्यात् ॥ दशरथललितादेव्या व्रतसंपूर्णहेतवे ॥ वायनं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥ एवं दशदिनपर्यन्तं पूजनं कृत्वा विसर्जयेत् ॥ सवाहना शक्तियुता वरदा पूजिता मया ॥ ममानुग्रहकुर्वाणा गच्छ त्वं निजमंदिरम् ॥ ललिते स्वस्थान गच्छ ॥ इति ॥

---

## ॥ अथ दशरथललिताव्रतोद्यापनम् ॥

आश्विनकृष्णचतुर्थ्याम् आचम्य अद्याद्य० इति तिथ्यादि संकीर्त्य मम पुत्रादिप्राप्तिपूर्वकं सौभाग्याद्यभिवृद्धिद्वारा श्रीरोहिणीसहितचंद्ररूपपरमेश्वरप्रीत्यर्थं दशवर्षावध्याचरितस्याचरिष्यमाणस्य दशरथललिताव्रतस्योद्यापनं करिष्ये ॥ तदंगभूतं दिग्रक्षणकलशाराधनदीपपूजनगणपतिपूजनादि आचार्यवरणान्तं (पृ. ६–४५) कर्म कुर्यात् ॥ व्रताचार्यः रात्रौ पुष्पमंडपिकामध्ये सर्वतोभद्रे पूर्ववत् ब्रह्मादिदेवताश्च कलशं संस्थाप्य

१ आसनादीना मन्त्रविशेषास्तु ग्रन्थान्तरेऽवलोकनीयाः ॥

तदुपरि वंशपात्रे चतुरंगुलां सौवर्णां रोहिणीप्रतिमाम् अष्टांगुलां राजतचंद्रप्रतिमां च पूर्ववत्पूजयेत् ॥ प्रार्थना ॥ दशरथाय त्वया दत्ता रामाद्या ये सुताश्च ते ॥ सौभाग्यं ललिते देवि तद्वन्मह्यं प्रदेहि वै ॥ इति संप्रार्थ्य कथादिना रात्रिं निनयेत् ॥ ततः प्रातः पुनः देवताः संपूज्य अग्निं प्रतिष्ठाप्य प्रधानमुद्दिश्य "चंद्रसहितरोहिण्यै नमः" इति मंत्रेणाष्टोत्तरशत (१०८) दूर्वाहुतीर्जुहुयात् ॥ "नमोदेव्यै महादेव्यै०" इति मंत्रेणाष्टोत्तरशतं (१०८) घृताक्तपंचखाद्याहुतीर्जुहुयात् ॥ ब्रह्मादिमंडलदेवताभ्यैकैकामाज्याहुतिं (पृ. १६६) जुहुयात् ॥ होमशेषं समाप्य ततः सपत्नीकान् दशब्राह्मणान् वस्त्रालंकारादिभिः संपूज्य गन्धोदकपूरितदशकरकान् दद्यात् ॥ तत आचार्यं वस्त्रादिभिः संपूज्य तस्मै सदक्षिणं वायनं दद्यात् ॥ तत्रमंत्रः । "इदं तु दशलड्डुकं दक्षिणाफलसंयुतम् । ललिताप्रीणनार्थाय ब्राह्मणाय ददाम्यहम् ॥" ततो विसर्जनम् । विसर्जनमंत्रः "सर्वाङ्गना शक्तियुता वरदा पूजिता मया ॥ मातर्मामनुगृह्याथ गम्यतां निजमंदिरम् ॥" इति विसृज्य सदक्षिणं सोपस्करं पीठमाचार्याय गां च दद्यात् ॥ ततो ब्राह्मणान् मोदकपायसादिभिः संतर्प्य आशिषो गृहीत्वा स्वयं भुञ्जीत ॥ एवं यः कुरुते भक्त्या धनपुत्रानवाप्नुयात् ॥

॥ इति दशरथललिताव्रतोद्यापनम् ॥

---

## ॥ अथ महालक्ष्मीसहितशारदापूजनम् ॥[1]

शुभवस्त्रादिभिरलंकृतो यजमानः शुभासने उपविश्य आत्मसन्मुखं वस्त्रं प्रसार्य तदुपरि शारदां (सरस्वतीं) संस्थाप्य ॥ आचम्य

---

[1] शास्त्रदृष्ट्या इदं पूजनं आश्विनकृष्णामावास्यायां सायंकाले प्रदोषसमये कर्तव्यं किन्तु केचन कार्तिकशुक्लप्रतिपदायां प्रातःकालेऽपि कुर्वन्ति ॥ अस्य सविस्तरप्रयोगस्तु अस्मत्कृते "दीपावलिनिमित्तकमहालक्ष्म्यादिपूजनप्रयोगः ॥" इति नाम्नि पुस्तके द्रष्टव्यः ॥

सुमुखश्चेत्यादि पठित्वा ॥ जलमादाय ॥ अद्येत्यादि० ममात्मनः पुराणोक्तफलप्राप्त्यर्थं पुत्रपौत्राद्यनवच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थं श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवताप्रीत्यर्थं लक्ष्मीपूजनसहितं शारदापूजनं करिष्ये ॥ तदंगभूतं दिग्रक्षणं कलशाराधनं गणपतिपूजनं पंचवाक्यैः पुण्याहवाचनं च करिष्ये ॥ इति संकल्प्य दिग्रक्षणादिकं (पृ.६–२१ ) कृत्वा ॥ महालक्ष्मीप्रतिमां कृताग्न्युत्तारणपूर्विकां स्वाग्रे संस्थाप्य ध्यायेत् ॥ या सा पद्मासनस्था विपुलकटितटी पद्मपत्रायताक्षी गंभीरावर्तनाभिस्स्तनभरनमिता शुभ्रवस्त्रोत्तरीया ॥ या लक्ष्मीर्दिव्यरूपैर्मणिगणखचितैः स्नापिता हेमकुंभैः सा नित्यं पद्महस्ता मम वसतु गृहे सर्वमांगल्ययुक्ता ॥ १ ॥ एवं ध्यात्वाऽऽवाहयेत्॥ सर्वलोकस्य जननीं शुक्लहस्तां त्रिलोचनाम्॥ सर्वदेवमयीमीशां लक्ष्मीमावाहयाम्यहम्॥२॥महालक्ष्म्यै०आवाहयामि॥२॥ रम्यं सुशोभनं दिव्यं सर्वसौख्यकरं परम् ॥ आसनं च मया दत्तं गृहाण परमेश्वरि ॥ ३ ॥ महालक्ष्म्यै० आसनं सम० ॥ ३ ॥ तप्तकांचनवर्णाभं मुक्तामणिविराजितम् ॥ पाद्यं ददाम्यहं देवि गृहाणाशु नमोऽस्तु ते॥४॥ महालक्ष्म्यै० पाद्यं सम० ॥ ४ ॥ अष्टगंधसमायुक्तं स्वर्णपात्रप्रपूरितम् ॥ अर्घ्यं गृहाण मद्दत्तं महालक्ष्म्यै नमोऽस्तु ते ॥ ५ ॥ महालक्ष्म्यै० अर्घ्यं सम०॥५॥ सर्वलोकस्य या शक्तिर्ब्रह्मविष्ण्वादिभिःस्तुता ॥ ददाम्याचमनं तस्यै महाकाल्यै नमोऽस्तु ते ॥६॥ महालक्ष्म्यै०आचमनं सम०॥६॥ कामधेनुसमुद्भूतं सर्वेषां जीवनं परम् ॥ पावनं यज्ञहेतुश्च पयः स्नानार्थमर्पितम् ॥७॥ महालक्ष्म्यै० पयःस्नानं सम०॥ ७ ॥ पयसस्तु समुद्भूतं मधुराम्लं शशिप्रभम् ॥ दध्यानीतं मया देवि स्नानार्थं प्रतिगृह्यताम् ॥८॥ महालक्ष्म्यै० दधिस्नानं सम०॥८॥ नवनीतसमुत्पन्नं सर्वसंतोष-

कारकम् ॥ घृतं तुभ्यं ददाम्येतत् स्नानार्थं प्रतिगृह्यताम् ॥९॥ महालक्ष्म्यै० घृतस्नानं सम०॥९॥ तरुपुष्पसमुद्भूतं सुस्वादु मधुरं मधु ॥ तेजःपुष्टिकरं दिव्यं स्नानार्थं प्रतिगृह्यताम्॥१०॥ महालक्ष्म्यै०मधुस्नानं सम० ॥१०॥ इक्षुसारसमुद्भूता शर्करा पुष्टिकारिका ॥ मलापहारिका दिव्या स्नानार्थं प्रतिगृह्यताम् ॥११॥ महा० शर्करास्नानं सम०॥११॥ कापिलं दधिकुंदेन्दुधवलं मधुसंयुतम् ॥ स्वर्णपात्रस्थितं देवि गृहाण मधुपर्ककम् ॥१२॥ महा०मधुपर्कस्नानं सम०॥१२॥ तैलानि च सुगंधीनि द्रव्याणि विविधानि च ॥ मया दत्तानि स्नानार्थं गृहाण परमेश्वरि ॥१३॥ महा० सुगंधतैलस्नानं स० ॥१३ ॥ ज्ञानमूर्ते भद्रकालि दिव्यमूर्ते सुरेश्वरि ॥ शुद्धस्नानं गृहाणेदं नारायणि नमोऽस्तु ते ॥ १४ ॥ महाल० शुद्धोदकस्नानं सम०॥१४॥ दिव्यांबरं नूतनं हि क्षौमं त्वतिमनोहरम् ॥ दीयमानं मया देवि गृहाण जगदंबिके ॥१५॥ महाल०वस्त्रं सम० ॥१५॥ अलंकारान् महादिव्यान् नानारत्नविनिर्मितान् ॥ गृहाण देवमातस्त्वं प्रसीद परमेश्वरि ॥ १६॥ महाल० अलंकारान् सम०॥१६॥ श्रीखंडागरुकर्पूरमृगनाभिसुवासितम् ॥ विलेपनं गृहाणाशु नमोऽस्तु भक्तवत्सले ॥१७॥ महा० गंधं सम०॥१७॥ रक्तचंदनसंमिश्रं पारिजातसमुद्भवम् ॥ मया दत्तं गृहाणाशु चंदनं गंधसंयुतम् ॥ १८ ॥ महा० रक्तचंदनं सम० ॥ १८॥ कुंकुमं कामदं दिव्यं कुंकुमं कामरूपकम् ॥ अखंडकामसौभाग्यं कुंकुमं प्रतिगृह्यताम् ॥ १९ ॥ महालक्ष्म्यै० कुंकुमं सम०॥१९॥ सिंदूरं रक्तवर्णं च सिंदूरतिलकप्रिये ॥ भक्त्या दत्तं मया देवि सिंदूरं प्रतिगृह्यताम् ॥२०॥ महाल० सिंदूरं सम० ॥२०॥ अक्षताश्च सुरश्रेष्ठे कुंकुमाक्तान् सुशोभितान् ॥ मया निवेदितान् भक्त्या गृहाण परमेश्वरि ॥ २१ ॥ महाल० अक्षतान् सम० ॥ २१ ॥ मंदार-

पारिजाताद्याः पाटली केतकी तथा ॥ मरु वा मोगरं देवि गृहाणाशु नमोनमः ॥२२॥ महा० पुष्पाणि सम० ॥ २२ ॥ विष्ण्वादिसर्वदेवानां प्रियां सर्वसुशोभनाम् ॥ क्षीरसागरसंभूते दूर्वां स्वीकुरु सर्वदा ॥२३॥ महा०दूर्वां सम०॥२३॥ पद्मशंखजपापुष्पैः शतपत्रैर्विराजिताम् ॥ पुष्पमालां प्रयच्छामि गृहाण त्वं सुरेश्वरि॥२४॥महाल०पुष्पमालां स०॥२४॥

"अथांगपूजा" –चपलायै० पादौ पूजयामि ॥ चंचलायै० जानुनी पूज० ॥ कमलायै० कटी पूजयामि ॥ कात्यायन्यै० नाभिं पूजयामि ॥ जगन्मात्रे० जठरं पूज०॥ विश्ववल्लभायै०वक्षःस्थलं पूज० ॥ कमलवासिन्यै० भुजौ पूजयामि ॥ पद्मकमलायै० मुखं पूजयामि ॥ कमलपत्राक्ष्यै० नेत्रत्रयं पूज० ॥ श्रियै० शिरः पूजयामि ॥

"अथ पूर्वादिक्रमेण अष्टदिक्षु अष्टसिद्धिपूजा"— अणिम्ने० ॥ महिम्ने० ॥ गरिम्णे० ॥ लघिम्ने०॥ प्राप्त्यै० ॥ प्राकाम्यै० ॥ ईशितायै० ॥ वशितायै० ॥ ८ ॥ पुनः पूर्वादिक्रमेण अष्टलक्ष्मीपूजा । आद्यलक्ष्म्यै० ॥ विद्यालक्ष्म्यै०॥ सौभाग्यलक्ष्म्यै०॥ अमृतलक्ष्म्यै० । कामलक्ष्म्यै०॥ सत्यलक्ष्म्यै०॥ भोगलक्ष्म्यै० ॥ योगलक्ष्म्यै० ॥८॥

"अथ मषीपात्रे (खडीयामां)महाकालीपूजनम्"-तत्रादौ "महाकाल्यै नमः" इति मंत्रेण आवाहनादिपुष्पमालान्तं पूर्ववत् संपूज्य आवरणपूजां कुर्यात् ॥ काल्यै० । कपालिन्यै० । फुल्लायै० । कुरुकुल्लायै० । विरोधिन्यै० । विप्रचित्तायै०। उग्रप्रदात्तायै०। दिव्यायै०। निलायै०। घनायै०। वलाकायै०। मात्रायै० । मुद्रायै०॥ १३ ॥इत्यावरणपूजा ॥

"अथ लेखनीपुस्तकेषु सरस्वतीपूजा" "शुद्धां ब्रह्मविचारसार०" इति सरस्वतीं ध्यात्वा "महासरस्वत्यै नमः" आवाहयामि आसनं स० इत्यादि पुष्पमालान्तं संपूज्य आवरणपूजां कुर्यात् ॥ वाग्वत्यै०।

वाग्वादिन्यै० । अजितायै० । विष्णुमायायै० । हिंगुलायै० । यज्ञविद्यायै० । सिद्धविद्यायै० । प्रजायै० । पद्मावत्यै० । भुवनेश्वर्यै नमः ॥ १० ॥ इत्यावरणपूजा ॥

" अथ धूपाद्युपचाराः " —वनस्पतिरसोत्पन्नो गंधाढ्यः सुमनोहरः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ २५ ॥ महालक्ष्म्यादिदेवताभ्यो नमः धूपं सम०॥२५॥ कार्पासवर्तिसंयुक्तं घृतयुक्तं मनोहरम् ॥ तमोनाशकरं दीपं गृहाण परमेश्वरि ॥ २६ ॥ महा० देव०। दीपं दर्श०॥२६॥ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ॥ भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥२७॥ महा० देव०। नैवेद्यं सम०२७।"प्राणाय नमः" इत्यादि। मध्ये पानीयम् उत्त०हस्तप्र०मुखप्र० करो० गन्धं स०॥ सुस्वादु निर्मलं तोयं कर्पूरेण सुवासितम्॥ आचम्यतां महालक्ष्मि प्रसीद परमेश्वरि॥२८॥ महा०आचमनं सम०॥२८॥ एलालविंगकर्पूरनागपत्रादिना कृतम् ॥ पूगीफलेन संयुक्तं तांबूलं प्रतिगृह्यताम् ॥२९॥ महा० पूगीफलतांबूलवीटिकां सम० ॥२९॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ॥३०॥ महा० दक्षिणां सम० ॥ ३० ॥ यानि कानि च पापानि ब्रह्महत्यासमानि च ॥ तानि सर्वाणि नश्यन्ति प्रदक्षिणा पदे पदे ॥३१॥ महा० प्रदक्षिणां सम० ॥३१॥ फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् ॥ तस्मात्फलप्रदानेन पूर्णाः सन्तु मनोरथाः॥३२॥ महा० विशेषार्घ्यं सम० ॥ ३२ ॥ चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् ॥ आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि ॥ ३३ ॥ नीराजनं प्रज्वाल्य संपूज्य ॥

जयदेवि जयदेवि जयमोहिनीरूपे मामिह जननि समुद्धर पतितं भवकूपे ॥ध्रुव०॥ प्रवरातीरनिवासिनि निगमप्रतिपाद्ये पारावारवि-

पारिजाताद्याः पाटली केतकी तथा ॥ मरु वा मोगरं देवि गृहाणाशु नमोनमः ॥२२॥ महा० पुष्पाणि सम० ॥ २२ ॥ विष्ण्वादिसर्वदेवानां प्रियां सर्वसुशोभनाम् ॥ क्षीरसागरसंभूते दूर्वां स्वीकुरु सर्वदा ॥२३॥ महा०दूर्वां सम०॥२३॥ पद्मशंखजपापुष्पैः शतपत्रैर्विराजिताम् ॥ पुष्पमालां प्रयच्छामि गृहाण त्वं सुरेश्वरि॥२४॥महाल०पुष्पमालां स०॥२४॥

"अथांगपूजा" –चपलायै० पादौ पूजयामि ॥ चंचलायै० जानुनी पूज० ॥ कमलायै० कटी पूजयामि ॥ कात्यायन्यै० नाभिं पूजयामि॥ जगन्मात्रे० जठरं पूज०॥ विश्ववल्लभायै०वक्षःस्थलं पूज०॥ कमलवासिन्यै० भुजौ पूजयामि॥ पद्मकमलायै० मुखं पूजयामि॥ कमलपत्राक्ष्यै० नेत्रत्रयं पूज० ॥ श्रियै० शिरः पूजयामि ॥

"अथ पूर्वादिक्रमेण अष्टदिक्षु अष्टसिद्धिपूजा"— अणिम्ने० ॥ महिम्ने० ॥ गरिम्णे० ॥ लघिम्ने०॥ प्राप्त्यै० ॥ प्राकाम्यै० ॥ ईशितायै० ॥ वशितायै० ॥ ८ ॥ पुनः पूर्वादिक्रमेण अष्टलक्ष्मीपूजा । आद्यलक्ष्म्यै० । विद्यालक्ष्म्यै०॥ सौभाग्यलक्ष्म्यै०॥ अमृतलक्ष्म्यै० । कामलक्ष्म्यै०॥ सत्यलक्ष्म्यै०॥ भोगलक्ष्म्यै० ॥ योगलक्ष्म्यै० ॥८॥

"अथ मषीपात्रे (खडीयामां)महाकालीपूजनम्"–तत्रादौ "महाकाल्यै नमः" इति मंत्रेण आवाहनादिपुष्पमालान्तं पूर्ववत् संपूज्य आवरणपूजां कुर्यात् ॥ काल्यै० । कपालिन्यै० । कुल्लायै० । कुरुकुल्लायै० । विरोधिन्यै० । विप्रचित्तायै०। उग्रप्रदात्तायै०। दिव्यायै०। निलायै०। घनायै०। वलाकायै०। मात्रायै० । मुद्रायै०॥ १३ ॥इत्यावरणपूजा ॥

"अथ लेखनीपुस्तकेषु सरस्वतीपूजा" "शुद्धां ब्रह्मविचारसार०" इति सरस्वतीं ध्यात्वा "महासरस्वत्यै नमः" आवाहयामि आसनं स० इत्यादि पुष्पमालान्तं संपूज्य आवरणपूजां कुर्यात् ॥ वाग्वत्यै०।

वाग्वादिन्यै० । अजितायै० । विष्णुमायायै० । हिंगुलायै० । यज्ञविद्यायै० । सिद्धविद्यायै० । भजायै० । पद्मावत्यै० । भुवनेश्वर्यै नमः ॥ १० ॥ इत्यावरणपूजा ॥

"अथ धूपाद्युपचाराः" —वनस्पतिरसोत्पन्नो गंधाढ्यः सुमनोहरः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ २५ ॥ महालक्ष्म्यादिदेवताभ्यो नमः धूपं सम०॥२५॥ कार्पासवर्तिसंयुक्तं घृतयुक्तं मनोहरम् ॥ तमोनाशकरं दीपं गृहाण परमेश्वरि ॥ २६ ॥ महा० देव०। दीपं दर्श०॥२६॥ अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितम् ॥ भक्ष्यभोज्यसमायुक्तं नैवेद्यं प्रतिगृह्यताम् ॥२७॥ महा० देव०। नैवेद्यं सम०२७।"प्राणाय नमः" इत्यादि।मध्ये पानीयम् उत्त०हस्तप्र०मुखम० करो० गन्धं स०॥ सुस्वादु निर्मलं तोयं कर्पूरेण सुवासितम्॥ आचम्यतां महालक्ष्मि प्रसीद परमेश्वरि॥२८॥ महा०आचमनं सम०॥२८॥ एलालविंगकर्पूरनागपत्रादिना कृतम् ॥ पूगीफलेन संयुक्तं तांबूलं प्रतिगृह्यताम् ॥२९॥ महा० पूगीफलतांबूलवीटिकां सम० ॥२९॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतः शान्ति प्रयच्छ मे ॥३०॥ महा० दक्षिणां सम० ॥ ३० ॥ यानि कानि च पापानि ब्रह्महत्यासमानि च ॥ तानि सर्वाणि नश्यन्ति प्रदक्षिणां पदे पदे ॥३१॥ महा० प्रदक्षिणां सम० ॥३१॥ फलेन फलितं सर्वं त्रैलोक्यं सचराचरम् ॥ तस्मात्फलप्रदानेन पूर्णाः सन्तु मनोरथाः॥३२॥ महा० विशेषार्घ्यं सम० ॥ ३२ ॥ चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् ॥ आर्तिक्यं कल्पितं भक्त्या गृहाण परमेश्वरि ॥ ३३ ॥ नीराजनं प्रज्वाल्य संपूज्य ॥

जयदेवि जयदेवि जयमोहिनीरूपे मामिह जननि समुद्धर पतितं भवकूपे ॥ध्रुव०॥ प्रवरातीरनिवासिनि निगमप्रतिपाद्ये पारावारवि-

हारिणि नारायणि हृद्ये ॥ प्रपंचसारे जगदाधारे श्रीविद्ये प्रपन्नपालननिरते मुनिवृन्दाराध्ये ॥ १ ॥ जयदेवि०॥ १ ॥ दिव्यसुधाकरवदने कुंदोज्ज्वलरदने ॥ पदनखनिर्जितमदने मधुकैटभकदने ॥ विकसितपंकजनयने पन्नगपतिशयने ॥ खगपतिवहने गहने संकटवनदहने ॥२॥ जयदेवि० ॥ २ ॥ मंजीरांकितचरणे मणिमुक्ताभरणे कंचुकिवस्त्राभरणे वक्त्रांबुजधरणे ॥ शंक्रामयभयहरणे भूसुरसुखकरणे करुणां कुरु मे शरणे गजनक्रोद्धरणे ॥३॥ जयदेवि० ॥३॥ छित्वा राहुग्रीवां पासि त्वं विबुधान् ।(द्विड्भ्यो) यच्छसि मृत्युमनिष्टं पीयूषं विबुधान् ॥ विहरसि दानवऋद्धा समरे संसिद्धाम् ॥ मध्वमुनीश्वरवरदे पालय संसिद्धाम्॥४॥ जयदेवि० ॥ ४ ॥ निगमैर्नुतपदकमले विहतासुरजाले हस्ते धृतकरवाले निर्जरजनपाले ॥ नितरां कृष्णकृपाले निरवधिगुणलीले निर्जरनुतपदकमले नित्योत्सवशीले॥५॥जयदेवि०॥ कर्पूरपूरेण मनोहरेण०। कर्पूरगौरं क० । महालक्ष्म्यादिदेवताभ्यो नमः नीराजनं सम० ॥ ५ ॥

"*अथ पुष्पांजलिः*"–स्मारं स्मारं मलिनविषयान् मानसं मेऽवसन्नं चारं चारं प्रतिखलगृहं जातखेदौ च पादौ ॥ कारं कारं कुजनविलुतिं क्लेशिता हन्त जिह्वा वारं वारं वरजलनिधे किंनु विज्ञापयेयम् ॥ नानासुगंधिपुष्पाणां यथाकालभवं त्विमम् ॥ पुष्पांजलिं मया दत्तं गृहाण परमेश्वरि ॥३५॥ महालक्ष्म्यादि० पुष्पांजलिं सम०॥३५॥ जननि महति वंशे जन्मलब्धं ततः किं विशदमधिगते वा वेदशास्त्रे ततः किम् ॥ सदसि कथस्तदर्पः सादितो वा ततः किं भवजलधितरिस्त्वं भाविता चेन्न चित्ते ॥ १ ॥ सुरासुरेन्द्रादिकिरीटमौक्तिकैर्युक्तं सदा यत्तव पादपंकजम् ॥ परापरं पातु वरं सुमंगलं नमामि भक्त्या तव कामसिद्धये ॥ २ ॥ भवानि त्वं महालक्ष्मीः सर्वकामप्रदायिनी ॥

सुपूजिता प्रसन्ना स्यान्महालक्ष्म्यै नमोऽस्तु ते ॥२॥ महालक्ष्म्यादिदे० नमस्कारं सम० ॥ ३६ ॥ अनेन पूजनेन श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवताः प्रीयन्तां नमम ॥ ततः लक्ष्मीदर्शनादिकम् आचारात् कर्तव्यम् ॥ इति लक्ष्मीसहितशारदापूजाप्रयोगः ॥

॥ इति आश्विनमासकृत्यम् ॥

---

## ॥ अथ कार्तिकशुक्लप्रतिपत्कृत्यम् ॥

-अत्र दिनेऽभ्यंगस्नानम् आवश्यकम् । एवं चतुर्दश्यादिदिनत्रयेऽभ्यंगाद्युत्सवस्याकरणेन नरकादिदोषश्रवणात् करणे लक्ष्मीप्राप्त्यलक्ष्मीपरिहारादिफलश्रवणाच्च नित्यकाम्योभयरूपत्वम् ॥ अस्यां प्रतिपादि बलिपूजा दीपोत्सवो गोक्रीडनं गोवर्धनपूजाऽपामार्गपालीबंधनं यष्टिकाकर्षणं ( घास आदिकनी दोरी खेंचवी ) नववस्त्रादिधारणाद्युत्सवो द्यूतं नारीकर्तृकनीराजनं मंगलमालिका चेत्येवमादीनि कुर्यात् ॥ अन्यच्च—तैलाभ्यंगमकुर्वाणो नरकं प्रतिपद्यते ॥ प्रातर्गोवर्धनः पूज्यो द्यूतं चापि समाचरेत् ॥१॥ तत्र राजा पंचवर्णरंगैर्बलिं द्विभुजमालिख्य अन्यजनाः शुक्लतंडुलैर्विरच्य पूजयेयुः॥ तत्र मंत्रः॥ बलिराज नमस्तुभ्यं विरोजनसुत प्रभो ॥ भविष्येन्द्र सुराराते पूजेयं प्रतिगृह्यताम् ॥ बलिमुद्दिश्य यत्किंचिद्दानकरणेऽक्षय्यं विष्णुप्रीतिकरं तत् ॥ यो यादृशेन

---

१ आचारस्तु यथा-प्रथम लक्ष्मीनुं दर्शन कराववुं, पछी 'शारदा प्रसन्नाऽस्तु' एम भणी शारदा (चोपडो) पुस्तक माथे अडकाडी, "लाभ सवाया" एम त्रण वखत बोलवुं पछी गोळ धाणा पान वरीयाळीदाणा दरेकना हाथमां आपीने गणपति पासे याचना करावबी के, जेम गोळमां गळपण, धाणामां ठंडक, पानमां रंग अने शेरडीमां रस तेम व्यापारमां रहो बरकत न थजो हरकत विगेरे कुलाचार प्रमाणे बोलवुं बोलाववुं ॥

भावेन तिष्ठत्यस्यां मुनीश्वर ॥ हर्षदैन्यादिरूपेण तस्य वर्षं प्रयाति हि ॥ अस्यां द्यूतं प्रकर्तव्यं प्रभाते सर्वमानवैः ॥ तस्मिन्द्यूते जयो यस्य तस्य संवत्सरे जयः ॥ विशेषवच्च भोक्तव्यं प्रशस्तैर्ब्राह्मणैः सह ॥ बलिराज्ये दीपदानात् सदा लक्ष्मीः स्थिरा भवेत् ॥ दीपैर्नीराजनादत्र सैषा दीपावली स्मृता ॥ बलिं यैस्तु समासाद्य न च दीपावली कृता ॥ तेषां गृहे कथं दीपाः प्रज्वलिष्यन्ति केशव ॥ इति ॥

---

## ॥ अथ गोवर्धनपूजाप्रयोगः ॥

मुख्यगोवर्धनसान्निध्ये तस्यैव पूजा ॥ तदसान्निध्ये गोमयेनान्नकुटेन ( छाणनो अथवा तो अन्ननो ) वा गोवर्धनं कृत्वा तत्सहितगोपालपूजा कार्या ॥ आचम्य जलमादाय ॥ अद्येत्यादि० श्रीकृष्णप्रीत्यर्थं गोवर्धनपूजनगोपालपूजनात्मकं महोत्सवं करिष्ये ॥ इति संकल्प्य ॥ " श्रीगोपालगोवर्धनाभ्यां नमः " इति मंत्रेण गोपालगोवर्धनौ षोडशोपचारैः संपूज्य प्रार्थयेत् ॥ " बलिराजो द्वारपालो भवानद्य भव प्रभो ॥ निजवाक्यार्थनार्थाय गोवर्धन तु गोपते ॥ १ ॥ गोपालमूर्ते विश्वेश शक्रोत्सवविभेदक ॥ गोवर्धनकृतच्छत्रपूजां मे हर गोपते ॥ २ ॥ गोवर्धनधराधार गोकुलत्राणकारण ॥ विष्णुबाहुकृतच्छाय गवां कोटिप्रदो भव ॥" इति संप्रार्थ्य यथावैभवं महानैवेद्यं देयम् ॥ ततः तदंगत्वेन प्रत्यक्षधेनौ मृत्तिकाधेनौ ( माटीनी गाय ) वा गोपूजां कृत्वा प्रार्थयेत् ॥ लक्ष्मीर्या लोकपालानां धेनुरूपेण संस्थिता ॥ घृतं वहति यज्ञार्थे मम पापं व्यपोहतु ॥ १ ॥ अग्रतः सन्तु मे गावो गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ २ ॥ इति संप्रार्थ्य गवां सवत्सानां च विभूषणं कृत्वा तद्दिने

दोहनं ( गायने दोहवी नहीं ) वलीवर्दस्य भारवाहनादिकं ( बळदोने जोडवा नहीं ) वर्जयेत् ॥ ततः " आगावो आमन्मैते वदन्तिवति " ऋग्भ्यां गृहसिद्धचरुहोमः कार्यः । ब्राह्मणेभ्यः अन्नगवादिदानं गोभ्यस्तृणदानं गिरये वलिदानं च दत्त्वा ततो गोविप्रहोमाग्निगिरीणां प्रदक्षिणा सहचरीभिर्गोभिर्युतैः कार्या ॥ इति ॥

॥ अथ मार्गपालीबंधनम् ॥

अपराह्णे मार्गपालीबंधनम् ॥ तत्र पूर्वस्यां दिशि गत्वा कुशकाशमयं ( दर्भ अथवा मुंजानुं दोरडुं ) रज्जुविशेषं यथाचारं कृत्वा उच्चस्तंभे वृक्षे च बद्ध्वा प्रार्थयेत् ॥" मार्गपालि नमस्तेऽस्तु सर्वलोकसुखप्रदे ॥ विधेयैः पुत्रदाराद्यैः पुनरेहि व्रतस्य मे " ॥ इति संप्रार्थ्य ॥ तदधोमार्गेण भोजनादिसहिता विप्रराजादयः सर्वे गच्छेयुः ॥ एवं काशादिमयीं यष्टिकां दृढं कृत्वा एकतो राजपुत्रा अन्यत्र हीनजातयो जयज्ञानार्थं कर्षयेयुः । अत्र हीनजातीजये राजजयः । प्रातर्द्युतकार्यमित्युक्तम् ॥ एवं नारीभिर्नीराजनमपि प्रातरेव कार्यम् । रात्रौ गीतवाद्योत्सवः कार्यः ॥ नवैर्वस्त्रैश्च संपूज्या द्विजसंबंधिबांधवाः ॥ इति ॥

---

## ॥ अथ यमद्वितीयानिर्णयः ॥

अथ कार्तिकशुक्लद्वितीया ॥ यमो यमुनया पूर्वं भोजितः स्वगृहे स्वयम् ॥ अतो यमद्वितीया सा प्रोक्ता लोके युधिष्ठिर । अस्यां निजगृहे न भोक्तव्यं यत्नेन भगिनीहस्ताद्भोक्तव्यं तेन धनधान्यसुखलाभः ॥ वस्त्रालंकरणैः सर्वा भगिन्यः पूज्याः ॥ स्वभगिन्यभावे मित्रादिभगिन्यः पूज्याः ॥ भगिन्या अपि भ्रातृपूजने अवैधव्यं भ्रातुश्चिरजीवनं तदकरणे सप्तजन्मसु भ्रातृनाशः ॥ इदं पूर्वेद्युरेवापराह्णव्याप्तौ पूर्वा ॥ उभयत्र

व्याप्त्यव्याप्त्यादिपक्षान्तरेषु परैव ॥ अस्यां यमुनास्नानम् अपराह्णे चित्रगुप्तयमदूतसहितयमपूजनं यमायार्घ्यदानं च विहितम् ॥ इति ॥

॥ कार्तिकशुक्लैकादश्यादिदिनपंचके भीष्मपंचकव्रतम् ॥

तच्च शुक्लैकादश्यामारभ्य चतुर्दश्यविद्धौदयिकपौर्णमास्यां समापनीयम् ॥ "भीष्मस्य पंचकं कृत्वा कार्तिकस्य फलं लभेत् ॥ सत्यव्रताय शुचये गांगेयाय महात्मने ॥ भीष्मायैतत् ददाम्यर्घमाजन्म ब्रह्मचारिणे ॥ सव्येनानेन मंत्रेण तर्पणं सार्ववर्णिकम् । व्रतांगत्वात्पूर्णिमायां प्रदेयः पापपुरुषः ॥ अत्रैव तु प्रकर्तव्यः प्रबोधस्तु हरेः खग" ॥ इति ॥

## ॥ अथ धात्रीमूले देवपूजाविधिः ॥

आचम्य अद्येत्यादि० सर्वपापक्षयद्वारा श्रीदामोदरप्रीत्यर्थं धात्रीमूले (आमलीना मूलमां) दामोदरपूजां करिष्ये ॥ एवं संकल्प्य पुरुषसूक्तेन षोडशोपचारैः दामोदरं संपूज्य गंध-पुष्प फलयुतमर्घ्यं दद्यात् ॥ अर्घ्यं गृहाण भगवन्सर्वकामप्रदो भव ॥ अक्षया संततिर्मेऽस्तु दामोदर नमोऽस्तु ते ॥ ततो अपराधसहस्राणि० " इति संप्रार्थ्य ॥ धात्र्यां (आमलीना वृक्षने) कुंकुमगंधादिना अभ्यर्च्य पुष्पैः पूजयेत् ॥ धात्र्यै नमः ॥ शान्त्यै० । मेधायै० । प्रकृत्यै० । विष्णुपत्न्यै० । महालक्ष्म्यै० । रमायै० । कमलायै० । इंदिरायै० । लोकमात्रे० । कल्याण्यै० । कमनीयायै० । सावित्र्यै० । जगद्धात्र्यै० । गायत्र्यै० । सुधृत्यै० । अव्यक्तायै० । विश्वरूपायै० । सुरूपायै० । अब्धिभवायै० ॥ इति पुष्पाणि समर्प्य ॥ धात्रीमूले सव्येन तर्पणं कुर्यात् ॥ पिता पितामहश्चान्ये ह्यपुत्रा ये च गोत्रिणः ॥ ते पिबन्तु मया दत्तं धात्रीमूलेऽक्षयं पयः ॥ १ ॥ आब्रह्मस्तंबपर्यन्तं० ॥ इति संतर्प्य सूत्रं वेष्टयेत् ॥ "दामोदर-

निवासायै धात्र्यै देव्यै नमोऽस्तु ते ॥ सूत्रेणानेन बध्नामि सर्वदेवनिवासिनीम्" ॥ इति सूत्रं वेष्टयित्वा चतुर्दिक्षु बलिं दत्त्वा अष्टौ दीपान् दद्यात् ॥ अष्टकृत्वः प्रदक्षिणीकृत्य प्रणमेत् ॥ " धात्रि देवि नमस्तुभ्यं सर्वपापक्षयंकरि ॥ पुत्रान्देहि महाप्राज्ञे यशो देहि बलं च मे ॥१॥ प्रज्ञां मेधां च सौभाग्यं विष्णुभक्तिं च शाश्वतीम् ॥ निरोगं कुरु मां नित्यं निष्पापं कुरु सर्वदा ॥२॥ ततो घृतपूर्णं सहेमकांस्यपात्रं दद्यात् ॥इति॥

कार्तिकशुक्लषष्ठ्यां–भौमयुतायां वह्निपूजनं तत्प्रीतये ब्राह्मणभोजनं कार्यम् ॥ कार्तिकशुक्लाष्टमी–गोपाष्टमी "एतद्दिने गोपूजनं गोप्रदक्षिणा च कार्या गवानुगमनैरिष्टकामावाप्तिः " कार्तिकशुक्लनवम्यां–मथुराप्रदक्षिणोक्ता पूर्वाह्णव्यापिन्या चापिंडक श्राद्धमुक्तम् ॥

---

## अथ एकादशीव्रतोद्यापनप्रयोगः

अथ एकादशीव्रतोद्यापनं चिकीर्षुः दशम्यामेकाशनः उक्तनियमवान् द्वितीयेऽह्नि प्रातर्व्रतग्रहणं कृत्वा भस्मगोमयमृत्तिकादिसामग्रीं गृहीत्वा नद्यादौ गत्वा स्नानपुरःसरं देहशुद्धिप्रायश्चित्तं स्नानविधिं च कृत्वा

---

१ मार्गशीर्षे शुक्लपक्षे कार्तिके वा तथेवच ॥ शुभमासे तु कार्या सा शुक्लकृष्ण उभे तयो ॥ १ ॥ दशम्यामेकभक्त तु दन्तधावनपूर्वकम् ॥ एकादश्यां शुचिर्भूत्वा आचार्यं वरयेत्तत ॥ २ ॥ तत्रैकादश्यामुपवासनिर्णय ॥ तत्रैकादश्युपवासो द्वेधा ॥ निषेधपरिपालनात्मको व्रतरूपश्च। तत्राद्य ॥ न शङ्खेन पिबेत्तोय न खादेत्कूर्मसूकरौ ॥ एकादश्यां न भुंजीत पक्षयोरुभयोरपी 'ति कौर्मदेवलाद्युक्ते ॥ प्राप्ते हरिदिने सम्यग्विधाय नियम निशि ॥ दशम्यामुपवासश्च प्रकुर्याद्वैष्णव व्रतम् ॥ इद शिवभक्तादिभिरपि कार्यम् ॥ " वैष्णवो वाथ शैवो वा कुर्यादेकादशीव्रतम् " इति शिवधर्मोक्त ॥ वैष्णवो वाथ शैवो वा सौरोऽप्येतत्समाचरेदिति सौरपुराणाच्च॥

अहते वाससी परिधाय शरीरशुद्ध्यर्थं पञ्चगव्यं प्राश्य गृहमागत्य यजमानः कुंकुमचंदनादिकृततिलको नित्यकर्म समाप्य धर्मपत्न्या सह

---

सोपि द्विधा नित्यः काम्यश्च ॥ तत्र दशमी वेधो द्विधा॥ अरुणोदये वेधः सूर्योदये वेधश्चेति ॥ आद्यो गारुडे ॥ दशमी शेषसंयुक्तो यदि स्यादरुणोदयः ॥ नैवोपोष्यं वैष्णवेन तद्दिनैकादशीव्रतमिति ॥ अरुणोदयस्वरूपं च माधवीये स्कांदे ॥ उदयात्प्राक् चतस्रस्तु घटिका अरुणोदय इति ॥ यदपि। उदयात्प्राग् यदा विप्र मुहूर्तद्वयसंयुता ॥ यच्च भविष्ये-आदित्योदयवेलायां प्राङ्मुहूर्त्तद्वयान्विता ॥ एकादशी तु संपूर्णा विद्धाऽन्या परिकीर्त्तितेति ॥ तत्रारुणोदयवेधो वैष्णवविषयः ॥ तदाह माधवः ॥ अरुणोदयवेधोऽत्र वेधः सूर्योदये तथा ॥ उक्तौ द्वौ दशमीवेधौ वैष्णवस्मार्त्तयोः क्रमात् ॥ अत्र माधवमते वैष्णवैररुणोदयविद्धा त्याज्या ॥ परा त्वेकादश्येव शुद्धा सती वर्द्धते द्वादशी वा उभयं तदा परोपोष्या ॥ एकादशी द्वादशी वाधिका चेत् त्यज्यतां दिनम् ॥ पूर्वं ग्राह्यं तूत्तरं स्यादिति वैष्णवनिर्णयः इति माधवोक्तेः ॥ स्मार्तस्तु ॥ सूर्योदयविद्धा त्याज्या ॥ यदा त्वेकादशी शुद्धा सती वर्द्धते द्वादशी च समा न्यूना वा तदा गृहस्थैः पूर्वा यतिभिस्तत्तरा कार्या ॥ नारदः ॥ संपूर्णैकादशी यत्र द्वादश्यां वृद्धिगामिनी ॥ द्वादश्यां लंघनं कार्यं त्रयोदश्यां तु पारणम् ॥ क्षयो वा यदि वा वृद्धिर्दशम्यादि दिनत्रये ॥ उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम् ॥ माधवेऽप्युक्तम् ॥ एकादशी द्वादशी चेत्युभयं वर्धते यदा ॥ तदा पूर्वदिनं त्याज्यं स्मार्तग्राह्यं परं दिनम् ॥ त्रयोदश्यां न लभ्येत द्वादशी यदि किंचन ॥ उपोष्यैकादशी तत्र दशमीमिश्रिता यदि ॥ इति स्कान्दात् ॥ कात्यायनः अष्टवर्षाधिको मर्त्यो ह्यशीति(८०) न्यूनवत्सरः ॥ एकादश्यामुपवसेत्पक्षयोरुभयोरपि ॥ १ ॥ ( उपवासनिषेधो माधवीये उक्त ) उपवासनिषेधे तु भक्ष्यं किंचित्प्रकल्पयेत् । न दुष्यत्युपवासेन चोपवासफलं लभेत् ॥२॥ (भक्ष्यं च तत्रैवोक्तम्) नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् । यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरं च ॥ ३ ॥

स्वपुरःपूजोपयोगिसंभारान् गृहीत्वा सुदिने सुमुहूर्ते शुभासने च प्राङ्मुख उदङ्मुखो वोपविश्य, अप उपस्पृश्य ह्रीमिति त्रिवारम् जपेत्॥ततःशांतिपाठपूर्वकं देवब्राह्मणान् नमस्कृत्य हस्ते जलमादाय । अद्येत्यादि० तिथौ ममाखिलपापपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं (पुत्रपौत्राद्यनवच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थं) श्रीपरमेश्वरप्रीत्यर्थं मयाऽऽचरितस्याचरिष्यमाणस्य शुक्लकृष्णैकादशीव्रतस्य साङ्गतासिद्ध्यर्थं संपूर्णफलावाप्त्यर्थम् एकरात्राधिवासपक्षाश्रयेण देशकालानुसारतो यथाज्ञानेन यथामिलितोपचारैः शुक्लकृष्णैकादशीव्रतोद्यापनमहं करिष्ये (पित्रादीनां निमित्तं स्याच्चेत्तथोहः कार्यः)॥ तदङ्गत्वेन दिग्रक्षणं कलशाराधनं दीपपूजनं पुण्या-

---

१ अथ काम्यविधि—(लघुनारदीये) दशम्यादि महीपाल त्रिदिन परिवर्जयेत् ॥ गन्धताम्बूलपुष्पादि स्त्रीसंभोगं महायशाः ॥ १ ॥ (तत्र दशम्यां विधि. कौर्मे) कांस्यं मांसं मसूरांश्च चणकान् कोरदूषकान् । शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥२॥ तथा शाकं मांसं मसूरांश्च पुनर्भोजनमैथुने ॥ द्यूतमत्यम्बुपानं च दशम्यां वैष्णवस्त्यजेत् ॥ ३ ॥ (मदनरत्ने नारदीये) अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः ॥ अवनीतल्पशयनाः प्रियसंगविवर्जिताः ॥ ४ ॥ (व्रताघ्न्यान्याह हेमाद्रौ देवलः) असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् ॥ उपवासः प्रणश्येत दिवा स्वापाच्च मैथुनात् ॥ ५ ॥ (अशक्तौ तु मदनरत्ने) अत्यये चाम्बुपानेन नोपवासः प्रणश्यति ॥ ६ ॥ (अत्यये कष्टे)॥ (निर्णयामृते संग्रहे पैठिनसि) ताम्बूलचर्वणे स्त्रीसंभोगे मांसनिषेवणे ॥ व्रतलोपेन चेत्कुर्यात् कृष्णावन्द्युजिवर्जनम् ॥ कृष्णैकादशीवत् भोजननिषेधमात्रपरिपालने तु ताम्बूलचर्वणादावपि न दोषः इत्यर्थः॥(हेमाद्रौ वशिष्ठ) उपवासे तथा श्राद्धे न कुर्याद्दतधावनम् ॥ दन्तानां काष्ठसंयोगो दहत्यासप्तमं कुलम् ॥ काष्ठग्रहणान्मृल्लोष्ठाद्यनिषेधः । इति हेमाद्रिः॥ स्त्रीणां रजोदर्शनेऽपि व्रतं कार्यम् ॥

हवाचनम् ( मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नान्दीश्राद्धं ) आचार्यादिऋत्विग्वरणं सर्वतोभद्रमंडले देवतास्थापनं प्रधानदेवतास्थापनं च करिष्ये ॥ इति संकल्प्य दिग्रक्षणादि आचार्यवरणान्तं कर्म (पृ. ६-४५) कृत्वा सर्वतोभद्रमंडलदेवतास्थापनं (पृ. ९९-१०१) कृत्वा तेषां पूजनं कृत्वा तदुपरि अक्षतपुञ्जे केशवादिचतुर्विंशतिनामाङ्कितमक्षतपूर्णेन पूर्णपात्रेण सहितं कलशं "विश्वाधारासि०" इत्यादिना प्रतिष्ठाप्य तदुपरि क्षौमवस्त्रं प्रसार्य तत्र चन्दनादिना त्रिकोणषट्कोणाष्टास्रदशारद्वादशारचतुर्दशास्रषोडशारभूमदिर्विशिष्टं यन्त्रम् ( अष्टदलं वा ) विलिख्य यन्त्रदेवता आवाहयेत् ॥ यथा—

## यन्त्रदेवतावाहनम्

मध्ये लक्ष्मीनारायणाभ्यां नमः लक्ष्मीनारायणौ आवाहयामि स्थापयामि ॥ एवं सर्वत्र ॥ ( त्रिकोणे ) सङ्कर्षणाय० । प्रद्युम्नाय० । अनिरुद्धाय० ॥३॥ ( षट्कोणे ) विष्वक्सेनाय० । सनकाय० । सनंदनाय० । सनातनाय० । सनत्कुमाराय० । शुकाय० ॥६॥ ( अष्टकोणे ) अवनितलाय० । तलाय० । वायवे० । वह्नये० । चंद्राय० । सूर्याय० । गगनाय० । यजनार्हाय० ॥८॥ (दशारे) मत्स्याय० । कूर्माय० । वराहाय० । नरसिंहाय० । वामनाय० । परशुरामाय० । रामचन्द्राय० । श्रीकृष्णाय० । बौद्धाय० । कल्किने० ॥१०॥ (द्वादशारे) प्रणवमूर्तये० । नंदनंदनाय० । मंगलमूर्त्तये० । भगवते० । गर्भवासनिवारकाय० । वरेण्याय० । तेजोमूर्त्तये० । त्रिभुवनपतये० । सुसर्वांगाय० । वेदाध्यक्षाय० । वागीशाय० । यमादिपालकाय० ॥१२॥ (मन्वस्रे) कुमारमूर्त्तये० । देवऋषिभ्यो० । नारायणाय० । कपिलमुनये० । दत्तात्रेयाय० ।

यज्ञमूर्तये० । ऋषभदेवाय० । पृथुराज्ञे० । धन्वंतरये० । मोहिनीरूपाय ० । द्वैपायनाय० । मुनिमूर्तये० । मनुमूर्त्तये० । प्रजापतये० ॥१४॥ (षोडशारे) विश्वामित्राय०।जमदग्नये०। भरद्वाजाय०। गौतमाय०। अत्रये०। वशिष्ठाय०। कश्यपाय०। अंगारकाय०। अगस्त्याय०।पुलस्त्याय०।पुलहाय०। उद्दालकाय०। दालभ्याय०। जैमुनये०। कात्यायनाय०। वैशंपायनाय०॥१६॥(भूमंदिरे) ब्राह्म्यै०। माहेश्वर्यै०। कौमार्यै०। वैष्णव्यै०। वाराह्यै०। ऐन्द्र्यै०। चामुण्डायै०। महालक्ष्म्यै० ॥८॥ "तत्रैव" अणिमासिद्ध्यै०। महिमासिद्ध्यै०। लघिमासिद्ध्यै०। गरिमासिद्ध्यै०। प्राप्तिसिद्ध्यै०। प्राकाम्यसिद्ध्यै०। वसित्वसिद्ध्यै०। सर्वकामासिद्ध्यै० ॥ ८ ॥ परितः "दिक्पालादीनावाहयेत्" इन्द्राय०। अग्नये०। यमाय० निर्ऋतये०। वरुणाय०। कुबेराय०। ईश्वराय०। ब्रह्मणे०। अनन्ताय०॥१०॥ वज्राय०। शक्तये०। दंडाय०। खड्गाय०। पाशाय०। अंकुशाय०। गदायै०। त्रिशूलाय०। पद्माय०। चक्राय० ॥१०॥ ऋग्वेदाय०। यजुर्वेदाय०। सामवेदाय०। अथर्ववेदाय०। गगायै० ॥ यमुनायै०॥६॥ इत्यावाह्य। "यंत्रस्थदेवताभ्यो नमः" इति संपूजयेत् ॥ ततो मूर्तीनामग्न्युत्तारणपूर्वकमाणप्रतिष्ठां कुर्यात् ॥

॥ अग्न्युत्तारणपूर्वकप्राणप्रतिष्ठा ॥

सुवर्णमयीमूर्तीनां ताम्रपात्रे स्थापनं कृत्वा ॥ जलमादाय ॥ अद्येत्यादि० आसां मूर्त्तीनामगप्रत्यगसंधिसमुत्पन्नटंकाद्यातपाग्निजनितदोषपरिहारार्थमग्न्युत्तारणपूर्वकं ब्राह्मणद्वारा प्राणप्रतिष्ठां करिष्ये॥मूर्ती-

१ घणी मूर्तिओ होय तो आप्रमाणे करवु पण जो एक ज मूर्ति होय तो "मूर्ते, अस्या मूर्ते, मूर्ति, अस्या मूर्ते,' ए प्रमाणे अने बे मूर्ति होय तो 'मूर्त्यौ, अनयो मूर्त्यो, मूर्ती, अनयो मूर्त्यो' एप्रमाणे क्रमथी बोलवु

## ॥ अथ प्रधानदेवतास्थापनम् ॥

हस्ते अक्षतान् गृहीत्वा मध्ये श्रीसूर्यमंडलान्तर्वर्त्तिजगद्बीज-"लक्ष्मीनारायणौ" इहागच्छतमिह तिष्ठतम् ॥ लक्ष्मीनारायणाभ्यां० लक्ष्मीनारायणौ आवाहयामि स्थापयामि ॥ इत्यावाह्य ॥ "श्रीसूर्य-मंडलान्तर्वर्त्तिजगद्बीजलक्ष्मीनारायणाभ्यां नमः" इति मूलमंत्रेण यथालाभोपचारैर्वा पंचोपचारैः पूजयेत् ॥

### ॥ अथैकादशीदेवतास्थापनम् ॥

तत्रादौ श्वेतकौशेयवस्त्रोपरि श्वेततिलैः कृतमंडले शुक्लैकादशी-देवताः स्थापयेत् ॥ हस्ते अक्षतान् गृहीत्वा ॥ नमोऽस्तु विष्णवे तुभ्यं भगवन्परमात्मने ॥ कृष्णोसि देवकीपुत्र परमेश्वर उत्तम ॥ १ ॥ अजोऽनादिश्च विश्वात्मा सर्वलोकपितामहः ॥ क्षेत्रज्ञः शाश्वतो विष्णुः श्रीमान्नारायणः परः ॥२॥ त्वमेव पुरुषः सत्योऽतीन्द्रियोऽसि जगत्पते ॥ यच्चे तेजः परं सूक्ष्मं तेनेमां वेदिकां विश ॥ ३ ॥ कर्णिकायां अग्निपुरुषाय० अग्निपुरुषमावा० स्था० ॥ वायुपुरुषाय० वायुपुरुषमा० स्था० । सूर्यपुरुषाय० सूर्यपुरुषमा० स्था० । प्रजापतिपुरुषाय० प्रजापतिपुरुषमा० स्था० ॥ मध्ये लक्ष्मीसहिताय विष्णवे० ल० स० विष्णुमा० ॥ ५ ॥

---

१ केटलाएक देशमां सर्वतोभद्रनुं स्थापन करी प्रधान कलशपर छवीस ( २६ ) नाम लखे छे, अथवा घडा चारे बाजु मूकी तेनापर अक्षत अने सोपारी मूकी केशवादि चोवीस देवतानुं स्थापन करावे छे, परंतु आ तरफ सफेद रेशमीवस्त्रपर सफेद तलथी मंडळ करी तेना उपर शुक्ल एकादशीना देवतानुं स्थापन अने बीजा बाजठपर काळो रेशमी ककडो पाथरी तेनापर काळा तलथी मंडळ करी कृष्ण एकादशीना देवतानुं स्थापन करावे छे

परितः—अग्नये० आग्निमा० । इन्द्राय० इन्द्रमा० । प्रजापतये० प्रजापतिमा० । विश्वेभ्यो देवेभ्यो० विश्वान् देवान्० । ब्रह्मणे० ब्रह्माणमा० । वासुदेवाय० वासुदेवमा० । रामाय० राममा० । श्रियै० श्रियमा० ॥८॥ ततः पूर्वदक्षिणपश्चिमोत्तरदलाभ्यन्तरे ॥ स्त्रीचतुःसहस्रसहितायै रुक्मिण्यै० रुक्मिणीमा० ॥ स्त्रीचतुःसहस्रसहितायै सत्यभामायै० सत्यभामामा० । स्त्रीचतुःसहस्रसहितायै जांबुवत्यै० जांबुवतीमा० । स्त्रीचतुःसहस्रसहितायै कालिन्द्यै० कालिन्दीमा० ॥ ४ ॥ आग्नेयादिविदिक्षु ॥ गणपतये० गणपतिमा० । दुर्गायै० दुर्गामा० । क्षेत्राधिपतये० क्षेत्राधिपतिमा० । वास्तोष्पतये० वास्तोष्पतिमा० । शंखाय० शंखमा० । चक्राय० चक्रमा० । गदायै० गदामा० । पद्माय० पद्ममा० ॥८॥ पुनः—पूर्वादिचतुर्दिक्षु ॥ वलभद्राय० वलभद्रमा० । प्रद्युम्नाय० प्रद्युम्नमा० । अनिरुद्धाय० अनिरुद्धमा० । त्र्यंबकाय० त्र्यम्बकमा० ॥४॥ तद्बहिः पूर्वपत्रादिष्वष्टपत्रेषु—विमलायै० विमलामा० । उत्कर्षिण्यै० उत्कर्षिणीमा० । ज्ञानायै० ज्ञानामा० । क्रियायै० क्रियामा० । योगाय० योगमा० । प्रह्व्यै० प्रह्वीमा० । सत्यायै० सत्यामा० । ईशानायै० ईशानामा० ॥८॥ पृष्ठभागे—अनुग्रहायै० अनुग्रहा० । पुरतः—गरुडाय० गरुडमा० ॥२॥ ततः पूर्वादिक्रमेण ॥ इन्द्राय० इन्द्रमा० । अग्नये० आग्निमा० । यमाय० यममा० । निर्ऋतये० निर्ऋतिमा० । वरुणाय० वरुणमा० । वायवे० वायुमा० सोमाय० सोममा० । ईशानाय० ईशानमा० ॥ ८ ॥ ततः पूर्वादि द्वादशपत्रेषु कुंभेषु वा ॥ केशवाय० केशवमा० । नारायणाय० नारायणमा० । माधवाय० माधवमा० । गोविंदाय० गोविन्दमा० । विष्णवे० विष्णुमा० । मधुसूदनाय० मधुसूदनमा० । त्रिविक्रमाय० त्रिविक्रममा० । वामनाय० वामनमा० । श्रीधराय० श्रीधरमा० । हृषीकेशाय० हृषीके-

शमा०। पद्मनाभाय० पद्मनाभमा०।दामोदराय० दामोदरमा०।(अधिके) पुरुषोत्तमाय० पुरुषोत्तममा०॥१३॥ एताः शुक्लैकादशीमंडलदेवताः ॥

ततः पीठोपरि कृष्णक्षौमवस्त्रोपरि कृष्णतिलैर्मंडलं कृत्वा तदुपरि कृष्णैकादशीमंडलदेवताः स्थापयेत् ॥

"अथ कृष्णैकादशीमंडलदेवताः"—संकर्षणाय० संकर्षणमा०। वासुदेवाय० वासुदेवमा०। प्रद्युम्नाय० प्रद्युम्नमा०। अनिरुद्धाय० अनिरुद्धमा०। पुरुषोत्तमाय० पुरुषोत्तममा०। अधोक्षजाय० अधोक्षजमा०। नारसिंहाय० नारसिंहमा०। अच्युताय० अच्युतमा०। जनार्दनाय० जनार्दनमा०। उपेन्द्राय० उपेन्द्रमा०। हरये० हरिमा०। श्रीकृष्णाय० श्रीकृष्णमा०। (अधिके) पुरुषोत्तमाय० पुरुषोत्तममा०॥ ॥१३॥"प्रतिष्ठासर्वदेवा०" इति प्रतिष्ठाप्य ॥ पुरुषाद्यावाहितदेवेभ्यो नमः इति मंत्रेण यथाशक्त्या पूजनं कुर्यात् ।

॥ तिलकमालाधारणं शंखघंटापूजनं च ॥

जलमादाय ॥ अद्येत्यादि० प्रधानदेवतापूजनकर्माधिकारार्थं तिलकतुलसीमालाधारणपूर्वकं शंखघंटापूजनं च करिष्ये। इति संकल्प्य ( पृ. १११–११३ ) तिलकमालाधारण शंखघण्टार्चनं च कुर्यात् ॥

॥ अथ न्यासविधिः ॥

केशवाय० वामकरे ॥ नारायणाय० दक्षिणकरे ॥ माधवाय० वामपादे॥ गोविंदाय०दक्षिणपादे ॥ विष्णवे०वामजानुनि॥मधुसूदनाय० दक्षिणजानुनि ॥ त्रिविक्रमाय०वामकट्याम्॥ वामनाय० दक्षिणकट्याम् ॥श्रीधराय० नाभौ॥ हृषीकेशाय० हृदये०॥ पद्मनाभाय०कंठे ॥ दामोदराय० वामबाहुमूले ॥ संकर्षणाय० दक्षिणबाहुमूले ॥ वासुदेवाय० मुखे॥ प्रद्युम्नाय० नासिकयोः॥ अनिरुद्धाय०श्रोत्रयोः॥ पुरुषोत्तमाय०

नेत्रयोः ॥ अधोक्षजाय० ललाटे ॥ नृसिंहाय० पूर्वे ॥ अच्युताय० दक्षिणे ॥ जनार्दनाय० पश्चिमे ॥ उपेन्द्राय० उत्तरे ॥ हरये० मूर्ध्नि ॥ श्रीकृष्णाय०सर्वांगे ॥ इति केशवादिचतुर्विंशतिन्यासः ॥

## ॥ अथ राजोपचारपूजा ॥

(ततो भूशुद्ध्यादिन्यासपात्रासादनं कर्तव्यं चेत् ( पृ.११४-१२६) कर्तव्यम् ॥) ततो राजोपचारपूजा (पृ.१२७–१४९) पर्यंतं कुर्यात् । वा सामान्यमन्त्रैः पूजनं कुर्यात् ॥ ततःअङ्गपूजामावरणपूजां च कुर्यात् ॥

### ॥ अथांगपूजा ॥

वामहस्ते गंधपात्रं गृहीत्वा दक्षिणेनार्चयेत् ॥ दामोदराय नमः पादौ पजयामि ॥ माधवाय० जानुनी पूज०॥ कामपतये० गुह्यं पूज०॥ वामनाय० कटी पूज० ॥ पद्मनाभाय० नाभिं पूज० ॥ विश्वमूर्तये० उदरं पूज० ॥ ज्ञानगम्याय० हृदयं पू० ॥ श्रीकंठाय० कंठं पूज० ॥ सहस्रबाहवे० बाहू पूज०॥ योगिने० चक्षुषी पूज० ॥ उरगाय० ललाटं पूज० ॥ नाकसुरेश्वराय० नासिकां पूज० ॥ श्रवणेशाय० श्रवणौ पूज० ॥ सर्वकामप्रदाय० शिखां पूज० ॥ सहस्रशीर्षे० शिरः पूज० ॥ सर्वरूपिणे० सर्वांगं पूजयामि ॥ इत्यंगपूजा ॥

### ॥ अथावरणपूजा ॥

तत्रादौ वामहस्ते अक्षतान् गृहीत्वा दक्षिणेनार्चयेत् ॥ १ ॥ ( मध्ये ) श्रीनारायणाय नमः ) दक्षिणे लक्ष्म्यै०। वामे संकर्षणाय०। ( पुरतः ) गरुडाय०। ( वामपार्श्वे ) अक्रूराय०( दक्षिणपार्श्वे ) उद्धवाय० ॥ गंधपुष्पं गृहीत्वा ॥ दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ।

---

१ अत्र सर्वोपचारेषु "श्रीसूर्यमण्डलान्तर्वर्तिजगद्बीजलक्ष्मीनारायणाभ्यां नम." इति वक्तव्यम्

भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ जलमादाय ॥ अनेन प्रथमावरणपूजनेन श्रीसूर्य० श्रीलक्ष्मीनारायणौ प्रीयेताम् ( एवं सर्वत्र )॥ अथ ( २ ) द्वितीयावरणम् ॥ ( त्रिकोणे पूर्वादिक्रमेण ॥ ) लक्ष्मीहृषीकेशाभ्यां०। गौरीरुद्राभ्यां०। सरस्वतीकमलासनाभ्यां०। ( तद्बाह्यदलेषु ) सुवर्णाय० । वृषभाय० । हंसाय० । शेषं पूर्ववत् ॥ दयाब्धे० द्वितीयावरणार्चनम् । अनेन द्विती० प्रीयेताम् ॥ अथ (३) तृतीयावरणम् ॥ ( षट्कोणेषु पूर्वादिक्रमेण ॥ ) मत्स्याय०। कूर्माय०। वामनाय०। परशुरामाय० ॥ ( तद्बाह्ये ) रामाय० । कृष्णाय० । बौद्धाय० । कल्किने०। व्यासाय०। पृथिव्यै० । शेषं पूर्ववत् ॥ दयाब्धे० तृतीया०। अनेन तृती०॥ अथ (४) चतुर्थावरणम् ॥ ( तद्बाह्यवृत्तेषु पूर्वादिक्रमेण ॥ ) मित्राय०। सोमाय०। अंगारकाय०। बुधाय०। बृहस्पतये०। शुक्राय०। शनैश्चराय०। राहवे०। केतवे०॥ ( अष्टदलेषु पूर्वादिक्रमेण ॥ ) इन्द्राय०। अग्नये०। यमाय०। निर्ऋतये०। वरुणाय०। वायवे०। सोमाय०। ईशानाय०॥ (तद्बाह्यदलेषु ॥) वज्राय०। शक्तये०। दंडाय०। खड्गाय०। पाशाय०। अंकुशाय०। गदायै०। त्रिशूलाय०। शेषं पूर्ववत् ॥ दयाब्धे०। चतुर्था०॥ अनेन चतु०॥ अथ (५) पंचमावरणम् ॥ ( वृत्ते केशवादिचतुर्विंशतिनामभिः पूर्वादिक्रमेण ) केशवाय०। नारायणाय०। माधवाय०। गोविंदाय०। विष्णवे०। मधुसूदनाय०। त्रिविक्रमाय०। वामनाय०। श्रीधराय०। हृषीकेशाय०। पद्मनाभाय० । दामोदराय०। संकर्षणाय०। वासुदेवाय०। प्रद्युम्नाय०। अनिरुद्धाय०। पुरुषोत्तमाय०। अधोक्षजाय०। नारसिंहाय०। अच्युताय०। जनार्दनाय०। उपेन्द्राय। हरये०। श्रीकृष्णाय०। (चतुर्दले पूर्वे) सुदर्शनाय०। ( दक्षिणे ) पाशुपताय०। ( पश्चिमे ) शार्ङ्गाय०। (उत्तरे) गदायै०।

ध्रुवाय० । नारदाय० । सप्तर्षिभ्यो० । गंगादिनदीभ्यो०। सप्तसागरेभ्यो० । नागिन्यादिसहस्रफणाङ्कितनागाय नमः । गन्धर्वाप्सरोभ्यो नमः। शेषं पूर्ववत्। दद्यार्घ्यं०।सप्तमावरणार्चनम्।।जलमादाय। अनेन सप्तमावरणपूजनेन श्रीसूर्य०श्रीलक्ष्मीनारायणौ प्रीयेताम्।। इत्यावरणपूजा।।

ततः अष्टोत्तरशतनामभिः ( पृ. ८१ ) वा विष्णुसहस्रनामभिः तुलसीपत्राणि समर्प्य श्वेतचूर्णादिना ( पृ. १४२–१४४ ) पुष्पाञ्जलिपर्यन्तं पूजनं कुर्यात् ।।

---

१ वंदे विश्वासनं देवं विश्वाख्यं विश्वतो मुखम्॥ विश्वतः श्रुतिमूलं च विश्वरूपं नमाम्यहम् ॥ १ ॥ नारायण नमस्तेऽस्तु लक्ष्मीनारायण प्रभो ॥ विष्णुर्नारायणः साक्षात् रुद्रो नारायणः स्वयम् ॥ २ ॥ ब्रह्मादित्यश्च वायुश्च हरिर्नारायणस्तथा ॥ नारायणश्च भूतानि वह्निर्नारायणः परः ॥३॥ सर्वे नारायणो देवो नारायण नमोऽस्तु ते॥नारायणस्त्वमेवैकः सर्वं व्याप्य व्यवस्थितः ॥ ४ ॥ अतर्बहिश्च भूतानां नित्यो गम्यो न केनचित् ॥ सर्वेषां कारणं पूर्वं वाग्भिर्वाच्यो न कस्यचित् ॥ ५ ॥ भूतभव्यभवद्यच्च विश्वं सर्वं त्वयि स्थितम् ॥ उद्योधकश्च शक्तीनां तथापि त्वं न गम्यसे ॥ ६ ॥ स्वरूपं नैव चाकारो नालंकारस्त्वयि प्रभो ॥ एवं चेदपि भक्तानां कार्यार्थं रूपमुद्धृतम् ॥ ७ ॥ रूपेणानेन देवेश मामुद्धर भवार्णवात् ॥ योगिनां सिद्धरूपोऽसि ज्ञानिनां ह्रं प्रकाशसे ॥ ८ ॥ यथा ते चिंतयन्तेऽद्दग्नी तत्तद्भवति निश्चितम् ॥ ज्ञात्वैवं चिंत्यते भूमंस्तत्कुरुष्व दयानिधे ॥ ९ ॥ कामये तव पादाब्जं सर्वकामप्रपूरकम् ॥१०॥ "य एवं त्वां वेद" सो ज्ञानवान् भवति ॥ यो लक्ष्मीशं भजति त कृपावानवति॥ यः सर्वरूपं जपति स सिद्धिमान्भवति॥ य. सुयज्ञेशं यजति तं प्रभावानवति ॥ ब्रह्माणं स्मरति स तेजोवान्भवति ॥ ज्ञात्वेशं यस्तपति तं शक्तिमानवति ॥ यः कर्तारमनुभवति तं क्रियावानवति ॥ यः एवं देवान्यजति तं क्रीडावानवति ॥ यो वै परमात्मानं वेद एवं त्वां वेद स वह्निज्ञानवान् भवति ॥ जानाति यः कर्तारं कर्तारं

स्तुति० नमो नमः कारणवामनाय नारायणायामितविक्रमाय ॥
सशार्ङ्गचक्राब्जगदाधराय नमोऽस्तु तस्मै पुरुषोत्तमाय ॥५१॥
नम० किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषिताय ॥
लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति ॥५२॥
विशे० सुगंधिपुष्पाक्षतचंदनान्वितं तांबूलपूगीफलवारिसंयुतम् ॥
विष्णो जगन्नाथ मयासमर्पितं लक्ष्मीपतेऽर्घ्यं परिगृह्यतां मुदा ॥५३॥
प्रार्थ० संज्ञानमात्रं सदसत्परं महच्छश्वत्प्रशान्तं विभवं समं महत् ॥
त्वां ब्रह्मवेदं हि सुदुर्गमं परं सदास्यधाम्ना परिभूतकैतवम् ॥५४॥
श्रीसूर्यमंडलान्तवर्तिजगद्बीजश्रीलक्ष्मीनारायणाभ्यां नमः
प्रार्थनापूर्वकनमस्कारं सम० ॥ ततो "ह्रीं नमो भगवते वासुदेवाय"
इति मूलमंत्रं यथा शक्त्या जापित्वा तज्जपं देवाय निवेद्य ॥ जलमादाय ॥

---

प्रणमति स मोक्षवान् भवति ॥ यः कामनयेशं स्मरति तत्कामान् पूरयति ॥ यो वै मनसा जपति तच्छत्रूनभिभवति ॥ स्तौति यः श्रीकृष्णं स विष्णुलोकं गच्छति ॥ योऽप्सु स्थितं स्तौति स क्षीरनिधिं प्राप्नोति ॥ यः सर्वशक्तिमन्तं यजति स सोमायतनवान् भवति ॥ ज्ञात्वैवं त्वां नमस्करोमि ॥ वत्साय नमो वत्सरूपाय नमो वत्सभूपाय नमो वत्सपालाय नमो वत्सकालाय नमो वत्सहराय नमो वत्सचराय नमो वत्सधराय नमो वत्सपराय नमो नमः । गरुडाय नमो गरुडरूपाय नमो गरुडभूपाय नमो गरुडप्रियाय नमो गरुडाकाराय नमो गरुडवाहनाय नमो गरुडपोषकाय नमो नमः । विश्वाय नमो विश्वपालाय नमो विश्वकालाय नम· पालाय नमः कालकालाय नम· सर्वाय नमः सर्वरूपाय नमः सर्वभूपाय नमः सर्वहराय नम सर्वचराय नमः सर्वकराय नम· सर्वधराय नमो नम । विश्वेभ्यो विश्वरूपेभ्यो नमस्तेऽस्तु सर्वरूपेभ्यः । बालाय नमो बालकृष्णाय नम सर्वभूतकामनाय नमः । नमो भगवते वासुदेवाय श्रीकृष्णश्च प्रसीदताम् । सर्वत· पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमंल्लोके सर्वमावृत्य तिष्ठति ।

अद्येत्यादि० अनेन अद्य प्रथमेऽह्नि यथाज्ञानेन यथामिलितोपचारैः यथावकाशकृतपूजनेन श्रीसूर्य०श्रीलक्ष्मीनारायणौ प्रीयेताम्॥ तत आचार्यादीन् संपूज्य तेभ्य आशिषो गृह्णीयात्। ततः शास्त्रपुराणकथाश्रवणादिना जागरणपूर्वकं रात्रिं निमयेत्। इति प्रथमदिवसकृत्यम्॥

॥ अथ द्वितीयदिवसकृत्यम् ॥

द्वितीयेऽह्नि कृतमंगलस्नानो यजमानः क्षालितवाससी परिधाय कुंकुमचंदनादिना कृततिलको नित्यकर्म समाप्य धर्मपत्न्या सह शुभासने उपविश्य 'ह्रीं' इति त्रिवारं जपित्वा "या श्रीः स्वयं०" इत्यादि शान्तिसूक्तं शृणुयात्॥ ततः गुरुपादाभिवंदनं कृत्वा आचम्य प्राणानायम्य "ह्रीं नमो भगवते वासुदेवाय" इति त्रिः पठित्वा सुमुखश्चेत्यादि पठित्वा॥ जलमादाय॥ अद्येत्यादि० तिथौ ममात्मनः समग्रपापक्षयपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं पूर्वकृतसंकल्पसिद्ध्यर्थं च द्वितीयेऽह्नि शुक्लकृष्णैकादशीव्रतोद्यापनाङ्गीभूतं सग्रहमखं हवनाख्यं कर्म करिष्ये॥ पुनर्जलमादाय—तदङ्गत्वेन दिग्रक्षणादिकं स्थापितदेवतानां स्थापनक्रमेण यथामिलितोपचारैः पूजनं करिष्ये॥ इति संकल्प्य पूर्वोक्तरीत्या दिग्रक्षणं कलशाराधनं गणपतिपूजनं च कृत्वा गौर्यादिमातृकाश्च संपूज्य सर्वतोभद्रमंडले ब्रह्मादिदेवताश्च संपूज्य प्रधानदेवतापूजनं कृत्वा एकादशीमंडलदेवताश्च पूजयेत्॥

॥ अथ होमविधिः ॥

ततः स्थलान्तरं गत्वा कुंडे वा वेदिं निर्माय ग्रहमंडलं विरच्य॥ जलमादाय॥ अद्येत्यादि० तिथौ शुक्लकृष्णैकादशीव्रतोद्यापनांगभूतं अग्निस्थापनं ग्रहमंडलदेवतानां स्थापनप्रतिष्ठापूजनं च करिष्ये इति

संकल्प्य अग्निं प्रतिष्ठाप्य ( पृ. १४७-१५२ ) ग्रहमण्डले ग्रहाणां स्थापनप्रतिष्ठापूजनं कुर्यात् (पृ. १५३-१५९)॥

ततः कुशकण्डिकां कृत्वा ( पृ. १५९-१६१ ) आघारावाज्यभागौ हुत्वा ( १६१ ) द्रव्यत्यागसंकल्पं कृत्वा ( १६२ ) होमं कुर्यात् ॥ तत्रादौ ( पृ. १६३ ) वराहुतिं दत्वा नवग्रहाणां होमं ( पृ. १६२-१६४ ) कुर्यात् ॥ ततः प्रधानहोमं कुर्यात् ॥

## ॥ अथ प्रधानहोमः ॥

तत्रादौ आज्येन " ह्रीं पुरुषाय नमः " इति मन्त्रेण षोडशाहुतीर्जुहुयात् ॥ ततो घृताक्तपायसेन " ह्रीं विष्णवे नमः " इति मंत्रेणाष्टोत्तरशतं १०८ आहुतीर्जुहुयात् ॥ (ततः केवलपायसेन एकैकामाहुतिं जुहुयात् ॥ (तद्यथा) ॥ अग्नये० । वायवे० । सूर्याय० । प्रजापतये०॥) तत आज्येन एकैकामाहुतिं जुहुयात् ॥ (तद्यथा) ॥ अग्नये० । इन्द्राय० । प्रजापतये० । विश्वेभ्यो देवेभ्यो० । ब्रह्मणे० ॥५॥ ततो घृताक्तपायसेन एकैकामाहुतिं जुहुयात् ॥ (तद्यथा) ॥ वासुदेवाय० रामाय० श्रियै० ॥३॥ तत आज्येन एकैकामाहुतिं जुहुयात् ॥ ( तद्यथा ) ॥ स्त्रीचतुःसहस्रसहितायै रुक्मिण्यै० । स्त्रीचतुःसहस्रसहितायै सत्यभामायै० । स्त्रीचतुःसहस्रसहितायै जांबुवत्यै० । स्त्रीचतुःसहस्रसहितायै कालिन्द्यै० । गणपतये० । दुर्गायै० । क्षेत्राधिपतये० । वास्तोष्पतये० । शंखाय० । चक्राय० । गदायै० । पद्माय० । बलभद्राय० । प्रद्युम्नाय० । अनिरुद्धा-

१ अहीं कुशकंडिकामां "चरु" चे करवा एक पाणीमां ने बीजो दुधमां । दुधमां करेला चरुमांथी "अपवित्रः पवित्रो०" ए मंत्रथी थोडो भाग काढी जुदो राखवो तेने "प्रापण" कहेवामां आवे छे ॥ "पायसादुद्धृतं किंचित् प्रापणं तत्प्रकीर्तितम् ॥

यं० । त्र्यंबकाय० । विमलायै० । उत्कर्षिण्यै० । ज्ञानायै० । क्रियायै० । योगायै० । प्रह्व्यै० । सत्यायै० । ईशानायै० । अनुग्रहायै० । गरुडाय० । इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । सोमाय० । ईशानाय० ॥ २४ ॥ ततः केवलपायसेन एकैकामाहुतिं जुहुयात् ॥ (तद्यथा) ॥ केशवाय० । नारायणाय० । माधवाय० । गोविंदाय० । विष्णवे० । मधुसूदनाय० । त्रिविक्रमाय० । वामनाय० । श्रीधराय० । हृषीकेशाय० । पद्मनाभाय० । दामोदराय० । (अधिके) पुरुषोत्तमाय० । संकर्षणाय० । वासुदेवाय० । प्रद्युम्नाय० । अनिरुद्धाय० । पुरुषोत्तमाय० । अधोक्षजाय० । नारसिंहाय० । अच्युताय० । जनार्दनाय० । उपेन्द्राय० । हरये० । श्रीकृष्णाय० । (अधिके) पुरुषोत्तमाय नमः ॥ इति ॥ २६ ॥

॥ अथ पीठदेवताहोमः ॥

मंडूकादिदेवेभ्यः प्रणवाद्यैर्नमोन्तकैस्तत्तन्नामाभिः प्रत्येकमाज्येनाहुतिर्जुहुयात् ॥ यथा-ह्रीं मंडूकाय नम इदं मंडूकाय नमम (एवं सर्वत्र) मूलप्रकृत्यै० । आधारशक्त्यै० । कूर्माय० । अनन्ताय० । पृथिव्यै० । श्वेतद्वीपाय० । कल्पवृक्षाय० । रत्नमंडपाय० । सिंहासनाय० । अधर्माय० । अज्ञानाय० । अवैराग्याय० । अनैश्वर्याय० । आत्मने० । अन्तरात्मने० । परमात्मने० । ज्ञानात्मने० । अग्निमंडलाय० । सोममंडलाय० । सूर्यमंडलाय० । सत्त्वाय० । रजसे० । तमसे० । सर्वशक्तिकमलासनाय० ॥ इति ॥

ततो ब्रह्मादिदेवतानां होमम् (पृ. १६६) आज्यस्यैकैकयाऽऽहुत्या विधाय ततः फलहोमं गुग्गुलहोमं लक्ष्मीहोमं व्याहृतिहोमं (१६८–१६९) च कृत्वा देवाय प्रापणं निवेदयेत् ॥

॥ अथ प्रापणनिवेदनम् ॥

तत्रादौ यजमानो देवाय प्रापणं निवेदयेत् ॥ तत्र मंत्रः ॥ त्वामेकमाद्यं पुरुषं पुराणं नारायणं विश्वसृजं भजामः ॥ त्वयैव भागो

विहितो विधेयो गृहाण हव्यं जगतामधीश ॥ १ ॥ इति प्रापणं निवेद्य तिष्ठेत् ॥ ततोऽग्निं त्रिवारं चतुर्वारं वा प्रदक्षिणीकृत्य ॥ "भिन्धि विश्वात्मने नमः" इति धरण्यां जानुनी निपात्य ॥ ध्रुवसूक्तं पुरुषसूक्तं च पठेत् ॥ ध्रुवसूक्तं–ध्रुव त्वं ध्रुवकर्ता त्वं ध्रुवदेवो महाबलः॥ अचलं कुरु कल्याणं ध्रुवागच्छ नमोऽस्तु ते ॥ १ ॥ इति ध्रुवसूक्तम् ॥ पुरुषसूक्तं तु ( पृ. ५६–५९ ) पूर्वं कथितं तत् पठित्वा ततो अष्टौ पदानि ईशानकोणमारभ्य प्रतिदिशं गच्छेत् ॥ तत्र मंत्राः ॥ कृष्णाय वासुदेवाय हरये परमात्मने ॥ शरण्यायाप्रमेयाय गोविंदाय नमो नमः ॥ १ ॥ नमः स्थूलाय सूक्ष्माय व्यापकाव्यापकाय च ॥ अनन्ताय जगद्धात्रे ब्रह्मणेऽनन्तमूर्त्तये ॥ २ ॥ अव्यक्तायाखिलेशाय चिद्रूपाय गुणात्मने ॥ नमो मूर्त्ताय सिद्धाय पराय परमात्मने ॥ ३ ॥ देवदेवाय वंद्याय पराय परमेष्ठिने ॥ कर्त्रे विश्वस्य गोप्त्रे च तत्संहर्त्रे च ते नमः ॥ ४ ॥ इति प्रदक्षिणं कृत्वा ततो देवाय निवेदितं प्रापणं गृहीत्वा मूर्ध्नि कृत्वा उच्चैर्वदेत् ॥ के वैष्णवाः॥ के वैष्णवाः ॥ के वैष्णवाः॥१॥ इत्युच्चैर्वदेत् ॥ ततः समानाः प्रतिवदेयुः॥ वयं वैष्णवाः॥ वयं वैष्णवाः ॥ वयं वैष्णवाः ॥ इति प्रतिवदेयुः ॥ ततस्तेभ्यः समानेभ्यो हविर्दत्वा स्वयं "ह्रीं नमो भगवते वासुदेवाय" इति मंत्रेण इदमहममृतं प्राश्नामीति प्राश्य ॥ आचम्य ॥ वेदिसमीपमागत्य यजमानः आचार्यो वा "सिद्धये नमः" इत्यग्नौ आज्यं जुहुयात् ॥ तत "इन्द्राय नमः" इति आत्मानमभिमंत्र्य ॥ स्थापितदेवतानामुत्तरपूजनं कुर्यादिति ॥ एवं स्थापितदेवतानामुत्तरपूजनादिप्रणीता-

---

१ दुग्धे पाचिततंडुलाः । २ आठ आठ पगलां चार दिशामां भरवां ॥
३ बे हाथ वडे पकडीने प्रापणना पात्रने मस्तक पर राखवुं ।

विमोकान्तं कर्म ( १६९–१८८ ) कृत्वा " गच्छ गच्छ सुरश्रेष्ठ० " इति अग्निं विसृज्य तत्रत्यदेवता विसर्जयेत् ॥ इति होमविधिः ॥

ततः प्रधानदेवतादिकं पूजयेत् ॥ यथा मंडपसमीपमागत्य शुभासने उपविश्य आचम्य प्राणानायम्य गणपतिं गौर्यादिकं च पंचोपचारैः संपूज्य ॥ "लक्ष्मीनारायणाभ्यां नमः" इति मंत्रेण गंधं पुष्पं धूपं दीपं नैवेद्यादिकं समर्प्य ॥ महानीराजनं कृत्वा पुष्पांजलिं समर्प्य प्रार्थयेत् ॥ ततो जलमादाय अनया पूजया श्रीसूर्यमण्डलान्तर्वर्तिजगद्वीजश्रीलक्ष्मी नारायणौ प्रीयेताम् ॥ तत आचार्यादिपूजनं दानादिकं च कुर्यात् ॥

॥ आचार्यादिपूजनं दानविधिश्च ॥

॥ जलमादाय ॥ अद्येत्यादि० कृतस्य शुक्लकृष्णैकादशीव्रतोद्यापनाख्यस्य कर्मणः सांगतासिद्ध्यर्थमाचार्यादीन् वस्त्रतांबूलदक्षिणादिभिः पूजयिष्ये ॥ आचार्यं संपूज्य दक्षिणादिभिः प्रतोष्य ब्रह्माणं संपूजयेत् ॥ आचार्याय श्वेतां सवत्सां सालंकारां गांवा गोनिष्क्रयभूतं द्रव्यं दद्यात् ॥ ब्रह्मणे अनडुन्निष्क्रयीभूतं द्रव्यं दद्यात् ॥ कृतस्य कर्मणः सांगतासिद्ध्यर्थं ताम्रपात्रं रुद्रदेवतं तिलपूरितं कांस्यपात्रं घृतपूरितं सूर्यदैवतं च ताम्रपात्रं वरुणपूरितं वरुणदैवतं च (कस्मैचिद्ब्राह्मणाय) तुभ्यमहं संप्रददे ॥ एवं पददानं सुखशय्यादानं उमामाहेश्वरवस्त्राणि छत्रोपानद्दानं छायापात्रदानं च दद्यात् ॥ (ततो यजमानः षड्विंशतिसंख्याकान् ब्राह्मणान् सपत्नीकान् केशवादिषड्विंशतिदेवतास्वरूपान् विभाव्य केशवादिपूर्वोक्तनामभिः पृथक् पृथक् यथाविभवं संपूज्य संभोज्य भोजनोत्तरं तेभ्यः सौभाग्यवस्त्रदक्षिणायुतानि षड्विंशतिवंशपात्राणि तथा च षड्विंशतिकुंभान् दद्यात् )॥ (तद्यथा) हस्ते जलमादाय-कृतस्य कर्मणः सांगतासिद्ध्यर्थं इमानि षड्विंशतिवंशपात्राणि स-

दक्षिणानि च षड्विंशतिकुंभान् पक्वान्नपूरितान् वस्त्रतांबूलदक्षिणादिसहितान् नानागोत्रेभ्यो ब्राह्मणेभ्यः सपत्नीकेभ्यो विभज्य विभज्य यथाकाले दास्ये ॥ दानमंत्रः॥ "पक्वान्नपूरितान् कुंभान् दक्षिणावस्त्रसंयुतान्॥ ददामि द्विजवर्याय श्रीकृष्णः प्रीयतामिति ॥ ततो दक्षिणासंकल्पः ॥ जलमादाय ॥ अद्येत्यादि० कृतस्य कर्मणः सांगतासिद्ध्यर्थं एतेभ्यो ब्राह्मणेभ्यो यथोत्साहं दक्षिणां दास्ये ॥ इति संकल्प्य तेभ्यो दक्षिणां दद्यात्॥ब्राह्मणभोजनसंकल्पः॥जलमादाय॥अद्येत्यादि०॥कृतस्य कर्मणः सांगतासिद्ध्यर्थं यथासंख्याकान् ब्राह्मणान् सुवासिनीर्वटुकान्कुमारिकाः षड्विंशतिदांपत्यानि चाद्याहं वा यथाकाले भोजयिष्ये ॥ ततो मंडलदानम् ॥ जलमादाय ॥ अद्येत्यादि०। कृतस्य कर्मणः सांगतासिद्ध्यर्थं इदं मंडलं सोपस्करं लक्ष्मीनारायणप्रतिमासमन्वितं महाविष्णुप्रीतये आचार्याय तुभ्यमहं संप्रददे ॥ इति संकल्प्य आचार्याय दद्यात् दानोपरि दक्षिणां च दद्यात् ॥ भूयसीदक्षिणासंकल्पः ॥ अद्येत्यादि० तिथौ कृतकर्मणि न्यूनातिरिक्तदोषपरिहारार्थं नानागोत्रेभ्यो ब्राह्मणेभ्यो भूयसीदक्षिणां दास्ये इति दत्त्वा तेभ्य आशिषो गृहीत्वा अक्षतान् गृहीत्वा- "यान्तु देवगणाः सर्वे पूजामादाय मामकीम्॥ इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ १ ॥" देवाः स्वस्वस्थाने गच्छत ॥ शुभे कर्मणि पुनरागमनमस्तु ॥ इति देवता विसृज्य ततः प्रधानकलशोदकमेकस्मिन् पात्रे गृहीत्वा यजमानं सपत्नीकं "सुरास्त्वा०" इत्यादिपूर्वोक्तमंत्रैः(पृष्ठ२६) अभिषिंचेत् ॥ ततः स्नातो यजमानः प्रार्थयेत् ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम् ॥ १ ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ २ ॥ जपच्छिद्रं तपश्छिद्रं

यच्छिद्रं व्रतकर्मणि ॥ पूर्णं भवतु यच्छिद्रं ब्राह्मणानां प्रसादतः ॥२॥ इति संप्रार्थ्य ॥ अच्छिद्रं भवतु ते व्रतमिति ब्राह्मणाः प्रतिवदेयुः ॥ ततस्तान्नमस्कृत्य इष्टजनैः सह भुंजीत ॥ इति ॥

॥ इति शुक्लकृष्णैकादशीव्रतोद्यापनविधिः ॥

---

## ॥ अथ तुलसीविवाहप्रयोगः ॥

"अथ प्रयोगः" तुलसीविवाहदिने प्रातर्नित्यकर्म समाप्य पूर्ववत् मंडपादिकं कुर्यात् । ततः शुभासने उपविश्याचम्य शांतिपाठपठनपूर्वकं

---

१ तुलसीविवाहविधिः रामार्चनचन्द्रिकायां द्वादश्यामुक्तः । तुलसीविवाहस्य नवम्यादिदिनत्रये एकादश्यादिपूर्णिमान्ते यत्र क्वापि दिने कार्तिकशुक्लान्तर्गतविवाहनक्षत्रेषु वा विधानात् पूर्वरात्रौ कार्यः ॥ प्रबोधोत्सवात् पृथक् चिकीर्षायां कालान्तरे वा कार्यः ॥ विष्णुयामले ॥ आदावेवाथ तुलसीं वने वा स्वगृहेऽपि वा ॥ मासमात्रेण संवर्ध्य ततो यजनमारभेत् ॥ १ ॥ सौम्यायने प्रकर्तव्यं गुरुशुक्रोदये तथा ॥ अथवा कार्तिके मासि भीष्मपंचदिनेऽपि वा ॥ २ ॥ वैवाहिकेषु ऋक्षेषु पूर्णिमायां विशेषतः ॥ मंडपं कारयेत्तत्र कुंडवेद्यौ विवाहवत् ॥ ३ ॥ ब्राह्मणं देशिकं चैव चतुरश्च तथार्त्विजः ॥ ग्रहयज्ञं पुरस्कृत्य मातॄणां यजनं तथा ॥ ४ ॥ कृत्वा नान्दीमुखश्राद्धं सौवर्णं स्थापयेद्धरिम् ॥ कृत्वा तु रौप्यतुलसीं लग्ने ह्यस्तमिते रवौ ॥५॥ संपूज्यालंकृतां तां च प्रदद्याद्विधितो हरेः ॥ साधुमुच्चारयेत्पूर्वं त्वं सोम विप्रं तथा ॥६॥ ये तीर्थानीतिमन्त्रेण पादप्रक्षालनं तथा ॥ ये वृक्षेष्वितिमन्त्रेण अर्घं दद्याद्यथाविधि ॥ ७ ॥ मधुव्वातेत्यृचैवैव मधुपर्कं समर्पयेत् ॥ वस्त्रयुग्मेन संवेष्ट्य कार्यं कामदुघेति च ॥ ८ ॥ यज्ञोपवीतीमन्त्रेण ब्रह्मसूत्रं समर्पयेत् ॥ वैयाघ्रपादगोत्राय वासुदेववराय च ॥ ९ ॥ जातूकर्ण्यसगोत्रां तां तुलसीं च समर्पयेत् ॥ एवमेव तुलस्याश्च वस्त्राभरणानि दापयेत् ॥ १० ॥ आदाय माधवं विष्णुं तुलस्याः सन्निधौ न्यसेत् ॥ आज्यं ददाति मन्त्रेण करग्रहो

देवब्राह्मणान् नमस्कृत्य सुमुखश्चेत्यादि पठित्वा। जलमादाय-अद्येत्यादि० तिथौ ममात्मनः सर्वविविधपातकशमनपूर्वकं पुत्रपौत्राद्यनविच्छिन्नसन्ततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारासदभीष्टसिद्ध्यर्थं श्रीमहाविष्णुप्रीत्यर्थं तुलसीविवाहं करिष्ये। तदंगभूतं निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारां नान्दीश्राद्धं आचार्यादिवरणं दिग्रक्षणं पंचगव्यकरणं भूमिपूजनमग्निस्थापनं नवग्रहस्थापनपूजनादीनि करिष्ये ॥ इति संकल्पयेत् ॥ तत्रादौ दिग्रक्षणादि आचार्यवरणादि ( पृ. ६–४५ ) कर्म कृत्वा अग्निप्रतिष्ठापनादि ग्रहहोमान्तं ( पृ. १४१–१६४ ) कर्म कुर्यात् ॥

ततः सूर्यास्तसमये तुलस्या आलवालपरितो मंडपं कृत्वा विवाहवत्तत्र तुलसीपुरतो वेदीं कृत्वा तुलस्या हरिद्रारोपणादि कृत्वा वेद्यां सर्वतोभद्रमंडलं पूरयित्वा तस्मिन्मण्डले ब्रह्मादिदेवान् (पृ. ९९–१०७) मूलमन्त्रेणावाह्य पंचोपचारैः संपूज्य मध्ये ताम्रमयकलशं पूर्णपात्रान्तं कृत्वा स्थापयेत्। ततो हैमं विष्णुं विष्णुमन्त्रेण रौप्यमयीं तुलसीं च "तुलसि श्रीसखि सौम्ये पापहारिणि पुण्यदे ॥ नमस्ते नारदनुते नारायणमनःप्रिये ॥ १ ॥" इति मंत्रेण स्थापयेत् ॥ ततस्तुलसीविवाहांगतया ( पुरुषसूक्तेन ) महाविष्णुपूजां तुलसीपूजां च

---

विधीयते ॥ ११ ॥ कर्तव्यश्च ततो होमो विशेषाद् विधिपूर्वकम् ॥ आचार्यो वेदिकाकुण्डे जुहुयाच्च नवाहुती ॥ १२ ॥ यजमानः सपत्नीकः सहामात्यैश्च गोत्रजैः ॥ प्रदक्षिणां प्रकुर्वीत चतस्रो विष्णुना सह ॥ १३ ॥ पठेयुः शान्तिकाध्यायं तथा वैष्णवसंस्तवान् ॥ गायन्तु मंगलं नार्यो भेरितूर्यादिनिस्वनैः ॥१४॥ तां पीठं च तथा शय्यामाचार्याय निवेदयेत्॥ ऋत्विग्भ्यो दक्षिणां दद्यात्सदन्नैर्भोजयेद् द्विजान्॥१५॥एवं प्रतिष्ठितां देवीं विष्णवे यः समर्पयेत्॥ आजन्मार्जितात्पापान्मुच्यते नात्र संशयः॥१६॥

करिष्ये ॥ इति संकल्प्य तत्रादौ न्यासान् कुर्यात् ॥ यथा—नं पादाभ्यां नमः। मों जानुभ्यां०। भं कटिभ्यां०। गं नाभ्यै०। वं हृदयाय०। तें बाहुभ्यां०। वां कंठाय०। सुं मुखाय०। दें नेत्राभ्यां०। वां ललाटाय०। यं मूर्ध्ने०। एवं न्यासान्कृत्वा श्रीमहाविष्णुदामोदरं च श्रीदेवीं तुलसीमावाहयामि। इत्यावाह्य ॥ "श्रीमहाविष्णवे दामोदराय श्रीतुलस्यै देव्यै च नमः" इति मूलमंत्रेण आसनमित्यादि स्नानान्ते मंगलवाद्यैः सुगंधितैलहरिद्राभ्यां नागवल्लीदलगृहीताभ्यामुष्णोदकेन च मंगलस्नानं विष्णवे तुलस्यै च सुवासिनीभिः कारयित्वा स्वयं वा दत्वा पंचामृतस्नानं समर्प्य शुद्धोदकेनाभिषिंच्य वस्त्रयज्ञोपवीतचंदनं दत्वा ॥ तुलस्यै हरिद्राकुंकुमकंठसूत्राद्यलंकारान्दत्वा पुष्पादिमंत्रपुष्पांजलिपर्यन्तं द्वयोः पूजनं कार्यम् ॥ "अथ घंटादिवाद्यघोषेण देवं प्रबोधयेत्" ब्रह्मेन्द्ररुद्राग्निकुबेरसूर्यसोमादिभिर्वंदित वंदनीय। बुध्यस्व देवेश जगन्निवास मंत्रप्रभावेण सुखेन देव ॥ १ ॥ इयं च द्वादशी देव प्रबोधार्थे विनिर्मिता। त्वयैव सर्वलोकानां हितार्थे शेषशायिना ॥२॥ उत्तिष्ठोत्तिष्ठ गोविंद त्यज निद्रां जगत्पते। त्वयि सुप्ते जगत्सुप्तमुत्थिते चोत्थितं जगत् ॥ ३ ॥ (एवमुत्थाप्य)। गता मेघा वियच्चैव निर्मलं निर्मला दिशः। शारदानि च पुष्पाणि गृहाण मम केशव ॥ ४ ॥ इति मंत्रेण पुष्पांजलिं दद्यात् ॥ इति ॥

अथाचारात्तुलसीसंमुखां श्रीकृष्णप्रतिमां कृत्वा गोधूललग्ने मध्येऽन्तःपटं धृत्वा विवाहवन्मंगलाष्टकपद्यानि पठित्वाऽन्तःपटं निः-

---

१ या दृष्टा निखिलाघसंघशमनी स्पृष्टा वपुः पावनी रोगाणामभिवंदिता निरसनी सिक्ताऽन्तकत्रासिनी ॥ प्रत्यासत्तिविधायिनी भगवत कृष्णेन संरोपिता न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नम ॥

सार्य अक्षतप्रक्षेपं कृत्वा सुप्रतिष्ठितमस्तु । ततो मधुपर्कं (पृ. ३९-४३) पूर्वोक्तरीत्या कुर्यात् ॥ " अथ गोत्रोच्चारः " —व्याघ्रपादसगोत्रस्य व्याघ्रपादगर्गवशिष्ठेति त्रिप्रवरस्य देवमीढवर्मणः प्रपौत्राय । व्याघ्रपादसगोत्रस्य व्याघ्र० त्रिप्र० देवशूरसेनवर्मणः पौत्राय । व्याघ्रपादसगोत्रस्य व्याघ्र० त्रि०प्र० वासुदेववर्मणः पुत्राय बालकृष्णनाम्ने वराय ॥ आलंबायनस ( वा जातुकर्ण्यस ) गोत्रस्य आलम्बायनदेवलगौतमेतित्रिप्रवरस्य विश्वकारवर्मणः प्रपौत्रीम् । आलंबायनसगोत्रस्य आलम्बा० त्रिप्र० दक्षप्रजापतिवर्मणः पौत्रीम् । आलंबायनसगोत्रस्य आलम्बा० त्रिप्र० ईश्वरवर्मणः पुत्रीं तुलसीनाम्नीं कन्याम् ( वरमालामारोपयेत् ) ॥ ततः संकल्पः । श्रीमद्भगवतो० तिथौ मम समस्तपितॄणां निरतिशयानंदब्रह्मलोकावाप्त्यादितुलसीवनकल्पोक्तफलावाप्तये आत्मनः श्रेयसे यदुनाथवर्मणे वराय यदुवंशकुलतिलकाय ब्रह्मादिवंदितचरणकमलाय तुलसीनाम्नीमिमां सर्वलक्षणसंयुक्तां धर्मार्थकाममोक्षावाप्तिकामोऽहं मया संवर्धितां यथाशक्त्यलंकृतामिमां तुलसी देवीं व्याघ्रपादसगोत्राय दामोदराय श्रीधराय वराय तुभ्यमहं संप्रददे। इति देवपुरतः साक्षतं जलं क्षिपेत् ॥ ततः "श्रीमहाविष्णुः प्रीयताम्" इत्युक्त्वा इमां देवीं च गृह्णातु भवानिति वदेत् ॥ तत उभयोः कंकणं बद्ध्वा तुलस्याः देवहस्तस्पर्शं कृत्वा । ददातु पतिगृह्णात्विति अन्येन वाचयेत् ॥ यजमानः प्रार्थयेत्–देवीं कनकसंपन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥ १ ॥ त्वं देवि मेऽग्रतो भूयास्तुलसि देवि पार्श्वतः ॥ देवि त्वं पृष्ठतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम् ॥ २ ॥ कृतैतद्दानप्रतिष्ठासिद्ध्यर्थमिमां दक्षिणां तुभ्यमहं संप्रददे ॥ देवपुरतो दक्षिणामर्पयेत् ॥ इति तुलसीदानसंकल्पः॥

ततः कृतैतत्कर्मणः सांगतासिद्ध्यर्थं पुण्याहवाचनं करिष्ये इति संकल्प्य पूर्ववत् (पृ. १९–२७) पुण्याहवाचनं कुर्यात् ॥ तत आचार्यः स्थंडिले पंचभूसंस्कारपूर्वकमग्निं प्रतिष्ठाप्य। (पृ. १४९–१५२) दक्षिणतो ब्रह्मासनादिवह्निपूजनान्तं कर्म (पृ. १५९–१६२) कृत्वा प्रधानहोमं कुर्यात् ॥ तत्रादौ आघारावाज्यभागौ हुत्वा पूर्वोक्ता नवाहुतीः (पृ. १७०–१७१) जुहुयात् ॥

ततो वैष्णवहोमः–" ह्रीं विष्णवे नमः " इति मूलमंत्रेण " ह्रीं नमोभगवते केशवाय नमः" इति त्रयोदशाक्षरमंत्रेण वा एकैकामाज्याहुतिं दद्यात् ॥ ततः केशवादिदेवानुद्दिश्यैकैकामाज्याहुतिं दद्यात् ॥ तद्यथा– केशवाय०। नारायणाय०। माधवाय०। गोविंदाय०। त्रिविक्रमाय०। मधुसूदनाय०। वामनाय०। श्रीधराय०। हृषीकेशाय०। पद्मनाभाय०। पद्महस्ताय०। जगद्बीजाय०। दामोदराय०। उपेन्द्राय०। वासुदेवाय०। अनिरुद्धाय०। अच्युताय०। अनन्ताय०। गदिने०। चक्रिणे०। विष्वक्सेनाय०। वैकुण्ठाय०। जनार्दनाय०। पुंडरीकाक्षाय०। स्वयंभुवे०। मुकुन्दाय०। अधोक्षजाय०। नाथाय०। निरंजनाय०। निर्विकल्पाय०। ज्योतिषे०। निर्मलाय०। विमलाय०। भुजंगशयनाय०। शेषाय०। शंखाय०। चक्राय०। गदायै०। पद्माय०। नंदाय०। गरुडाय० ॥ ४१ ॥ इतिवैष्णवहोमः ॥

तत आज्येन "अग्नये स्विष्टकृते नम इदमग्नये स्विष्टकृते न मम" इति प्रधानहोमः। ततः सपत्नीकः सगोत्रजः सामात्यो यजमानश्वतस्रः प्रदक्षिणाः कुर्वीत ॥ " नमो देव्यै महादेव्यै शिवायै सततं नमः॥ नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ॥ " " इति मंत्रेण सप्तपदीं कृत्वा। शांतिसूक्तं पठित्वा। तूर्यादिघोषपूर्वकं यथाविभवं

१ संक्षेपमां तुलसीविवाह कर्यो होय तो होम न कर्वो एम धर्मसिंधुमां छे

विष्णुं तुलसीं च संपूजयेत् ॥ तद्यथा—अद्येत्यादि० तिथौ प्रारब्धस्य कर्मणः सांगतासिद्ध्यर्थं महाविष्णुपूजां करिष्ये ॥ तत्रादौ पूर्ववत् न्यासान्कृत्वा । "श्रीमहाविष्णवे दामोदराय नमः" इति मंत्रेण ध्यानादिदक्षिणान्तं पूजनं कुर्यात् ॥ अनया पूजया महाविष्णुः प्रीयताम् ॥ ततः प्रारब्धस्य कर्मणः सांगतासिद्ध्यर्थं तुलसीपूजां करिष्ये ॥ तत्रादौ तुलसीन्यासः—(मूले) ऋग्वेदाय०। (मध्ये) यजुर्वेदाय०। (शाखापर्णेषु) सामवेदाय० । (वृक्षमूले) ब्रह्मणे० । (मध्ये) हरये०। (शाखायां) रुद्राय०। (शाखाग्रे) इंद्राय०। (त्वचायां) सूर्याय०। (नासिकयोः)यमाय०।(हृदि)तत्त्वपद्माय०।(वामपार्श्वे) वायवे०। (दक्षिणपार्श्वे) अश्विभ्यां०।(सर्वांगेषु)शिवाय०।(हृदि)आत्मने०।प्राणाद्यावाहितदेवेभ्यो नमः ॥ एवं न्यासं विधाय पूजनमारभेत ॥ ध्यानं—ध्यायामि तुलसीं देवीं श्यामां कमललोचनाम् ॥ प्रसन्नां पद्मकल्हारवराभयचतुर्भुजाम् ॥ १ ॥ किरीटहारकेयूरकुण्डलादिविभूषिताम् ॥ धवलांशुकसंयुक्तां पद्मासननिषेदुषीम् ॥ २ ॥ इति ध्यात्वा । भगवत्यै तुलस्यै० आवाहनं सम० ॥ विष्णुवल्लभायै० आसनं सम० ॥ सर्वदेवमयायै० पाद्यं सम० ॥ सर्वतीर्थमयायै० अर्घं सम० ॥ दैत्यान्तकप्रियायै० । आचमनीयं सम० ॥ सर्वलोकहितायै० स्नानं सम०॥ महालक्ष्मीसहोदरायै० वस्त्रं सम० ॥ महादेव्यै० गंधं सम० ॥ रमावासायै० पुष्पं सम०॥ वृन्दायै० सौभाग्यद्रव्याणि सम०॥ अभीष्टदायै० धूपं सम०॥ पापहारिण्यै० दीपं सम०॥ भगवत्यै० नैवेद्यं सम० ॥ अमृतरूपिण्यै० पूजासाफल्यार्थं दक्षिणां सम० ॥ ततस्तुलसीयुताय विष्णवे महानीराजनं कृत्वा मंत्रपुष्पांजलिं दत्वा ॥ अनया पूजया तुलसीदेवीसहितमहाविष्णुः प्रीयताम् ॥ कृतस्य तुलसीविवाहाख्यस्य कर्मणः सांग-

तासिद्ध्यर्थं गोनिष्क्रयीभूतं द्रव्यमाचार्याय तुभ्यमहं संप्रददे ॥ कृतस्य तुलसी० अनडुन्निष्क्रयीभूतं द्रव्यं ब्रह्मणे तुभ्यमहं संप्रददे ॥ वृतेभ्यो ब्राह्मणेभ्यो दक्षिणां दद्यात् ॥ कृतस्य० यथासंख्याकान्ब्राह्मणान्सुवासिनीः कुमारिका बटुकान्भोजयिष्ये । तेभ्यो दक्षिणां दत्वा आशिषो गृहीत्वा मातॄणामग्नेश्च विसर्जनं कुर्यात् ॥ इति तुलसीविवाहविधिः ॥

---

## ॥ अथ वैकुण्ठचतुर्दशीव्रतम् ॥

कार्तिकशुक्लचतुर्दश्यां वैकुण्ठचतुर्दशीव्रतम् ॥ सा च अरुणोदयवती ग्राह्या ॥ उपवासस्तु पूर्वदिने ॥ मासे वै हेमलंबाख्ये मासे श्रीमति कार्तिके ॥ शुक्लपक्षे चतुर्दश्यामरुणोदयसंभवे ॥ १ ॥ महादेवतिथौ ब्राह्मे मुहूर्ते मणिकर्णिके ॥ स्नात्वा विश्वेश्वरो देव्या विश्वेश्वरमपूजयत् ॥२॥ संक्षेपं ज्योतिषस्तस्य प्रतिष्ठाख्यं तदाऽकरोत् ॥ स्वयमेव तदात्मानं चरन्पाशुपतव्रतम् ॥ ३ ॥ ततः प्रभाते विमले कृत्वा पूजां महद्भुताम् ॥ दंडपाणेर्महानाम्नि वनेऽस्मिन् कृतपारणः ॥४॥ श्रीमद्भवानीसदनं प्रविश्येदमनुत्तममिति"॥५॥ अन्यच्च ॥ 'पूर्वरात्रे तु ते पूजा कर्तव्या सर्वजातिभिः ॥ उपवासं दिवा कुर्यात्सायंकाले तवा ( शिवा )र्चनम् ॥१॥ पश्चान्ममा( विष्ण्व )र्चनं कार्यमन्यथा निष्फलं भवेत् ॥ ग्राह्या तु हरिपूजायां रात्रिव्याप्ता चतुर्दशी ॥२॥ अरुणोदयवेलायां शिवपूजां समाचरेत् ॥ तस्मात्सर्वप्रयत्नेन पूज्या हरिहरावुभौ ॥३॥ प्राप्ते कालियुगे घोरे शौचाचारविवर्जिते ॥ सहस्रकमलैः कृष्णः कृतवान् शिवपूजनम् ॥४॥ एकन्यूने नेत्रपद्मं समर्प्यार्पं सुदर्शनम् ॥५॥

॥ इति वैकुण्ठचतुर्दशीव्रतम् ॥

---

१ विशेषो व्रतराजे द्रष्टव्यः

## ॥ अथ त्रिपुरोत्सवः ॥

तत्रादौ–कार्तिक्यां पौर्णिमायां तु कुर्यात् त्रिपुरमुत्सवम् ॥ दीपो देयोऽवश्यमेव सायंकाले शिवालये ॥ स च प्रदोषव्यापिन्यां कार्यः ॥ तस्मिन् दिने सर्वदेवैर्दीपा दत्ता हराय च ॥ सर्वथैव प्रदेयोऽस्यां दीपस्तु हरितुष्टये ॥ विंशतिसप्तशतकसंमिता ( ७२० दीवेट ) दीपवर्त्तयः ॥ ददद्दीपं पौर्णमास्यां सर्वपापैः प्रमुच्यते ॥ पौर्णमास्यां तु संध्यायां कर्तव्यस्त्रिपुरोत्सवः ॥ दद्यादनेन मंत्रेण प्रदीपांश्च सुरालये ॥ दीपमंत्रः ॥ "कीटाः पतंगा मशकाश्च वृक्षा जले स्थले ये विचरन्ति जीवाः ॥ दृष्ट्वा प्रदीपं न च जन्मभागिनो भवन्ति नित्यं श्वपचा हि विप्राः" इति दीपमंत्रः ॥ कार्यस्तस्मात्पौर्णिमायां त्रिपुरस्य महोत्सवः ॥ कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ॥ सप्तजन्मभवेद्विप्रो धनाढ्यो वेदपारगः ॥ कार्तिक्यां तु वृषोत्सर्गं कृत्वा नक्तं समाचरेत् । शैवं पदमवाप्नोति शिवव्रतमिदं स्मृतम् ॥ इति त्रिपुरोत्सवः ॥

---

## ॥ अथ कार्तिकमासोद्यापनम् ॥

"अथोद्यापनविधिः"–अथोर्जव्रतिनः सम्यगुद्यापनमिहोच्यते ॥ कृते उद्यापने सांगं व्रतं भवति निश्चितम् ॥ ऊर्जशुक्लचतुर्दश्यां कुर्यादुद्यापनं व्रती ॥ तुलस्या मूलदेशे तु सर्वतोभद्रमेवच ॥ तस्योपरिष्टात्कलशं पंचरत्नसमन्वितम् ॥ पूजयेत्तत्र देवेशं सौवर्णं गुर्वनुज्ञया ॥ रात्रौ जागरणं कुर्याद्गीतवाद्यादिमंगलैः ॥ ततस्तु पौर्णमास्यां वै सपत्नीकान् द्विजोत्तमान् ॥ त्रिंशन्मितानथैकं वा स्वश-

त्त्या विनिमंत्रयेत् ॥ अतो देवा इति द्वाभ्यां होमयेत्तिलपायसम् ॥ ततो गां कपिलां दद्यात् पूजयेद्विधिवद् गुरुम् ॥ एवमुद्यापनं कृत्वा सम्यग्व्रतफलं लभेत् ॥ परा तु पौर्णमास्यत्र यात्रायां पुष्करस्य च ( इह लोके पुष्करस्य यात्रायां पौर्णमासी श्रेष्ठा )॥ वरान् दत्त्वा ( पौर्णमास्यै ) यतो विष्णुर्मत्स्यरूपोऽभवत्ततः ॥ तस्यां दत्तं हुतं जप्तं तदक्षय्यफलं स्मृतम् ॥ कार्तिक्यां पौर्णमास्यां तु विष्णुं नीराजयेत् सदा ॥ प्रदोषसमये राजन् न स दारिद्र्यमाप्नुयात् ॥ न कार्तिकसमो मासो विष्णुसंतुष्टिकारकः ॥ स्वल्पक्लेशैर्विष्णुलोकप्राप्तिकृन्नापरो भवेत् ॥ इति कार्तिकमासोद्यापनम् ॥ ॥ इति कार्तिकमासकृत्यम् ॥

---

## ॥ अथ मार्गशीर्षमासकृत्यम् ॥

अत्र धनुःसंक्रान्तौ पराः षोडश नाड्यः पुण्याः ॥ मार्गशीर्षशुक्लपंचम्यां नागपूजा दाक्षिणात्यानां प्रसिद्धा । इयं षष्ठीयुता ग्राह्येत्यादि ॥ मार्गशीर्षषष्ठी चंपाषष्ठी महाराष्ट्रेषु प्रसिद्धा ॥ इयमेव स्कंदषष्ठी सा पूर्वा ग्राह्या । अत्र तिथिद्वैधे यस्मिन्दिने रविवारभौमवारशततारकावैधृतीनां मध्येऽधिकैर्योगः सा पूर्वा परा वा मुहूर्तत्रयव्यापिनी ग्राह्या॥ दिनद्वयेऽपि योगाभावे परैव त्रिमुहूर्ता ग्राह्या ॥ विशेषस्तु व्रतराजे ॥ अथ सप्तम्यां सूर्यव्रतं तद्विधिः कौस्तुभे ॥ मार्गशुक्लत्रयोदश्याम् अनंगत्रयोदशीव्रतं तत्र अनंगस्य पूजा कार्या ॥ व्रतराजे विधिर्द्रष्टव्यः॥ मार्गशीर्षपूर्णिमायां द्वात्रिंशीपूर्णिमाव्रतम् । सा मध्याह्नव्यापिनी ग्राह्या । तत्र महादेवस्य पूजनं कार्यम् ॥ विधिस्तु व्रतराजे द्रष्टव्यः ॥ मृगशीर्षयुतायां पौर्णमास्यां लवणदानेन सुंदररूपताप्राप्तिः ।

## ॥ श्रीदत्तात्रेयपूजनविधिः ॥

मार्गशीर्षपौणमास्यां दत्तात्रेयोत्पत्तिः । इयं प्रदोषव्यापिनी ग्राह्या । तत्प्रयोगः प्रयोगरत्नकौस्तुभादौ विशेषेण ज्ञेयः ॥

कृतनित्यक्रियः सपत्नीको यजमानः शुभासने प्राङ्मुख उदङ्मुखो वोपविश्य आचम्य प्राणानायम्य ( ह्रीं नमो भगवते दत्तात्रेयाय ) इति त्रिः पठित्वा। या श्रीः स्वयं०। श्रीमन्महागणा०। सुमुखश्चैक०। इति शांतिपाठनपूर्वक देवब्राह्मणान् नमस्कृत्य हस्ते जलमादाय अद्येत्यादि० तिथौ ममाखिलपापपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं ( पुत्रपौत्राद्यनवच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थं ) योगीश्वरश्रीभगवद्दत्तात्रेयप्रीत्यर्थं सकलकामनासंसिद्ध्यर्थं ज्ञानैश्वर्यप्राप्त्यर्थं ( श्रीदत्तात्रेयजन्मोत्सवनिमित्तं श्रीगुरुदत्तात्रेयपूर्णिमायां) श्रीगुरुदत्तात्रेयपूजनमहं करिष्ये॥ पुनर्जलमादाय-तदङ्गत्वेन दिग्रक्षणं कलशार्चनं दीपपूजनं पुण्याहवाचनम् ( मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नान्दीश्राद्धम् ) आचार्यादिऋत्विग्वरणं सर्वतोभद्रमंडले अष्टदले वा देवतास्थापनं प्रधानदेवताश्रीदत्तात्रेयस्थापनं पूजनं च करिष्ये ॥ इति संकल्प्य दिग्रक्षणाद्याचार्यादिवरणान्तं कर्म (पृ. ६-४५) कृत्वा सर्वतोभद्रमण्डलदेवतास्थापनं (पृ.९९-१०१) कृत्वा तेषां पूजनं कृत्वा तदुपरि त्रिपाधारासीत्यादिना सुसंस्कृतं कलशं प्रतिष्ठाप्य तदुपरि क्षौमं वस्त्रं प्रसार्य तत्र चन्दनादिना ( त्रिकोणषट्कोणाष्टद्वादशास्त्रचतुर्दशास्त्रषोडशारभूमंदिरविशिष्टं यन्त्रं वा ) अष्टदलं विलिख्य तत्र यन्त्रदेवता आवाहयेत् ॥ (पृ.२३०)मध्ये "श्रीदत्तात्रेयाय नमः दत्तात्रेयमावाहयामि स्थापयामि"

इत्यादि वक्तव्यम् ॥ एवं यन्त्रदेवतास्थापनं(३३०) दत्तात्रेयमूर्तेरग्न्युत्तारणपूर्वकमाणप्रतिष्ठां (३३१-३२) कृत्वा मंडूकादिपीठदेवता (पृ.३३२) आवाह्य पूजयेत् ॥ ततः प्रधानदेवं श्रीदत्तात्रेयं स्थापयेत् ॥

तत्र प्राक् जलमादाय अद्येत्यादि० तिथौ प्रधानदेवतापूजनकर्माधिकारार्थं तिलकतुलसीमालाधारणपूर्वकं शंखघंटापूजन करिष्ये । इति संकल्प्य (पृ. १११-११३) तिलकादिधारणं शंखघण्टार्चनं च कुर्यात् ॥ ततः केशवादिन्यासान् (पृ.३३५-३६) कुर्यात् ॥

ततो भूशुद्ध्यादिन्यासादिसहितपात्रासादनं कर्तव्यं चेत् (पृ. ११४-१३६) कर्तव्यम् ॥ ततो राजोपचारपूजां कुर्यात् ॥

॥ राजोपचारपूजा ॥

दत्तात्रेयध्यानम् ॥ विभुर्नित्यानंदः श्रुतिगणशिरोवेद्यमहिमा यतो जन्माद्यस्य प्रभवति स मायागुणवतः ॥ सदाधारः सत्यो जयति पुरुषार्थैकफलदः सदा दत्तात्रेयो विहरति मुदा ज्ञानलहरिः ॥ १ ॥

अन्तर्यामिणमेकमव्ययमजं ज्ञानप्रदं मुक्तिदं
भक्तेभ्योऽभयदं दिगंबरतनुं सर्वत्रगं निर्गुणम् ॥
योगीशं भवसिंधुतारकमतिज्योतिःस्वरूपं परं
ध्याये दत्तवरं सदत्रितनयं भक्त्या वरेण्यं विभुम् ॥ १ ॥

ब्रह्मानन्द परमसुखद केवल ज्ञानमूर्तिं द्वन्द्वातीत गगनसदृश तत्त्वमस्यादिलक्ष्यम् । एक नित्य विमलमचल सर्वधीसाक्षिभूत भावातीत निगुणरहित सद्गुरु त नमामि ॥ १ ॥ आनन्दमानन्दकर प्रसन्न ज्ञानस्वरूप निजबोधरूपम् ॥ योगीन्द्रमोड्य भवरोगवैद्य श्रीसद्गुरु नित्यमहं नमामि ॥२॥ नमो गुरुभ्यो गुरुपादुकाभ्यो नम परेभ्यो परपादुकाभ्य ॥ आचार्य सिद्धेश्वरपादुकाभ्यो नमोऽस्तु लक्ष्मीपतिपादुकाभ्य ॥ ३ ॥

---

१ यन्त्र न कृत चेद्यन्त्रदेवतावाहनपूजन न कर्तव्यम् ॥ २ अत्र दत्तात्रेयपूजाधिकारसिद्ध्यर्थम् इति वक्तव्यम् ॥ ३ दत्तात्रेयपूजन करिष्ये ॥ दत्तात्रेयकलशपात्राधारायेत्यादि वक्तव्यम् ॥ ४ ग्रन्थकाररचितेय पूजा ॥

इति ध्यात्वा पूजनादिकं कुर्यादिति ।
आवा०-तेजोमयं दिव्यवपुर्धरं प्रभुं ज्ञानामृतानन्दयुतं वरेण्यम् ॥
आवाहयाम्यत्र सुपूजनार्थं श्रीदत्तदेवं शिरसा प्रणम्य ( सहस्र० )॥३॥
भगवते श्रीदत्तात्रेयाय नमः दत्तात्रेयम् आवाहयामि ॥
आस०-योगस्थसिद्धासनपद्मासनं कृत्वा परां सिद्धिमुपागताय ते ॥
सुशोभनं दत्तवराय दिव्यं दत्तं गृहाणासनमत्र देव ( पुरुष० ) ॥ ४ ॥
पाद्यम्—सुनिर्मलं शीतलवारियुक्तं ह्युष्णोदकं सर्वसुगन्धमिश्रितम् ॥
पादोदकं रौप्यसुपात्रसंस्थितं गृहाण भक्त्या परिकल्पितं ते(एतावा०)॥५॥
अर्घ्यम्—सुगन्धिपुष्पैः सुफलैश्च संयुतं हिरण्ययुक्तं सजलं मनोहरम् ॥
सुवर्णपात्रस्थमिदं प्रभो मया दत्तं गृहाणार्घ्यमलौकिकं ते (त्रिपादू०)॥६॥
आच०—अनेकतीर्थेभ्य उत प्रयत्नादानीतमच्छं सुसुगन्धयुक्तम् ॥
सुस्वादु देवाचमनार्थमेतज्जलं च तेनाचमनं कुरुष्व (ततोवि०) ॥७॥
मधु०—मध्वाज्ययुक्तं रमणीयमेवं दध्ना समेतं श्रमहारिणं च ॥
समर्पितं ते मधुपर्कमेतं गृहाण तेन स्नपनं कुरुष्व (यन्मधु०) ॥ ८ ॥
पय०—श्रीकामधेनूद्भवमत्र शीतलं देवर्षिपित्र्यादिसुतृप्तिकारकम् ॥
सुयज्ञहेतुः पय एतदेव स्नानार्थमङ्गीकुरु दत्तदेव ( पयःपृ० ) ॥ ९ ॥
दधि०—पयःसमुद्भूतमहो शशिप्रभं सुस्वादु चाम्लं मधुरं सुवासितम् ॥
प्रेम्णा मयाऽऽनीतमिदं दधि प्रभो! स्नानं गृहीत्वा कुरु देवदेव (दधिक्रा०)
घृत०—सर्वप्रियं देवजनस्य भक्षणं यज्ञोपयोग्यं नवनीतजातकम् ॥
आज्यं पवित्रं ननु दत्तदेव स्नानार्थमानीतमिदं गृहाण (घृतंमि०)॥११॥
मधु०—सर्वौषधीनां परतत्त्वयुक्तं सुधासमं दिव्यमनोहरं परम् ॥

१ भगवते दत्तात्रेयाय नमः आसनम्, पाद्यम्, समर्पयामि इत्यादिकं सर्वोपचारेषु वक्तव्यम् ॥ २ वेदोक्तमन्त्रैः पूजा कर्तव्या चेत् ( सहस्र० ) इत्यादिपुरुषसूक्तमंत्रैः पूजा कर्तव्या ॥

मधु प्रभो स्वादुतरं गृहाण स्नानार्यमेतन्मनसा मयाऽर्पितम् (मधुव्वा०)
शर्करा०—इक्षूद्भवां स्वादुतरां मनोहरां सुपुष्टिदात्रीं जनतातनूनाम् ॥
सितां मया तेऽर्पितशर्करां प्रभो स्नानं गृहीत्वा कुरु दत्तदेव(अपाᳪ०)१३
गन्धो०—गन्धोदकं शीतलमेतदेव प्रेम्णा मयाऽऽनीतमतिप्रकृष्टम् ॥
समर्पितं दत्तवराय तुभ्यं स्नानं कुरुष्व त्वमनेन देव (गन्धर्व०)॥१४॥
उद्वर्त०—सुचन्दनाक्तं सुसुगन्धयुक्तं सुगन्धितैलेन समन्वितं यत् ॥
तदेतदुद्वर्तनमत्र देव दत्तं कुरु स्नानमनेन नाथ (अᳪशु०) ॥ १५ ॥

ततः "नमो भगवते दत्तात्रेयाय" इति मन्त्रेण पंचोपचारैः संपूज्य उत्तरे निर्माल्यं विसृज्य पुनः गन्धाक्षतपुष्पैर्देवं सपूज्य पुरुषसूक्तेन (पृ. ५६-५८) दुग्धमिश्रितजलेन जलधारां पातयन्नभिषेकं कुर्यात् ॥ ततः शुद्धोदकस्नानम् ।

शुद्धो०—शुद्धोदकं स्वच्छतरं पवित्रं गंगादिकप्रार्थनया समाहृतम् ॥
भक्त्या मया तेऽर्पितमेतदेव स्नानं कुरुष्व त्वमनेन देव (तस्माद्य०शुद्धवा०)
वस्त्रो०—शुभ्रे स्फुरत्कांतियुते वरिष्ठे वस्त्रोपवस्त्रे मनसा मयाऽर्पिते ॥
पीताम्बरे ते परिधानयोग्ये दत्ते गृहीत्वा परिधेहि दत्त (तस्मात्र०)॥१७॥
यज्ञो०—वेदोक्तमन्त्रैस्तु सुनिर्मितं विभो सुतन्तुभिर्वै नवभिः समन्वितम् ॥
ब्रह्मादिदेवप्रणवाद्यधिष्ठितं यज्ञोपवीतं परिधेहि दत्त (तस्माद०)॥१८॥
अलं०—सुवर्णमाणिक्यसुरत्ननिर्मितैराभूषणैर्भूषय देव देहम् ॥
मयार्पितैर्दत्त गुरो कृपालो योगीश कल्याणमयो कुरुष्व ॥ १९ ॥
माला—माणिक्यमुक्तारुणपद्मरागैर्गोरत्नवैडूर्यसुविद्रुमैश्च ॥
मणिप्रभाभिः समलंकृतां विभो गृहाण मालां गुरुदेवदत्त ॥ २० ॥
गन्ध—काश्मीरपाटीरसुचन्दनाक्तं सौगन्धिकं मण्डनकारकं च ॥
गन्धं सुकर्पूरसमन्वितं प्रभो ज्ञानप्रद त्वं मनसा गृहाण (तंयज्ञं०)॥२१ ॥

कुंकुमं—अनेकगन्धान्वितचारुकुंकुमं रक्तं शुभं स्वस्तिकरं जनानाम् ॥
गृहाण चात्रेय सुचन्दनार्थं मयाऽर्पितं ते जगदीश्वराय ॥२२॥

कज्जलं—कान्त मनोहारि सुकज्जलं शुभं सुगंधसंयुक्तमिदं तु कृष्णम् ॥
गृहाण देवाधिपते त्वदर्थं नेत्राञ्जनार्थाय मया प्रदत्तम् ॥ २३ ॥

अक्ष०—रक्ताक्षतैश्चन्दनकुंकुमाक्तैः कल्याणकृद्भिः सततं जनानाम् ॥
करोमि ते पूजनमत्र नाथ गृहाण पूजां भगवन्नमस्ते (अक्षत०)॥२४॥

पुष्पा०—पुन्नागजातीबकुलाब्जपुष्पैर्बिल्वप्रवालैस्तुलसीसमन्वितैः ॥
श्रीपारिजातादिसमुद्भवैश्च करोमि पूजां भगवन् गृहाण (यत्पुरु०)॥२५॥

॥ अथाङ्गपूजा ॥

वामहस्ते गंधपात्रं गृहीत्वा दक्षिणेनार्चयेत् ॥ यथा—दत्तात्रेयाय नमः पादौ पूजयामि ॥ १ ॥ अत्रिसुताय० गुल्फौ पू० ॥ २ ॥ योगिराजाय० जानुनी पू० ॥ ३ ॥ अनंतदृशे० जङ्घे पू० ॥ ४ ॥ जनार्दनाय० कटी पू० ॥ ५ ॥ दयानिधये० मेढ्रं पू० ॥ ६ ॥ कलानिधये० नाभिं पू० ॥७॥ खंब्रह्मस्वपात्मने० हृदयं पू० ॥८॥ अरण्यवासकाय० कण्ठं पू० ॥ ९ ॥ सोमभ्रात्रे० बाहू पू० ॥ १० ॥ कर्मसाक्षिणे० मुखं पू० ॥ ११ ॥ विश्वम्भराय० जिह्वां पू० ॥ १२ ॥ सनातनाय० दन्तान् पू० ॥ १३ ॥ ज्ञानिने नमः नेत्रे पू० ॥ १४ ॥ त्रैलोक्यमोहनाय०ललाटं पू० ॥१५॥ आनन्दमूर्तये०शिरः पू०॥१६॥ श्रीपादवल्लभाय० सर्वाङ्गं पू० ॥ १७ ॥

ततस्तुलसीं (पृ. ६२) संपूज्य दत्तसहस्रनामभिर्विष्णुसहस्रनामभिर्भगवतोऽष्टोत्तरनामभिर्वा (पृ. ८७-८८) तुलसीदलान्यर्पयेत् ॥

## ॥ श्रीदत्तात्रेयाष्टोत्तरशतनामानि ॥

१ श्रीअनसूयानन्दनाय नमः
२ भक्तकामकल्पद्रुमाय नमः
३ विघ्नांबुधिशतभास्कराय नमः
४ धूल्यङ्कितततनुधूसराय नमः
५ सुरनरमुनिकिन्नरनुताय नमः
६ यज्ञयागजपतोषिताय नमः
७ दण्डकमण्डलुशोभिताय नमः
८ भुक्तिमुक्तिसौख्यप्रदाय नमः
९ संसाराम्बुधिपारणाय नमः
१० कलिकल्मषसुविदारणाय नमः
११ भागीरथ्यवगाहनाय नमः
१२ कोल्हापुरभिक्षाटनाय नमः
१३ गिरिवरसानुकृतालयाय नमः
१४ मातापुरशयनालयाय नमः
१५ सुरनरमुनिवरदेशिकाय नमः
१६ सर्वधर्मविनायकाय नमः
१७ गीतरागनृत्यप्रियाय नमः
१८ सर्वकर्मसाक्ष्यक्रियाय नमः
१९ स्वधर्मपालनरतनुताय नमः
२० बाह्याडम्बरवर्जिताय नमः
२१ भूतप्रेतविद्रावकाय नमः
२२ नित्यसत्यप्रचारकाय नमः
२३ कर्पटकंथाधारकाय नमः
२४ विद्यावारिधिमौक्तिकाय नमः
२५ जारणमारणमारणाय नमः
२६ उच्चाटनविनाशनाय नमः
२७ ग्रहपीडनविनिवारणाय नमः
२८ आधिव्याधिविदारणाय नमः
२९ दारिद्र्यर्णविमोचनाय नमः
३० आनंदाम्ध्युन्मज्जनाय नमः
३१ जर्जरवन्ध्यासुतप्रदाय नमः
३२ दीन'रक्ष' शान्तिप्रदाय नमः
३३ दाहभूमिस्थक्रीडनाय नमः
३४ नूतनभस्मविभूषिताय नमः
३५ अवधूताभिधसंस्तुताय नमः
३६ निगमागमसारस्वताय नमः
३७ दयादानदमशिक्षकाय नमः
३८ विश्वंभरसुदिगंबराय नमः
३९ लाभालाभसमप्रियाय नमः
४० चेलकुचेलसमप्रियाय नमः
४१ बालोन्मत्तपिशाचकाय नमः
४२ रेवातीरपरिक्रमाय नमः
४३ परमहंसपरिव्राजकाय नमः
४४ नग्नोन्मत्तक्षपणकाय नमः
४५ आत्मशास्त्रविशारदाय नमः
४६ आशापाशविनिर्गताय नमः
४७ सदा सर्वदा निर्मलाय नमः
४८ धूतचित्तनिरामयाय नमः
४९ कर्मबाह्यकर्मप्रियाय नमः
५० धर्मबाह्यधर्मप्रियाय नमः
५१ कर्माकर्मविवर्जिताय नमः
५२ धर्माधर्मविवर्जिताय नमः
५३ मानामानाकम्पिताय नमः
५४ रागद्वेषावञ्चिताय नमः

| | | | |
|---|---|---|---|
| ५५ मेघाडम्बरश्यामलाय | नमः | ८२ नानारूपविभूषिताय | नमः |
| ५६ श्रीपादश्रीवल्लभाय | नमः | ८३ आत्रेयानंदप्रदाय | नमः |
| ५७ दूरीकृतसुरपतिभयाय | नमः | ८४ मन्त्रतन्त्रविशारदाय | नमः |
| ५८ गुरुशुश्रूषारतप्रियाय | नमः | ८५ वैदिकधर्मप्रचारकाय | नमः |
| ५९ विष्णुशर्मद्विजनुताय | नमः | ८६ नास्तिकवादविदूषकाय | नमः |
| ६० कार्तवीर्यमुक्तिप्रदाय | नमः | ८७ पादपद्मजितपङ्कजाय | नमः |
| ६१ पिङ्गलनागसुपूजिताय | नमः | ८८ अनिलाश्वारूढाग्निजाय | नमः |
| ६२ निर्मलनिश्चलनिष्क्रियाय | नमः | ८९ पञ्चमकारसुदूरगाय | नमः |
| ६३ औदुम्बरतलकेतनाय | नमः | ९० विध्वंसितसंसृतिनगाय | नमः |
| ६४ शुद्धप्रेमसुचेतनाय | नमः | ९१ वागर्थप्रतिपादकाय | नमः |
| ६५ दांभिकनास्तिकनिंदिताय | नमः | ९२ सत्यार्थप्रविबोधकाय | नमः |
| ६६ साधुवृन्दसुवन्दिताय | नमः | ९३ पण्डितगुणिजनमण्डिताय | नमः |
| ६७ पापपुण्यविवर्जिताय | नमः | ९४ दुर्जनदुर्मुखदण्डिताय | नमः |
| ६८ नित्यानंदसमन्विताय | नमः | ९५ विषयविदग्धविदूषिताय | नमः |
| ६९ मितमाधूकरभोजनाय | नमः | ९६ सज्जनहरिजनसंस्तुताय | नमः |
| ७० वेदैकाक्षरकूजनाय | नमः | ९७ नानातर्कप्रभञ्जनाय | नमः |
| ७१ वादविवादतिरोहिताय | नमः | ९८ निर्मलनित्यनिरञ्जनाय | नमः |
| ७२ सुखसंवादप्रकाशिताय | नमः | ९९ पाखण्डप्रियखण्डिताय | नमः |
| ७३ राजराजसुपूजिताय | नमः | १०० सद्धर्माचरणावृताय | नमः |
| ७४ हीनदीनसंपूजिताय | नमः | १०१ खेचरभूचरमार्गदाय | नमः |
| ७५ संन्यासाश्रमबहुमताय | नमः | १०२ ब्रह्मक्षत्रविट्शूद्रपाय | नमः |
| ७६ नैष्ठिकवाडवबहुमताय | नमः | १०३ ब्रह्मचारिगृहिवनस्थाय | नमः |
| ७७ सुरनरमुनिगणप्रार्थिताय | नमः | १०४ देशिकवरसंपूजिताय | नमः |
| ७८ बाहुषट्कसमन्विताय | नमः | १०५ नारदतुंबरकीर्तिताय | नमः |
| ७९ मुखशशिजितरजनीकराय | नमः | १०६ साधुवृन्दपरिनर्तिताय | नमः |
| ८० रविविधुतारकभास्कराय | नमः | १०७ ब्रह्मानंदपरिप्लुताय | नमः |
| ८१ स्वायुधमण्डितवरनुताय | नमः | १०८ कैवल्यामृतपानदाय | नमः |

॥ इति श्रीदत्तपादारविन्दमिलिन्दब्रह्मचारिपाण्डुरङ्ग ( रङ्ग-अवधूत ) महाराजविरचितं दत्ताष्टोत्तरशतनाम संपूर्णम् ॥

एवं तुलसीदलानि समर्प्य श्वेतचूर्णं साभाग्यद्रव्यमर्पयेत् ॥
सौभा०—श्रीश्वेतचूर्णं च सुरक्तचूर्णं सिंदूरसंयुक्तमथो मनोहरम् ॥
हरिद्रया युक्तमिदं त्वदर्थं दत्तं प्रभो तत्स्वीकुरुष्व दत्त (अहिरि०) ॥२६॥
धूपः—सौगन्ध्यचूर्णेन समन्वितं परं देवादिकानामतिमोदद च ॥
आघ्रापयाम्यत्र सुधूपमेतं गृहाण तं देववर प्रसीद (ब्राह्मणो० धूरसि०)
दीपः—सुवर्तियुक्तं ज्वलितं सुरम्यं तमोऽपहारं प्रभया प्रकाशितम् ॥
दीपं गृहाणेश जगन्निवास श्रीदत्तदेव प्रवराज्ययुक्तम् (चन्द्रमा० अग्नि०)
नैवे०—भक्ष्यं च भोज्यं च सुलेह्यमेतच्चोष्यं च चातुर्विधमत्र देव ॥
सुधासमं दत्तवर प्रमुद्‍क्ष्व संगृह्य नैवेद्यमतिप्रशस्तम् (नाभ्या० अन्नप०)
पूर्वा०—सुशीतलं प्रीतिकरं सुनिर्मलं सुजाह्नवीतीर्थसमाहृतं शुभम् ॥
कर्पूरसौगन्ध्यसमन्वितं मुदा ह्यपोशनं पूर्वमिदं गृहाण ॥ ३० ॥

नैवेद्यं गायत्रीमंत्रेण संप्रोक्ष्य धेन्वाऽमृतीकृत्य ग्रासमुद्रया प्राणाय स्वाहा अपानाय स्वाहेति पञ्चाहुतीर्दद्यात् ॥ ततो मध्येपानीयम् ॥
मध्ये०—सुवर्णपात्रस्थिततोयमेतद् गंगादिकानां परमं त्वदर्थम् ॥
पानार्थमानीतमतिप्रशस्तं स्वीकृत्य देवेश पिब प्रभो त्वम् ॥ ३१ ॥
उत्त०—कर्पूरसौगन्ध्यसमन्वितं प्रभो ! सुजाह्नवीतीर्थसमाहृतं मुदा ॥
सुशीतलं प्रीतिकरं सुनिर्मलं ह्यपोशनं चोत्तरकं गृहाण ॥ ३२ ॥
करो०—उद्वर्तनं ते सुजलैश्च शीतैः कर्पूरसौवीरसुगन्धयुक्तैः ॥
ददामि देवेश जगन्निवास कुरुष्व तत्ते करयोः कृपालो ॥ ३३ ॥
तांबू०—कस्तुरिकैलाक्रमुकैर्लवङ्गैः सुसंस्कृतं नाथ सुवर्णपत्रैः ॥
तांबूलमेतन्मुखवासनार्थमङ्गीकुरु त्वं वरदेवदत्त ( यत्पुरु० उतस्मा० )
दक्षिणा०—सावर्णिका ते परिकल्पिता विभो सुदक्षिणा देव यथामति प्रभो ॥
दत्तावधूत प्रवर प्रकृष्टां गृहाण भक्त्या तु मया समर्पिताम् (हिरण्य०) ३५ ।

छत्रम्—प्रवालमुक्तामणिभिर्विराजितं सुवर्णदण्डं शशिकान्तमद्भुतम् ।
छत्रं दयानाथ तवार्पितं मया मूर्ध्नि प्रभो तत्कृपया गृहाण ॥३६॥
चाम०—माणिक्यरत्नप्रभदण्डमण्डिते सुश्वेतवर्णे शशिकान्तिसन्निभे ॥
श्रीचामरे द्वे च समर्पिते प्रभो ताभ्यामहं त्वां परिवीजयामि ॥३७॥
व्यज०—चन्द्रादिशुभ्रं सुजलैः सुसिक्तं सुगन्धयुक्तं सुमनोहरं प्रभो॥
दत्तं मया ते व्यजनं च भक्त्या त्वां तेन दत्तेश्वर वीजयामि ॥३८॥
दर्प०—वैडूर्यमाणिक्यसुशोभितं प्रभो स्वच्छं मनोज्ञं मनसा मयाऽर्पितम्॥
सुदर्पणं ते करयोर्निधापितं सुखावलोकं कुरु तत्र नाथ ॥ ३९ ॥
पादु०—श्रीदत्त देवोत्तम पादपद्मनिधापनार्थं मृदु पादुकाद्वयम् ॥
संस्थापितं ते पदयोः समीपे निधेहि तत्राब्जसुपादयुग्मम्॥४०।
आरा०—सुदिव्यरूपं ज्वलितं प्रभान्वितं सुवर्तिकाभिर्युतमाज्ययुक्तम्॥
भक्तार्तिहन् पुण्यतमं प्रकृष्टमारार्तिकं ते परिकल्पयामि ॥ ४१ ॥

## ॥ श्रीदत्तार्तिक्यम् ॥

जय जय जय गुरुदेव ॥ वन्दे अत्रिकुमारं त्रिभुवनभर्तारम् । जनिमृतिसंसृतिकालं तापत्रयहारम् ॥ जय जय जय गुरुदेव ॥ ध्रु० ॥ करुणापारावारं योगिजनाधारम् । कृतभवजलनिधिपारं षड्दर्शनसारम् ॥ जय जय० ॥ १ ॥ भोगापवर्गद्वारं कृतमोदासारम् । नतजनवरदातारं निगमागमसारम् ॥ जय जय० ॥ २ ॥ धृतगलमौक्तिकहारं कीर्णजटाभारम् । धाम्ना निर्जितमारं षड्रिपुसंहारम् ॥ जय जय० ॥ ३ ॥ दुःशीलातिकरालं भस्माङ्कितभालम् । शङ्खत्रिशूलभाजनस्रग्वाद्यारिकरम् ॥ जय जय० ॥ ४ ॥ कलिकल्मषहन्तारं सुरनरमुनितारम् । धृतविजनैकविहारं ज्ञप्तिसुधाहारम् ॥ जय जय० ॥ ५ ॥ देवत्रयावतारं शांतिसुधागारम् । दूरीकृतनतभारं रङ्कारङ्करम् ॥ जय जय० ॥ ६ ॥

॥ इति श्रीदत्तपादारविन्दमिलिन्दब्रह्मचारिपाण्डुरङ्ग ( रङ्ग-अवधूत ) महाराजविरचितं दत्तार्तिक्यं संपूर्णम् ॥

( " कर्पूरगौरम् " इत्यादिना चारार्तिकं कुर्यात् )

प्रद०—प्रदक्षिणाकर्तृजनप्रचण्डपापौघनाशं नितरां च कुर्वतीम् ॥
श्रीदत्तदेव प्रवरप्रद प्रभो प्रदक्षिणां ते प्रकरोमि देव (सप्तास्या०)॥४२॥
मंत्र०—सुपद्मसंपूर्णनमः सुगन्धिकः संजातनानाविधपुष्पसंचितः ॥
पुष्पांजलिस्ते चरणाब्जयोर्मया प्रकल्पितः स्वीकुरु तं दयानिधे ॥४३॥
(सङ्केन० राजाधि०अत्र मन्त्रान्तरैरपिपुष्पाञ्जलिःकर्तव्यश्चेत् कर्तव्यः ॥
विशे०—गन्धाक्षतैःसत्कुसुमैःसुवासितैः संमिश्रितं श्रीफलकेन शोभितम्॥
विशेषमर्घ्यं जलसंयुतं विभो गृहाण देवेश्वर दत्तदेव ॥ ४४ ॥
नम०—ज्ञानप्रदं सद्गुरुरूपमद्भुतं योगीश्वरं दत्तवरं वरेण्यम् ॥
वन्दे शरण्यामयदं प्रशान्तं भक्तार्तिनाशं भवभञ्जनार्थम् ॥४५॥
प्रार्थ०—संसारतापांप्रसुतप्तदेहः संतप्तदारास्वजनाभिपक्तः ॥
मुक्तिप्रदं मोक्षसुखार्थमेव संप्रार्थये त्वां गुरुदेवदत्त ॥ ४६ ॥

॥ श्रीदत्तस्तवनम् ॥

दत्त दत्ताखिल श्रेष्ठ देहि मे दत्तपद्द्वयम् ।
अद्वयाचिन्त्य मा देहि दारिकर मे द्वयम् ॥ १ ॥
नमस्त्वग्रे पृष्ठे परित इत ते सर्वग नमो
दिवानक्तं नक्तंचरदलन ते दादद नमः ॥
किमायाचे त्वां भो यतिवर तवास्तां मयि दया
वदान्यस्त्वादृक कः क इह वद मत्तो वनिवशः ॥ २ ॥
वने वनचरैर्वृतं पुरवरे पुरंध्रीवृतं
हसन्तमनिशं मुदा शिशुपिशाचकोन्मत्तकम् ॥

उदुम्बरतलस्थितं बुधवरावधूतं कदा
सदा स्वजनशेवदं वररुचिं नु वीक्षे दृशा ॥ ३ ॥
वन्दे योगिवरं परात्परतरं वन्देऽनसूयात्रिजं
वन्दे बालजडोपमं निरुपमं वन्देऽवधूतं नुतम् ।
वन्दे कञ्जपदं मदं हृतगदं वन्दे निरस्तापदं
वन्दे भक्तहृदम्बुजार्कममलं वन्दे त्र्यरिघ्नानलम् ॥ ४ ॥
श्रीदत्तः शरणं ममेति गदतो दत्तं सदा ध्यायतो
दत्तेनाहृतचेतसः किमु भयं दत्ताय तुभ्य नमः ।
दत्ताज्जातमिदं चराचरमरं दत्तस्य दाम्नि स्थितं
दत्ते चैव विलीयते सरभसं भो दत्त कस्त्वत्परः ॥ ५ ॥
श्रीदं धीदं सुदंतं हतनततततं तारकं रम्यरम्यं
नौमि श्रीमित्रमित्रं सुरनरवरदं देशिकं सिद्धसिद्धम् ।
शाधि त्वं धिष्ण्यधिष्ण्यं हर दरमरसं मा त्यज त्यक्तत्यक्तं
मां बालं वाह्यवाह्यं सुतमुत तत हे तारयो रङ्ग—'रङ्गम्'॥६

॥ इति श्रीदत्तपादारविन्दमिलिन्दमहाचारिपाण्डुरङ्ग (रङ्ग—अवधूत) महाराजविरचितं दत्तस्तवनं संपूर्णम् ॥ • •

---

अज्ञानात्०। गतं पापम्० । यदक्षर०। कायेन वाचा०। प्रमादात्० ॥

ततः "ह्रीं नमो भगवते दत्तात्रेयाय" इति मूलमंत्रेण यथाशक्ति जपं कुर्यात् ॥ अनेन यथाशक्ति जपकृतेन कर्मणा भगवान् श्रीदत्तात्रेयः प्रीयताम् ॥ पुनर्जलमादाय—अनेन यथामिलितोपचारैः पूजनकृतेन भगवान् श्रीदत्तात्रेयः प्रीयताम् ॥ इति राजोपचारपूजा ॥

तत आचार्यादीनां पूजनं कृत्वाऽऽशिर्वादं गृहीत्वा भजन-कीर्तनादिना रात्रिं निनयेत् ॥ इति दत्तात्रेयव्रतपूजनप्रयोगः ॥

---

## ॥ श्रीदत्तात्रेयव्रतोद्यापनम् ॥

द्वितीयेऽह्नि प्रातरुत्थाय नित्यवत्स्नात्वा नित्यकर्म समाप्य स्वासने उपविश्य आचमनं प्राणायामं कृत्वा शांतिपाठपठनपूर्वकं सुमुखश्चै० इत्यादि पठित्वा देवब्राह्मणान् नमस्कृत्य हस्ते जलमादाय अद्येत्या० तिथौ कृतस्य दत्तपूर्णिमाव्रतस्य साङ्गतासिद्ध्यर्थं श्री सग्रहमखं यथाविहितहवनाख्य कर्म करिष्ये ॥ पुनर्जलमादाय–तदङ्गत्वेन दिग्रक्षणादिकं स्थापितदेवतानां पूजनं करिष्ये । इति संकल्प्य दिग्रक्षणादि कृत्वा गणपतिपूजनमारभ्य प्रधानश्रीदत्तपूजनान्तं कर्म कुर्यात् । अनेन पूजनेन श्रीभगवान् दत्तात्रेयः प्रीयताम् । इति ॥

ततश्चतुरस्रं हस्तपरिमितं स्थण्डिलं विधाय तत्पश्चिमे उपविश्य दिग्रक्षणं पञ्चगव्यकरणं (१४७–४८) कृत्वा कर्मभूमिं यज्ञसंभारांश्च संप्रोक्ष्य भूमिकूर्मानन्तदेवतानां पूजनं विधाय पुष्पैर्देवागमनादिकं कृत्वा स्थंडिले ब्राह्मणद्वारा पंचभूसंस्कारान् (पृ. १५०) विधायाग्निप्रतिष्ठापनं (१५०–५२) कुर्यात् ॥

ततो नवग्रहादीनां स्थापनं (१५३–१५८) पूजनं च कृत्वा कुशकण्डिकां (१५९–६०) विधाय आघारावाज्यभागौ (१६१) हुत्वाऽग्निपूजनं (१६१) कृत्वा द्रव्यत्यागसंकल्पं कृत्वा वराहुतिं दत्त्वा ग्रहहोमान्तं कर्म (१६२–६४) कुर्यात् ॥

ततः प्रधानहोमः–"ह्रीं नमो भगवते दत्तात्रेयाय" इति मंत्रेण समिचिलाज्यचरुणा पायसेन वा अयुतं (१००००) सहस्रम् (१०००) अष्टोत्तरशतम् वा यथाशक्ति जुहुयात् ॥ ततः यन्त्रदेवताभ्यः (३३०) मंडूकादिदेवताभ्यः (३४२) सर्वतोभद्रमंडलस्थब्रह्मादिदेवताभ्यश्च (१६४-६५) एकैकामाज्याहुतिं जुहुयात् ॥ ततः फलहोमं गुग्गुल-

सर्षपहोमं लक्ष्मीहोमं ( १६८ ) विधाय न्यूनातिरिक्तदोषपरिहारार्थं अष्टोत्तरशतम् ( १०८ ) अष्टाविंशतिसंख्यया ( २८ ) वा तिलद्रव्येन " अग्निवायुसूर्येभ्यो नमः " इति मन्त्रेण व्याहृतिहोमं कुर्यात् ॥ ततः स्थापितदेवतानां मृडाग्निश्रेोत्तरपूजनपूर्वकं प्रणीताविमोकान्तं ( १६६-८८ ) कर्म कृत्वा पूर्णपात्रादिदानं विधाय अग्निं ग्रहदेवताश्च विसृज्य प्रधानदेवतासमीपमागत्याचारात् आरार्तिकं कृत्वा पुष्पांजलिं विधाय वृतेभ्यो ब्राह्मणेभ्यो दक्षिणां दत्त्वा तेभ्य आशिषो गृहीत्वा देवताः विसृज्य ब्राह्मणान् संभोज्य सपरिवारः सबान्धवः स्वयं भुञ्जीत ॥

॥ इति श्रीदत्तात्रेयव्रतोद्यापनम् ॥

---

मार्गशीर्षे कृष्णतृतीयायां सौभाग्यसुंदरीव्रतम् । तच्च चतुर्थीयुतायां कार्य न द्वितीयाविद्धायाम् । तत्र पार्वत्याः पूजनं कार्यम् । विशेषस्तु व्रतराजे ॥

मार्गशीर्षकृष्णाष्टम्यां भैरवाष्टमीव्रतम् । सा च रात्रिव्यापिनी ग्राह्या । तत्र भैरवपूजा कर्तव्या । विधिस्तु व्रतराजे ॥

मार्गशीर्षकृष्णामायां गौरीतपोव्रतम् । अत्र मध्याह्ने शिवपार्वत्योः पूजनं कार्यम् । विशेषो व्रतराजे ॥

मार्गशीर्षादि रविवारेषु काम्यं सौर (सूर्य ) व्रतमुक्तम् ।

( तत्र द्वादशमासेषु भक्षणीयपदार्थाः ॥ मार्गशीर्षे तुलसीपत्रत्रयम् । पौषे पलत्रयं घृतम् ॥ माघे तिलानां मुष्टित्रयम् । फाल्गुने त्रिपलं दधि । चैत्रे त्रिपलं दुग्धम् । वैशाखे गोमयम् ॥ ज्येष्ठे तोयांजलित्रयम् । आषाढे मरीचकत्रयम् ॥ श्रावणे त्रिपलाः सक्तवः ( सातवानो लोट ) ॥ भाद्रे गोमूत्रम् ॥ आश्विने शर्करा ॥ कार्तिके शुद्धहविः ॥ इति ॥ )

---

॥ इति मार्गशीर्षमासकृत्यम् ।

## ॥ अथ पौषमासकृत्यम् ॥

पौषशुक्लाष्टम्यां बुधवारयुतायां स्नानजपहोमतर्पणब्राह्मण भोजनानि कार्याणि। अस्यां भरणीयोगे महापुण्यत्वम् इत्येके। रोहिण्या र्द्रायोगे इति परे ॥ पौषशुक्लत्रयोदश्यामनङ्गत्रयोदशीव्रतमप्युक्तम्

॥ इति पौषमासकृत्यम् ॥

---

## ॥ अथ माघमासकृत्यम् ॥

अत्र माघस्नानमोक्तम् ॥ तत्र पौषस्य शुक्लैकादश्यां पूर्णिमाया-ममावास्यायां माघस्नानारंभः ॥ माघे द्वादशीपूर्णिमादौ वा मकरसंक्रमण-प्रभृतिकुंभसंक्रमणपर्यन्तं स्नानं कार्यम् ॥ इदं स्नानं महाफलदम् ॥ अरुणोदयमारभ्य प्रातःकालावधिः । उत्तमं तु सनक्षत्रं लुप्ततारं च मध्यमम् । सवितर्युदिते भूप ततो हीनं प्रकीर्तितम् ॥१॥ माघमासे रटंत्यापः किंचिदभ्युदिते रवौ ॥ ब्रह्मघ्नं वा महापापं कंपतं तं पुनीमहे ॥ २ ॥ अत्राधिकारिणः ॥ ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः ॥ बालवृद्धयुवानश्च नरनारीनपुंसकाः॥ इति॥३॥ जलतारतम्येन फलम् ॥ तप्तेन वारिणा स्नानं यद्गृहे क्रियते नरैः ॥ षडब्दफलदं तद्धि मकरस्थे दिवाकरे ॥४॥ वाप्यादौ द्वादशाब्दफलम् ॥ तडागे तच्च द्विगुणम् ॥ नद्यां चतुर्गुणम् ॥ महानद्यां शतगुणम् ॥ महानदीसंगमे तच्चतुर्गुणम् ॥ गंगायां सहस्रगुणम् ॥ गंगायमुनासंगमे एतच्छतगुणमिति ॥ यत्र

---

१ (आठ गुंजा (रत्ती) नो एक माष ॥ चालीस माषानो एक कर्ष । चार कर्ष एक पल ) ॥ २ वावविगेरे । ३ तलाव।

कुत्रापि स्नाने प्रयागस्मरणं कार्यम् ॥ इदं समुद्रेऽप्यतिप्रशस्तम् ॥ इति धर्मासिंधौ ॥ स्नानविधिः ॥ माघमासमिमं पूर्णं स्नास्येऽहं देवमाधव ॥ तीर्थस्यास्य जले नित्यमिति संकल्प्य चेतसि ॥१॥ दुःखदारिद्र्यनाशाय श्रीविष्णोस्तोषणाय च॥ प्रातःस्नानं करोम्यद्य माघे पापविनाशनम्॥२॥ मकरस्थे रवौ माघे गोविंदाच्युत माधव ॥ स्नानेनानेन मे देव यथोक्तफलदो भव ॥३॥ सूर्यायार्घ्यं दद्यात् ॥ सवित्रे प्रसवित्रे च परं धाम जले मम ॥ त्वत्तेजसा परिभ्रष्टं पापं यातु सहस्रधा ॥४॥ भूमौ शयीत होतव्यमाज्यं तिलसमन्वितम् ॥ हविष्यं ब्रह्मचर्यं च माघमासे महाफलम् ॥५॥ अग्नेन्धनकंबलवस्त्रोपानत्तैलघृततुलपूर्णपटीसुवर्णान्नदानानि महाफलानीति ॥ न वह्निं सेवयेरस्नातो ह्यस्नातोऽपि वरानने ॥ होमार्थं सेवयेद्वह्निं शीतार्थे न कदाचन ॥ ६ ॥ इति ॥

कुंभसंक्रान्तौ पूर्वंपोडशनाड्यः[1] पुण्याः ॥ माघे वेणीस्नानमहिमा ॥ सितासिते तु यत्स्नानं माघमासे युधिष्ठिर ॥ न तेषां पुनरावृत्तिः कल्पकोटिशतैरपि ॥ १ ॥ इति ॥

माघशुक्लचतुर्थ्यां गौरीचतुर्थीव्रतम् । तत्र गौर्याः पूजा कर्तव्या । एवं तद्दिने वरदचतुर्थीव्रतमपि । तत्र गणपतेः पूजा कार्या । विधिर्व्रतराजे॥

माघशुक्लपंचमी वसन्तपञ्चमी । सा मध्याह्नव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तावव्याप्तौ वा पूर्वा । तत्र विष्णोः पूजा कार्या ॥

माघशुक्लसप्तम्यां रथसप्तमीव्रतम् । तच्चारुणोदयव्यापिन्यां कार्यम् । दिनद्वयेऽरुणोदयव्यापिन्यां पूर्वैव ॥ अत्र जले दीपदानं सूर्यपूजनं च प्रधानम् । अस्यामेव तिथौ कर्तव्यतया विहितम् अचलासप्तमीव्रतं च पुत्रसप्तमीव्रतमप्युक्तम् । विधिस्तु व्रतराजे ॥

---

१ घडीओ ।

माघशुक्लचतुर्दश्यां ( भाद्रपदे कार्तिके वैशाखे ) कदलीव्रतम्। सा पूर्वाह्णव्यापिनी ग्राह्या ॥ तत्र रंभारोपणं कृत्वा वर्षमेकमुदकुम्भेन सेचनमुक्तम् । तत्र च उमामहेश्वरयोः कदल्याश्च पूजनमुक्तम् ।

माघकृष्णतृतीयायां सौभाग्यसुंदरीव्रतम् । तच्चतुर्थीयुतायां कार्यम् । तत्र पार्वत्याः पूजनं कार्यम् ॥

---

## ॥ अथ संकष्टचतुर्थीव्रतविधिः ॥

माघकृष्णचतुर्थ्यां संकष्टचतुर्थीव्रतम् ॥ तच्च चन्द्रोदयव्यापिन्यां कार्यम् ॥ दिनद्वये तदव्याप्तौ पूर्वैव "मातृविद्धा गणेश्वरे" इति वचनात् ॥ दिनद्वये व्याप्तौ परैव ॥ चन्द्रोदयाभावे चतुर्थी निशि षट्घटिकाव्याप्तायां परैव व्रते॥ उभयदिने चन्द्रोदयव्याप्त्यभावे प्रदोषव्यापिनी ग्राह्या ॥ अथ व्रतविधिः ॥ चतुर्थ्यां प्रातरुत्थाय दन्तधावनपूर्वकम् ॥ —ग्राह्यं व्रतमिदं पुण्यं संकष्टतारकं शुभम् ॥ कर्त्तव्यमिति संकल्प्य व्रतेऽस्मिन् गणपं स्मरेत् ॥ स्वीकारमंत्रः ॥ निराहारोऽस्मि देवेश यावच्चन्द्रोदयो भवेत् ॥ भोक्ष्यामि पूजयित्वाऽहं संकष्टात्तारयस्व माम् ॥ इति संकल्प्य राजेन्द्र कृत्वा कृष्णतिलैः शुभैः ॥ आह्निकं तु विधायैव पश्चात्पूज्यो गणाधिपः ॥

शुभासने उपविश्य आचम्य ॥ सुमुखश्चै० इत्यादि पठित्वा ॥ जलमादाय ॥ अद्येत्यादि० विद्याधनपुत्रपौत्राद्यभीष्टसिद्ध्यर्थं समस्तरोगमुक्तिकामः श्रीसंकष्टहरगणेश्वरप्रीत्यर्थं संकष्टचतुर्थीव्रतांगत्वेन संकष्टहरगणपतेर्यथामिलितोपचारद्रव्यैः पूजनमहं करिष्ये ॥ तत्रादौ दिग्रक्षण कलशार्चनादीनि च करिष्ये । इति संकल्प्य दिग्रक्षणकलशार्चनमासनादि शंखघण्टाद्यर्चनं च पूर्वोक्तरीत्या(२४६)कृत्वा सौवर्णरौप्यताम्रमृन्मयाद्यन्यतमगणपतिमूर्तिं स्वाग्रे संस्थाप्य स्वदेहे न्यासांश्च कुर्यात् ॥

जलमादाय ॥ अस्य श्रीगणपतिमंत्रस्य शुक्रऋषिः श्रीसंकष्टगणपतिर्देवता अनुष्टुप्छंदः श्रीसंकष्टहरगणपतिप्रीत्यर्थे न्यास विनियोगः ॥ ह्रीं नमो हेरंब अंगुष्ठाभ्यां (हृदयाय) नमः ॥ मदमोहित तर्जनीभ्यां (शिरसे) नमः ॥ मम संकष्टं निवारय मध्यमाभ्यां (शिखायै) नमः ॥ निवारय अनामिकाभ्यां (कवचाय) नमः ॥ हुंफट् कनिष्ठिकाभ्यां (नेत्रत्रयाय) नमः ॥ ह्रीं (स्वाहा) नमः करतलकरपृष्ठाभ्यां (अस्त्राय) नमः । एवं देवे न्यस्य ततः पुरुषसूक्तेन देहन्यासं (पृ. ५०) देवन्यासं च कृत्वा गणपतिं ध्यायेत् ॥

ध्यानं० श्वेतांगं श्वेतवस्त्रं सितकुसुमगणैः जितं श्वेतगंधैः क्षीराब्धौ रत्नद्वीपे सुरतरुविमले रत्नसिंहासनस्थम् ॥ दोर्भिः पाशांकुशेष्टाभयधृतरुचिरं चन्द्रमौलिं त्रिनेत्रं ध्यायेच्छान्त्यर्थमीशं गणपतिममलं श्रीसमेतं प्रसन्नम् ॥ १ ॥ लम्बोदरं चतुर्बाहुं त्रिनेत्रं रक्तवर्णकम् ॥ नानारत्नैः सुवेषाढ्यं प्रसन्नास्यं विचिन्तये ॥ २ ॥ ध्याये गजाननं देवं तप्तकांचनसुप्रभम् ॥ चतुर्बाहुं महाकायं सूर्यकोटिसमप्रभम् ॥ ३ ॥ श्रीसंकष्टहरगणपतये नमः ध्यायामि ॥१॥ आवा० ऐह्येहि विघ्नेश्वर विघ्नशान्त्यै पाशांकुशाब्जान्वरदं दधानम् ॥ सर्पाक्षसूत्रावरमंदमूर्ते रक्षाध्वरन्नो भगवन्नमस्ते ॥ ॥२॥ श्रीगजाननाय नमः आवा० स० ॥२॥ लंबोदरश्री सुरवंद्य देव सिंहासिवक्त्रारुणपद्मपीठे ॥ सुवर्णरत्नोज्ज्वलदिव्यरूपे स्थिरो भव त्वं मम कर्मसिद्ध्यै ॥ ३ ॥ विघ्नराजाय० आस० स० ॥ ३॥ सुवर्णपात्रे कुसुमान्विते च गंगाजलेनाक्षतगंधयुक्तम् ॥ भक्त्यार्पितं देव गृहाण पाद्यं प्रसन्नविघ्नाधिपते नमोऽस्तु ॥ ४ ॥ लम्बोदराय०पाद्यं स० ॥ ४ ॥ उमासुतेशात्मज देवदेव विघ्नेश विघ्नादिनिवारणाय । दत्तं मयाऽर्घ्यं तव चात्मतुष्ट्यै गृहाण भूयो भगवन्नमस्ते ॥ ५ ॥ शंकरसूनवे० अर्घ्यं

१ अथवा प्रत्युपचारेषु "संकष्टहरगणेशाय नमः" इतिवक्तव्यम् ।

स०॥ ५ ॥ सरिज्जलं माल्यसुवासितं च नानारसैः पूर्णकृतं तथैव । निवेदयाम्यध्वरविघ्नशान्त्यै प्रसीद विघ्नाधिपते नमोऽस्तु ॥ ६ ॥ उमासुताय० आचम० स० ॥ ६ ॥ तोयैश्च दुग्धदधिमाक्षिकसर्पिराद्यैः सीतायुतैः कनककुंभधृतैः समंत्रैः॥ कर्पूरकेसरसुगंधिभिरेकदन्त स्नानार्थमर्पितमिदं विधिवद्गृहाण॥७॥ वक्रतुंडाय० पंचामृतस्नानं सम०॥७॥ शुद्धोदकस्नानं सम० ॥ पंचोपचारैः संपूज्य उत्तरे निर्माल्यं विसृज्य पुनर्गंधपुष्पैः संपूज्य ॥ (गणपत्यथर्वशीर्षेण) पुरुषसूक्तेन (५६–५७) रुद्रसूक्तेन वाऽभिषेकं कुर्यात् ॥ संकष्टहरगणेशाय०अभि०स्ना०स० ॥

गंगाकलिंगेषु सिता च रेवा तथा नदास्सप्तसमुद्रमध्यात्।आकृष्य सारं च सुवासितं च स्नानं गणेशाय निवेदयामि ॥ ८ ॥ हेरम्बाय० शुद्धोदकस्ना०स०॥८॥ रक्तांबरं रक्तमयं च रक्तं रक्तोत्तरीयं दृढपट्टकूलम्। लंबोदरं त्र्यक्ष गृहाण भक्त्या प्रसीद विघ्नाधिपते नमोऽस्तु ॥ ॥ ९ ॥ शूर्पकर्णाय नमः वस्त्रे स० ॥ ९ ॥ यज्ञोपवीतं त्रिगुणीकृतं यत्सुवर्णसूत्रैस्तदुमासुताय । निवेदये ते सुखकारि देव नागेश सूत्रान्वितदाममूर्ते ॥ १० ॥ कुब्जाय० यज्ञोपवीतं स० ॥ १०॥ कर्पूरयुक्तं शशिरोचनेन कस्तूरिकाचंदनलेपनाद्यैः॥युक्तं तथा कुंकुमकेसराद्यैर्गंधं गणेशाय निवेदयामि ॥११॥ गणेश्वराय०गन्धं स०॥११॥ व्रीहीसतंडूलमतीव शुद्धं सुगंधयुक्तं न तु छिन्नभिन्नम् ॥ सकुंकुमं स्वच्छमनोभिरामं शालीकृतं चाक्षतमर्पयेऽहम् ॥१२॥ संकष्टहरगणेशाय० अक्षतान् स० ॥१२॥जात्यादिपुष्पग्रथितानि देव पुन्नागपुष्पाणि सुगंधितानि ॥ विनायकेशात्मज नागवक्त्र गृहाण माल्यानि मयाऽर्पितानि॥१३॥ विघ्ननाशिने० पुष्पाणि स०॥१३॥ दूर्वांकुरान्वै मनसा प्रदत्तांस्त्रिपंचपत्रैर्युतकांश्च स्निग्धान् ॥ गृहाण विघ्नेश्वर संख्यया त्वं हीनांश्च सर्वोपरि वक्रतुंड ॥ १४ ॥ संकष्टहरगणेशाय० दूर्वाङ्कुरान् स० ॥ १४ ॥

## ॥ अथांगपूजा ॥

हस्ते गंधपात्रं गृहीत्वा दक्षिणेनार्चयेत् ॥ गणेश्वराय० पादौ पूजयामि ॥ विघ्नराजाय० जानुनी पूज० ॥ आखुवाहनाय० ऊरू पूज० ॥ हेरंबाय० कटी पूज० ॥ कामारिसूनवे० नाभिं पूज० ॥ लंबोदराय० उदरं पूज० ॥ गौरीसुताय० स्तनौ पूज० ॥ गणनायकाय० हृदयं पूज० ॥ स्थूलकंठाय० कंठं पूज० ॥ स्कन्दाग्रजाय० स्कन्धौ पूज० ॥ पाशहस्ताय० हस्ता पूज० ॥ गजवक्त्राय० वक्त्रं पूज० ॥ विघ्नहर्त्रे० ललाटं पूज० ॥ सर्वेश्वराय० शिरः पूज० ॥ श्रीगणाधिपाय० सर्वांगं पूजयामि ॥ इति ॥

## ॥ अथ दूर्वापूजनम् ॥

(ततो दूर्वांकुरौ शुद्धौ गृहीत्वा गंधसंयुतौ ॥ एकैकेनैव नाम्ना तु द्वौ द्वौ दद्याच्च पूजयेत् ॥ ) गणाधिपाय० दूर्वांकुरयुग्मं सम० ॥ उमापुत्राय० दूर्वांकुरयुग्मं० ॥ अघनाशनाय० दूर्वां० स० ॥ एकदन्ता० दूर्वां० स० ॥ इभवक्त्राय० दूर्वां० स० ॥ मूषकवाहनाय० दूर्वां० स० ॥ विनायकाय० दूर्वां० स० ॥ ईशपुत्राय० दूर्वां० स० ॥ सर्वसिद्धिप्रदायकाय० दूर्वां० स० ॥ कुमारगुरवे० दूर्वांकुरयग्मं सम० ॥ १० ॥ गणाधिप नमस्तेऽस्तु उमापुत्राघनाशन ॥ एकदन्तेभवक्त्रेति तथा मूषकवाहन ॥ १ ॥ विनायकेशपुत्रेति सर्वसिद्धिप्रदायक ॥ कुमारगुरवे त्वं च पूजनीयः प्रयत्नतः ॥ २ ॥ संकष्टहरगणेशाय० दूर्वांकुरं सम० ॥ ततो एकविंशतिनामभिः दूर्वाभिः पुष्पैर्वा पूजयेत् ॥ गजाननाय० । विघ्नराजाय० । लंबोदराय० । शिवात्मजाय० । वक्रतुंडाय० । शूर्पकर्णाय० । कुब्जाय० । गणेशाय० । विघ्ननाशिने० । विकटाय० । वामदेवाय० । सर्वदेवाय० । सर्वार्तिनाशिने० । विघ्नहर्त्रे० । धूम्राय० । सर्वदेवाधिदे-

वाय० । उमापुत्राय० । कृष्णपिंगलाय० । भालचन्द्राय० । गणाधिपाय० । एकदन्ताय० ॥ २१ ॥ इति दूर्वापूजा ॥

---

## ॥ अथावरणपूजा ॥

"प्रथमावरणदेवता"–हस्ते अक्षतान् गृहीत्वा । गणाधिपाय० ।१। उमापुत्राय० ।२। अघनाशिने० ।३। हेरंबाय० ।४। लंबोदराय० ।५। गजवक्त्राय० ।६। एकदन्ताय० ।७। धूम्रकेतवे० ।८। प्रथमावरणदेवताभ्यो नमः सर्वोपचारार्थे गंधाक्षतपुष्पाणि सम० ॥ पुष्पांजलिं गृहीत्वा पठेत् । अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ १ ॥ इति पुष्पांजलिं समर्प्य । जलमादाय–अनेन पूजनेन प्रथमावरणदेवताः प्रीयन्ताम् ॥ १ ॥

"द्वितीयावरणदेवता"–विघ्नगणपतये० ।१। वीरगणपतये० ।२। शूर्पकर्णगणपतये० ।३। प्रसादगणपतये० ।४। वरदगणपतये० ।५। इंद्रगणपतये० ।६। एकदन्तगणपतये० ।७। लंबोदरगणपतये० ।८। क्षिप्रगणपतये० ।९। सिद्धि० ।१०। अभीष्ट० । अनेन पू० द्वितीया० प्रीयन्ताम् ।२

"तृतीयावरणदेवता"–रामाय० ।१। रमेशाय० ।२। दर्पांकाय० ।३ रतिप्रियाय० ।४। पुष्पबाणाय० ।५। महेश्वराय० ।६। वराहाय० ।७। श्रीसदाशिवाय० ।८। अभीष्ट० ॥ अनेनपू० तृतीया० प्रीयन्ताम् ॥३॥

"चतुर्थावरणदेवता"–सूर्याय० ।१। सोमाय० ।२। भौमाय० ।३। बुधाय० ।४। बृहस्पतये० ।५। शुक्राय० ।६। शनैश्चराय० ।७। राहवे० ।८। केतवे० ।९। सिद्ध्यै० ।१०। कान्त्यै० ।११। मदनरत्न्यै० ।१२। मदद्राविण्यै० ।१३। वसुमत्यै० ।१४। वैनायक्यै० ।१५। अभीष्ट० ॥ अनेन पू० चतुर्था० प्रीयन्ताम् ॥ ४ ॥

" पंचमावरणदेवता "–इन्द्राय० ।१। अग्नये०।२। यमाय० ।३। निर्ऋतये०।४। वरुणाय०।५। वायवे०।६। सोमाय०।७। ईशानाय०।८ ब्रह्मण०।९।अनन्ताय०।१०। अभीष्ट०। अनेन पू०पञ्चमा० प्रीय० ॥५॥

---

## ॥ अथैकविंशतिपत्रपूजा ॥

गणाधिपाय० अश्वत्थपत्र समर्पयामि ॥१॥ सुमुखाय० भृंगराजपत्रं०॥२॥ उमापुत्राय०बिल्वपत्रं०॥३॥ गजवक्त्राय०श्वेतदूर्वापत्र०॥४ लंबोदराय० बदरीपत्रं०॥५॥ हरसूनवे० धत्तूरपत्रं०॥६॥ गुहाग्रजाय० तुलसीपत्रं०॥७॥ गजकर्णाय० अपामार्गपत्रं०॥८॥ एकदन्ताय० बृहतीपत्रं०॥९॥ इभवक्त्राय० शमीपत्रं०॥१०॥ मूषकवाहनाय० करवीरपत्रं०॥११॥ विनायकाय० वेणुपत्रं०॥१२॥कपिलाय०अर्कपत्रं०॥१३। भिन्नदन्ताय०अर्जुनपत्रं०॥१४॥ पत्नीहिताय०विष्णुक्रान्तापत्रं०॥१५॥ वटवे० दाडिमीपत्र० ॥१६॥ भालचंद्राय० देवदारुपत्रं० ॥१७॥ हेरंबाय०मरूपत्र०॥१८॥ सिद्धिदाय०सिंदूवारपत्रं० ॥१९॥ सुराग्रजाय० जातीपत्रं।२०।विघ्नराजाय नमः केतकीपत्रं समर्पयामि।२१।इतिपत्रपूजा।

---

## ॥ अथैकविंशतिपुष्पपूजा ॥

सुमुखाय० जातीपुष्पं समर्पयामि। एकदन्ताय० शतपत्रपुष्प०। कपिलाय० यूथिकापु० । गजकर्णाय० चंपकपुष्पं० । लंबोदराय० कल्हारपुष्पं०। विकटाय०। केतकीपुष्पं०। विघ्ननाशिने० बकुलपुष्पं० । विनायकाय० जपापुष्पं०॥ धूम्रकेतवे० पुन्नागपुष्पं० ।गणाध्यक्षाय० धत्तरपुष्पं० । भालचंद्राय० मातुलिंगपुष्पं० । पत्नीहिताय० विष्णुक्रा

न्तापुष्पं० । उमापुत्राय०करवीरपुष्पं०। गजाननाय० पारिजातपुष्पं०। ईशपुत्राय० वकुलपुष्पं० । सर्वसिद्धिप्रदाय०गोकर्णिकापुष्पं सम० । मूषकवाहनाय० कुमुदपुष्पं० । कुमारगुरवे० तगरपुष्पं० । दीर्घतुण्डाय० सुगंधिराजपुष्पं० । इभवक्त्राय० अगस्तिपुष्पं० । संकष्टनाशनाय० पाटलपुष्पं समर्पयामि॥२१॥ ततोऽष्टोत्तर शतनामभिः(पृ.२१०-२११) वा गणेशसहस्रनामभिर्दूर्वा अर्पयेत् ॥

यः पूजयेदनेनैव भक्त्या सिद्धिविनायकम् । दूर्वादलैर्बिल्वदलैः पुष्पैर्वा चंदनाक्षतैः॥ सर्वान् कामानवाप्नोति सर्वापद्भ्यः प्रमुच्यते॥१॥

सौभा०—श्वेताम्बरं रक्तगुलालचूर्णं सिंदूरचूर्णान्वितपीतचूर्णम् ॥ अनन्यभावेन समर्पितं ते गृहाण विघ्नाधिपते नमोऽस्तु ते ॥ १५ ॥ संकष्टहरगणपतये नमः सौभाग्यद्रव्यं समर्पयामि ॥ १५ ॥

धूपः–दशांगगुग्गूलयुतं सुगंधं मनोहरं चंदनदारुकाद्यैः। आज्येन युक्तं सुरकापिलेन गृहाण पूजां भगवन्नमस्ते ॥ १६ ॥ दीपः–साज्यं त्रिभिर्वर्तिभिरग्नियुक्तं घोरान्धकारमशमं च देव । गृहाण दीपं सुरसिद्धसेव्यः क्षमस्व सेव्यैकवरप्रदान ॥१७॥ नैवे०–स्नेहं च चोष्यं रसषट्कयुक्तं मनोहरं मोदकवासितं च । कर्पूरखंडैर्भगवन् गणेश गृहाण नैवेद्यमिदं नमस्ते ॥ १८॥ पूगी०–पूगीफलैर्नागलतादलैश्च लवंगकर्पूरसुवासितं च। एलायुतं विघ्नहर प्रसीद गृहाण तांबूलमिदं नमस्ते ॥ १९ ॥ दक्षि०–हिरण्यगर्भस्थमिदं हिरण्यं ज्योतिःस्वरूपं सकलं सुरेश । गृहाण विघ्नेश मयाऽर्पितं च भक्त्या चलत्कर्ण तव प्रसीद ॥ २० ॥ नीरा०-शशांकसूर्याग्निसमप्रकाशं दीप्तैः सुदीपैः फणिरत्नभाद्भिः । नीराजनं ते परितः स्वमूर्तेः प्रसीद विघ्नाधिपते नमोऽस्तु॥२१॥प्रद०–अनेकजन्मार्जितपातकानि पदे पदे नाशयति ध्रुवाणि । सतीर्थयागादिफलानि दत्ते

प्रदक्षिणा सा क्रियते मया ते ॥ २२ ॥ पुष्पां०-सुराधीशवन्द्यं भवानी-शवन्द्यं कलाकोटियुक्तं गुणालीवमुक्तम् । महाराजमेकं परित्रातलोकं स्फुरच्चन्द्रखंडं भजे वक्रतुंडम् ॥ २३ ॥ विशे०-पुष्पाक्षतैश्चंदननारिकेलं फलेन ताम्रेण मनोरमाद्यैः । भक्त्या सुरेशाय च खजूरकं फलं गणेशाय निवेदयामि ॥ २४ ॥

( एवं पूजा प्रकर्त्तव्या यथालाभोपचारकैः ॥ मोदकान् कारयेद्देवि ह्येकविंशतिसंख्यया ॥ १ ॥ तेषां मध्ये प्रदातव्या दशसंख्याश्च पार्वति ॥ देवाग्रे स्थापयेत्पंच पंच विप्राय कल्पयेत् ॥ २ ॥ पूजयित्वा तु तं विप्रं भक्तिभावेन देववत् ॥ दक्षिणां च यथाशक्त्या दत्वा वै पंचमोदकान् ॥ ३ ॥ पूजयेन्निशि चंद्रं च ह्यर्घं दत्त्वा यथाविधि ॥४॥ ) एवं ब्राह्मणं सपूज्य दक्षिणां दत्वा एकविंशतिवारं मूलमंत्र जपेत् ॥ "ह्रीं नमो हेरंब मदमोहित मम संकष्टं निवारय निवारय ( हुं फट् स्वाहा ) नमः ॥" ततो गणेशाय अर्घं दद्यात् ॥ गणेशाय नमस्तुभ्यं सर्वसिद्धिप्रदायक ॥ संकष्ट हर मे देव गृहाणार्घं नमोऽस्तु ते ॥ १ ॥ कृष्णपक्षे चतुर्थ्यां तु पूजितोसि विधूदये ॥ क्षिप्रं प्रसादितो देव गृहाणार्घं नमोऽस्तु ते ॥ २ ॥ एताभ्यां मंत्राभ्यां संकष्टहरगणेशाय इममर्घं सम० ॥ तिथीनामुत्तमे देवि गणेशप्रियवल्लभे ॥ सर्वसंकष्टनाशाय चतुर्थ्यर्घं नमोऽस्तु ते ॥१॥ चतुर्थ्यै इममर्घं सम०॥ जलमादाय ॥ अद्येत्यादि० कृतस्यसंकष्टचतुर्थीव्रतांगभूतं रोहिणीसहितचन्द्रपूजनमर्घदानं च करिष्ये। "रोहिणीसहितचंद्राय०" इति मंत्रेण यथाशक्त्या संपूज्य शंखे ताम्रपात्रे वा जलगंधदूर्वाक्षतफलानि निक्षिप्य अर्घं गृहीत्वा ॥ "क्षीरसागरसंभूत सुधारूप निशाकर ॥ गृहाणार्घ्य मया दत्तं रोहिण्या सहितः शशिन् ॥१॥ ज्योतिष्पते नमस्तुभ्यं नमस्ते ज्योतिषां पते ॥ नमस्ते रोहिणीकान्त गृहा-

णार्घं नमोस्तु ते ॥२॥ एवं चंद्राय अर्घत्रयं दद्यात् ॥ आचार्याय पूजनपूर्वकं वायनदानं दद्यात् । तत्र मन्त्रः । "विप्रवर्य नमस्तुभ्य मोदकान् वै ददाम्यहम् ॥ मोदकान् सफलान् पञ्च दक्षिणाभिः समन्वितान् ॥ आपदुद्धारणार्थाय गृहाण द्विजसत्तम ॥" इति वायनदानं कृत्वा गणेशं प्रार्थयेत् । अशुद्धमतिरिक्तं वा द्रव्यहीनं मया कृतम् ॥ तत्सर्वं पूर्णतां यातु विप्ररूप गणेश्वर ॥१॥ इति संप्राथ्र्य ब्राह्मणभोजनसंकल्पं कृत्वा मौनेन ब्राह्मणैः सह मोदकान् भुञ्जीत ॥ ततो विसर्जनं कुर्यात् । यथा- गच्छ गच्छ सुरश्रेष्ठ स्वस्थाने त्वं गणेश्वर ॥ व्रतेनानेन देवेश यथोक्तफलदो भव ॥ इति संकष्टचतुर्थीव्रतविधिः ॥

---

## ॥ अथ संकष्टचतुर्थीव्रतोद्यापनम् ॥

तत्रादौ मंडपं कृत्वा तत्र मंडपमध्ये सर्वतोभद्रमंडलं प्रपूर्य शुभासने उपविश्य आचम्य प्राणानायम्य ॥ शान्तिपाठपठनपूर्वकं देवब्राह्मणान्नमस्कृत्य ॥ श्रीमन्महा० सुमुखश्चेत्यादि पठित्वा जलमादाय ॥ अद्येत्यादि० तिथौ ममात्मनः पुत्रपौत्राद्यनवच्छिन्नसन्ततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा दीर्घायुरारोग्यैश्वर्यादिसकलेष्टसिद्ध्यर्थं श्रीसंकष्टहरगणपतिप्रीत्यर्थमाचरितस्य आचरिष्यमाणस्य संकष्टचतुर्थीव्रतस्य संपूर्णफलावाप्तये संकष्टचतुर्थीव्रतोद्यापनमहं करिष्ये ॥ तदंगभूतं दिग्रक्षणं कलशाराधनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नांदीश्राद्धमाचार्यादिब्राह्मणवरणं सर्वतोभद्रमंडले देवतास्थापनादीनि करिष्ये ॥ इति संकल्प्य पूर्वोक्तरीत्या दिग्रक्षणादि ब्राह्मणवरणान्तं कर्म ( ६–४५ ) कृत्वा सर्वतोभद्रमंडले ब्रह्मादिदेवताः

( पत्र ९९-१०७) संस्थाप्य तन्मध्ये पूर्णपात्रान्तं कलशं प्रतिष्ठाप्य तदुपरि क्षौमवस्त्रं प्रसार्य तदुपरि चंदनादिना गणपतियंत्रं विलिख्य मध्ये मंडूकादिपीठदेवता ( पत्र १०८ ) आवाह्य यथाशक्त्या संपूज्य यंत्रावरणदेवता आवाहयेत् ॥ तद्यथा ॥ गणाधिपाय० गणाधिपम् आ० स्था० ( एवं सर्वत्र ) नाशिने० । हेरंबाय० । लंबोदराय० । गजवक्त्राय० । एकदन्ताय० । धूम्रकेतवे० । भालचंद्राय० । ईशपुत्राय० । इभवक्त्राय० । मूषकवाहनाय० । कुमारगुरवे० । संकष्टनाशिने० ॥ १ ॥ विघ्नगणपतये० । वीरगणपतये० । शूर्पकर्णगणपतये० । प्रसादगणपतये० । वरदगणपतये० । इन्द्रगणपतये० । एकदन्तगणपतये० । लंबोदरगणपतये० । क्षीप्रगणपतये० । सिद्धिगणपतये० ॥२ रामाय० । रमेशाय० । द्वर्पांकाय० । रतिप्रियाय० । पुष्पबाणाय० । महेश्वराय० । वराहाय० । श्रीसदाशिवाय० ॥ ३ ॥ आदित्याय० । चंद्राय० । कुजाय० । बुधाय० । बृहस्पतये० । शुक्राय० । शनैश्चराय० । राहवे० । केतवे० । सिद्ध्यै० । समृद्ध्यै० । कान्त्यै० । मदनरत्न्यै० । मदद्राविण्यै० । वसुमत्यै० । वैनायक्यै० ॥ ४ ॥ इंद्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । सोमाय० । ईशानाय० ॥५॥ इत्यावाह्य यथाशक्त्या पूजयेत् ॥ ततो नूतनायां सौवर्ण्यां गणपतिप्रतिमायाम् अग्न्युत्तारणप्राणप्रतिष्ठां च कृत्वा कलशोपरि संस्थाप्य ध्यायेत् ॥ देवं नमामि गिरिजात्मजमेकदन्तं सिंदूरचर्चितवपुश्च विशाल-

१ अशक्तश्चैकमन्नं च भुञ्जीत दधिसंयुतम् ॥ अथवा भोजनं कार्यमेकवारं हिमाद्रिजे ॥ प्रतिमासं नूतनमूर्तिकरणपक्षे-प्रतिमां गुरवे दद्यादाचार्याय सदक्षिणाम् ॥ वस्त्रकुम्भसमायुक्तामादौ मन्त्रमिमं जपेत् ॥ "ह्रीं नमो हेरम्ब मदमोहित संकष्टान्निवारय निवारय ॥" इति मूलमन्त्रमेकविंशतिवारं जपेत् ॥

तुंदम् ॥ नागेन्द्रमंडिततनुं युवसिद्धिबुद्धिसेव्यं सदासुरगणैः सकलार्थसिद्ध्यै ।१। इति ध्यात्वा । एह्येहि विघ्नेश्वर विघ्नशान्त्यै पाशाङ्कुशाब्जान् वरदं दधानम ॥ सर्पाक्षसूत्रावरमन्दमूर्ते गृहाण पूजां भगवन्नमस्ते ॥ संकष्टहरगणेशाय नमः संकष्टहरगणेशम् आ० स्था० ॥ प्रतिष्ठा सर्व० ॥ इति प्रतिष्ठाप्य "संकष्टहरगणेशाय नमः" इति मंत्रेण आसनादारभ्य अंगावरणसहितं पूर्वोक्तरीत्या पुष्पांजलिपर्यन्तं (पृ. ३७१-७७) पूजनं कुर्यात् ॥ ततो गणपतये अर्घद्वयं चतुर्थ्यै एकमर्घं पूर्वोक्तरीत्या (३७७) दत्वा चंद्रोदये जाते चन्द्रपूजनम् अर्घदानं च (३७७-७८) पूर्ववत् कुर्यात् ॥

## ॥ अथ होमविधिः ॥

*पंचम्यां वा तद्दिने होमं कुर्यात् ॥ गणपत्यादिपूजनान्तं पूर्ववत्* कृत्वा स्थंडिले विधिना वह्निं संस्थाप्य ग्रहस्थापनं पूजनं च कृत्वा कुशकंडिकां कृत्वा आघारावाज्यभागौ हुत्वा ग्रहहोमान्तं समाप्य (१५०-१५४) प्रधानहोमः ॥ गणपतिमंत्रेण वा "गणपतये नमः" इति मूलमंत्रेण दूर्वारक्ताक्षताज्यमोदकपायसद्रव्यैः प्रतिद्रव्यमष्टोत्तरसहस्रं अष्टोत्तरशतम् अष्टाविंशतिर्वा यथाशक्त्या जुहुयात् ॥ ततो सर्वतोभद्रमंडलदेवतामंडूकादि (१६४-१६६) यंत्रावरणदेवताभ्यश्चैकैकामाज्याहुतिं हुत्वा फलहोमादि प्रणीताविमोकान्तं (१६८-१८८) समाप्य ॥ एकविंशति ब्राह्मणान् एकविंशतिनामभिः वस्त्रादिना पूजयेत् ॥ तद्यथा ॥ गणञ्जयः । गणपतिः । हेरंबः । धरणीधरः । महागणपतिः । यज्ञेश्वरः । क्षिप्रप्रसादनः । अमोघसिद्धिः । अमृतः । मंत्रः । चिन्तामणिः । निधिः । सुमंगलः । बीजम् । आशापूरकः । वरदः । शिवः । काश्यपः । नंदनः । वाचासिद्धिदः । ढुंढिनायकः ॥ २१ ॥ इत्येकविंशतिब्राह्मणनामानि ॥

तत आचार्याय शूर्पस्थैकविंशतिमोदकवायनं रक्तवस्त्रवेष्टितं दद्यात् ॥ तत्र मंत्रः ॥ विघ्नवर्य नमस्तुभ्यं मोदकान्वै ददाम्यहम् ॥ आपदुद्धारणार्थाय गृहाण द्विजसत्तम ॥ इति दत्त्वा गणपतिं प्रार्थयेत् ॥ अबुद्धमतिरिक्तं वा द्रव्यहीनं मया कृतम्। तत्सर्वं पूर्णतां यातु विघ्नराज नमोऽस्तु ते॥ ततो गां सोपस्करं पीठं चाचार्याय दत्त्वा आशिषो गृहीत्वा ब्राह्मणान् भोजयित्वा इष्टजनैः सह स्वयं भुंजीत ॥ इति संकष्टचतुर्थीव्रतोद्यापनम् ॥

---

## ॥ अथ शिवरात्रीव्रतोद्यापनविधिः ॥

माघकृष्णचतुर्दश्यां शिवरात्रीव्रतम् ॥ चतुर्दशवर्षात्मकं यावज्जीवं वा ॥ माघे कृष्णे चतुर्दश्यां निशीथव्यापिन्यां वा कार्यम्। इतिस्कान्दे ॥ पूर्ववन्मंडपादिकं विधाय शुभासने उपविश्येत्यादि सुमुखश्चै०।इति पठित्वा॥ अद्येत्यादि० ममात्मनः सर्वपापक्षयपूर्वकर्मक्षयभोगमोक्षप्राप्त्यर्थं पुत्रपौत्राद्यनवच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थमाचरितस्य आचरिष्यमाणस्य वा शिवरात्रीव्रतस्य संपूर्णफलावाप्तये एकरात्राधिवासपक्षाश्रयेण शिवरात्रीव्रतोद्यापनं करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशार्चनं गणपतिपूजनं स्वास्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नान्दीश्राद्धम् आचार्यादिवरणं प्रधानमंडले देवतास्थापनं पूजनं च करिष्ये। इति संकल्प्य दिग्रक्षणादि आचार्यादिवरणान्तं (६–४५) कर्म कृत्वा॥ द्वादशब्राह्मणैः सह पूजामारभेत ॥ " ततो द्वादशलिंगतोभद्रमंडले चतुर्लिङ्गतोभद्रमंडले सर्वतोभद्रमंडले वा देवतास्थापनं कुर्यात् " ॥

## त्रिचत्वारिंशद् ( ४३ ) रेखात्मकहरिहरमण्डलस्थद्वादश-लिङ्गतोभद्रमण्डलदेवतास्थापनम् ॥

हस्ते जलमादाय अद्येत्यादिपूर्वोच्चरितशुभपुण्यतिथौ० प्रारीप्सित-कर्मणि हरिहरात्मकद्वादशलिङ्गतोभद्रमण्डलदेवतावाहनस्थापनपूजनानि करिष्ये ॥ (आदौ सर्वतोभद्रमण्डलदेवताः (९९-१०७) संस्थापयेत् ॥ ततः हस्ते अक्षतान् गृहीत्वा—(ईशान्यादिक्रमेण प्रथम–द्वितीय-तृतीयपूर्व-लिङ्गे–)१ ॐ भूर्भुवः स्वः शिवाय नमः शिवमावाहयामि स्थापयामि । भो शिव इहागच्छ इहतिष्ठ ॥ ( एव सर्वत्र ) । २ ॐ भू० तत्पुरुषाय नमः तत्पुरुषम् आ० स्था० ॥ ३ ॐ भू० पशुपतये नमः पशुपतिम् आ० स्था० ॥ (प्रथम–द्वितीय–तृतीयदक्षिणलिङ्गे–) ॥ ४ ॐ भू० उग्राय नमः उग्रम् आ० स्था० ॥ ५ ॐ भू० अघोराय नमः अघोरम् आ० स्था० ॥ ६ ॐ भू० रुद्राय नमः रुद्रम् आ० स्था० ॥(प्रथम–द्वितीय–तृतीय—पश्चिमलिङ्गे—)॥ ७ ॐ भू० भवाय नमः भवम् आ० स्था० ॥ ८ ॐ भू० सद्योजाताय नमः सद्योजातम् आ० स्था० ॥ ९ ॐ भू० सर्वजाताय नमः सर्वजातम् आ० स्था०॥ (प्रथम-द्वितीय-तृतीयो-त्तरलिङ्गे–) ॥ १० ॐ भू० महालिङ्गाय नमः महालिङ्गम् आ० स्था० ॥ ११ ॐ भू० वामदेवाय नमः वामदेवम् आ० स्था० ॥ १२ ॐ भू० भीमाय नमः भीमम् आ० स्था० ॥ ( पूर्वेशान्यादिक्रमेण षोडशवापीषु प्रत्येकं देवतास्थापनम्–) १३ असिताङ्गभैरवाय० ॥ १४ रुरुभैरवाय० ॥ १५ चण्डभैरवाय० ॥ १६ क्रोधभैरवाय० ॥ १७ उन्मत्तभैरवाय० ॥ १८ कपालीभैरवाय० ॥ १९ भीषणभैरवाय० ॥ २० संहारभैरवाय० ॥ २१ भवाय० ॥ २२ शर्वाय० ॥ २३ ईशा-

नाय० ॥ २४ पशुपतये० ॥ २५ रुद्राय० ॥ २६ उग्राय० ॥ २७ भीमाय० ॥ २८ महते० ॥ २९ ( ईशानेन्द्रयोर्मध्ये भद्रे ) शूलिने० ॥ ३० ( इन्द्राग्न्योर्मध्ये भद्रे ) चन्द्रमौलिने० ॥ ३१( अग्नियमयोर्मध्ये भद्रे ) चन्द्रमसे० ॥ ३२ ( यमनिर्ऋत्योर्मध्ये भद्रे ) वृषभध्वजाय० ॥ ३३ ( निर्ऋतिवरुणयोर्मध्ये भद्रे ) त्रिलोचनाय० ॥ ३४ ( वरुणवाय्वोर्मध्ये भद्रे ) शक्तिधराय० ॥ ३५ ( वायुसोमयोर्मध्ये भद्रे ) महेश्वराय० ॥ ३६ ( सोमेशानयोर्मध्ये भद्रे ) शूलधारिणे० ॥ ( अथेशानीमारभ्येशानीपर्यंतमष्टवल्लीषु क्रमेणाष्टौ देवताः स्थापयेत् ॥ ) ३७ अनन्ताय० ॥ ३८ तक्षकाय० ॥ ३९ कुलिशाय० ॥ ४० कर्कोटकाय०॥ ४१ शङ्खपालाय०॥ ४२ कम्बलाय० ॥ ४३ अश्वतराय०॥ ४४ पृथिव्यै०॥(आग्नेयकोणे शृङ्खलादेवताः स्थापयेत् )॥ ४५ भूम्यै०॥ ४६ हैहयाय०॥४७ माल्यवते०॥ ४८ पारिजाताय०॥४९ दिक्पतये०॥ ५० महादेवाय० ॥ ५१ विष्णवे० ॥ ( नैर्ऋत्यकोणे शृङ्खलादेवताः स्थापयेत्॥)५२ माल्यवते०॥ ५३ महारुद्राय०॥ ५४ कालाग्निरुद्राय०॥ ५५ द्वादशादित्येभ्यो०॥ ५६ महेश्वराय०॥ ५७ मृत्युरोगाभ्यां०॥ ५८ वैनायक्यै० ॥ (वायव्यकोणे शृङ्खलादेवताः स्थापयेत् ) ५९ शाकुन्तलेयाय० ॥ ६० भरताय० ॥ ६१ नलाय०॥ ६२ रामाय०॥ ६३ सार्वभौमाय० ॥ ६४ नैषधाय० ॥६५ विन्ध्याचलाय० ॥ ( ईशानकोणे शृङ्खलादेवताः स्थापयेत् ) ६६ हेमकूटाय०॥ ६७ गन्धमादनाय० ॥६८ कुलाचलाय० ॥ ६९ हिमाचलाय० ॥ ७० पृथिव्यै० ॥ ७१ अनन्ताय० ॥ ७२ कमलासनाय० ॥ ( चतुर्दिक्षु खण्डेन्दुषु देवताः स्थापयेत् ) ७३ (ऐशाने ) अश्विनीकुमाराभ्यां० ॥७४ (आग्नेये) विश्वेभ्यो देवेभ्यो०॥ ७५ (नैर्ऋत्ये) पितृभ्यो०॥ ७६ (वायव्ये ) नागेभ्यो०॥

(तद्वहिः सत्त्वरजस्तमःपरिधिषु देवतास्थापनं पूर्वादिक्रमेण ॥) ७७ (सत्त्वपरिधौ पूर्वे) इन्द्राय० ॥७८ (आग्नेये) अग्नये० ॥ ७९ (दक्षिणे) यमाय० ॥ ८० (नैर्ऋत्ये) निर्ऋतये० ॥ ८१ (पश्चिमे) वरुणाय० ॥ ८२ (वायव्ये) वायवे० ॥ ८३ (उत्तरे) कुबेराय० ॥ ८४ (ऐशाने) ईशानाय० ॥ (तद्वहिः रजःपरिधौ आयुधावाहनम् ॥) ८५ (पूर्वे) वज्राय० ॥ ८६ (आग्नेये) शक्तये० ॥ ८७ (दक्षिणे) दण्डाय० ॥ ८८ (नैर्ऋत्ये) खड्गाय० ॥ ८९ (पश्चिमे) पाशाय० ॥ ९० (वायव्ये) अङ्कुशाय० ॥ ९१ (उत्तरे) गदायै० ॥ ९२ (ऐशाने) त्रिशूलाय० ॥ (तद्वहिः तमःपरिधौ ऋषीन् स्थापयेत् ॥ ९३ (पूर्वे) कश्यपाय० ॥ ९४ (आग्नेये) अत्रये० ॥ ९५ (दक्षिणे) भरद्वाजाय० ॥ ९६ (नैर्ऋत्ये) विश्वामित्राय० ॥ ९७ (पश्चिमे) गौतमाय० ॥ ९८ (वायव्ये) जमदग्नये० ॥ ९९ (उत्तरे) वसिष्ठाय० ॥ १०० (ऐशाने) भृगवे नमः भृगुमावाहयामि स्थापयामि ॥ भो भृगो इहागच्छ इह तिष्ठ।प्रतिष्ठापनम्-प्रतिष्ठा०पद्पञ्चाशदुत्तरशतसंख्यका हरिहरमण्डलदेवताः सुप्रतिष्ठाः वरदाः भवत॥ "ब्रह्माद्यावाहितहरिहरमण्डलदेवताभ्यो नमः" इति मन्त्रेण षोडशोपचारैः (वा अन्योपचारैः) सम्पूज्य तेभ्यो पायसबलिं दद्यात् ॥ पूजनान्ते समर्पणम्—अनया पूजया हरिहरमण्डलदेवताः प्रीयन्ताम् ॥

॥ इति त्रिचत्वारिंसद्रेखात्मकहरिहरमण्डलस्थद्वादशलिंगतोभद्रमण्डलदेवतास्थापनम् ॥

---

चतुस्त्रिंशद्रेखात्मकं (३४) द्वादशलिंगतोभद्रमण्डलदेवतास्थापनम् ॥

मण्डले (कर्णिकान्तराले मध्ये ईशानतः ईशानकोणे खंडेन्दौ ॥)
१ ईशाने-ॐ गुरवे नमः। २ आग्नेय्याम्-गणपतये०। ३ नैर्ऋत्याम्-दुर्गायै०। ४ वायव्याम्-क्षेत्रपालाय०। ५ (भद्रमध्ये) सदाशिवाय०।

(ततोऽष्टदले) पूर्वस्याम्-। ६ पूर्वे-कालाग्निरुद्राय०। ७ तत्रैव-कूर्माय०। ८ तत्रैव-मंडूकाय०॥ ९ आग्नेय्याम्-वराहा०। १० तत्रैव-अनंताय०। ११ दक्षिणस्याम्-पृथिव्यै०। १२ तत्रैव-स्कंदाय०। १३ तत्रैव-सुधासिंधवे०॥ १४ नैर्ऋत्याम्-नलाय०। १५ तत्रैव-पद्माय०॥ १६ पश्चिमायाम्-पत्रेभ्यो०। १७ तत्रैव-केसरेभ्यो०। १८ तत्रैव-कर्णिकायै०। १९ वायव्याम्-सिंहासनाय०। २० तत्रैव-पद्मासनाय०॥ २१ उत्तरस्याम्-धर्माय०। २२ तत्रैव-ज्ञानाय०। २३ तत्रैव-वैराग्याय०॥ २४ ईशान्याम्-ऐश्वर्याय०। २५ तत्रैव चिदाकाशाय०। २६ पद्ममध्ये-योगपीठाय०॥ (ततः कर्णिकोपरि पूर्वतश्चतुर्दिक्षु)-पृथिव्यै०। कपालाय०। सप्तसरिद्भ्यो०। सप्तसागरेभ्यो० (३०)॥ (कर्णिकासमीपे चत्वारि श्वेतभद्राणि सन्ति तेषु। पूर्वादिचतुर्दिक्षु) तत्पुरुषाय०। अघोराय०। सद्योजाताय०। वामदेवाय०। (३४)॥ (तत्समीपेकृष्णान्यष्टभद्राणि सन्ति तेषु ईशान्याद्यष्टदिक्षु) भगवत्यै० उमायै० शंकरप्रियायै० पार्वत्यै० गौर्य्यै० काल्यै० कौमार्यै० विश्वंभर्यै० (४२)॥ (ततः कृष्णभद्राधः अष्टौ रक्तभद्राणि सन्ति तेषु ईशान्याद्यष्टदिक्षु) नंदिने० महाकालाय० महावृषभाय० भृंगिरिटिने० स्कंदाय० उमापतये० चंडेश्वराय० योगसूत्राय० (५०)॥ (चत्वारि लिंगोपरि श्वेतभद्राणि सन्ति तेषु पूर्वादिचतुर्दिक्षु) धात्रे० मित्राय० यमाय० रुद्राय० (५४)॥ (तत्समीपे लिंगोपरि अष्टौ पीतभद्राणि सन्ति तेषु ईशान्याद्यष्टदिक्षु) वरुणाय० सूर्याय० भगाय० विवस्वते० पुरुषोत्तमाय० सवित्रे० त्वष्ट्रे० विष्णवे० (६२)॥ (ततो द्वादशलिंगतोदेवतानां स्थापनम्) (पूर्वे) शिवाय० तद्दक्षिणे—एकनेत्राय० तद्दक्षिणे—एकरुद्राय०॥ (दक्षिणस्याम्) त्रिमूर्तये० तत्पश्चिमे-श्रीकंठाय० तत्पश्चिमे-वामदेवाय०॥ (पश्चिमायाम्) —ज्येष्ठाय० तदुत्तरे-श्रेष्ठाय० तदुत्तरे रुद्राय०॥ (उत्तरे)-कालाय० तत्पूर्वे-कलविकरणाय० तत्पूर्वे-बलविकरणाय० (७४)॥ (ततो श्वेतषोडशवापीषु प्रत्येकं देवतास्थापनम्-) अणिमायै० महिमायै० लघिमायै० गरिमायै० प्राप्त्यै० प्राकाम्यै० ईशितायै० वशितायै० ब्राह्म्यै० माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुण्डायै० चण्डिकायै०॥ (९०) (ततो वापीसमीपे अष्टरक्तभद्राणि सन्ति तेषु ईशान्याद्यष्टदिक्षु)-असितांगभैरवाय० रुरुभैरवाय० चंडभैरवाय० क्रोधभैरवाय० उन्मत्तभैरवाय०

कालभैरवाय० भीषणभैरवाय० संहारभैरवाय० ( ९८ ) ॥ ( ईशानाद्यष्टदिक्षु वल्लीदेवतानां स्थापनम् )-घृताच्यै० मेनकायै० रम्भायै० उर्वश्यै० तिलोत्तमायै० सुकेशायै० मंजुघोषायै० अप्सरोभ्यो० ( १०६ ) ॥ ( ततो मण्डलमध्ये परिधिसमीपे शृङ्खलादेवताः स्थापयेत् )-( आग्नेय्याम् ) भवाय० शिवाय० रुद्राय० पशुपतये० उग्राय० भीमाय० महादेवाय० ईशानाय० अनन्ताय० वासुकये० (११६)-(नैर्ऋत्याम्) तक्षकाय० कुलीरकाय० कर्कोटकाय० शंखपालाय० कंवलाय० अश्वतराय० वैन्याय० अगाय० हैहयाय० अर्जुनाय० ( १२६ )—( वायव्याम् ) शाकुन्तलेयाय० भरताय० नलाय० रामाय० सार्वभौमाय० निषधाय० विंध्याचलाय० माल्यवते० पारियात्राय० सह्याय० ( १३६ )-( ऐशान्याम् ) हेमकूटाय० गंधमादनाय० कुलाचलाय० हिमवते० रैवताय० देवगिरये० मलयाचलाय० कनकाचलाय० पृथिव्यै० अनंताय० ( १४६ ) ॥ ( आग्नेयादिचतुर्दिक्षु खण्डेन्दुषु )-अग्निकुमाराभ्यां विश्वेभ्यो देवेभ्यो० पितृभ्यो० नागेभ्यो० ( १५० ) ॥ ( ततो मण्डलाद्बहिः सत्त्वपरिधौ पूर्वादिक्रमेण ) इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० कुबेराय० ईशानाय० ऊर्ध्वायाम्-ब्रह्मणे० अधः-अनन्ताय० ( १६० ) ॥ ( ततो रक्तपरिधौ पूर्वादिक्रमेण )- वज्राय० शक्तये० दण्डाय० खड्गाय० पाशाय० अंकुशाय० गदायै० त्रिशूलाय० (ऊर्ध्वायाम्) पद्माय० (अधः) चक्राय०(१७०)॥ (ततः कृष्णपरिधौ पूर्वादिक्रमेण) कश्यपाय० अत्रये० भरद्वाजाय० विश्वामित्राय० गौतमाय० जमदग्नये० वसिष्ठाय० अरुंधत्यै०। (१७८) पूर्वे-ऋग्वेदाय०। दक्षिणे-यजुर्वेदाय०। पश्चिमे-सामवेदाय०। उत्तरे-अथर्ववेदाय नमः ॥ ( १८२ ) ॥ इति ( २४ ) चतुस्त्रिंशद्रेखात्मकद्वादशलिंगतोभद्रमण्डलदेवतास्थापनम् ॥

---

## ॥ चतुर्लिङ्गतोभद्रमंडलदेवतास्थापनम् ॥

अथ चतुर्लिङ्गतोभद्रमंडलदेवतास्थापनम् ॥ ( पूर्वलिङ्गेषु ) वीरभद्राय नमः वीरभद्रमावाहयामि स्थापयामि ॥१॥ शंभवे नमः शंभुम् आ० स्था० ॥ २ ॥ अजैकपदे नमः अजैकपदम् आ० स्था० ॥ ३ ॥ ( दक्षिणलिङ्गेषु ) अहिर्बुध्न्याय नमः अहिर्बुध्न्यम् आ० स्था० ॥ ४ ॥ पिनाकिने नमः पिना-

किनम् आ० स्था० ॥ ५ ॥ शूलपाणये नमः शूलपाणिम् आ० स्था० ॥६॥ ( पश्चिमलिङ्गेषु ) भुवनाधीश्वराय नमः भुवनाधीश्वरम् आ० स्था० ॥७॥ कपालिने नमः कपालिनम् आ० स्था० ॥ ८ ॥ दिक्पतये नमः दिक्पतिम् आ० स्था० ॥ ९ ॥ ( उत्तरलिङ्गेषु ) रुद्राय नमः रुद्रम् आ० स्था० ॥१०॥ शिवाय नमः शिवम् आ० स्था० ॥ ११ ॥ महेश्वराय नमः महेश्वरम् आ० स्था० ॥ १२ ॥ ( ततः पूर्वादिक्रमेण अष्टभैरवदेवताः ) असिताङ्गभैरवाय० असिताङ्गभैरवम् आ० ॥ १३ ॥ रुरुभैरवाय० रुरुभैरवम् आ० ॥ १४ ॥ चंडभैरवाय० चंडभैरवम् आ० ॥१५॥ क्रोधभैरवाय० क्रोधभैरवम् आ० ॥ १६ ॥ उन्मत्तभैरवाय० उन्मत्तभैरवम् आ० ॥ १७ ॥ कपालभैरवाय० कपालभैरवम् आ० ॥ १८ ॥ भीषणभैरवाय० भीषणभैरवम् आ० ॥ १९ ॥ संहारभैरवाय० संहारभैरवम् आ० ॥ २० ॥ ( ततः पूर्वादिक्रमेण चतुर्विंशतिदेवताः ) भवाय नमः भवम् आ० स्था० ॥२१ ॥ शर्वाय० शर्वम् आ० ॥ २२ ॥ रुद्राय० रुद्रम् आ० ॥ २३ ॥ पशुपतये० पशुपतिम् आ० ॥२४॥ महते० महान्तम् आ० ॥२५ । भीमाय० भीमम् आ० ॥२६॥ ईशानाय० ईशानम् आ० ॥२७॥ अनन्ताय० अनन्तम् आ० ॥२८॥ तक्षकाय० तक्षकम् आ० ॥ २९ ॥ वासुकये० वासुकिम् आ० ॥ ३० ॥ कुलिशाय० कुलिशम् आ० ॥ ३१ ॥ कर्कोटकाय० कर्कोटकम् आ० ॥३२॥ शङ्खपालाय० शङ्खपालम् आ० ॥ ३३ ॥ कम्बलाय० कम्बलम् आ० ॥३४॥ अश्वतराय० अश्वतरम् आ० ॥ ३५ ॥ शूलिने० शूलिनम् ॥ ३६ ॥ चन्द्रमौलये० चन्द्रमौलिम् आ० ॥ ३७ ॥ चन्द्रमसे० चन्द्रमसम् आ० ॥ ३८ ॥ वृषभध्वजाय० वृषभध्वजम् आ० ॥ ३९ ॥ त्रिलोचनाय० त्रिलोचनम् आ० ॥४०॥ शक्तिधराय० शक्तिधरम् आ० ॥४१॥ महेश्वराय० महेश्वरम् आ० ॥ ४२ ॥ शूलधारिणे० शूलधारिणम् आ० ॥ ४३ ॥ स्थाणवे० स्थाणुम् आ० ॥ ४४ ॥

( मध्ये कर्णिकायाम् ) ब्रह्मणे नमः ब्रह्माणम् आ० स्था० ॥ १ ॥ ( उत्तरे उत्तरलिङ्गस्याधः ) सोमाय० सोमम् आ० ॥ २ ॥ ( ईशान्यां खण्डेन्दौ ) ईशानाय० ईशानम् आ० ॥ ३ ॥ ( पूर्वे पूर्वलिङ्गस्याधः ) इन्द्राय० इन्द्रम् आ० ॥४॥ (आग्नेये खण्डेन्दौ ) अग्नये० अग्निम् आ० ॥५॥ ( दक्षिणे दक्षिणलिङ्गस्याधः ) यमाय० यमम् आ० ॥ ६ ॥ ( नैर्ऋत्यां

खण्डेन्दौ ) निर्ऋतये० निर्ऋतिम् आ० ॥७॥ ( पश्चिमे पश्चिमलिङ्गस्याधः ) वरुणाय० वरुणम् आ० ॥ ८ ॥ ( वायव्यां खण्डेन्दौ ) वायवे० वायुम् आ० ॥ ९ ॥ ( वायुसोमयोर्मध्ये भद्रे ) अष्टवसुभ्यो० अष्टवसून् आ० ॥१०॥ ( सोमेशानयोर्मध्ये भद्रे ) एकादशरुद्रेभ्यो० एकादशरुद्रान् आ० ॥११॥ ( ईशानेन्द्रयोर्मध्ये भद्रे ) द्वादशादित्येभ्यो० द्वादशादित्यान् आ० ॥१२॥ (इन्द्राग्न्योर्मध्ये भद्रे) अश्विभ्यां नमः अश्विनौ आ०॥१३॥ (अग्नियमयोर्मध्ये भद्रे ) विश्वेभ्यो देवेभ्यो० विश्वान् देवान् आ० ॥ १४ ॥ ( यमनिर्ऋत्यो-र्मध्ये भद्रे ) सप्तयक्षेभ्यो० सप्तयक्षान् आ० ॥ १५ ॥ ( निर्ऋतिवरुणयो-र्मध्ये भद्रे ) भूतनागेभ्यो० भूतनागान् आ० ॥ १६ ॥ ( वरुणवाय्वोर्मध्ये भद्रे ) गन्धर्वाप्सरोभ्यो० गन्धर्वाप्सरस० आ० ॥ १७ ॥ ( उत्तरलिङ्ग-स्याधः ) स्कन्दाय० स्कन्दम् आ० ॥ १८ ॥ ( तत्रैव ) नन्दीश्वराय० नन्दीश्वरम् आ० ॥ १९ ॥ शूलमहाकालाभ्याम्० शूलमहाकालौ आ०॥२०॥ ( ब्रह्मेशानयोर्मध्ये शृङ्खलायाम् ) दक्षादिसप्तकाय० दक्षादिसप्तकम् आ० ॥ २१ ॥ ( पूर्वलिङ्गस्याधः ) दुर्गायै० दुर्गाम् आ० ॥ २२ ॥ ( तत्रैव ) विष्णवे० विष्णुम् आ०॥२३॥(ब्रह्माग्न्योर्मध्ये शृङ्खलायाम् ) स्वधायै०स्वधाम् आ० ॥ २४ ॥ ( दक्षिणलिङ्गस्याधः ) मृत्युरोगाभ्यां० मृत्युरोगौ आ० ॥ २५ ॥ ( ब्रह्मनिर्ऋत्योर्मध्ये शृङ्खलायाम् ) गणपतये० गणपतिम् आ० ॥ २६ ॥ ( पश्चिमलिङ्गस्याधः ) अद्भ्यो० अपः आ० ॥२७॥ ( ब्रह्मवाय्वोर्मध्ये शृङ्खलायाम् ) मरुद्भ्यो० मरुतः आ० ॥ २८ ॥ ( ब्रह्मणः पादमूले कर्णिकायाम् ) पृथिव्यै० पृथिवीम् आ० ॥ २९ ॥ ( तत्रैव ) गङ्गादिनदीभ्यो० गङ्गादिनदीः आ० ॥ ३० ॥ ( तत्रैव ) सप्तसागरेभ्यो० सप्तसागरान् आ० ॥ ३१ ॥ ( ब्रह्मणो मस्तके कर्णिकोपरि ) मेरवे० मेरुम् आ० ॥३२॥ (उदग्-लिङ्गे ) सद्योजाताय० सद्योजातम् आ० ॥ १ ॥ (प्राच्यां लिङ्गे) वामदेवाय

---

१ ध्रुवाय । अध्वराय । सोमाय । अद्भ्य । अनिलाय । अनलाय । प्रत्यूषाय । प्रभासाय॥८ २ वीरभद्राय । शंभवे । गिरिशाय । अजैकपादाय । अहिर्बुध्न्याय । पिनाकिने । भुवनाधी-श्वराय । कपालिने ॥ दिक्पतये ॥ स्थाणवे । रुद्राय ॥ ११ ॥ ३ भगाय । वरुणाय । सूर्याय । वेदाङ्गाय । भानवे । रवये । गभस्तये । हिरण्यरेतसे । दिवाकराय । मित्राय आदित्याय । विष्णवे नमः ॥ १२ ॥

वामदेवम् आ० ॥ २ ॥ ( दक्षिणलिङ्गे ) अघोराय० अघोरम् ॥ ३ ॥ ( प्रतीचीलिङ्गे ) तत्पुरुषाय० तत्पुरुषम् आ० ॥४॥ ( कर्णिकायां मेरूपरि ) ईशानाय० ईशानम् आ० ॥ ५ ॥ ( परिधौ ) परिधये० परिधिम् आ० ॥ ६ ॥ ( मेरोः परिधिसमंतात् लिङ्गानां स्कन्धे विंशतिकोष्ठेषु ) चतुःपुरीभ्यो० चतुःपुरीः आ० ॥ ७ ॥ ( आग्नेयादिकोणेषु शृंखलाशिरसि पदत्रये ) ऋग्वेदाय० ऋग्वेदम् आ० ॥ ८ ॥ यजुर्वेदाय० यजुर्वेदम् आ० ॥९॥ सामवेदाय० सामवेदम् आ० ॥१०॥ अथर्ववेदाय० अथर्ववेदम् आ० ॥ ११ ॥ (उत्तरलिङ्गस्य दक्षिणवापीमारभ्य वामवापीपर्यन्तास्वष्टवापीषु) भवाय० भवम् आ० ॥ १२ । शर्वाय० शर्वम् आ० ॥ १३ ॥ पशुपतये० पशुपतिम् आ० ॥ १४ ॥ ईशानाय० ईशानम् आ० ॥ १५ ॥ उग्राय० उग्रम् आ० ॥ १६ ॥ रुद्राय० रुद्रम् आ० ॥ १७ ॥ भीमाय० भीमम् आ० ॥ १८ ॥ महते० महान्तम् आ० ॥ १९ ॥ ( तत्तद्वापीसमीपस्थैकैकपदेषु क्रमतः ) भवान्यै० भवानीम् आ० ॥ २० ॥ शर्वाण्यै० शर्वाणीम् आ०॥ २१ ॥ पशुपत्यै० पशुपतीम् आ० ॥ २२ ॥ ईशान्यै० ईशानीम् आ० ॥ २३ ॥ उग्रायै० उग्राम् आ० ॥ २४ ॥ रुद्राण्यै० रुद्राणीम् आ० ॥ २५ ॥ भीमायै० भीमाम् आ० ॥ २६ ॥ महत्यै० महतीम् आ० ॥ २७ ॥ ( बाह्यश्वेतपरिधौ उत्तरतः सोममारभ्य वायुपर्यंतमायुधानि ) गदायै० गदाम् आ० ॥३३॥ त्रिशूलाय० त्रिशूलम् आ० ॥ ३४ ॥ वज्राय० वज्रम् आ० ॥ ३५ ॥ शक्तये० शक्तिम् आ० ॥ ३६ ॥ दण्डाय० दण्डम् आ० ॥ ३७ ॥ खड्गाय० खड्गम् आ० ॥३८॥ पाशाय० पाशम् आ० ॥ ३९ ॥ अङ्कुशाय० अङ्कुशम् आ० ॥४०॥ ( तद्वाह्ये रक्तपरिधौ उत्तरतः क्रमेण ) गौतमाय० गौतमम् आ० ॥ ४१ ॥ भरद्वाजाय० भरद्वाजम् आ० ॥ ४२ ॥ विश्वामित्राय० विश्वामित्रम् आ० ॥ ४३ ॥ कश्यपाय कश्यपम् आ० ॥ ४४ ॥ जमदग्नये० जमदग्निम् आ० ॥ ४५ ॥ वसिष्ठाय० वसिष्ठम् आ० ॥ ४६ ॥ अत्रये० अत्रिम् आ० ॥ ४७ ॥ अरुन्धत्यै० अरुन्धतीम् आ० ॥ ४८ ॥ ( तद्बाह्ये कृष्णपरिधौ उत्तरतः क्रमेण ) ऐन्द्र्यै० ऐन्द्रीम् आ० ॥ ४९ ॥ कौमार्यै० कौमारीम् आ० ॥ ५० ॥ ब्राह्म्यै० ब्राह्मीम् आ० ॥ ५१ ॥ वाराह्यै० वाराहीम् आ० ॥ ५२ ॥ चामुण्डायै० चामुण्डाम् आ० ॥ ५३ ॥ वैष्णव्यै० वैष्णवीम् आ० ॥ ५४ ॥ माहेश्वर्यै नमः माहेश्वरीम् आ० ॥५५॥ वैनायक्यै० वैनायकीम् आ०॥५६॥

( १२७ ) इति चतुर्लिङ्गतोभद्रमंडलदेवता. ॥ प्रतिष्ठा सर्व० ॥ चतुर्लिङ्गतोभद्रमंडलदेवताः सुप्रतिष्ठिता वरदा भवत ॥ ततः " चतुर्लिङ्गतोभद्रमंडलदेवताभ्यो नम. " इति मंत्रेण पूजनं कुर्यात् ॥

ततो द्वादशलिंगेपु द्वादशकलशान् परितो वा मध्ये एकं विश्वाधारासीत्यादिना पूर्णपात्रान्तान् संस्थाप्य मध्यकुंभोपरि क्षौमवस्त्रं प्रसार्य चंदनेनाष्टदलं विलिख्य मंडूकादिपीठदेवता आवाह्य (१०८) संपूज्य ॥ सौवर्णं सांबसदाशिवं राजतं वृषभं च कृताग्न्युत्तारणप्राणप्रतिष्ठं मध्यकुंभे संस्थाप्य आवाहयेत् ॥ एह्येहि गौरीश पिनाकपाणे शशांकमौले वृषभाधिरूढ ॥ देवाधिदेवेश महेश नित्यं गृहाण पूजां भगवन्नमस्ते ॥ उमामहेश्वराभ्यां० उमामहेश्वरौ आवा० ॥ पुरतो वृषभ इहा० वृषभाय० वृषभमावा० ॥ द्वादशब्राह्मणाः आचार्यो वा द्वादशलिंगस्थकलशेपु द्वादशप्रतिमायां अक्षतपुंजेपु वा द्वादशनाममंत्रैर्द्वादशदेवान् आवाहयेत् ॥ तत्र ( प्राच्यां ) महेशाय० महेशमावा० । अघोराय० । पशुपतये० ।(दक्षिणस्याम) पंचवक्त्राय० । उग्राय० । रुद्राय० । (पश्चिमायां ) भवाय० । शर्वाय० । शंभवे० । ( उत्तरस्यां ) शिवाय० । भीमाय० । भीमपराक्रमाय० ॥१२॥ इत्यावाह्य पूर्वोदित इन्द्रादिलोकपालान् आवाहयेत् ॥ यथा–इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । कुबेराय० । ईशानाय० । ब्रह्मणे० । अनन्ताय० ॥१०॥ तत उमामहेश्वराद्यावाहितदेवताः सुप्रतिष्ठिताः वरदा भवत ॥ इति प्रतिष्ठाप्य ॥ यथाशक्ति " उमामहेश्वराद्यावाहितदेवताभ्यो नमः " इति मंत्रेण पूजनं कुर्यात् ॥ इति ॥

## ॥ अथ शिवपूजनम् ॥

तत्रादौ १ ध्यानम् ॥ शान्ताकारं शिखरशयनं नीलकंठं सुरेशं

विश्वाधारं स्फटिकसदृशं शुभ्रवर्णं शुभांगम् ॥ गौरीकान्तं त्रितयनयनं योगिभिर्ध्यानगम्यं वंदे शंभुं भवभयहरं सर्वलोकैकनाथम् ॥ १ ॥ आवाहनम् ॥ गंधर्वकिन्नरमहर्षिसुरेन्द्रवृंदैः संसेव्यमानमनिशं वृषभावरूढम् ॥ आवाहयामि गिरिजासहितं प्रसन्न भक्त्या सुखागतमहं शिरसा नमामि ॥ २ ॥ आसनम् ॥ सिंहासने कनकरत्नमणिप्रभास्वान् छत्रं ध्वजालसितचामरतोरणाढ्यम् ॥ बालार्ककोटिसदृशं कनकांबराढ्यं श्वाविश्वनाथ मनसैव मयाऽर्पितं ते ॥३॥ पाद्यम् ॥ दूर्वांकुरांबुजमनोहरपुष्पयुक्तं शुद्धं जलं सुरभिचूर्णसमान्वितं च ॥ सौवर्णपात्रविलसत्पदयोर्विशुद्धं पाद्यं गृहाण जगदीश मयाऽर्पितं ते ॥४॥ अर्घ्यम् ॥ दूर्वायवाक्षतसुगंधिहिरण्यरत्नं दर्भांबुजं त्रिपथगाजलपुष्पयुक्तम् ॥ सौवर्णपात्ररचितं फलयुक्तमर्घ्यं त्वं स्वीकुरुष्व मनसार्पितमिन्दुमौले ॥ ५ ॥ आचमनम् ॥ गंगाजलैरमृतमाधुरतासुपन्नैरेलालवंगशुभगंधमनोभिरामम् ॥ गौरीपते कनकपात्रधृतं मया ते भक्त्यार्पितं सुचिरमाचमनं गृहाण ॥६॥ पंचामृतस्नानम् ॥ शुद्धैः पयोदधिमधुघृतशर्कराभिर्गंगाजलैः कनककुंभधृतैः समन्त्रैः। कर्पूरकेसरसुगंधिभिरिन्दुमौले पंचामृतं त्वमुररीकुरु दीनबन्धो॥ उमामहेश्वराभ्यां० पंचामृतस्नानं सम०॥ वरुणस्नानम् सम० ॥ वरुणस्नानान्ते शुद्धोदकस्नानं सम० ॥ ७ ॥ ततः पंचोपचारैः पूजयेत् ॥ ततः अष्टमूर्तिपूजनम् ॥ पूर्वमारभ्येशानपर्यन्तं वामावर्त्तेन पूजयेत् ॥ शर्वाय क्षितिमूर्त्तये०। भवाय जलमूर्त्तये०। रुद्राय तेजोमूर्त्तये०। उग्राय वायुमूर्त्तये० । भीमायआकाशमूर्तये० । पशुपतये यजमानमूर्तये० । ईशानाय सूर्यमूर्तये० । महादेवाय सोममूर्त्तये० ॥ इति संपूज्य ॥ उत्तरे निर्माल्यं विसृज्य पुनः गंधाक्षतपुष्पैः संपूज्य अभिषेकमारभेत ॥ ब्राह्मणाः " महिम्नः पारं ते " इति स्तोत्रेणाभिषेकं कारयेत् ॥

## ॥ महिम्नःस्तोत्रम् ॥

महिम्नः पारं ते परमविदुषो यद्यसदृशी स्तुतिर्ब्रह्मादीनामपि तदवसन्नास्त्वयि गिरः । अथावाच्यः सर्वः स्वमतिपरिणामावधि गृणन्ममाप्येष स्तोत्रे हर ! निरपवादः परिकरः ॥ १ ॥ अतीतः पन्थानं तव च महिमा वाङ्मनसयोरतद्व्यावृत्त्या यं चकितमभिधत्ते श्रुतिरपि । स कस्य स्तोतव्यः कतिविधगुणः कस्य विषयः पदे त्वर्वाचीने पतति न मनः कस्य न वचः ॥ २ ॥ मधुस्फीता वाचः परमममृतं निर्मितवतस्तव ब्रह्मन् किं वागपि सुरगुरोर्विस्मयपदम् । मम त्वेतां वाणीं गुणकथनपुण्येन भवतः पुनामीत्यर्थेऽस्मिन्पुरमथन बुद्धिर्व्यवसिता ॥ ३ ॥ तवैश्वर्यं यत्तज्जगदुदयरक्षाप्रलयकृत्त्रयीवस्तुव्यस्तं तिसृषु गुणभिन्नासु तनुषु । अभव्यानामस्मिन्वरद रमणीयामरमणीं विहन्तुं व्याक्रोशीं विदधत इहैके जडधियः ॥ ४ ॥ किमीहः किंकायः स खलु किमुपायस्त्रिभुवनं किमाधारो धाता सृजति किमुपादान इति च । अतर्क्यैश्वर्ये त्वय्यनवसरदुःस्थो हतधियः कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥ ५ ॥ अजन्मानो लोकाः किमवयववन्तोऽपि जगतामधिष्ठातारं किं भवविधिरनादृत्य भवति । अनीशो वा कुर्याद्भुवनजनने कः परिकरो यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥ ६ ॥ त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च । रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥ ७ ॥ महोक्षः खट्वाङ्गं परशुरजिनं भस्म फणिनः कपालं चेतीयत्तव वरद तन्त्रोपकरणम् । सुरास्तां तामृद्धिं दधति तु भवद्भ्रूप्रणिहितां न हि स्वात्मा-

रामं विषयमृगतृष्णा भ्रमयति ॥ ८ ॥ ध्रुवं कश्चित्सर्वं सकलमपरस्त्वध्रुवमिदं परो ध्रौव्याध्रौव्ये जगति गदति व्यस्तविषये । समस्तेऽप्येतस्मिन्पुरमथन तैर्विस्मित इव स्तुवन्जिह्रेमि त्वां न खलु ननु धृष्टा मुखरता ॥ ९ ॥ तवैश्वर्यं यत्नाद्यदुपरि विरिञ्चिर्हरिरधः परिच्छेत्तुं यातावनलमनलस्कन्धवपुषः । ततो भक्तिश्रद्धाभरगुरुगृणद्भ्यां गिरिश यत्स्वयं तस्थे ताभ्यां तव किमनुवृत्तिर्न फलति ॥ १० ॥ अयत्नादापाद्य त्रिभुवनमवैरव्यतिकरं दशास्यो यद्बाहूनभृत रणकण्डूपरवशान् । शिरःपद्मश्रेणीरचितचरणाम्भोरुहबलेः स्थिरायास्त्वद्भक्तेस्त्रिपुरहर विस्फूर्जितमिदम् ॥ ॥ ११ ॥ अमुष्य त्वत्सेवासमधिगतसारं भुजवनं बलात्कैलासेऽपि त्वदधिवसतौ विक्रमयतः । अलभ्या पातालेऽप्यलसचलिताङ्गुष्ठशिरसि प्रतिष्ठा त्वय्यासीद्ध्रुवमुपचितो मुह्यति खलः ॥ १२ ॥ यदृद्धिं सुत्राम्णो वरद परमोच्चैरपि सतीमधश्चक्रे बाणः परिजनविधेयस्त्रिभुवनः । न तच्चित्रं तस्मिन्वरिवसितरि त्वच्चरणयोर्न कस्या उन्नत्यै भवति शिरसस्त्वय्यवनतिः ॥ १३ ॥ अकाण्डब्रह्माण्डक्षयचकितदेवासुरकृपाविधेयस्यासीद्यस्त्रिनयन विषं संहृतवतः । स कल्माषः कण्ठे तव न कुरुते न श्रियमहो विकारोऽपि श्लाघ्यो भुवनभयभङ्गव्यसनिनः ॥ १४ ॥ असिद्धार्था नैव क्वचिदपि सदेवासुरनरे निवर्तन्ते नित्यं जगति जयिनो यस्य विशिखाः । स पश्यन्नीश त्वामितरसुरसाधारणमभूत् स्मरः स्मर्तव्यात्मा न हि वशिषु पथ्यः परिभवः ॥ १५ ॥ मही पादाघाताद्व्रजति सहसा संशयपदं पदं विष्णोर्भ्राम्यद्भुजपरिघरुग्णग्रहगणम् । मुहुर्द्यौर्दौस्थ्यं यात्यनिभृतजटाताडिततटा जगद्रक्षायै त्वं नटसि ननु वामैव विभुता ॥ १६ ॥ वियद्व्यापी तारागणगुणितफेनोद्गमरुचिः प्रवाहो वारां यः पृषतलघुदृष्टः शिरसि ते । जगद्द्वीपाकारं जलधिवलयं तेन कृतमित्यने-

नैयोन्नेयं धृतमहिम दिव्यं तव वपुः ॥ १७ ॥ रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति । दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधिर्विधेयैः क्रीडन्त्यो न खलु परतन्त्राः प्रभुधियः ॥ १८ ॥ हरिस्ते साहस्रं कमलबलिमाधाय पदयोर्यदेकोने तस्मिन्निजमुदहरन्नेत्रकमलम् । गतो भक्त्युद्रेकः परिणतिमसौ चक्रवपुषा त्रयाणां रक्षायै त्रिपुरहर जागर्ति जगताम् ॥ १९ ॥ क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमतां क्व कर्म प्रध्वस्तं फलति पुरुषाराधनमृते । अतस्त्वां संप्रेक्ष्य क्रतुषु फलदानप्रतिभुवं श्रुतौ श्रद्धां बद्ध्वा दृढपरिकरः कर्मसु जनः ॥ २० ॥ क्रियादक्षो दक्षः क्रतुपतिरधीशस्तनुभृतामृषीणामार्त्विज्यं शरणद सदस्याः सुरगणाः । क्रतुभ्रेषस्त्वत्तः क्रतुफलविधानव्यसनिनो ध्रुवं कर्तुः श्रद्धाविधुरमभिचाराय हि मखाः ॥ २१ ॥ प्रजानाथं नाथ प्रसभमभिकं स्वां दुहितरं गतं रोहिद्भूतां रिरमयिषुमृष्यस्य वपुषा । धनुष्पाणेर्यातं दिवमपि सपत्राकृतममुं त्रसन्तं तेऽद्यापि त्यजति न मृगव्याधरभसः ॥ २२ ॥ स्वलावण्याशंसाधृतधनुषमह्नाय तृणवत्पुरः प्लुष्टं दृष्ट्वा पुरमथन पुष्पायुधमपि । यदि स्त्रैणं देवी यमनिरत देहार्धघटनादवैति त्वामद्धा बत वरद मुग्धा युवतयः ॥ २३ ॥ श्मशानेष्वाक्रीडा स्मरहर पिशाचाः सहचराश्चिताभस्मालेपः स्रगपि नृकरोटीपरिकरः । अमङ्गल्यं शीलं तव भवतु नामैवमखिलं तथापि स्मर्तॄणां वरद परमं मङ्गलमसि ॥ २४ ॥ मनः प्रत्यक्चित्ते सविधमवधायात्तमरुतः प्रहृष्यद्रोमाणः प्रमदसलिलोत्सङ्गितदृशः । यदालोक्याह्लादं ह्रद इव निमज्ज्यामृतमये दधत्यन्तस्तत्त्वं किमपि यमिनस्तत्किल भवान् ॥ २५ ॥ त्वमर्कस्त्वं सोमस्त्वमसि पवनस्त्वं हुतवहस्त्वमापस्त्वं व्योम त्वमु धरणिरात्मा त्वमिति च । परिच्छिन्नामेवं त्वयि

परिणता विभ्रतु गिरं न विद्मस्तत्त्वं वयमिह तु यत्त्वं न भवसि ॥२६॥ त्रयीं तिस्रो वृत्तीस्त्रिभुवनमथो त्रीनपि सुरानकाराद्यैर्वर्णैस्त्रिभिरभिदधत्तीर्णविकृति। तुरीयं ते धाम ध्वनिभिरवरुन्धानमणुभिः समस्तं व्यस्तं त्वां शरणद गृणात्योमिति पदम् ॥ २७ ॥ भवः शर्वो रुद्रः पशुपतिरथोग्रः सहमहांस्तथा भीमेशानाविति यदभिधानाष्टकमिदम्। अमुष्मिन्प्रत्येकं प्रविचरति देव श्रुतिरपि प्रियायास्मै धाम्ने प्रणिहितनमस्योऽस्मि भवते ॥ २८ ॥ नमो नेदिष्ठाय प्रियदव दविष्ठाय च नमो नमः क्षोदिष्ठाय स्मरहर महिष्ठाय च नमः। नमो वर्षिष्ठाय त्रिनयन यविष्ठाय च नमो नमः सर्वस्मै ते तदिदमिति शर्वाय च नमः॥२९॥ बहलरजसे विश्वोत्पत्तौ भवाय नमो नमः प्रबलतमसे तत्संहारे हराय नमो नमः। जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नमः प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमो नमः ॥ ३० ॥ कृशपरिणति चेतः क्लेशवश्यं क्व चेदं क्व च तव गुणसीमोल्लङ्घिनी शश्वदृद्धिः। इति चकितममन्दीकृत्य मां भक्तिराधाद्वरद चरणयोस्ते वाक्यपुष्पोपहारम् ॥ ३१ ॥ असितगिरिसमं स्यात्कज्जलं सिंधुपात्रे सुरतरुवरशाखा लेखनी पत्रमुर्वी। लिखति यदि गृहीत्वा शारदा सर्वकालं तदपि तव गुणानामीश पारं न याति ॥ ३२ ॥ असुरसुरमुनीन्द्रैरर्चितस्येन्दुमौलेर्ग्रथितगुणमहिम्नो निर्गुणस्येश्वरस्य। सकलगणवरिष्ठः पुष्पदन्ताभिधानो रुचिरमलघुवृत्तैः स्तोत्रमेतच्चकार ॥ ३३ ॥ अहरहरनवद्यं धूर्जटेः स्तोत्रमेतत्पठति परमभक्त्या शुद्धचित्तः पुमान्यः। स भवति शिवलोके रुद्रतुल्यस्तथाऽत्र प्रचुरतरधनायुः पुत्रवान्कीर्तिमांश्च ॥ ३४ ॥ महेशान्नापरो देवो महिम्नो नापरा स्तुतिः। अघोरान्नापरो मन्त्रो नास्ति तत्त्वं गुरोः परम् ॥ ३५ ॥ दीक्षा दानं तपस्तीर्थं ज्ञानं यागादिकाः क्रियाः। महिम्नस्तव पाठस्य कलां नार्हन्ति षोडशीम ॥

॥ ३६ ॥ कुसुमदशननामा सर्वगंधर्वराजः शिशुशशिधरमौलेर्देवदेवस्य दासः । स खलु निजमहिम्नो भ्रष्ट एवास्य रोषात्स्तवनमिदमकार्षी-द्दिव्यदिव्यं महिम्नः ॥ ३७ ॥ सुरवरमुनिपूज्यं स्वर्गमोक्षैकहेतुं पठति यदि मनुष्यः प्राञ्जलिर्नान्यचेताः। व्रजति शिवसमीपं किंनरैः स्तूयमानः स्तवनमिदममोघं पुष्पदन्तप्रणीतम् ॥ ३८ ॥ आसमाप्तमिदं स्तोत्रं पुण्यं गन्धर्वभाषितम् । अनौपम्यं मनोहारि शिवमीश्वरवर्णनम् ॥३९॥ तव तत्त्वं न जानामि कीदृशोऽसि महेश्वर । यादृशोऽसि महादेव तादृशाय नमो नमः ॥४०॥ एककालं द्विकालं वा त्रिकालं यः पठेन्नरः । सर्वपापविनिर्मुक्तः शिवलोके महीयते ॥ ४१ ॥ श्रीपुष्पदन्तमुखपङ्कज-निर्गतेन स्तोत्रेण किल्बिषहरेण हरप्रियेण । कण्ठस्थितेन पठितेन समा-हितेन सुप्रीणितो भवति भूतपतिर्महेशः ॥ ४२ ॥ इत्येषा वाङ्मयी पूजा श्रीमच्छंकरपादयोः। अर्पिता तेन देवेशः प्रीयतां मे सदाशिवः ॥४३॥

॥ इति महिम्नःस्तोत्रं समाप्तम् ॥

---

*एवम् अभिषेकं कृत्वा ततः शुद्धोदकस्नानं कारयेत् ॥*

शुद्धोदकस्नानम् ॥ श्रीजाह्नवीजलमयं सरसं सुधावच्चैलालवं-गशुभगंधमनोभिरामम् ॥ गौरीपते कनकपात्रधृतं मया ते स्नानं गृहाण जगदीश मयाऽर्पितं ते ॥ ९ ॥ वस्त्रम् ॥ कौशेयवस्त्रयुगलं कनकैर्विचित्रं बालार्ककोटिसदृशं च मनोभिरामम्॥ भक्त्या मयार्पितमिदं परिधाय शंभो सिंहासने त्वमुपविश्य गृहाण पूजाम् ॥ १० ॥ यज्ञोपवीतम् ॥ दत्तं मया सुमनसा वचसा करेण यद् ब्रह्मचर्यसमयं परमं पवित्रम् ॥ यद्धर्मक-र्मनिलयं परमायुषं च यज्ञोपवीतमुररीकुरु विश्वनाथ॥ ११ ॥गंधः॥यच्छ्रेष्ठ-मस्ति मलयाचलचन्दनानां कर्पूरकेसरसुगंधिरसेन घृष्टम्॥ आमोदमान-मनिशं मनसा धृतं च श्रीचन्दनं त्वमुररीकुरु दीनबंधो ॥१२॥ अक्षताः ॥

श्वेतैरखंडितमनोहरशालिबीजैः संक्षालितैः शुचिजलैश्च सुगंधमिश्रैः ॥ त्वामर्चयामि भगवन्मनसा महेशं गौरीपते मयि निधेहि कृपाकटाक्षम्॥१३ पुष्पाणि ॥ सेवन्तिकाबकुलचंपकपाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः । बिल्वप्रवालतुलसीदलमालिकाद्यैस्त्वां पूजयामि जगदीश्वर मे प्रसीद ॥ १४ ॥ बिल्वपत्रम् ॥ मालूरवृक्षजनितानि मनोहराणि भक्त्या त्वदर्थमनिशं प्रतिपादितानि ॥ श्रीबिल्वपत्रसुदलानि समर्पितानि गौरीपते परिगृहाण सुकोमलानि ॥ १५ ॥ इति ॥

---

## ॥ अथ पंचवक्त्रपूजा ॥

तत्रादौ पंचवक्त्रध्यानम् ॥ पंचवक्त्र वृषारूढ प्रतिवक्त्रत्रिलोचन ॥ कपालशूलखट्वांगिन् चन्द्रमौले नमो नमः ॥ इति ध्यात्वा पश्चिमवक्त्रं पूजयेत् ॥

१ "पश्चिमवक्त्रपूजनम्"-जलमादाय। सद्योजातमिति मंत्रस्य ब्रह्माऋषिः सद्योजातो देवता जगतीछंदः पश्चिमवक्त्रनमस्कारे पूजने च विनियोगः॥ सद्योजाताय श्वेतवर्णाय हंसवाहनाय पश्चिमवक्त्राय पृथिवीतत्वाय सृष्टिरूपात्मने शुभ्राभ्रशंखवर्णाभाय शोभमानाय गंगाहिमांश्वास्थाय ऋद्ध्याद्यष्टकलासहिताय वेदाक्षमालाभयवरदकराय सद्योजाताभिधाय ब्रह्मणे नमः ॥ हौं इति प्रणम्य धनुर्बाणमुद्राप्रदर्शनम् ॥ "पश्चिमवक्त्राय महारुद्राय नमः" इति मनःशिलागंधं श्वेताक्षतश्वेतपुष्पं गुग्गुलधूपं घृतदीपं पायसनैवेद्यं समर्पयेत् ॥ ततः कलाः पूजयेत् ॥ ऋद्ध्यै० । सिद्ध्यै० ।

---

१ वामस्य मध्यमाग्रं तु तर्जन्यग्रे नियोजयेत् ॥ अनामिकां कनिष्ठां च तस्याङ्गुष्ठेन पीडयेत् ॥१॥ दर्शयेद्दक्षिणे स्कन्धे धनुर्मुद्रेयमीरिता ॥ दक्षमुष्टिस्थतर्जन्या दीर्घया बाणमुद्रिका ॥२॥ २ श्वेताक्षतैः श्वेतपुष्पैः पूजयेध्वंसवाहनम् ॥ सिद्ध्यन्ति सर्वकार्याणि पूजनेन न संशयः ॥ ३ ऋद्धिः सिद्धिर्धृतिर्लक्ष्मीर्मेधा कान्तिः स्वधा प्रभा ॥ सद्योजातकला ह्येता अष्टौ च परिकीर्तिताः ॥ १ ॥

धृत्यै० । लक्ष्म्यै० । मेधायै० । कान्त्यै० । स्वधायै० । प्रभायै० ॥ ८ ॥ इति संपूज्य ध्यायेत् ॥

ध्यानम्-प्रालेयामलबिंदुकुंदधवलं गोक्षीरफेनप्रभं भस्माभ्यंगमनंगदेहदमनं ज्वालावलीलोचनम् ॥ ब्रह्मेन्द्रादिमरुद्गणैः स्तुतिपरैरभ्यर्चितं योगिभिर्वंदेऽहं सकलं कलंकरहितं स्थाणोर्मुखं पश्चिमम् ॥१॥ शुभ्रं त्रिलोचनं नाम्ना सद्योजातं शिवप्रदम् ॥ शुद्धस्फटिकसंकाशं वन्देऽहं पश्चिमं मुखम् ॥ २ ॥ इति ध्यात्वा ॥ अनया पूजया सद्योजातसंज्ञकः पश्चिमवक्त्रः सदाशिवो महारुद्रः प्रीयताम् ॥ इति पश्चिमवक्त्रपूजनम् ॥ १ ॥

२ "अथोत्तरवक्त्रपूजा"॥ जलमादाय ॥ वामदेवायेति मंत्रस्य वामदेवऋषिः रुद्रो देवता धृतिश्छंदः उत्तरवक्त्रनमस्कारे पूजने च विनियोगः ॥ वामदेवाय उत्तरवक्त्राय हेमवर्णाय गरुडवाहनाय आपस्तत्त्वाय अमृतरूपात्मने कुंकुमलोहितवर्णाय सलक्षणाय कामिन्याद्यूर्ध्वांगसंयुताय रजोरक्षादित्रयोदशकलासहिताय परमाक्षमालावरदकराय वामदेवाय विष्णवे नमः ॥ ह्रीं इति प्रणम्य पद्ममुद्रां प्रदर्शयेत् ॥ "उत्तरवक्त्राय महारुद्राय नमः" इति हरिचंदनं तुलसीदलं कंकोलकर्पूरजातीफललवंगानां धूपं घृतदीपं घृतपक्वं गोधूमान्नं नैवेद्यं समर्पयेत् ॥ ततः कलाः पूजयेत् ॥ रजसे० । रक्षायै० । रत्यै० । पाल्यायै० ।कामायै० ।संजीविन्यै० । प्रियायै० ।

---

१ करौ तु संहतौ कृत्वा संमुखावुन्नताङ्गुली ॥ तलांतर्मिलिताङ्गुष्ठौ कुर्यादेषाब्जमुद्रिका ॥ २ तुलसीशतपत्रैश्च पूजयेद्गरुडासनम् ॥ सर्वदोषविनाशेन प्राप्नोति शिवसंपदम् ॥ ३ रजो रक्षा रतिः पाल्या कामा संजीवनी प्रिया ॥ बुद्धिः क्रिया तथा धात्री भ्रामिणी मोहिनी ज्वरा ॥१॥ वामदेवकला ह्येताः संप्रोक्तास्तु त्रयोदश ॥ २ ॥

वुद्ध्यै०। क्रियायै०। धात्र्यै०। भ्रामिण्यै०। मोहिन्यै०।ज्वरायै०॥१३॥
एताः संपूज्य ध्यायेत् ॥

ध्यानम्—गौरं कुंकुमपिंजरं सुतिलकं व्यापांडुगंडस्थलं भ्रूविक्षेपकटाक्षवीक्षणलसत्संसक्तकर्णोत्पलम् ॥ स्निग्धं बिंबफलाधरं प्रहसितं नीलालकालंकृतं वन्दे पूर्णशशांकमंडलनिभं वक्त्रं हरस्योत्तरम् ॥ १ ॥ वामदेवं सुवर्णाभं दिव्यास्त्रगणसेवितम् ॥ अजन्मानमुमाकान्तं वन्देऽहमुत्तरं मुखम् ॥ २॥ इति ध्यात्वा ॥ अनया पूजया वामदेवसंज्ञक उत्तरवक्त्रः सदाशिवो महारुद्रः प्रीयताम् ॥ इति उत्तरवक्त्रपूजनम् ॥ २ ॥

३ " अथ दक्षिणवक्त्रपूजा"॥ जलमादाय॥ अघोरेभ्य इति मंत्रस्य अघोर ऋषिः रुद्रो देवता त्रिष्टुप्छंदः दक्षिणवक्त्रनमस्कारे पूजने च विनियोगः ॥ अघोराय दक्षिणवक्त्राय कूर्मवाहनाय नीलवर्णाय तेजस्तत्त्वाय तामसाद्यष्टकलासहिताय अक्षमालावेदपाशडमरुंकुशखड्गगदात्रिशूलकपालधराय अघोराभिधाय विश्वरूपात्मने कालाग्निरुद्राय नमः॥ ह्रीं इति प्रणम्य ज्ञानमुद्राप्रदर्शनम् ॥ " दक्षिणवक्त्राय महारुद्राय नमः" इति कृष्णागरुचंदनं नीलोत्पलकरवीरपुष्पाणि अगरधूपं घृतदीपं माषान्नैवेद्यं समर्पयेत् ॥ ततः कलाः पूजयेत् ॥ तामस्यै० । मोहायै० क्षमायै० । निन्द्रायै० । व्याधये० । मृत्युरूपायै० । क्षुधायै०। तृपायै० ॥ ८ ॥ एताः संपूज्य ध्यायेत् ॥

ध्यानम्—कालाभ्रभ्रमरांजनद्युतिनिभं व्यावृत्तपिंगेक्षणं खंडेन्दुद्वयमिश्रितांशुदशनं प्रोद्भिन्नदंष्ट्रांकुरम् ॥ सर्पप्रोतकपालशुक्तिसकलं व्या-

— १ तर्जन्यंगुष्ठकौ सक्तावग्रतो हृदि विन्यसेत् ॥ ज्ञानमुद्रा भवेदेषा कथिता तत्त्वदर्शिभिः ॥ २ नीलोत्पलैः करवीरैः पूजयेत्कूर्मवाहनम् ॥ सर्वाबाधाविनाशाय ज्ञानमोक्षप्रसाधकम् ॥२॥ ३ तमो मोहा क्षमा निन्द्रा व्याधिर्मृत्युः क्षुधा तृषा॥ अघोरस्य कला ह्येता अष्टौ च परिकीर्तिता ॥१॥

चीर्णसच्छेखरं वन्दे दक्षिणमीश्वरस्य कुटिलं भ्रूभंगरौद्रं मुखम् ॥१॥ नीलाभ्रवर्णमोंकारमघोरं घोरदंष्ट्रकम् ॥ दंष्ट्राकरालमत्युग्रं वन्देऽहं दक्षिणं मुखम् ॥ १ ॥ इति ध्यात्वा ॥ अनया पूजया अघोरसंज्ञकः दक्षिणवक्त्रः सदाशिवो महारुद्रः प्रीयताम्॥ इति दक्षिणवक्त्रपूजनम्॥३॥

४ " अथ पूर्ववक्त्रपूजा " ॥ जलमादाय ॥ तत्पुरुषायेति मंत्रस्य तत्पुरुष ऋषिः रुद्रो देवता गायत्रीछंदः पूर्ववक्त्रनमस्कारे पूजने च विनियोगः ॥ तत्पुरुषाय पूर्ववक्त्राय अश्ववाहनाय रक्तवर्णाय वायुतत्त्वाय चैतन्यात्मने पद्मरागसमानाय जपाबालार्कसन्निभाय वसुप्रियाय स्निग्धाय निवृत्त्यादिचतुःकलासहिताय अभयकुठारवेदवरदकराय तत्पुरुषाभिधाय आदित्याय नमः ॥ हैं इति प्रणम्य कवचंमुद्राप्रदर्शनम्॥ "पूर्ववक्त्राय महारुद्राय नमः" इति आरक्तचंदनं दूर्वांकुरम् अर्कपुष्पं कृष्णागरुधूपं घृतदीपं मोदकनैवेद्यं समर्पयेत् ॥ ततः कलाः पूजयेत् ॥ निवृत्त्यै० । प्रतिष्ठायै० । विद्यायै० । शान्त्यै० ॥ ४ ॥ एताः संपूज्य ध्यायेत् ॥

ध्यानम्-संवर्ताग्नितडित्प्रतप्तकनकप्रस्पर्द्धि तेजोमयं गंभीरास्मितनिःसृतं शुद्धशनं प्रोद्भासिताम्राधरम् ॥ बालेन्दुद्युतिलोलपिंगलजटाभारप्रबद्धोरगं वन्दे सिद्धसुरासुरेन्द्रनमितं पूर्वं मुखं शूलिनः ॥१॥ बालार्कवर्णमारक्त पुरुषं च तडित्प्रभम् ॥ दिव्यं पिङ्गजटाधारं वन्देऽहं पूर्वदिङ्मुखम् ॥२॥ इति ध्यात्वा । अनया पूजया तत्पुरुषसंज्ञकः पूर्ववक्त्रः सदाशिवो महारुद्रः प्रीयताम् ॥ इति ॥ ४ ॥

---

१ करद्वन्द्वाङ्गुलयो धर्मणि स्यु ॥ २ दूर्वांकुरैरर्कपुष्पै पूजयेदश्ववाहनम्॥ आयुष्यं वर्द्धते तस्य विशिष्टफलदायकम् ॥ १ ॥ ३ निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च॥ तत्पुरुषकला ह्येता चतस्रस्ता न संशय ॥ १ ॥

५ " अथ ऊर्द्ध्ववक्त्रपूजा "॥ जलमादाय ॥ ईशानामिति मंत्रस्य ईशानऋषिः शिवो देवता बृहतीच्छंदः ऊर्ध्ववक्त्रनमस्कारे पूजने च विनियोगः ॥ ईशानाय ऊर्ध्ववक्त्राय वृषभवाहनाय पीतवर्णाय आकाशतत्त्वाय अव्यक्ताय सर्वव्यापकात्मने शुद्धस्फटिकसंकाशाय निर्मलाय कुमुदेन्दुसमाभाय आनंदतत्त्वबोधाय शशिन्यादिपंचकलासहिताय वरदाक्षमालावेदडमरुपाशांकुशशिरःशूलखट्वांगाभयकराय ईशानाभिधाय नमः ॥ हौं इति प्रणम्य ॥ महामुद्रांप्रदर्शनम् ॥ "ऊर्ध्ववक्त्राय महारुद्राय नमः" इति यक्षकर्दमचंदनं बिल्वपत्रं कनकपुष्पं हरिचंदनधूपं घृतदीपं शर्करादध्योदननैवेद्यं समर्पयेत् ॥ ततः कलाः पूजयेत् ॥ शशिन्यै० । अंगदायै० । ज्येष्ठायै० । मरीच्यै० । ज्ञानिन्यै० ॥ ५ ॥ एताः संपूज्य ध्यायेत् ॥

ध्यानम्—व्यक्ताव्यक्तगुणोत्तरं सुवदनं षट्त्रिंशतत्त्वाधिकं शुद्धान्तःकरणैः सदा शिवपरैर्ध्येयं सदा योगिभिः ॥ वन्दे तामसवर्जितेन मनसा सूक्ष्मातिसूक्ष्मं परं शान्तं पंचममीश्वरस्य वदनं खंव्यापि तेजोमयम् ॥१॥ ईशानं सूक्ष्ममव्यक्तं तेजःपुञ्जपरायणम् ॥ अमृतस्रावि चिद्रूपं वन्देऽहं पञ्चमं मुखम् ॥ २ ॥ इति ध्यात्वा ॥ अनया पूजया ईशानसंज्ञकः ऊर्ध्ववक्त्रः सदाशिवो महारुद्रः प्रीयताम् ॥ ३ ॥ ५ ॥

" अथ पातालस्थशिवपूजनम् " हाटकेश्वराय सदाशिवाय नमः सर्वांगे ॥ ज्ञानमुद्रां मदर्शयेत् ॥ " भगवते महारुद्राय रक्तवर्णाय सर्पवाहनाय सर्वतत्त्वात्मकाय अमृतादिषट्कलासहिताय भीमरूपाय हाटके-

१ महामुद्रा व्यापकमुद्रा ॥ उत्तानौ तादृशावेव व्यापकाञ्जलिकं करौ ॥ तादृशौ संयुतावेव उत्तानौ करौ व्यापकाञ्जलिकं नाम मुद्रा ॥१॥ २ यक्षकर्दमसंमिश्रैर्धत्तूरैर्बिल्वपत्रकैः ॥ अन्यैर्श्चोर्ध्वभवैः पुष्पैरर्चयेद्वृषवाहनम् ॥ २ ॥ ३ शशिनी अंगदा ज्येष्ठा मरीची ज्ञानिनी तथा । पंचेशानकला ह्येता ईशरूपधराः स्मरेत् ॥ १ ॥

श्वराय महारुद्राय नमः " इति रक्तगंधं अपामार्गयुतकल्हारवकुल-
पुष्पाणि धूपं दीपं षड्रसनैवेद्यं समर्पयेत् । ततः कलाः पूजयेत् ॥
अमृतायै० । मानदायै० । कल्याण्यै० । तपिन्यै० । शोषिण्यै० ।
त्र्यंबकायै० ॥ ५ ॥ एताः संपूज्य ध्यायेत् ॥

ध्यानम्—यं देवासुरपूजितारुणनिभैः सामर्थ्यतारागणैः पुन्नागां-
बुजनागपुष्पविविधैर्वागीश्वरीचर्चितम् ॥ नित्यं ध्यानसमस्तदीप्तिकरणं
कालाग्निरुद्रोपमं पातालस्थशिवं नमामि शिरसा श्रीहाटकेशं सदा ॥१॥
इति ध्यात्वा ॥ अनया पूजया पातालस्थशिवः प्रीयताम् ॥

" अथ देववामभागे शक्तिपूजनम् "—नमो भगवत्यै उमादेव्यै० ।
शंकरप्रियायै० । पार्वत्यै० । गौर्यै० । काल्यै० । कालिन्द्यै० । कोटर्यै० ।
विश्वधारिण्यै० शिवायै० ॥ ह्रॉं नमः । ह्रीं नमः ॥ "भगवत्यै गङ्गादेव्यै
नमः " इति संपूज्य ह्रीं गणपतये० । कार्तिकेयाय० । पुष्पदन्ताय० ।
कपर्दिने० । भैरवाय० । शूलपाणये० । ईश्वराय० । दण्डपाणये० ।
नन्दिने० । महाकालाय० इति संपूजयेत् ॥ ततः एकादशरुद्रान् पूज-
येत् ॥ अघोराय० । पशुपतये० । शर्वाय० । विरूपाक्षाय० । विश्व-
रूपाय० । त्र्यंबकाय० । कपर्दिने० । भैरवाय० । शूलपाणये० । ईशाय० ॥
महेशाय० ॥ ११ ॥ इति शक्त्यादिपूजनम् ॥

## ॥ अथ महारुद्रांगपूजनम् ॥

ईशानाय नमः पादौ पूजयामि । शंकराय० जंघे० ॥ शिवाय०
जानुनी पू० ॥ शूलपाणये० गुल्फौ० पू० ॥ शंभवे० कटी पूज० ॥ स्वयं-
भुवे० गुह्यं पूज० ॥ महादेवाय० नाभिं पूज० ॥ विश्वकर्त्रे० उदरं पूज० ॥
सर्वतोमुखाय० पार्श्वे पूज० ॥ स्थाणवे० स्तनौ पूज० ॥ नीलकंठाय० कंठं

पूज०॥ शिवात्मने० मुखं पूज०॥ त्रिनेत्राय० नेत्रे पूज०॥नागभूषणाय० शिरः पूज० ॥ देवाधिदेवाय० सर्वांगं पूजयामि ॥ इत्यंगपूजा ॥

॥ अथावरणपूजा ॥

१. प्रथमावरणम्। अक्षतैः स्कान्दोक्तावरणदेवान् पूजयेत्। तद्यथा। मध्ये ह्रीं नमो भगवते महारुद्राय इति गन्धाक्षतपुष्पाणि सम०॥ इति सर्वत्र ॥ ( पूर्वे ) सद्योजाताय०। ( दक्षिणे ) वामदेवाय०। ( पश्चिमे ) अघोराय०। (उत्तरे) तत्पुरुषाय०। ( मध्ये ) ईशानाय०। ( पूर्वाद्यष्टपत्रेषु) नन्दिने०। महाकालाय०। गणेश्वराय०। वृषभाय०। भृंगीरिटये०। स्कन्दाय०। उमायै०। चण्डेश्वराय० ॥ ८ ॥ अंजलौ पुष्पाण्यादाय ॥ दयाब्धे त्राहि संसारसर्पान्मां शरणागतम् ॥ भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ जलमादाय। अनेन प्रथमावरणार्चनेन श्री सदाशिवो महारुद्रः प्रीयताम् ( एवं सर्वत्र ) ॥ १ ॥

२. द्वितीयावरणम् (षोडशदले प्रागादिक्रमेण) अनन्ताय०। सूक्ष्माय०। शिवाय०। एकपदे०। एकरुद्राय०। त्रिमूर्तये०। श्रीकंठाय०। वामदेवाय०। ज्येष्ठाय०। श्रेष्ठाय०। रुद्राय०। कालाय०। कलविकरणाय०। बलविकरणाय०। बलाय०। बलप्रमथनाय०॥ १६ ॥ अंज०पुष्पा०। दयाब्धे०। अनेन द्वितीया० महारुद्रः प्रीयताम् ॥ २ ॥

३. तृतीयावरणम् ( चतुर्विंशतिदले प्रागादिक्रमेण ) अणिमायै०। महिमायै०। लघिमायै०। गरिमायै०। प्राप्त्यै०। प्राकाम्यै०। ईशित्वायै०। वशित्वायै०। ब्राह्म्यै०। माहेश्वर्यै०। कौमार्यै०। वैष्णव्यै०। वाराह्यै०। इन्द्राण्यै०। चामुंडायै०। चंडिकायै०। असितांगभैरवाय०। रुरुभैरवाय०। चंडभैरवाय०। क्रोधभैरवाय०। उन्मत्त-

भैरवाय०। कालभैरवाय०। भीषणभैरवाय नमः॥ संहारभैरवाय नमः ॥२४॥अंज० पुष्पा०।दयाब्धे०। अनेन तृतीया० महारुद्रः प्री०॥३॥

४. चतुर्थावरणम् (द्वात्रिंशत्पत्रेषु प्रागादिक्रमेण) भवाय० । शर्वाय० । ईशानाय० । पशुपतये० । रुद्राय० । उग्राय० । भीमाय० । महते० । अनन्ताय० । वासुकये० । तक्षकाय० । कुलीरकाय० । कर्कोटकाय० । शंखपालाय० । कंबलाय० । अश्वतराय० । वैन्याय० । पृथवे० । हैहयाय० । अर्जुनाय० । शाकुन्तलेयाय० । भरताय० । नलाय० । रामाय० । हिमवते० । निषधाय० । विन्ध्याय० । माल्यवते०। पारियात्राय०।मलयाय०।हेमकूटाय०। गंधमादनाय०॥३२ अंज० पुष्पा०। दयाब्धे०। अनेन चतुर्था० महारुद्रः प्रीयताम्॥ ४॥

५. पंचमावरणम् ( चत्वारिंशत्पत्रेषु प्रागादिक्रमेण ) इंद्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । कुबेराय० । ईशानाय० । शच्यै० । स्वाहायै० । वाराह्यै० । खड्गिन्यै० । वारुण्यै० । वायव्यै० । कौबेर्यै० । ईशान्यै० । वज्राय० । शक्तये० । दंडाय० । खड्गाय० । पाशाय० । अंकुशाय० । गदायै०। त्रिशूलाय० । ऐरावताय० । मेषाय० । महिषाय०। प्रेताय०। मकराय० । मृगाय० । नराय०। वृषभाय०। ऐरावताय०। पुंडरीकाय। वामनाय०। कुमुदाय०। अंजनाय० । पुष्पदन्ताय० । सार्वभौमाय० । सुप्रतीकाय० ॥४०॥ अंज० पुष्पा० । दयाब्धे०। अनेन पञ्चमा० महारुद्रः प्री० ॥ ५॥

६. समस्तावरणम् ( पंचपद्मद्बहिश्चतुष्कोणे भूगृहे प्रागादिषु ) इंद्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । सोमाय० । ईशानाय० ।( आग्नेय्याम् ) विरूपाक्षाय० ।( नैर्ऋत्याम् ) विश्वरूपाय० । ( वायव्याम् ) पशुपतये० । ( ऐशान्याम् ) ऊर्ध्वलिं-

गाय नमः॥ ( इति भूगृहमध्ये ॥) (ततो भूगृहाद्बहिः प्रागादिक्रमेण।) विप्रवर्णाय श्वेतरूपाय सहस्रफणामंडलसंयुताय शेषाय० ॥१॥ वैश्यवर्णाय नीलरूपाय पंचशतफणामंडलसंयुताय उत्तुङ्गकायाय तक्षकाय० ॥२॥ विप्रवर्णाय कुंकुमरूपाय सहस्रफणामंडलसंयुताय अनन्ताय०॥३॥ क्षत्रियवर्णाय पीतरूपाय सप्तशतफणामंडलसंयुताय उत्तुङ्गकायाय वासुकये० ॥ ४ ॥ क्षत्रियवर्णाय पीतरूपाय सप्तशतफणामंडलसंयुताय शंखपालाय० ॥५॥ वैश्यवर्णाय नीलरूपाय पञ्चाशत्फणामंडलसंयुक्तायोत्तुङ्गकायाय महापद्माय० ॥६॥ शूद्रवर्णाय कृष्णरूपाय त्रिंशत्फणामंडलसंयुताय कम्बलाय० ॥ ७ ॥ शूद्रवर्णाय श्वेतरूपाय त्रिंशत्फणामंडलसंयुताय कर्कोटकाय नमः ॥८॥ अंजलौ पुष्पाण्यादाय। दयाब्धे त्राहि संसारसर्पान्मां शरणागतम्॥ भक्त्या समर्पये तुभ्यं समस्तावरणार्चनम् ॥१॥ इति पुष्पाणि देवोपरि समर्प्य। जलमादाय॥ अनेन समस्तावरणार्चनेन श्रीसदाशिवो महारुद्रः प्रीय०॥ इति आवरणपूजा॥

---

सौभाग्यद्रव्यम् ॥ श्वेताबिरेण सहितं शुभरक्तचूर्णं सिंदूरचूर्णविपुलान्वितपीतचूर्णम् ॥ कर्पूरकेसरसुगंधिसुवासितं च सौभाग्यचूर्णमुररीकुरु दीनबंधो ॥१६॥ धूपः ॥ कालागरोश्च घृतमिश्रितगुग्गुलस्य धूपो मया विरचितो भवतः पुरस्तात्॥ आघ्रायतां शुचि मनोहरगंधपूर्णं तूर्णं विनाशय महेश्वर मोहजालम्॥१७॥ दीपः॥ पूर्णे घृतेन गिरिजेश सुवर्णपात्रे कौसुंभसूत्रदृढवर्त्तिविराजमानः ॥ दीपः पुरस्तव मया रचितो य एष शीघ्रं विनाशयतु मे दुरितान्धकारम्॥१८॥ नैवेद्यम् ॥ जिह्वासुधा कनकपात्रविराजमानं मंत्रादिकं मधुरशाकफलावलीढम्॥ पचामृतप्लुतमनेकविधं रसाढ्यं संकल्पितं त्वमुररीकुरु दीनबंधो॥१९॥ ताम्बूलम्॥ पूगैः

सचूर्णखदिरैर्नवजातिपत्रं गोतीफलादिफलसिंगसमन्वितैश्च। तांबूलवीटकमिदं मनसा धृतं यत् तत्स्वीकुरु ममथनाथ महेश शंभो ॥२०॥ दक्षिणा ॥ विभावसो बीजमिदं हिरण्यं दिव्यं प्रकाशं विधिगर्भसंस्थम् ॥ गृहाण भूताधिपते महेश शुद्धार्पणं वै मनसार्पितं ते ॥ २१ ॥ नीराजनम् ॥

## ॥ शिवारार्तिकम् ।

ॐ जय गंगाधर हर शिव जय गिरिजाधीश शिव जय गिरिजाधीश, त्वं मां पालय नित्यं २,कृपया जगदीश ॥ ॐ हर हर हर महादेव॥ कैलासे गिरिशिखरे कल्पद्रुमविपिने शिव कल्प०,गुञ्जति मधुकरपुञ्जे १, कुञ्जवने गहने॥ कोकिल कूजति खेलति हंसावलिललिता शिव हंसा०, रचयति कला कलापं १, नृत्यति मुदसहिता । ॐ हर ३ महादेव ॥ १ ॥ तस्मिँल्ललित सुदेशे शाला मणिरचिता शिव शाला०, तन्मध्ये हर निकटे १, गौरी मुदसहिता ॥ क्रीडां रचयति भूषां रंजितनिजमीशं शिव रंजित० इन्द्रादिकसुरसेवित २, प्रणमति ते शीर्षम् । ॐ हर हर हर महादेव ॥२॥ विबुधवधूर्बहु नृत्यति हृदये मुदसहिता शिव हृदये०, किन्नरगानं कुरुते २, सप्तस्वरसहितम् ॥ धिनकत थै थै धिनकत मृदंग वादयते शिव मृदंग०, क्वण क्वण ललिता वेणु १, मधुरं नादयते । ॐ हर ३ महादेव ॥ ३ ॥ रुण रुण चरणे रचयति नूपुरमुज्ज्वलितं शिव नूपुर०, चक्रावर्ते भ्रमयति २, कुरुते तां धिक् ताम् ॥ तां तां लुप लुप चुप चुप तालं नादयते शिव तालं०, अगुष्ठांगुलिनादं २, लास्यकता कुरुते । ॐ हर ३ महादेव ॥ ४ ॥ कर्पूरद्युतिगौरं पचाननसहितं शिव पचा०, त्रिनयनशशधरमौले २, विषधरकंठयुतम् ॥ सुन्दरजटाकलापं पावकयुतभालं शिव पावक०, डमरुत्रिशूलपिनाक २, करधृतनृकपालम् ॥ ॐ हर ३ महादेव ॥ ५ ॥ शङ्खनिनादं कृत्वा झल्लरीनादयते शिव झल्लरी०, नीराजयते ब्रह्मा नीराजयते विष्णुर्वेदऋचां पठते ॥ इति मृदुचरणसरोजं हृदि कमले धृत्वा शिव हृदि०, आलोकयति सुरेशम् ईशम् अभिनत्वा ॥ ॐ हर ३ महादेव ॥ ६ ॥ कण्ठे रचयति मालां पन्नगमुपवीतं शिव पन्नग०, वाम विभागे गिरिजा २, रूपम् अतिललितम् ॥ सकलशरीरे मनसिजकृतभस्माभरणं शिव कृत०, इति वृषभध्वजरूपं ( इति हरशङ्कररूपं ) तापत्रयह-

रणम् ॥ ॐ हर हे महादेव ॥ ७ ॥ ध्यानम् आरतिसमये हृदये इति कृत्वा शिव हृदये०, राम त्रिजटानाथ २, ईशम् अभिनत्वा ॥ एव प्रतिदिन गीतं पठनं य कुरुते शिव पठन०, शिवसायुज्य गच्छति २, भक्त्या य· शृणुते, ॐ हर हे महादेव ॥ ८ ॥ जय गङ्गाधर हर शिव जयगिरिधीश शिव जय गिरिजाधीश, त्वं मां पालय नित्य त्वं मां पालय शम्भो कृपया जगदीश ॥ ॐ हर हर हर महादेव ॥

कर्पूरगौरं करुणावतारं० । कर्पूरपूरेण मनोहरेण० । कर्पूरखंडपरिकालिपतपंचदीपैरानम्रमौलिमुकुटद्युतिसंभद्राङ्घ्रि ॥ नीराजितं निजगदेकगुरो मया ते पादांबुजं दिशतु वांछितकार्यसिद्धिम् ॥ २२ ॥ प्रदक्षिणा ॥ पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलं ददाति ॥ तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥ १ ॥ यानि कानि च पापानि०॥ २ ॥ पापानि मे बहुविधानि भयान्वितानि प्राक्कोटिजन्मदुरितानि च यानि यानि ॥ शंभो प्रदक्षिणपदेषु पदेषु नाथ शीघ्र विनाशय विनाशय तानि तानि ॥ २३ ॥ मंत्रपुष्पांजलिः ॥ जातीसुचंपकदलान्वितबिल्वपत्रैः पुंनागपाटलरसालसुपुष्पयुक्तै ॥ सेवन्तिकाबकुलमालतीरक्तपद्मैः पुष्पाञ्जलिं सुमनसा हि समर्पयामि ॥ २४ ॥ विशेषार्घः। नारिंगरंभाफलमातुलिंगं दाडीमद्राक्षादिकनारिकेलम् ॥ कूष्मांडजंबीरफलान्वितं च गृहाण विश्वेश्वर दीनबंधो ॥ २५ ॥ प्रार्थना ॥ किं वानेन धनेन वाजिकरिभि · प्राप्तेन राज्येन किं किंवा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेन किम् ॥ ज्ञात्वैतत्क्षणभंगुरं सपदि रे त्याज्यं मनो दूरतः स्वात्मार्थं गुरुवाक्यतो भज भज श्रीपार्वतीवल्लभम् ॥ १ ॥ स्तुतिपाठ : ॥ आयुर्नश्यति पश्यतां प्रतिदिनं याति क्षयं यौवनं प्रत्यायान्ति गताः पुनर्न दिवसाः कालो जगद्भक्षकः ॥ लक्ष्मीस्तोयतरंगभंगचपला विद्युच्चलं जीवितं तस्मान्मां शरणागतं शरणद त्वं

रक्ष रक्षाधुना ॥ १ ॥ आवाहनं न जानामि० ॥ २ ॥ गतं पापं गतं दुःखं० ॥ ३ ॥ यदक्षरपदभ्रष्टं० ॥४॥ कायेन वाचा मनसेन्द्रियैर्वा० सदाशिवायेति समर्पयामि ॥ ५ ॥ ॥ २६ ॥

---

१ श्री शिवमानसपूजा ॥ रत्नैः कल्पितमासनं हिमजलैः स्नानं च दिव्यांबरं नानारत्नविभूषितं मृगमदामोदांकितं चन्दनम् ॥ जातीचंपकबिल्वपत्ररचितं पुष्पं च धूपं तथा दीपं देव दयानिधे पशुपते हृत्कल्पितं गृह्यताम् ॥ १ ॥ सौवर्णे मणिरत्नखंडरचिते पात्रे घृतं पायसं, भक्ष्यं पंचविध पयोदधियुतं रंभाफलं पायसम् ॥ शाकानामयुतं जलं रुचिकरं कर्पूरखंडोज्वलं तांबूलं मनसा मया विरचितं भक्त्या प्रभो स्वीकुरु ॥२॥ छत्रं चामरयोर्युगं व्यजनकं चादर्शकं निर्मलं, वीणाभेरीमृदंगकाहलकलागीतं च नृत्यं तथा ॥ साष्टांगं प्रणतिः स्तुतिर्बहुविधा ह्येतत्समस्तं मया संकल्पेन समर्पितं तव विभो पूजां गृहाण प्रभो ॥ ३ ॥ आत्मा त्वं गिरिजामतिः सहचराः प्राणा शरीरं गृहं, पूजा ते विषयोपभोगरचना निद्रा समाधिस्थितिः ॥ संचारः पदयोः प्रदक्षिणविधिः स्तोत्राणि सर्वा गिरो, यद्यत्कर्म करोमि तत्तदखिलं शंभो तवाराधनम् ॥ ४ ॥ करचरणकृतं वाक्कायजं कर्मजं वा श्रवणनयनजं वा मानसं वाऽपराधम् ॥ विहितमविहितं वा सर्वमेतत्क्षमस्व जय जय करुणाब्धे श्री महादेव शंभो ॥ ५ ॥

॥ इति श्रीमच्छंकराचार्यविरचिता मानसपूजा ॥

---

॥ इति संप्रार्थ्य ॥ नमस्कारः ॥ नमः शिवाय साम्बाय पञ्चवक्त्राय शूलिने ॥ नंदिभृङ्गिमहाकालगणयुक्ताय शंभवे ॥ १ ॥ शिवायै हरकान्तायै प्रकृत्यै सृष्टिहेतवे ॥ नमस्ते ब्रह्मरूपिण्यै जगद्धात्र्यै नमो नमः ॥२॥ इति नमस्कृत्य जलमादाय ॥ अनया पूजया उमामहेश्वरौ प्रीयेताम् ॥ ततो ब्राह्मणान् संपूज्य तेभ्यो आशिषो गृहीत्वा पुराणपठनादिना रात्रिं निनयेत् ॥ इत्यारंभदिनकृत्यम् ॥

## ॥ अथ शिवरात्रीव्रताङ्गहोमविधिः ॥

ततो द्वितीयदिने प्रातर्नित्यकर्म समाप्य ॥ जलमादाय ॥ अद्येत्यादि० तिथौ० ममात्मनः शिवरात्रीव्रतोद्यापनांगभूतं ग्रहमखसहितं उक्तद्रव्यैर्विहितहोमं करिष्ये ॥ तत्रादौ दिग्रक्षणादिग्रहहोमान्तं कर्म करिष्ये इति संकल्प्य दिग्रक्षणकलशाराधनगणपतिपूजनादि स्थापितदेवतानां पूजनं च कृत्वा विधिपुरःसरमग्निस्थापनं ग्रहस्थापनं च (१५८–५९) कृत्वा कुशकंडिकादिकं कृत्वा ग्रहहोमान्तं (१५९–६४) पूर्वोक्तरीत्या कुर्यात् ॥ ततः प्रधानहोमः ॥ पायसबिल्वपत्रतिलदूर्वाघृतद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्यया " ह्रीं उमामहेश्वराभ्यां नमः " इति मंत्रेण जुहुयात् ॥ द्वादशकलशस्थमहेशादिदेवता (३९०) अष्टाष्टसंख्यया तैरेव द्रव्यैर्जुहुयात् ॥ ततो मंडूकादिपीठदेवता (१६६) ब्रह्मादिदेवता (१६४–५) श्चैकैकामाज्याहुतिं जुहुयात् ॥ ततः "अग्निवायुसूर्येभ्यो नमः" मंत्रेण तिलद्रव्येण (१०८) व्याहृतिं जुहुयात् ॥ ततो उत्तरपूजनमारभ्य प्रणीताविमोकान्तं (१६९-१८८) कर्म समाप्य पूर्णपात्रदानादि अग्निविसर्जनं ग्रहविसर्जनं च कृत्वा ततः प्रधानदेवतासमीपं गत्वा तत्र पूजनपूर्वकं महानीराजनं कृत्वा व्रतेभ्यो ब्राह्मणेभ्यः पूजनपूर्वकं दक्षिणां दत्वा ततो द्वादशब्राह्मणान् वस्त्रादिना संपूज्य तेभ्यो द्वादशकलशान् द्वादशवंशपात्राणि च दद्यात् ॥ तत्र मंत्रः ॥ शंभो प्रसीद देवेश सर्वलोकेश्वर प्रभो ॥ तव रूपप्रदानेन मम सन्तु मनोरथा ॥ १ ॥ ततो ब्राह्मणान् भोजयित्वा स्वयं सकुटुंबो भुञ्जीत ॥ २ ॥

॥ इति शिवरात्रीव्रतोद्यापनम् ॥

---

१. अथ प्रकारान्तरेण लिंगपुराणोक्तप्रयोगः–भद्रमंडले उमामहेश्वरं संपूज्य ॥ प्रातः पूर्वोक्तरीत्या तिलव्रीहियवैरष्टोतरशतं होमं कृत्वा

## ॥ अथ फाल्गुनमासकृत्यम् ॥

तत्र मीनसंक्रांतौ पराः षोडश नाड्यः पुण्याः ॥ रात्रौ तु प्रागुक्तम् ॥ फाल्गुने गोत्रीहिवस्त्रदानं गोविंदप्रीतये कार्यम् ॥

## ॥ अथ पयोव्रतविधिः ॥

पयोव्रतविधिः ॥ फाल्गुनशुक्लप्रतिपदमारभ्य द्वादशदिनपर्यन्तं पयोव्रतं श्रीभागवते स्कंध ८ तमे अध्याय १६ तमे उक्तम् यथा ॥ " फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः ॥ अर्चयेदरविन्दाक्षं भक्त्या परमयाऽन्वितः ॥१॥ सिनीवाल्यां मृदालिप्य स्नायात्क्रोडविदीर्णया ॥ यदि लभ्येत वै स्रोतस्येतं मंत्रमुदीरयेत् ॥ २ ॥ त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता ॥ उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥ ३ ॥ निर्वर्तितात्मनियमो देवमर्चेत्समाहितः ॥ अर्चायां स्थंडिले सूर्ये जले वह्नौ गुरावपि ॥ ४ ॥ नमस्तुभ्यं भगवते पुरुषाय महीयसे ॥ सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥ ५ ॥ नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च ॥ चतुर्विंशद्गुणज्ञाय गुणसंख्यानहेतवे ॥ ६ ॥ नमो द्विशीर्षे त्रिपदे चतुःशृंगाय तन्तवे ॥ सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥७॥ नमः शिवाय रुद्राय नमः शक्तिधराय च ॥ सर्वविद्याधिपतये भूतानां पतये नमः ॥ ८ ॥ नमो हिरण्यगर्भाय प्राणाय जगदात्मने ॥ योगैश्वर्यशरीराय

---

चतुर्दशब्राह्मणांश्चतुर्दशनामभिः संपूज्य जलपूरितचतुर्दशकलशान् वस्त्रदक्षिणासहितान् दद्यात् ॥ तानि चतुर्दशनामानि ॥ अजैकपादहिर्बुध्न्यो भव शर्व उमापतिः ॥ रुद्रः पशुपतिः शंभुर्वरदः शिव ईश्वरः ॥ महादेवो हरो भीमो नामान्येव चतुर्दश ॥ एतैर्होमः प्रकर्तव्य कुंभदानेऽपि तान्स्मरेत् ॥ अष्टाहुतिसंख्याको बिल्वपत्रैर्होम ॥ अन्यत् समानम् ॥

नमस्ते योगहेतवे ॥ ९ ॥ नमस्ते आदिदेवाय साक्षिभूताय ते नमः ॥ नारायणाय ऋषये नराय हरये नमः ॥ १० ॥ नमो मरकतश्याम-वपुषे त्रिगतश्रिये ॥ केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥ ११ ॥ त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ ॥ अतस्ते श्रेयसे धीराः पादरेणु-मुपासते ॥ १२ ॥ अन्ववर्तन्त यं देवाः श्रीश्च यत्पादपद्मयोः ॥ स्पृहयन्त इवामोदं भगवान्मे मसीदताम् ॥ १३ ॥ इति ॥

एतैर्मंत्रैर्हृषीकेशमावाहनपुरस्कृतम् ॥ अर्चयेद् श्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥ १४ ॥ अर्चित्वा गंधमाल्याद्यैः पयसा स्नप-येद्विभुम् ॥ वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥ १५ ॥ गंधधूपा-दिभिश्चार्चेद् द्वादशाक्षरविद्यया ॥ श्रुतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥ १६ ॥ ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया ॥ निवेदितं तद्भक्ताय दद्याद् भुंजीत वा स्वयम् ॥ १७ ॥ दत्त्वाऽऽचमनमर्चित्वा तांबूलं च निवेदयेत् ॥ जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः मभुम्॥१८॥ कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दंडवन्मुदा ॥ कृत्वा शिरसि तच्छेषं देव-मुद्रासयेत्ततः॥ १९ ॥ द्व्यवरान भोजयेद्विप्रान् पायसेन यथोचितम् ॥ भुंजीत तैरनुज्ञातः शेषं सेष्टः सभाजितः ॥ २० ॥ ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि ॥ स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः ॥ २१ ॥ पयसा स्नापयित्वा च यावद् व्रतसमापनम् ॥ पयोभक्षो व्रतमिदं चरेद्विष्णवर्चनादृतः ॥ २२ ॥ पूर्ववज्जुहुयादग्नि ब्राह्मणांश्चापि भोजयेत् ॥ एवं त्वहरहः कुर्याद् द्वादशाहं पयोव्रतः ॥२३॥ हरेराराधनं होममर्हणं द्विजतर्पणम् ॥ प्रतिपद्दिनमारभ्य यावच्छुक्लत्र-योदशी ॥ २४ ॥ ब्रह्मचर्यमधःस्वापं स्नानं त्रिषवणं चरेत् ॥ वर्जये-दसदालापं भोगानुच्चावचांस्तथा ॥ २५ ॥ अहिंस्रः सर्वभूतानां

वासुदेवपरायणः ॥ त्रयोदश्यामथो विष्णोः स्नपनं पंचकैर्विभोः ॥ २६ ॥ कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः । पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः ॥ २७ ॥ चरुं निरुप्य पयसि शिपिविष्टाय विष्णवे ॥ श्रृतेन तेन पुरुषं यजेत सुसमाहितः ॥ २८ ॥ नैवेद्यं चातिगुणवद् दद्यात्पुरुषतुष्टिदम् ॥ आचार्यं ज्ञानसंपन्नं वस्त्राभरणधेनुभिः ॥ २९ ॥ तोषयेद् ऋत्विजश्चैव तद्विद्धयाराधनं हरेः ॥ भोजयेत्तान् गुणवता सदन्नेन शुचिस्मिते ॥ ३० ॥ अन्यांश्च ब्राह्मणान् शक्त्या ये च तत्र समागताः ॥ दक्षिणां गुरवे दद्याद् ऋत्विग्भ्यश्च यथार्हतः ॥ ३२ ॥ अन्नाद्येनाश्वपाकांश्च प्रीणयेत्समुपागतान् ॥ भुक्तवत्सु च सर्वेषु दीनान्धकृपणेषु च ॥ ३३ ॥ विष्णोस्तत्प्रीणनं विद्वान् भुंजीत सह बंधुभिः ॥ नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः ॥ ३४ ॥ कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहम् ॥ एतत्पयोव्रतं नाम पुरुषाराधनं परम् ॥ पितामहेनाभिहितं मया ते समुदाहृतम् ॥ ३५ ॥ इति पयोव्रतविधिः ॥

---

## ॥ अथ होलिकोत्सवः ॥

फाल्गुनी पौर्णमासी मन्वादिः सा पौर्वाह्णिकी ॥ इयमेव होलिका ॥ सा प्रदोषव्यापिनी भद्रारहिता ग्राह्या ॥ दिनद्वये प्रदोषव्याप्तौ परदिने प्रदोषैकदेशव्याप्तौ वा परैव ॥ "प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा ॥ तत्र भद्रामुखं त्यक्त्वा दीपनीया प्रयत्नतः ॥" इति ज्योतिर्निबन्धे नारदवचनात् ॥ "भद्रायां द्वे न कर्तव्ये फाल्गुनी श्रावणी तथा ॥" इति निषेधवचनाच्च ॥ यदि प्रदोषव्यापिनी पूर्णिमा न लभ्यते सायाह्ने च यदि पूर्णिमा लभ्यते तदा "सायाह्ने होलिकां कुर्यात् पूर्वाह्णे क्रीडनं गवाम् ॥"

इति निर्णयामृतज्योतिर्निबन्धाभ्यां मदनरत्नेन च स्वीकृतनिरवकाश-पुराणसमुच्चयस्य वचनेन तथा च "सूर्यास्तकालावधिरेव पूर्णिमा ततोऽधिकोना कलया ततः कृते ॥ श्राद्धे च तत्र ज्वलिता हुताशनी नन्दातिथौ स्याद्रजउत्सवः श्रियै ॥" इति ज्योतिर्विदाभरणे कालिदासवचनस्य समन्वयेन च सामान्यतः दिनस्यान्तिमभागे पट्घटिकात्मके सायाह्नकाले घटिकया न्यूनायामपि पूर्णिमायां सायाह्नकाल एव होलिकाज्वलनम् ॥ नात्र "प्रतिपद्भूतभद्रासु यार्चिता होलिका दिवा ॥ संवत्सरं च तद्राष्ट्रं पुरं दहति०" इति नारदवचनेन दिवानिषेधः "सायाह्ने होलिकां कुर्यात्" इति विधिवचनसामर्थ्यात् "सूर्यास्तकालावधिरेव०" इति विशेषविधिवचनसामर्थ्याच्च ॥ नथा च "विधिस्पृष्टे निषेधायोगः" इति न्यायेन च सायंकालव्यतिरिक्तदिवाकालस्यैव निषेधस्य शास्त्रकारैः स्वीकारात् । अतः सायंकाले पूर्णिमा लभ्यते चेत्तत्रैव होलिकाज्वलनं कर्तव्यम् ॥ यदि प्रदोषव्यापिनी वा सायंकालिका पूर्णिमा न लभ्यते चेद् भद्रायुक्तपूर्णिमायां भद्रामुखं त्यक्त्वा वा भद्रापुच्छे होलिका कर्तव्या ॥ परंतु भद्रामुखरहितपूर्णिमाकाललाभेऽपि यदि द्वितीयदिने सार्धत्रियामा ततोऽधिका वा पूर्णिमा तृतीयदिने प्रतिपद् वृद्धिगामिनी तदा पुरुषार्थचिंतामणिकारमतेन ( घटिकान्यूनेऽपि ) प्रतिपदि नारदस्य पूर्वोक्तवचनेन निषेधात् सायंकाल एव होलिकाज्वलनं धर्मसिंधुकारमतेन द्वितीयदिवसे प्रदोपे प्रतिपदि च । यथारुचि कर्तव्यम् ॥

निशीथोत्तरं भद्रासमाप्तौ भद्रामुखं त्यक्त्वा भद्रायामेव ॥ प्रदोपे भद्रामुखव्याप्ते भद्रोत्तरं प्रदोपोत्तरमेव ॥ द्विनद्वयेपि पूर्णिमायाः प्रदोषस्पर्शाभावे पूर्वदिने एव भद्रापुच्छे तदलाभे भद्रायामेव प्रदोपोत्तर-

मेव होलिका रात्रौ पूर्वार्द्धभद्राया ग्राह्यत्वोक्तेः नतु पूर्वप्रदोषार्द्धं चतुर्दश्यां नवा परत्र सायाह्नादौ किन्तु सायाह्नान्ते तु कर्तव्यमेव "सायाह्ने होलिकां कुर्यात्०"।।"सूर्यास्तकालावधिरेव०"इति प्रमाणद्वयरूपविधिवचनसामर्थ्यात् ।। दिवा होलिकादीपनं तु सर्वग्रंथविरुद्धम् इति धर्मसिंधुकारेणोक्तं परंतु सायंकालिकविधिवचनद्वयसामर्थ्यात् " विधिस्पृष्टे निषेधायोगः" ।। इति न्यायेन च सायंकालव्यतिरिक्तं दिवाकाल एव निषेध इति शास्त्रकारैः स्वीकृतत्वात् सर्वग्रन्थविरुद्धं न इति प्रतिभाति वा सायंकालव्यतिरिक्तमेव तन्मन्तव्यम् ।। तथा च होलिकाया द्वितीयदिने धूलिवन्दने " प्रवृत्ते मधुमासे तु प्रतिपद्युदिते रवौ ।। वन्दयेद्धोलिकाधूलिं सर्वदुःखोपशान्तये ।।" इति भविष्यवचनानुसारेण धूलिवन्दने औदयिकीप्रतिपदाप्राप्तिर्यथा भवेत् तथा होलिकानिर्णयः कार्यः ।।

इदं होलिकापूजन श्रवणकर्मादिवत् श्रुक्लत्वापि कुर्वन्ति ।। युक्तं चैतत् ।। केचिद् होलिकापूजनं कृत्वा भुंजते तेषां भोजनस्य पूजनस्य वा नियमेन शास्त्रविहितकाललाभः ।। इदं चंद्रग्रहसत्वे वेधमध्येपि कार्यं इति धर्मसिंधौ स्पष्टमुक्तम् ।। विशेषस्तु पुरुषार्थचिन्तामण्यादिग्रन्थेषु द्रष्टव्यम् ।। ग्रस्तोदये परदिने प्रदोषे पूर्णिमासत्वे ग्रहणमध्ये एव कार्यमन्यथा पूर्वदिने ।। भद्रामुखपुच्छलक्षणं तु ।। पूर्णिमायां "भद्रायास्तृतीयपादान्ते घटीत्रयं पुच्छम् चतुर्थपादाद्यघटीपंचकं मुखम् " इति लक्षणं तु मङ्गलकार्येष्वेवेति शास्त्रकारैर्मतमिति हेतोरत्र तु होलिकायां शास्त्रकारैः भद्रायाः प्रारंभतः पञ्चघटिका मुखम् अन्ततो घटीत्रयं पुच्छम् इति स्वीकृतत्वादस्माभिरपि तथैव मन्तव्यम् ।। इति ।।

।। इति होलिकानिर्णयः ।।

---

" अथ होलिकापूजाविधिः " शुभासने प्राङ्मुख उपविश्य आचम्य प्राणानायम्य ॥ सुमुखश्चेत्यादि पठित्वा ॥ अद्येत्यादि० सकुटुंबस्य मम ढुंढीराक्षसीप्रीत्यर्थं तत्पीडापरिहारार्थं होलिकापूजनमहं करिष्ये ॥ शुष्काणां काष्ठानां गोमयपिंडानां च राशिं कृत्वा शास्त्रोक्तसुविहितकाले वह्निना प्रदीप्य ॥ अक्षतान् गृहीत्वा ॥ "अस्माभिर्भयसंत्रस्तैः कृत्वा त्वं होलि बालिशैः ॥ अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव ॥" इति ध्यात्वा " होलिकायै नमः होलिकामावा० ॥" इत्यावाह्य ॥ " होलिकायै नमः " इति मंत्रेण यथाशक्ति होलिकां संपूज्य प्रार्थयेत् ॥ " वंदितासि सुरेन्द्रेण ब्रह्मणा शंकरेण च ॥ अतस्त्वं पाहि नो देवि भूते भूतिप्रदा भव ॥ " इति संप्रार्थ्य ततः प्रदक्षिणात्रयं कुर्यात् ॥ तमग्निं त्रिः परिक्रम्य गायन्तु च हसन्तु च ॥ जल्पन्तु स्वेच्छया लोका निःशंका यस्य यन्मतम् ॥ इति प्रदक्षिणा-

---

ज्योतिर्निबंधे ॥ पंचमीप्रमुखास्तासु तिथयोऽनन्तपुण्यदाः ॥ दशास्युःशोभनास्तासु काष्ठस्तेयं विधीयते ॥ चांडालसूतिकागेहाच्छिशुहारितवह्निना ॥ प्राप्तायां पूर्णिमायां तु कुर्यात्तत्काष्ठदीपनम् ॥ प्रामादबहिश्च मध्ये च तूर्यनादसमन्वितः ॥ स्नात्वा राजा शुचिर्भूत्वा स्वस्तिवाचनतत्परः ॥ दत्त्वा दानानि भूरीणि दीपयेद्धोलिकाचितिम् ॥ ततोऽभ्युक्ष्य चितिं सर्वां साज्येन पयसा सुधीः ॥ नारिकेलानि देयानि बीजपूरफलानि च ॥ गीतवाद्यैस्तथा नृत्यै रात्रिः सा नीयते जनैः ॥ तमग्निं त्रिः परिक्रम्य शब्दैर्लिंगभगांकितैः ॥ तेन शब्देन सा पापा राक्षसी तृप्तिमाप्नुयात् ॥ एवं रात्रौ होलिकोत्सवं कृत्वा प्रात प्रतिपदि ॥ श्वपचं ( चांडालं ) स्पृष्ट्वा स्नानं कुर्यात् ॥ स्नानं कृत्वा धूलिवंदनं च कुर्यात् ॥ न तस्य दुष्कृतं किंचिन्नाधयो व्याधयोऽपि च ॥ कृत्वा चावश्यकार्याणि संतर्प्य पितृदेवताः ॥ वंदे तद्धोलिकाभूतिं सर्वदुष्टोपशान्तये ॥ होलिकादिनं करिसंज्ञकं तदुत्तरदिनं शुभे वर्ज्यम् ॥ एवं नृत्यगीतविनोदैर्महोत्सवं कुर्यात् ॥

त्रयं कृत्वा ॥ अनया पूजया होलिका प्रीयताम् ॥ ब्राह्मणं संपूज्य तस्मै दक्षिणां दत्वा तत आशिषो गृहीत्वा गृहमागत्य यथेष्टं भुंजीत ॥ इति ॥ अस्यां पूर्णिमायां गोविंदं दोलागतं कृत्वा दर्शनं कुर्यात् ॥

फाल्गुनकृष्णप्रतिपदि वसंतारंभोत्सवः ॥ सा च "प्रतिपद्युदिते रवौ" इति वचनादौदयिकी ग्राह्या। दिनद्वये सत्वे पूर्वा ॥ अत्र तैलाभ्यंग उक्तः ॥ अत्र प्रतिपदि चूतपुष्पप्राशनम्। यथा-गोमयोपलिप्ते गृहाङ्गणे शुक्लवस्त्रासने प्राङ्मुख उपविष्टः सुवासिन्या कृतचंदनतिलकनिराजनः सचंदनमाम्रकुसुमं प्राश्नीयात्। तत्र मंत्रः--चूतमग्र्यं वसंतस्य माकंद कुसुमं तव॥ सचंदनं पिबाम्यद्य सर्वकामार्थसिद्धये॥ इति

कृष्णद्वितीयायां देशग्रामाधिपतिर्विंतते वितानादिशोभिते देशे रम्यासन उपविश्य पौरजानपदान् लोकान् सिंदुरादिक्षोदैश्चंदनादिभिः पट्टवासैश्च विकीर्य तेभ्यस्ताम्बूलादि दत्वा नृत्यगीतविनोदैर्महोत्सवं कुर्यात् ॥ इदानीं प्राकृतजनास्तु कृष्णपंचमीपर्यंतमेतमुत्सवं कुर्वन्ति ॥

॥ इति फाल्गुनमासकृत्यम् ॥

---

## ॥ अथ चैत्रमासकृत्यम् ॥

चैत्रशुक्लप्रतिपदि वत्सरारंभः ॥ तद्दिने पंचांगं शृणुयात् ॥ "सरस्वत्यै नमः" इति मंत्रेण गंधपुष्पैः पंचांगं संपूज्य ततो दैवज्ञं गंधपुष्पैः संपूजयेत्। ततो दैवज्ञः संवत्सरफलं श्रावयेत् ॥ इदं संवत्सरफलं वत्सरादितिथौ शुभम् ॥ यः शृणोति नरो भक्त्या स सुखी वत्सरं भवेत् ॥ इति अस्यां चैत्रशुक्लप्रतिपदि प्रतिगृहं ध्वजारोपणं निंबपत्राशनं वत्सरादिफलश्रवणं नवरात्रारंभो नवरात्रोत्सवादिनिमित्ताभ्यंगादिश्च कार्याणि ॥ अत्र दिने द्वादशमासिकम् आरोग्यप्र-

तिपद्व्रतं तत्र सूर्यपूजा विहिता ॥ एतस्मिन्नेव दिने द्वादशवार्षिकं विद्याव्रतम् । तत्र ब्रह्मणः पूजनमुक्तम् ॥ अद्यैव तिलकव्रतम् । तत्र संवत्सरपूजनमुक्तम् ॥ अवशिष्टचन्दनस्य स्वभाले तिलकं कर्तव्यम् ॥ अत्रैव प्रपादानम् तत्र मंत्रः॥"प्रपेयं सर्वसामान्या भूतेभ्यः प्रतिपादिता॥ अस्याः प्रदानात्पितरस्तृप्यन्तु हि पितामहाः ॥" "अनिवार्यं ततो देयं जलं मासचतुष्टयम् ॥" प्रपां दातुमशक्तेन प्रत्यहमुदकुंभो द्विजगृहे देयः॥ तत्र मंत्रः ॥ "एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ॥ अस्य प्रसादात्सकला मम सन्तु मनोरथाः ॥" चैत्रशुक्लप्रतिपन्मत्स्यजयन्तीत्येके॥ चैत्रे दधिक्षीरघृतमधुवर्जदंपतीपूजनात्मकं गौरीव्रतं कार्यम् ॥ चैत्रशुक्लद्वितीयायां निशामुखे बालेन्दुपूजनाद्यात्मकं चंद्रव्रतम् ॥ अस्यामेव दमनकेन गौरीशिवपूजनम् ॥ चैत्रशुक्लतृतीयायां सौभाग्यशयनव्रतम् ॥ तत्र शिवपार्वत्योः पूजनं कर्तव्यम् ॥ अस्यामेव तृतीयायां गौरीं शिवयुतां संपूज्य आंदोलनव्रतं मासपर्यन्तं कार्यम् ॥ अस्यामेव तृतीयायां मनोरथतृतीयाव्रतम् । तत्र विंशभुजां विश्वभुजां गौरीं पूजयेत् ॥ अत्र अरुंधतीव्रतमप्युक्तम् । तत्र अरुंधतीसहितस्य वशिष्ठस्य ध्रुवस्य च पूजनमुक्तम् । एतेषां व्रतानाम् उद्यापनमपि विहितम् । विशेष प्रगो-

---

१ परबमंडावबी ।

२ चैत्रशुक्लतृतीयायां अपराह्णे मत्स्योत्पत्तिः ॥ वैशाखपूर्णिमायां सायं कूर्मोत्पत्तिः ॥ भाद्रशुक्लतृतीयायां अपराह्णे वराहोत्पत्तिः ॥ वैशाखशुक्लचतुर्दश्यां सायं नृसिंहावतारः ॥ भाद्रपदशुक्लद्वादश्यां मध्याह्ने वामनप्रादुर्भावः ॥ वैशाखशुक्लतृतीयायां मध्याह्ने परशुरामोद्भवः । प्रदोषे इति बहवः ॥ चैत्रशुक्लनवम्यां मध्याह्ने दाशरथिरामव्यक्तिः ॥ श्रावण कृष्णाष्टम्यां निशीथे श्रीकृष्णाविर्भावः ॥ आश्विनशुक्लदशम्यां सायं बुद्धोऽभूत् ॥ श्रावणशुक्लषष्ठ्यां सायं कल्किर्भविष्यति ॥

गस्तु व्रतराजे ॥ अस्यामेव तृतीयायां श्रीरामचंद्रस्य दोलोत्सवमारभ्य मासपर्यन्तं पूजापूर्वकमांदोलनं कार्यम् ॥ एवं देवतान्तराणामपि ॥इति॥

॥ अथ चैत्रशुक्लपंचमीअनन्तादिव्रतम् ॥

उक्तं च हेमाद्रौ मात्स्ये ॥ " ब्रह्मणो या दिनस्यादिः कल्पादिः सा प्रकीर्तिता ॥ वैशाखस्य तृतीया या कृष्णाया फाल्गुनस्य च ॥ पंचमी चैत्रमासस्य तस्यैवान्या तथा परा ॥ तस्यैव चैत्रस्यैव परा कल्पादिरित्यर्थः ॥ शुक्ला त्रयोदशी माघे कार्तिकस्य तु सप्तमी ॥ नवमी मार्गशीर्षस्य सप्तैताः संस्मराम्यहम् ॥ कल्पानामादयो ह्येता दत्तस्याक्षयकारकाः " अस्यां दोलोत्सवः कार्यः ॥ तदुक्तम् ॥ " चैत्रमासि सिते पक्षे पंचम्यां पूजयेद्धरिम् ॥ तत्र दोलोत्सवं कुर्यात्पुष्पधूपैश्च पूजयेत् ॥ नारी नरो वा राजेन्द्र संतर्प्य पितृदेवताः ॥ स्रक्चन्दनसमायुक्तान् ब्राह्मणान्भोजयेत्ततः ॥इति॥ अस्याम् अनन्तादिनागान् पूजयित्वा क्षीरसर्पिर्नैवेद्यं दद्यात् ॥ अस्यामेव पंचम्यां लक्ष्मीपूजनम् ॥ अत्रैव चोच्चैःश्रवादिपूजनात्मकं हयव्रतमुक्तम् ॥ इति ॥ चैत्रशुक्लाष्टम्यां भवान्यष्टमीव्रतम् । तत्र भवान्याः प्रादुर्भावः । अत्र भवान्याः पूजनम् ॥ इदमेवाष्टमी बुधवारेण युता चेत् बुधाष्टमीव्रतं कर्तव्यम् । तत्र बुधस्य पूजा विहिता ॥ इति ॥

---

॥ अथ रामनवमीव्रतम् ॥

चैत्रशुक्लनवम्यां पुनर्वसुयुतायां मध्याह्ने कर्के लग्ने मेषस्थे सूर्ये उच्चस्थे ग्रहपंचके श्रीरामजन्मश्रवणात् रामनवमीव्रतम् ॥ अस्यां मध्याह्नव्यापिन्यां उपोषणं कार्यम् ॥ पूर्वद्युरेव मध्याह्ने सत्वे सैव ग्राह्या ॥ दिनद्वये मध्याह्नव्याप्तावव्याप्तौ वा परा अष्टमीविद्धाया निषेधात् ॥ अतः

पूर्वेद्युः सकलमध्याह्नव्यापिनीमपि त्यक्त्वा मध्याह्नैकदेशव्यापिन्यपि परैव ग्राह्या॥ केचित्त्वष्टमीविद्धां मध्याह्नव्यापिनीं पुनर्वसुयुतामपि त्यक्त्वा परेद्युस्त्रिमुहूर्तापि नवमी सर्वैरप्युपोष्या॥ यदि तु दशम्या ह्रासवशेन पारणादिने स्मार्तानामेकादशीव्रतप्राप्तिस्तदा स्मार्तैरष्टमीविद्धा उपोष्या॥ वैष्णवैर्मुहूर्तत्रययुता परैवोपोष्या॥ शुद्धाया नवम्या अलाभे मुहूर्तत्रयन्यूनत्वे वा सर्वैरप्यष्टमीविद्धैवोपोष्येत्याहुः॥ इदं व्रतं नित्यं काम्यं च॥

"अथ व्रतविधिः" उपोषणसंकल्पार्थे फलपुष्पाक्षतसहितं जलपूर्णं ताम्रपात्रे गृहीत्वा॥ "उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव॥ तेन प्रीतो भव त्वं मे संसारात्त्राहि मां हरे॥" इति मंत्रेण पात्रस्थं जलं क्षिपेत्॥ इत्युपोषणं संकल्प्य॥ आचम्य प्राणा० अद्येत्यादि० तिथौ ममात्मनः सकलपापक्षयकामः श्रीरामप्रीतये रामनवमीव्रतांगभूतां षोडशोपचारैः श्रीरामपूजां करिष्ये॥ इति संकल्प्य "श्रीरामचंद्राय सांगाय सपरिवाराय नमः" इति मंत्रेणासनादि पुष्पांजलिपर्यन्तं पूजनं कृत्वा "तव प्रसादं स्वीकृत्य क्रियते पारणा मया॥ व्रतेनानेन संतुष्टो स्वामिन् भक्तिं प्रयच्छ मे"॥ इति संप्रार्थ्य॥ नवम्यन्ते पारणां कुर्यात्॥ इदं व्रतं मलमासे न कार्यम्॥ एवं जन्माष्टम्यादि व्रतमपि न कार्यम्॥

## ॥ अथ रामनवमीव्रतोद्यापनम्॥

पूर्ववद् व्रतसंकल्पं कृत्वा नद्यादौ स्नात्वा गृहमागत्य पूर्ववन्मण्डपादिकं कृत्वा शुभासने चोपविश्य आचम्य प्राणानायम्य॥ अद्येत्यादि० ममात्मनः पुत्रपौत्राद्यनवच्छिन्नसंततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थम् अखिलपापक्षयपूर्वकं चतुर्विधपुरुषार्थसिद्धिद्वारा आचरितस्याचरिष्यमाणस्य रामनवमीव्रतस्य सांगतासिद्ध्ये एकरात्राधिवासपक्षाश्रयेण रामनवमीव्रतोद्यापनमहं करिष्ये॥

तदंगभूतं दिग्रक्षणं कलशाराधनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमंत्रजपं नांदीश्राद्धम् आचार्यादिब्राह्मणवरणं सर्वतोभद्रमंडले ब्रह्मादिदेवतास्थापनादिकं कर्म करिष्ये इति संकल्प्य दिग्रक्षणादि आचार्यवरणान्तं कर्म(पृ.६–४५)कृत्वा सर्वतोभद्रमंडले ब्रह्मादिदेवतास्थापनं पूजनं (पृ.९९–१०७) पूर्ववत् कुर्यात् ॥

ततः सर्वतोभद्रमंडले विश्वाधारासीत्यादिना पूर्णपात्रान्तं कलशं संस्थाप्य तस्योपरि क्षौमं वस्त्रं प्रसार्य चंदनेन षट्कोणं पद्मं विलिख्य ॥ मध्ये मंडूकादिपीठदेवता आवाह्य (पृ. १०७) गंधादिना संपूज्य ॥ मध्ये कृताग्न्युत्तारणप्राणप्रतिष्ठां (५१) हेममयीं जानकीसहितराममूर्तिं प्रतिष्ठाप्य ॥ शंखघंटाद्यर्चनं न्यासांश्च कृत्वा ॥ श्रीरामरामरामाय नमः श्रीरामरामराममावाहयामि स्था० ॥ तद्वामतः जनकात्मजायै नमः ॥ जनकात्मजाम् आवा० स्था० ॥ इति जानकीसहितराममावाह्य परितः षट्कोणेषु क्रमेण दशरथादीन् आवाहयेत्॥यथा-दशरथाय०। कौशल्यायै० । लक्ष्मणाय० । भरताय० । शत्रुघ्नाय० । मारुतये० ॥ इत्यावाह्य ॥ प्रतिष्ठा सर्वे०॥ इति "श्रीरामचंद्राद्यावाहितदेवताभ्यो नमः" इति प्रतिष्ठाप्य ध्यायेत् ॥ कोमलाक्षं विशालाक्षमिन्द्रनीलसमप्रभम् । दक्षिणांगे दशरथं पुत्रावेक्षणतत्परम् ॥ १ ॥ पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभम् ॥ पार्श्वे भरतशत्रुघ्नौ तालवृन्तकरावुभौ ॥ २ ॥ अग्रे व्यग्रं हनुमन्तं रामानुग्रहकांक्षिणम् । आवाहयामि विश्वेशं जानकीवल्लभं प्रभुम् ॥३॥ कौशल्यातनयं विष्णुं श्रीरामं प्रकृतेः परम्॥४॥रामो राजमणिः सदा विजयते रामं रमेशं भजे रामेणाभिहता निशाचरचमू रामाय तस्मै नमः॥ रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥ ५ ॥ इति ध्यात्वा ॥ श्रीरामागच्छ

भगवन् रघुवीर नृपोत्तम॥ जानक्या सह राजेन्द्र सुस्थिरो भव सर्वदा॥१॥ रामचंद्र महेष्वास रावणान्तक राघव ॥ यावत्पूजासमाप्तिः स्यात्तावत्त्वं संनिधो भव ॥ २ ॥ इति सन्निधापनम् ॥ रघुनायक राजर्षे नमो राजीवलोचन ॥ रघुनंदन मे देव श्रीरामाभिमुखो भव ॥ ३ ॥ इति सम्मुखीकरणम् ॥ राजाधिराज राजेन्द्र रामचंद्र महीपते ॥ रत्नसिंहासनं तुभ्यं दास्यामि स्वीकुरु प्रभो ॥ सांगाय सपरि० श्रीरामचंद्राय० आसनं सम० ॥ पाद्यं ॥ त्रैलोक्यपावनानन्त नमस्ते रघुनायक ॥ पाद्यं गृहाण राजर्षे नमो राजीवलोचन ॥ साङ्गा० सपरि० श्रीराम० पाद्यं सम०॥ अर्घ्यम् ॥ परिपूर्णपरानंद नमो रामाय वेधसे ॥ गृहाणार्घ्यं मया दत्तं सच्चिदानंद विष्णवे ॥ सा० सपरि० श्रीराम० अर्घ्यं स० ॥ आचमनीयम् ॥ नमः सत्याय शुद्धाय नित्याय ज्ञानरूपिणे ॥ गृहाणाचमनं नाथ सर्वलोकैकनायक ॥ साङ्गाय सपरि० श्रीराम० आच० स० ॥ पंचामृतस्नानम् ॥ पयो दधि घृतं चैव मधुशर्करयान्वितम् ॥ पंचामृतं मयाऽऽनीतं स्नानाय प्रतिगृह्यताम् ॥ साङ्गाय० सपरि० श्रीरामचंद्राय० पंचामृतस्ना० स० ॥ मधुपर्कः ॥ नमः श्रीराघवेन्द्राय तत्त्वज्ञानस्वरूपिणे ॥ मधुपर्कं गृहाणेदं जानकीपतये नमः ॥ सा० सपरि० श्रीराम० मधु० सम० ॥ ततः स्नानं गंधं पुष्पं धूपं दीपं नैवेद्यं मुखवा० तांबूलं सम० ॥ दक्षिणां स० ॥ मन्त्रपु० समर्प० ॥ उत्तरे निर्माल्यं विसृज्य॥ पुनः गन्धादिभिः संपूज्य पुरुषसूक्तेन (पत्र ५६-५८) लक्ष्मीसूक्तेन चाभिषेकं कुर्यात्॥ शुद्धोदकस्नानम् ॥ ब्रह्मांडोदरमध्यस्थैस्तीर्थैश्च रघुनंदन ॥ स्नापयिष्याम्यहं भक्त्या त्वं गृहाण जनार्दन ॥ सा० सप० श्रीराम० शुद्धोदकस्नानं सम० ॥ वस्त्रम् ॥ तप्तकांचन-

१ आवाहनादिमुद्राः (१३२) पृष्ठे द्रष्टव्याः

संकाशं पीतांबरमिदं हरे ॥ संगृहाण जगन्नाथ रामचंद्र नमोऽस्तु ते ॥ सा० सपरि० श्रीराम० वस्त्रोप० स०॥ यज्ञोपवीतम् ॥ श्रीरामाच्युत यज्ञेश श्रीधरानन्त राघव ॥ ब्रह्मसूत्रं सोत्तरीयं गृहाण रघुनंदन ॥ सा० सप० श्रीराम० यज्ञोप० स० ॥ गंधः ॥ कुङ्कुमागरुकस्तूरीकर्पूरं चन्दनं शुभम् ॥ तुभ्यं दास्यामि राजेन्द्र श्रीराम स्वीकुरु प्रभो ॥ सा० सप० श्रीराम० गन्धं स० ॥ अक्षताः ॥ अक्षताश्च सुरश्रेष्ठ० ॥ सा० सपरि० श्रीराम० अक्षतान् स० ॥ अलंकाराः ॥ कटिसूत्रांगुलीये च कुंडले मुकुटं तथा ॥ वनमालां कौस्तुभं च गृहाण जानकीपते ॥ सा० सप० श्रीराम० अलंकारान् स० ॥ पुष्पाणि ॥ तुलसीकुन्दमन्दारजातीपुन्नागचम्पकैः ॥ कदम्बकरवीरैश्च कुसुमैः शतपत्रकैः ॥ १ ॥ नीलाम्बुजैर्बिल्वपत्रैरर्चयेद्राघवं विभुम् ॥ पूजयामि त्वहं भक्त्या संगृहाण जनार्दन ॥ २ ॥ सा० सप० श्रीराम० तुलसीस० पुष्पाणि सम० ॥

"अथांगपूजा"–श्रीरामचंद्राय० पादौ पूज०॥ राजीवलोचनाय० गुल्फौ पूज० ॥ रावणान्तकाय० जानुनी पूज० ॥ वाचस्पतये० ऊरू पूज० ॥ विश्वरूपाय० जंघे पूज० ॥ लक्ष्मणाग्रजाय० कटी पूज० ॥ विश्वमूर्तये० मेढ्रं पूज०॥ विश्वामित्रप्रियाय० नाभिं पूज० ॥ परमात्मने० हृदयं पूज० ॥ श्रीकंठाय० कंठं पूज० ॥ सर्वास्त्रधारिणे० बाहू पूज० ॥ रघूद्वहाय० मुखं पूज० ॥ पद्मनाभाय० जिह्वां पूज० ॥ दामोदराय० दन्तान्पूज्य० ॥ सीतापतये० ललाटं पूज० ॥ ज्ञानगम्याय० शिरः पूज० ॥ सर्वात्मने० सर्वांगं पूजयामि ॥ ततो यथावकाशेन रामसहस्रनामभिः विष्णुसहस्रनामभिर्वा तुलसीद्रव्यं समर्पयेत् ॥ सौभाग्यद्रव्यम् ॥ श्वेतचूर्णं० ॥ सा० सप० श्रीराम० सौभाग्य० स० ॥ धूपः ॥ वनस्पति० ॥ सा० सप० श्रीराम० धूपमा०॥ दीपः ॥ ज्योतिषां पतये

तुभ्यं नमो रामाय वेधसे ॥ गृहाण दीपकं चैव त्रैलोक्यतिमिरापहम् ॥ सा० सप० श्रीराम० दीपं स० ॥ नैवेद्यम् ॥ इदं दिव्यान्नममृतं रसैः षड्भिः समन्वितम् ॥ रामचंद्रेश सीतेश नैवेद्यं प्रतिगृह्यताम् ॥ सा० सप० श्रीराम० नैवेद्यं निवे० ॥ धेन्वा अमृ० ग्रासमु० ह्रीं प्राणा० । अपा० । व्याना० । उदा० । समा० । आचमनं मध्ये० । उत्तरा० । हस्त० । मुख० । करोद्व० गन्धं स० ॥ फलानि ॥ इदं फलं मया० ॥ फलानि स० ॥ ताम्बूलम् ॥ नागवल्लीदलैर्युक्तं पूगीफलसमन्वितम् ॥ ताम्बूलं गृह्यतां राम कर्पूरादिसमन्वितम् ॥ सा० सप० श्रीराम० मुख० पूगीफलता० सम० ॥ हिरण्यगर्भ० ॥ सा० सप० श्रीराम० हिरण्यद० स० ॥ नीराजनम् ॥ नृत्यैर्गीतैश्च वाद्यैश्च पुराणपठनादिभिः ॥ पूजोपचारैरखिलैः संतुष्टो भव राघव ॥ मंगलार्थं महीपाल नीराजनमिदं हरे ॥ संगृहाण जगन्नाथ रामचंद्र नमोस्तु ते ॥ (अथवा वन्दे गोपालम्० इत्यनेन ॥) सा० सप० श्रीराम० नीराजनं स० ॥ प्रदक्षिणा यानिकानि० ॥ सा० सप० श्रीराम० प्रदक्षिणां सम० ॥ मंत्रपुष्पांजलिः ॥ नमो देवाधिदेवाय रघुनाथाय शार्ङ्गिणे ॥ चिन्मयानन्तरूपाय सीतायाः पतये नमः ॥ साङ्ग० सप० श्रीराम० मंत्रपु० स० ॥ विशेषार्घः ॥ अशोककुसुमैर्युक्तं रामायार्घं निवेदयेत् ॥ दशाननवधार्थाय धर्मसंस्थापनाय च ॥ परित्राणाय साधूनां जातो रामः स्वयं हरिः ॥ गृहाणार्घ्यं मया दत्तं भ्रातृभिः सहितोऽनघ ॥ सा० सप० श्रीराम० विशेषा० सम्पा० ॥ स्तुतिपाठः ॥ माता रामो मत्पिता रामचंद्रः स्वामी रामो मत्सखा रामचंद्रः ॥ सर्वस्वं मे रामचंद्रो दयालुर्नान्यं जाने नैव जाने न जाने ॥ श्रीरामचंद्रचरणौ मनसा स्मरामि श्रीरामचंद्रचरणौ वचसा गणामि ॥ श्रीरामचंद्रचरणौ शिरसा नमामि श्रीराम-

चंद्रचरणौ शरणं प्रपद्ये ॥ साङ्गा० सपरि० श्रीराम० नमः स्तुतिपाठं स०॥ अनया पूज० श्रीरामचन्द्रः प्रीयताम् ॥ इति ॥ तत आचार्यादिब्राह्मणान् संपूज्य दक्षिणां दत्त्वा आशिषो गृहीत्वा ॥ मया अद्याह्नि यत्कृतं तत्कालहीनं क्रिया० तत् सर्वं परि० अस्तु इति भव० ब्रुव० ॥ अस्तु परि० इति द्विजाः । ततः पुराणपठनादिना रात्रिं निनयेत् ॥इति॥

---

## ॥ अथ रामनवमीव्रतोद्यापनहोमविधिः ॥

द्वितीयदिने प्रातर्नित्यकर्म समाप्य ॥ आचम्य प्राणानायम्य ॥ जलमादाय अद्य० द्वितीयदिने रामनवमीव्रतोद्यापनकर्मणः सा० सि० आवाहितदेवतानां पूजनपूर्वकं सग्रहमखं विहितहोमाख्यं कर्म करिष्ये ॥ इति संकल्प्य दिग्रक्षणाद्यावाहितदेवतानां पूजनं कृत्वा स्थंडिलं विरच्य पंचगव्यकरणं भूम्यादिपूजनं पंचभूसंस्कारपूर्वकमग्निस्थापनं ग्रहाणां स्थापनं पूजनं च कृत्वा कुशकंडिकां विधाय ग्रहहोमान्तं कर्म (१५०-१५४) कुर्यात् ॥ ततः प्रधानहोमः ॥ प्रधानं रामम् आज्यपायसद्रव्येण प्रत्येकमष्टोत्तरशतसंख्यया "श्रीरामाय नमः" ॥१०८॥ इति जुहुयात् ॥ जानक्यादिसप्तदेवताभ्यश्च उक्तद्रव्येण अष्टाविंशतिसंख्यया जुहुयात्। तद्यथा—जनकात्मजायै० ॥ २८ ॥ ॥ दशरथाय० ॥ २८ ॥ कौशल्यायै० ॥ २८ ॥ लक्ष्मणाय० ॥ २८ ॥ भरताय० ॥ २८ ॥ शत्रुघ्नाय० ॥ २८ ॥ मारुतये० ॥ २८ ॥ ततो मंडूकादिपीठदेवताभ्यश्च ( १६६ पृष्ठे ) ब्रह्मादिमंडलदेवताभ्यश्च ( १६४–१६५ पृष्ठे ) आज्येनैकैकामाहुतिं जुहुयात् ॥ "न्यूनातिरिक्तदोषपरिहारार्थम् "अग्निवायुसूर्येभ्यो०" इति तिलद्रव्येण २८ जुहुयात्॥एवं होमं समाप्य उत्तरपूजनादि प्रणीताविमोकान्तं कर्म (१६८–१८८) कृत्वा ॥ ग्रहानग्निं च

विसृज्य मंडलसमीपमागत्य स्थापितदेवतानां यथाशक्त्या पूजनं कृत्वा महानीराजनं कृत्वा मूर्तिकलशसहितपीठदानादिकमाचार्याय " इमां स्वर्णमयीं राममतिमां समलंकृताम् ॥ श्रीरामप्रीतये दास्ये प्रीतो भवतु राघवः " ॥ इति मन्त्रेण दत्त्वा ब्राह्मणान् संपूज्य दक्षिणादानपुरःसरम् आशिषो गृहीत्वा तान् भोजयित्वा स्वयं भुंजीत ॥ इति ॥

॥ इति रामनवमीव्रतोद्यापनम् ॥

## ॥ अथ दमनकोत्सवः ॥

तत्रादौ चैत्रशुक्लैकादश्यां श्रीकृष्णस्यांदोलनोत्सवः ॥ " दोलारूढं मपश्यन्ति कृष्णं कलिमलापहम् ॥ अपराधसहस्रैस्तु मुक्तास्ते धूनने कृते ॥ तावत्तिष्ठन्ति पापानि जन्मकोटिकृतान्यपि ॥ क्रीडन्ते विष्णुना सार्धं वैकुंठे देवपूजिताः " इत्यादिकस्तन्महिमा ॥ चैत्रशुक्लद्वादश्यां दमनोत्सवः ॥ स च " पारणाहे न लभ्येत द्वादशी घटिकापि चेत् । तदा त्रयोदशी ग्राह्या ॥ शिवस्य तु चतुर्दश्यां कार्यः ॥ "अथ प्रयोगः॥ उपवासदिने नित्यपूजां कृत्वा दमनक (डमरो) स्थानं गत्वा क्रमेण तमादाय चंदनादिना संपूज्य "श्रीकृष्णपूजार्थं त्वां नेष्ये" इति प्रार्थ्य प्रणमेत् ॥ अन्यदेवतासु यथादैवतमूहः कार्यः ॥ ततो दमनकं गृहमानीय पंचगव्येन शुद्धोदकेन च प्रक्षाल्य देवाग्रे स्थापयित्वा तस्मिन् दमनके अशोककालवसन्तकामान् काममात्रं वा गंधादिभिः पूजयेत् ॥ तत्र " नमोऽस्तु पुष्पबाणाय जगदाल्हादकारिणे ॥ मन्मथाय जगन्नेत्रे रतिप्रीतिप्रियाय ते ॥ " इति कामावाहनमंत्रः ॥" कामभस्मसमुद्भूतरतिबाष्पपरिप्लुत ॥ ऋषिगंधर्वदेवादिविमोहक नमोऽस्तु ते ॥ इति दमनकमुपस्थाय " ह्रीं कामाय नमः " इति मंत्रेण कामरूपिणे

दमनकाय गंधाद्युपचारान् दद्यात् ॥ ततो रात्रौ देवं संपूज्य अधिवासनं कुर्यात् ॥ तद्यथा ॥ देवाग्रे सर्वतोभद्रं संपाद्य तत्र कलशं संस्थाप्य तत्र धौतवस्त्राच्छन्नं दमनकं वैणवपटले संस्थाप्य ॥ पूजार्थं देवदेवस्य विष्णोर्लक्ष्मीपतेः प्रभोः ॥ दमन त्वमिहागच्छ सान्निध्यं कुरु ते नमः ॥ इति दमनकदेवतामावाह्य ॥ प्रागाद्यष्टदिक्षु ॥ क्लीं कामदेवाय नमो ह्रीं रत्यै नमः ॥ क्लीं भस्मशरीराय नमो ह्रीं रत्यै० ॥ क्लीं अनंगाय नमो ह्रीं रत्यै० ॥ क्लीं मन्मथाय० ह्रीं रत्यै० ॥ क्लीं वसन्तसखाय० ह्रीं रत्यै० ॥ क्लीं स्मराय० ह्रीं रत्यै० ॥ क्लीं इक्षुचापाय० ह्रींरत्यै० क्लीं पुष्पबाणास्त्राय० ह्रीं रत्यै० ॥ इति संपूज्य ॥ ह्रीं "तत्पुरुषाय विद्महे कामदेवाय धीमहि ॥ तन्नोऽनंगः प्रचोदयात् ॥" इति गायत्र्या दमनकमष्टोत्तरशतमभिमंत्र्य गंधादिभिः संपूज्य प्रार्थयेत् ॥" क्षीरोदधिमहानागशय्यावस्थितविग्रह ॥ प्रातस्त्वां पूजयिष्यामि संनिधौ भव ते नमः ॥" इति संप्रार्थ्य ॥ तस्यामेकादश्यां रात्रौ जागरणं कुर्यात् ॥ पुनर्देवं संपूज्य ॥ दूर्वागंधाक्षतयुतां दमनकमंजरीमादाय मूलमंत्रं पठित्वा ॥ "देवदेव जगन्नाथ वांछितार्थप्रदायक ॥ हृत्स्थान्पूरय मे विष्णो कामान् कामेश्वरीप्रिय ॥ इदं दमनकं देव गृहाण मदनुग्रहात् ॥ इमां सांवत्सरीं पूजां भगवान्परिपूरय ॥" पुनर्मूलं जप्त्वा देवे दमनकमर्पयेत् ॥ ततो यथाशोभं अंगदेवताभ्यो दमनकं समर्प्य प्रार्थयेत् ॥ मणिविद्रुममालाभिर्मंदारकुसुमादिभिः । इयं सांवत्सरीं पूजां तवास्तु गरुडध्वज ॥ १ ॥ वनमाला यथादेव कौस्तुभं सततं हृदि ॥ तद्वद्दामनकीमालां पूजां च हृदये वह ॥२॥ जानताऽजानता वापि न कृतं यत्तवार्चनम् ॥ तत्सर्वं पूर्णतां यातु त्वत्प्रसादाद्रमापते

१ कांसनी टोपली ॥

॥ ३ ॥ जितन्ते पुंडरीकाक्ष० ॥ मंत्रहीनं क्रियाहीनं० ॥ इति संमार्थ्य पंचोपचारैः देवं संपूज्य नीराज्य ब्राह्मणेभ्यो दमनं दत्त्वा स्वयं शेषं संधार्य सुहृद्युक्तः पारणां कुर्यात् ॥ मंत्रदीक्षारहितैर्नाम्नाऽर्पणीयम् ॥ अस्य गौणकालः श्रावणमासावधिः ॥ नेदं मलमासे भवति शुक्रास्तादौ तु कर्तव्यम् ॥ अस्यामेव द्वादश्यां "भारते" "अहोरात्रेण द्वादश्यां चैत्रे विष्णुरिति स्मरन् ॥ पुंडरीकमवाप्नोति देवलोकं च गच्छती"ति ॥

चैत्रशुक्लत्रयोदश्यामनंगपूजनव्रतम् ॥ अस्यामेव तिथौ शतभिषा नक्षत्रे सति "वारुणीयोगः" शनिवारे शतभिषा नक्षत्रे सति "महावारुणीयोगः" तथा च तस्यामेव तिथौ शनिवारः शतभिषानक्षत्रं शुभयोगश्चेत्येतेषां योगे महामहावारुणीयोगः ॥ एतेषु योगेषु गंगायां स्नाने कृतेऽनेकसूर्यग्रहणस्नानफलम् ॥ अस्यामेव त्रयोदश्याम् अशोकव्रतम् ॥ तत्र अशोकवृक्षस्य पूजा कार्या ॥ एतेषां व्रतानां विशेषविधिस्तु व्रतराजे द्रष्टव्यः ॥

चैत्रशुक्लचतुर्दश्यां नृसिंहस्य दोलोत्सवः ॥ रविमंदगुरुवारयुतचैत्र्यां (पूर्णिमायां) स्नानश्राद्धादिभिः अश्वमेधपुण्यं भवति ॥ इति ॥

चैत्रशुक्लपूर्णिमायां हनुमज्जयन्ती ॥ तद्दिने सूर्योदयसमय एव हनुमतः पूजनं कार्यं पश्चाच्च हनुमतः रुद्रावतारत्वेन दिने तैलेन हनुमतः उपरि रुद्या लघुरुद्रेण वा अभिषेकः कार्यः । "हनुमते नमः" इति मूलमंत्रं स्वीकृत्य पूजनादिकं कर्तव्यम् ॥

---

## ॥ अथ वैशाखमासकृत्यम् ॥

अत्र वृषभसंक्रमे पूर्वा षोडशनाड्यः पुण्यकालः ॥ ( रात्रौ च प्रागुक्तम् ॥ ) अत्र प्रातःस्नानं तिलैः पितृतर्पणं धर्मघटदानं च

कार्यम् ॥ अत्र ब्राह्मणानां गंधमाल्यपानककदलीफलादिभिर्वसन्तपूजा कार्या ॥ वैशाखे ज्येष्ठे वा यत्र मासे उष्मबाहुल्यं तत्र प्रातर्नित्यपूजां कृत्वा गंधोदकपूर्णे पात्रे विष्णुं संस्थाप्य पंचोपचारैः संपूज्य तत्रैव जले सूर्यास्तपर्यन्तमधिवास्य रात्रौ स्वस्थाने स्थापयित्वा पंचोपचारैः पूजयेत्तेन तीर्थोदकेन गृहदारादियुतम् आत्मानं च पावयेत् ॥ एतच्च द्वादश्यां दिवा न कार्यम् ॥ रात्रौ किंचित्कालं जलस्थं पूजयित्वा स्वस्थाने स्थापयेत् ॥ अत्र मासे कृष्णगौराख्य-( श्वेत, श्याम ) तुलसीभिर्विष्णुं त्रिकालमर्चयेन्मुक्तिः फलम् ॥ प्रातः स्नात्वा वहृतोयेनाश्वत्थमूलं सिंचेत् प्रदक्षिणाश्च कुर्यात् अनेककुलतारणं फलम् । एवं गवां कंडूयनेऽपि ॥ अत्र मासे एकभक्तं नक्तमयाचितं वा सर्वेप्सितफलदम् ॥ अत्र मासे प्रपादानं देवे गलंतिकां (अभिषेकपात्र) वंधनं व्यजनं छत्रोपानच्चन्दनादिदानं महाफलदम् ॥ यदा वैशाखो मलमासो भवति तदा काम्यानां तत्र समाप्तिनिषेधान्मासद्वयं वैशाखस्नानहविष्याशनादयो नियमा अनुष्ठेयाः ॥ चान्द्रायणादिकं तु मलमासेऽपि समापनीयम् ॥

वैशाखशुक्लतृतीया ॥ इयमेव अक्षय्यसंज्ञका तृतीया ॥ अस्यां यत्किंचिज्जपहोमपितृतर्पणदानादि क्रियते तत्सर्वमक्षयम् ॥ इयं रोहिणीबुधयोगे महापुण्या ॥ अत्र देवतोद्देशेन पित्रुद्देशेन च उदककुंभदानमुक्तम् ॥ तत्र श्रीपरमेश्वरप्रीतिद्वारा उदकुंभदानकल्पोक्तफलावाप्त्यर्थं ब्राह्मणायोदकुंभदानं करिष्ये ॥ इति संकल्प्य गंधफलवस्त्राद्युपेतं कलशं ब्राह्मणं च पंचोपचारैः संपूज्य " एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ॥ अस्य प्रदानात्सकला मम सन्तु मनोरथाः ॥" इति मंत्रेण दद्यात् ॥ पित्रुद्देशे तु " पितॄणामक्षयतृप्त्यर्थम् उदकुंभदानं करिष्ये "

इति संकल्प्य पूर्ववत्कुंभब्राह्मणौ संपूज्य उदकुंभे गंधतिलफलादीनिक्षिप्य ॥ "गंधोदकतिलैर्मिश्रं सान्नं कुंभं फलान्वितम् ॥ पितृभ्यः संप्रदास्यामि ह्यक्षय्यमुपतिष्ठतु ॥" इति मंत्रेण दद्यात् ॥ युगादौ समुद्रस्नानं महाफलम् । इति कुंभदानविधिः ॥ वैशाखशुक्लतृतीयायां यवहोमो यवदानं च सर्वपापापहम् ॥ यः करोति तृतीयायां कृष्णचंदनभूषितम् ॥ वैशाखस्य सितेपक्षे स यात्यच्युतमंदिरम् ॥ इति ॥

"इयमेव तृतीया परशुरामजयन्ती" इयं रात्रीप्रथमयामव्यापिनी ग्राह्या पूर्वेद्युरेवप्रथमयामव्याप्तौ पूर्वा ॥ दिनद्वये रात्रिप्रथमयामे साम्येन वैषम्येण वैकदेशव्याप्तौ परा ॥ अत्र प्रदोषे परशुरामं संपूज्य अर्घ्यं दद्यात् ॥ तत्र मंत्रः ॥ जमदग्निसुतो वीर क्षत्रियान्तकर प्रभो ॥ गृहाणार्घ्यं मया दत्तं कृपया परमेश्वर ॥ इति ॥

वैशाखशुक्लसप्तम्यां गंगासप्तमीव्रतम् । अस्यां तिथौ गंगोत्पत्तिस्तस्यां मध्याह्नव्यापिन्यां गंगापूजनं कार्यम् ॥ विष्णोः पूजनमपि विहितम् ॥ वैशाखशुक्लद्वादशी अत्र मधुसूदनपूजोक्ता ॥ "वैशाखशुक्लद्वादश्यां पूजयेत् मधुसूदनम् ॥ अग्निष्टोममवाप्नोति सोमलोकं च गच्छति" ॥ इति ॥

---

## ॥ अथ नृसिंहजयन्तीव्रतम् ॥

वैशाखशुक्लचतुर्दशी नृसिंहजयन्ती ॥ सा सूर्यास्तकालव्यापिनी ग्राह्या । दिनद्वये तद्व्याप्तौ तदव्याप्तौ वा परैव ॥ स्वातीनक्षत्रशनिवारादियोगे साऽतीव प्रशस्ता ॥

अथ व्रतप्रयोगः ॥ त्रयोदश्यां कृतैकभक्तश्चतुर्दश्यां मध्याह्ने तिलामलकैः स्नात्वा व्रतसंकल्पं कुर्यात् ॥ "उपोष्येदं नारसिंह भुक्ति-

मुक्तिफलप्रद ॥ शरणं त्वां प्रपन्नोऽस्मि भक्तिं मे नृहरे दिश" ॥ इति मंत्रेण व्रतं संकल्प्य आचार्यं वृत्वा ॥ सायंकाले धान्यस्थोदककुंभे पूर्णपात्रे सौवर्णप्रतिमायां वा स्थापितप्रतिमायां वा षोडशोपचारैर्देवं संपूज्य अर्घ्यं दद्यात् ॥ तत्र मंत्रः॥ "परित्राणाय साधूनां जातो विष्णुर्नृकेसरी ॥ गृहाणार्घ्यं मया दत्तं सलक्ष्मीर्नृहरिः स्वयम् ॥ " रात्रौ जागरणं कृत्वा प्रातर्देवं संपूज्य विसृज्य आचार्याय धेनुयुतां प्रतिमां च दद्यात् ॥ तत्र मंत्रः ॥ "नृसिंहाच्युत गोविंद लक्ष्मीकान्त जगत्पते ॥ अनेनार्चाप्रदानेन सफलाः स्युर्मनोरथाः" इति दत्त्वा प्रार्थयेत् ॥ "मद्वंशे ये नरा जाता ये जनिष्यन्ति चापरे ॥ तांस्त्वमुद्धर देवेश दुःसहाद्भवसागरात् ॥ पातकार्णवमग्नस्य व्याधिदुःखांबुवारिधेः ॥ नीचैश्च परिभूतस्य महादुःखगतस्य मे ॥ करावलंबनं देहि शेषशायिन् जगत्पते ॥ श्रीनृसिंह रमाकान्त भक्तानां भयनाशन ॥ क्षीराम्बुधिनिवास त्वं चक्रपाणे जनार्दन ॥ व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव ॥" ततो ब्राह्मणैः सह तिष्ठन्ते पारणं कार्यम् ॥ यामत्रयोर्ध्वगामिन्यां चतुर्दश्यां तु पूर्वाह्णे एव पारणम् ॥ इति

---

## ॥ अथ नृसिंहचतुर्दशीव्रतोद्यापनम् ॥

शुभासने चोपविश्य आचम्य प्राणानायम्य ॥ जलमादाय ॥ अद्येत्यादि० तिथौ अखिलपापक्षयपूर्वकं शत्रुपराजयसुखसाधनावाप्तिद्वारा श्रीनृसिंहप्रीत्यर्थमाचरितस्य आचरिष्यमाणस्य श्रीनृसिंहजयन्तीव्रतस्य एकरात्राधिवासपक्षाश्रयेण उद्यापनमहं करिष्ये ॥ तदंगभूतं दिग्रक्षणं कलशार्चनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्धारामायुष्यमंत्रजपं नान्दीश्राद्धमाचार्यादिवरणं सर्वतोभद्रमंडले ब्रह्मादिदेवतानां स्थापनं प्रधानदेवतास्थापनं पूजनं च करिष्ये इति

संकल्प दिग्रक्षणादि सर्वतोभद्रमंडलदेवतास्थापनपूजनान्तं कर्म(६-१०७) कृत्वा॥भद्रमंडले कलशं संस्थाप्य ईमं लक्ष्मीनृसिंहं "ह्रीं नृसिंहाय नमः" इति मूलमंत्रेण गायत्र्या वा प्रतिष्ठाप्य यथाशक्त्या पूजनं कुर्यात् ॥इति॥

## ॥ अथ नृसिंहत्रिंशोपचारपूजा ॥

ध्यानं० सुरकदंबकैः प्रश्रयेण वै नियतसेवितं गोकुलोत्सवम् ॥
किरिटकुंडलं पीतजाम्बरं खलनिपूदनं चिन्तयाम्यहम् ॥ १ ॥
आवा० खगपवाहनं क्षीरजाप्रियं भवभयापहं भुक्तिमुक्तिदम् ॥
सुरपतिं जगन्नाथमीश्वरं कमलभासमावाहयाम्यहम् ॥ २ ॥
आस० विधिमुखामरैर्नत्रमूर्तिभिः प्रणयसंश्रितं दुर्धरादिमत् ॥
वरमणिप्रभाभासुरं नवं जनप गृह्यतां स्वर्णमासनम् ॥ ३ ॥
पाद्यं० कुसुमवासितं गंधविस्तृतं मुनिनिषेवितं सादरेण वै ॥
ध्रुवपराशराभीष्टद प्रभो जनप गृह्यतां पाद्यमुत्तमम् ॥ ४ ॥
अर्घ्य० कनकसंपुटे स्थापितं वरं जलसुवर्णमुक्ताफलैर्युतम् ॥
करसरोरुहाभ्यां धृतं मया जनप गृह्यतामर्घ्यमुत्तमम् ॥५ ॥
आच० तव रमायुजः सेवनाज्जना नृपतिसन्निभाः संभवन्ति हि ॥
सुरतरंगिणीशुद्धवारिभिर्जनप गृह्यतामाचमं शुभम् ॥ ६ ॥
पय० सुरगवुद्भवं वीर्यवर्धकं निखिलदेहिनां जीवनप्रदम् ॥
शशधरप्रभं फेनसंयुतं जनप गृह्यतामर्पितं पयः ॥ ७ ॥
दधि० शुचिपयःसमुद्भूतमुत्प्रदं व्रजनिवासिभिः स्वादितं शुभम् ॥
रजतसन्निभं शीततामयं जनप गृह्यतामर्पितं दधि ॥ ८ ॥
घृत० हुतवहप्रियं क्षीरजोद्भवं सकलदेहिनां सत्त्ववर्धकम् ॥
कुमुदसदृशं विष्णुदैवतं जनप गृह्यतामर्पितं घृतम् ॥ ९ ॥

मधु० मधु कृतोद्भवं स्वादुमंजुलं मधुपमाक्षिकाद्यैर्विनिर्मितम् ॥
मधुरतामयं गंधसंमदं जनप गृह्यतामर्पितं मधु ॥ १० ॥
शर्क०-मदनकार्मुकाद्यैर्विनिर्मिता मधुरतान्विता सर्वपापहा ॥
सरसतां गता तारकोपमा जनप गृह्यतां शुद्धशर्करा ॥ ११ ॥
अभ्यं०-सुरभिकेतकापुष्पसंभवं मृगमदान्वितं यंत्रनिर्मितम् ॥
अनुपकारिणा भक्तितो मया जनप गृह्यतां तैलमर्पितम् ॥ १२ ॥
स्नानं०-हरिपदांबुजानर्मदामहीसरयुचंद्रभागाभ्य आहृतम् ॥
जलजवासितं स्नानहेतवे जनप गृह्यतामर्पितं जलम् ॥ १३ ॥
वस्त्रं०-विविधतंतुभिर्गुंफितं नवं सुतपनीयभं सोत्तरीयकम् ॥
मधुरिपो जगन्नाथ माधव जनप गृह्यतां वस्त्रमर्पितम् ॥ १४ ॥
यज्ञो०-त्रिगुणितं सितैरर्कतंतुभिः कृतमिदं मया शुद्धचेतसा ॥
निगमसंमतं बंधमोचकं जनप गृह्यतामुपवीतकम् ॥ १५ ॥
गंधः०-मलयसंभवं पीतवर्णकं मृगमदादिभिर्वासितं वरम् ॥
मुदितषट्पदं कुंकुमान्वितं जनप गृह्यतां गंधमर्पितम् ॥ १६ ॥
अक्ष०-कलमसंभवान् मौक्तिकोपमांस्त्रिपथगोदकैःक्षालितान् शिवान् ॥
अगरुकुंकुमैर्मिश्रितान् वरान् जनप वै गृहाणार्पिताक्षतान् ॥ १७ ॥
पुष्पा०-तरुणमल्लिकाकुंदमालतीवकुलपंकजानां समुच्चयैः ॥
सततमूनितं हारमर्पितं जनप भक्तितो त्वं गृहाण वै ॥ १८ ॥
श्वेत०-सुरभिकेतकीवृक्षसंभवं विविधसौख्यदं कांतिवर्धनम् ॥
सितकरोपमं स्नेहसत्कृतं जनप गृह्यतां श्वेतचूर्णकम् ॥ १९ ॥
रक्त०-अमरपादिभिर्देववृंदकैः शिरसि वै धृतं प्रश्रयेण यत् ॥
तपनसदृशं दृष्टिमुत्कलं जनप गृह्यतां रक्तचूर्णकम् ॥ २० ॥
सिंदू०-गणपतिप्रियं बालसूर्यभं पवनसूनुना स्वीकृतं सदा ॥
सुरभिवासितं सूक्ष्मचूर्णकं जनप गृह्यतां नागसंभवम् ॥ २१ ॥

धूपः०- अगरुगुग्गुलाज्यादिमिश्रितस्तपनयोगजोद्भूतसौरभः ॥
अमरवृन्दकैः स्नेहसत्कृतो जनप गृह्यतां धूप उत्तमः ॥ २२ ॥
दीपः-अनलतैलिनीगोघृतान्वितस्तिमिरनाशको दीप्ततंतुभिः ॥
कनकभाजने स्थापितो मया जनप गृह्यतां दीप उत्तमः ॥ २३ ॥
नैवे०-पनसदाडिमाम्रादिसत्फलं सुघृतमोदकापूपपायसम् ॥
रजतभाजने स्थापितं मया जनप गृह्यतां खाद्यमुत्तमम् ॥ २४ ॥
आच०-जलधिगोद्भवं शीतलामयं सकलप्राणिनां प्राणदायकम् ॥
विधिसमर्पितं शुद्धचेतसा जनप गृह्यतामाचमं शुभम् ॥ २५ ॥
ताम्बू०-खपरसंभवं पूगचूर्णयुङ् मृगमदेलकावासितं वरम् ॥
फणिलतादलैः क्लृप्तवीटकं जनप गृह्यतामास्यभूषणम् ॥ २६ ॥
दक्षि०-निखिलयाचिनां श्रेष्ठभोगदा निगमसंमता कर्मपूर्णदा ॥
सकलभूजनैर्वांछिता सदा जनप गृह्यतां हेमदक्षिणा ॥ २७ ॥
नीरा०-हुतवहप्रियैर्मिश्रितं वरं जलधिजैर्युतं सर्वपापहम् ॥
मुखविलोकनार्थाय सत्कृतं जनप गृह्यतामार्तिकं शुभम् ॥ २८ ॥
प्रद०-वरदसंचितं पूर्वजन्मभिर्दहति किल्बिषं त्वत्प्रदक्षिणा ॥
नरहरिं मुदा शुद्धचेतसा सततमीश्वरं त्वां नमाम्यहम् ॥ २९ ॥
नम०-जय जय प्रभो सात्वतांपते शरणवत्सलाभीष्टसाधक ॥
यदुपते जगन्नाथ सर्वदा शरणमागतं पाहि पाहि माम् ॥ ३० ॥
इति नृसिंहं संपूज्य ब्राह्मणपूजनादिकं कृत्वा पुराणकथादिना रात्रिं निनयेत् ॥ इति ॥

---

## ॥ अथ नृसिंहजयन्तीव्रतहोमविधिः ॥

ततो द्वितीयदिने प्रातर्नित्यकर्म समाप्य आचम्य प्राणानायम्य जलमादाय अद्य द्वितीयदिने नृसिंहचतुर्दशीव्रतोद्यापनकर्मणः सा-

ङ्गतासिद्ध्यर्थम् आवाहितदेवतानां पूजनपूर्वकं सग्रहमखं विहितहोमं करिष्ये । इति संकल्प्य दिग्रक्षणाद्यावाहितदेवतानां पूजनं विधाय स्थंडिलं विरच्य पञ्चगव्यादि कृत्वा पंचभूसंस्कारपूर्वकम् अग्निस्थापनं तथा च ग्रहाणां स्थापनं च पूजनं च (१४७–१५९) विधाय कुशकंडिकां कृत्वा ग्रहहोमान्तं कर्म कुर्यात् ॥ ततः प्रधानहोमः ॥ प्रधानं लक्ष्मीनृसिंहं मूलमंत्रेणाष्टोत्तरशतसंख्यया (१०८) "श्रीलक्ष्मीनृसिंहाभ्यां नमः" इति मंत्रेण तिलपायसाज्यद्रव्यैर्जुहुयात् ॥ ततो मंडूकादिपीठदेवता (पृष्ठ १६२) ब्रह्मादिदेवता (पृष्ठ १६४–१६५) श्चैकैकाज्याहुतिं जुहुयात् ॥ न्यूनातिरिक्तदोषपरिहारार्थं तिलद्रव्येन "अग्निवायुसूर्येभ्यो नमः" इति मंत्रेण अष्टाविंशतिसंख्यया (२८) जुहुयात् ॥ तत उत्तरपूजनादि प्रणीताविमोकान्तं (पृष्ठ १६८–१८८) कृत्वा ग्रहानग्निं च विसृज्य मंडलसमीपमागत्य स्थापितदेवतानां यथाशक्तिपूजनं कृत्वा महानीराजनं कृत्वा मूर्तिसहितपीठदानादिकं संकल्पपूर्वकमाचार्याय दत्त्वा ब्राह्मणान् संपूज्य दक्षिणादानपुरःसरम् आशिषो गृहीत्वा तान् भोजयित्वा स्वयं भुञ्जीत ॥ इति नृसिंहजयन्तीव्रतोद्यापनविधिः ॥

---

## ॥ अथ ज्येष्ठमासकृत्यम् ॥

मिथुनसंक्रान्तौ पराः षोडशनाड्यः पुण्यकालः ॥ ज्येष्ठमासे पिष्टेन ब्रह्ममूर्तिं कृत्वा वस्त्राद्यैः पूजयेत् तेन सूर्यलोकप्राप्तिः ॥ अत्र मासे जलधेनुदानमुक्तम् ॥ ज्येष्ठशुक्लप्रतिपदि करवीरव्रतमुक्तम् ॥ ज्येष्ठशुक्लतृतीयायां रंभाव्रतमुक्तम् ॥ तत्र पंचाग्नितपनपरा स्त्री पुमान् वा भवानीं स्वर्णप्रतिमायां संपूज्य यथोक्तविधिहोमादि कृत्वा सपत्नीकाय गृहं सोपस्करं दद्यात् ॥ दांपत्यानि भोजयेत् ॥ विशेषविधिस्तु

व्रतग्रन्थेभ्यो ज्ञेयः ॥ चतुर्थ्यां उमावतारः तत्र उमापूजनव्रतम् ॥ अष्टम्यां शुक्लादेवीपूजा ॥ नवम्यामुपोष्य देवीं पूजयेत् ॥

॥ अथ दशहराव्रतविधिः ॥

ज्येष्ठशुक्लदशम्यां गंगावतारः ॥ इयं दशहरासंज्ञिका ॥ अत्र दशयोगा उक्ताः ॥ ज्येष्ठे मासि ( १ ) सिते पक्षे ( २ ) दशम्यां ( ३ ) बुध (४) हस्तयोः (५) ॥ व्यतीपाते (६) गरानंदे (७।८) कन्याचंद्रे (९) वृषे रवौ (१०) ॥ ज्येष्ठे मलमासे सति तत्रैव दशहरा कार्या ॥ न तु शुद्धे ज्येष्ठे ॥ अत्र काशीवासिभिर्दशाश्वमेधतीर्थे स्नात्वा गंगापूजनादिकं कार्यम् ॥

" अथ व्रतविधिः " आचम्य प्राणानायम्य । जलमादाय अद्येत्यादि० तिथौ ममैतज्जन्मजन्मान्तरसमुद्भूतत्रिविधकायिकचतुर्विधवाचिकत्रिविधमानसेतिस्कान्दोक्तं दशविधपापनिरासार्थं त्रयस्त्रिंशच्छतपितृपुद्धारब्रह्मलोकवाप्त्यादिफलप्राप्त्यर्थं दशभोगपर्वणि अस्यां महानद्यां स्नानं तीर्थपूजनं प्रतिमायां जाह्नवीपूजां तिलादिदानं मूलमंत्रजपम् आज्यहोमं च यथाशक्ति करिष्ये ॥ यथाविधिस्नानं दशवारं कृत्वा जले स्थितो दशवारं सकृद्वा वक्ष्यमाणं स्तोत्रं पठित्वा वासःपरिधानादिपितृतर्पणान्तं नित्यं विधाय तीर्थे पूजां विधाय सर्पिर्मिश्रान् दशप्रसृतिकृष्णतिलान् तीर्थे अंजलिना प्रक्षिप्य गुडामिश्रान् सक्तुपिंडान् दश प्रक्षिपेत् ॥ ततो गंगातटे ताम्रे मृन्मये वा स्थापिते कलशे सौवर्णादिप्रतिमायां गंगामावाहयेत् ॥ तत्र मंत्रः ॥ नमो भगवत्यै दश पापहरायै गंगायै नारायण्यै रेवत्यै शिवायै दक्षायै अमृतायै विश्वरूपिण्यै नंदिन्यै ते नमो नमः ॥ ( अयं स्त्र्यादिसा-

१ गरकरणम् । बुधवारहस्तयोगे आनंदाख्यो योगः ॥

धारणः ॥ द्विजपात्रविषयो विंशत्यक्षरो यथा ॥ ) " ॐनमः शिवायै नारायण्यै दशहरायै गंगायै स्वाहा " इति ॥ एवं गंगामावाह्य ॥ नारायणं रुद्रं ब्रह्माणं सूर्यं भगीरथं हिमालयं च नाममंत्रेण तत्रैवावाह्य उक्तमूलमंत्रमुच्चार्य ॥ श्रीगंगायै नारायणरुद्रब्रह्मसूर्यभगीरथहिमवत्सहितायै आसनं समर्पयामीत्येवमासनाद्युपचारैः पूजयेत् ॥ दशविधपुष्पैः संपूज्य दशांगं धूपं दत्वा दशविधनैवेद्यान्ते तांबूलं दक्षिणां दत्त्वा दशफलान्यर्पयेत् ॥ दशदीपान्दत्वा पूजां समापयेत् ॥ दशविप्रेभ्यः प्रत्येकं षोडशमुष्टिमितान् तिलान् सदक्षिणान् दद्यात् ॥ एवं यवानपि ॥ ततो दश गाः एकां वा गां दद्यात् ॥ मत्स्यकच्छपमंडूकान सौवर्णान् राजतान् पिष्टमयान् वा संपूज्य तीर्थे क्षिपेत् ॥ एवं दीपान् प्रवाहयेत ॥ जपहोमचिकीर्षायां पूर्वोक्तमूलमंत्रस्य पंचसहस्रसंख्याजपो दशांशेन होमः ॥ यथाशक्ति वा जपहोमौ ॥ तत्र दशहरात्रतांगत्वेन होमं करिष्ये ॥ इति संकल्प्य स्थंडिले अग्निं प्रतिष्ठाप्य अन्वाधाने चक्षुषी आज्येनेत्यन्ते श्रीगंगाममुकसंख्यमाज्येन नारायणादिषड्देवता एकैकयाज्याहुत्या शेषेण स्विष्टकृतमित्यादि प्रोक्षिण्यादि पट्पात्राण्यासाद्याज्यं संस्कृत्य यथान्वाधानं जुहुयात् ॥ दशब्राह्मणान् सुवासिनीश्च भोजयेत् ॥ प्रतिपद्दिनमारभ्य स्नानादिपूजान्तो विधिः कार्यः ॥इति केचित्॥ केचित् दशदिनानि गंगादिनदीषु गंगां पूजयन्ति॥

॥ अथ दशहराख्यगंगास्तोत्रम् ॥

स्कान्दोक्त दशहराख्यगंगास्तोत्रम् ॥ तत्पाठप्रकारश्च ॥ चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभिताम् ॥ रत्नकुंभसिताम्भोजवरदाभयसत्कराम् ॥ १ ॥ श्वेतवस्त्रपरिधानां मुक्तामणिविभूषिताम् ॥ एवं ध्यायेत्सुसौम्या च चंद्रायुतसमप्रभाम् ॥ २ ॥ चामरैर्वीज्य-

मानां च श्वेतच्छत्रोपशोभिताम् ॥ सुप्रसन्नां च वरदां करुणार्द्रां निरन्तराम् ॥ ३ ॥ सुधाप्लावितभूपृष्ठां दिव्यगंधानुलेपनाम् ॥ त्रैलोक्यपूजितां गंगां सर्वदेवैरधिष्ठिताम् ॥४॥ दिव्यरत्नविभूषां च दिव्यमाल्यानुलेपनाम् ॥ ध्यात्वा जलेऽथ मंत्रेण कुर्यादर्चां च भक्तितः ॥ "ॐनमो भगवति लिहि लिहि मिलि मिलि गंगे मां पावय पावय स्वाहा ॥" अनेन मंत्रेणागमोक्तपंचोपचारान्पुष्पांजलिं च श्रीगंगायै निवेदयेत् ॥ एवं गंगाया ध्यानार्चने विधाय पश्चाज्जलमध्ये स्थित्वा ॥ अद्येत्यादि० ज्येष्ठमासे सिते पक्षे प्रतिपदमारभ्य दशमीपर्यन्तं प्रतिदिनं दशदशवारमेकोत्तरवृद्ध्या वा सर्वपापक्षयार्थं गंगास्तोत्रजपमहं करिष्ये ॥ इति संकल्प्य स्तोत्रं पठेत् ॥

"ईश्वर उवाच"—ॐनमः शिवायै गंगायै शिवदायै नमो नमः ॥ नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमोऽस्तु ते ॥ १ ॥ नमस्ते रुद्ररूपिण्यै शांकर्यै ते नमो नमः ॥ सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये ॥२॥ सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोऽस्तु ते ॥ स्थास्नुजंगमसंभूतविषहंत्र्यै नमोऽस्तु ते ॥३॥ संसारविषनाशिन्यै जीवनायै नमोऽस्तु ते ॥ तापत्रितयसंहन्त्र्यै प्राणेश्यै ते नमो नमः ॥४॥ शान्तिसन्तानकारिण्यै नमस्ते शुद्धमूर्त्तये ॥ सर्वसंशुद्धिकारिण्यै नमः पापारिमूर्त्तये ॥५॥ भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः ॥ भोगोपभोगदायिन्यै भोगवत्यै नमोऽस्तु ते ॥६॥ मंदाकिन्यै नमस्तेऽस्तु स्वर्गदायै नमो नमः ॥ नमस्त्रैलोक्यभूषायै त्रिपथायै नमो नमः ॥ ७ ॥ नमस्त्रिशुक्लसंस्थायै क्षमावत्यै नमो नमः ॥ त्रिहुताशनसंस्थायै तेजोवत्यै नमो नमः ॥ नंदायै लिंगधारिण्यै सुधाधारात्मने नमः ॥ ८ ॥ नमस्ते विश्वमुख्यायै रेवत्यै ते नमो नमः ॥ बृहत्यै च नमस्तेऽस्तु लोकधात्र्यै नमो नमः ॥९॥ नमस्ते

विश्वमित्रायै नंदिन्यै ते नमो नमः ॥ पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः ॥१०॥ परापरशताढ्यायै तारायै ते नमो नमः । पाशजालनिकृन्तन्यै ह्यभिन्नायै नमोऽस्तु ते ॥११॥ शांतायै च वरिष्ठायै वरदायै नमो नमः । उस्रायै सुखजग्ध्यै च संजीविन्यै नमोऽस्तु ते ॥१२॥ ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः ॥ प्रणतार्त्तिप्रभंजिन्यै जगन्मात्रे नमोऽस्तु ते ॥ १३ ॥ सर्वापत्प्रतिपक्षायै मंगलायै नमो नमः ॥ शरणागतदीनार्त्तपरित्राणपरायणे ॥ १४ ॥ सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥ निर्लेपायै दुर्गहंत्र्यै दक्षायै ते नमो नमः ॥१५॥ परापरपरायै च गंगे निर्वाणदायिनि ॥ गंगे मामग्रतो भूया गंगे मे तिष्ठ पृष्ठतः ॥१६॥ गंगे मे पार्श्वयोरेधि त्वयि गंगेऽस्तु मे स्थितिः ॥ आदौ त्वमन्ते मध्ये च सर्वं त्वं गां गते शिवे ॥ १७ ॥ त्वमेवमूलप्रकृतिस्त्वं पुमान्पर एव हि ॥ गंगे त्वं परमात्मा च शिवस्तुभ्यं नमः शिवे ॥ १८ ॥ य इदं पठते स्तोत्रं शृणुयाच्छ्रद्धयाऽपि यः ॥ दशधा मुच्यते पापैः कायवाक्चित्तसंभवैः ॥ १९ ॥ रोगस्थो मुच्यते रोगाद्विपद्भ्यश्च विपद्युतः ॥ मुच्यते बंधनाद् बद्धो भीतो भीतेः प्रमुच्यते ॥ २० ॥ सर्वान्कामानवाप्नोति प्रेत्य ब्रह्मणि लीयते ॥ दिव्यं विमानमारुह्य दिव्यस्त्रीपरिवीजितः ॥ २१ ॥ इमं स्तवं गृहे यस्तु लेखयित्वा विनिक्षिपेत् ॥ नाग्निचोरभयं तस्य पापेभ्यो हि भयं नहि ॥ २२ ॥ ज्येष्ठमासि सिते पक्षे दशमीहस्तसंयुता ॥ संहरेत् त्रिविधं पापं बुधवारेण संयुता ॥ २३ ॥ तस्यां दशम्यामेतच्च स्तोत्रं गंगाजले स्थितः ॥ यः पठेद्दशकृत्वस्तु दरिद्रो वापि चाक्षमः ॥ २४ ॥ सोपि तत्फलमाप्नोति गंगां संपूज्य यत्नतः ॥ पूर्वोक्तेन विधानेन यत्फलं संप्रकीर्तितम् ॥ २४ ॥ यथा गौरी तथा गंगा तस्माद्गौर्यास्तु पूजने ॥ विधिर्यो

विहितः सम्यक् सोऽपि गंगाभपूजने ॥ २६ ॥ यथा शिवस्तथा विष्णुर्यथा लक्ष्मीस्तथा उमा ॥यथा उमा तथा गंगा चतूरूपं न भिद्यते॥२७ विष्णुरुद्रान्तरं यच्च श्रीगौर्योरन्तरं तथा ॥ गंगागौर्योरन्तरं च यो ब्रूते मूढधीस्तु सः ॥ २८ ॥ रौरवादिषु घोरेषु नरकेषु पतत्यधः ॥ अदत्तानामुपादानं हिंसा चैवाविधानतः ॥ २९ ॥ परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥ पारुष्यमनृतं चैव पैशुन्यं चापि सर्वतः ॥ ३० ॥ असंबंधमलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥ परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ॥ ३१ ॥ वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥ एतानि दशपापानि हर त्वमथ जाह्नवि ॥ ३२ ॥ दशपापहरा यस्मात्तस्माद्दशहरा स्मृता ॥ एतैर्दशविधैः पापैः कोटिजन्मसमुद्भवैः ॥ ३३ ॥ मुच्यते नात्र संदेहः सत्यं सत्यं गदाधर ॥ दशत्रींशच्छतान्सर्वान्पितॄनथ पितामहान् ॥ उद्धरत्येव संसारान्मंत्रेणानेन पूजिता ॥ ३४ ॥ " ॐनमो भगवत्यै नारायण्यै दशपापहरायै शिवायै गंगायै विष्णुमुख्यायै क्षयायै रेवत्यै भागीरथ्यै नमो नमः " ॥ ज्येष्ठे मासि सिते पक्षे दशम्यां बुधहस्तयोः ॥ गरानंदे व्यतीपाते कन्याचंद्रे वृषे रवौ ॥ दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥ ३५ ॥ सितमकरनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलशोद्यत्सोत्पलाभीत्यभीष्टाम् ॥ विधिहरिहररूपां सेन्दुकोटीरजुष्टां कलितसितदुकूलां जाह्नवीं तां नमामि ॥ ३६ ॥ आदावादिपितामहस्य नियमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ॥ भूयः शंभुजटाविभूषणमणिं जह्नोर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥३७॥ इति काशीखंडे दशहरा स्तोत्रं संपूर्णम् ॥ गंगागंगेति यो ब्रूयाद्योजनानां शतैरपि ॥ मुच्यते

सर्वपापेभ्यो विष्णुलोकं स गच्छति ॥ इति स्तोत्रेण स्तुत्वा होमान्ते प्रतिमोत्तरपूजां कृत्वा विसृज्याचार्याय मूलमंत्रेण प्रतिमादिकं दद्यात् ॥

॥ इति दशहराविधिः ॥

---

## ॥ अथ निर्जलैकादशीव्रतम् ॥

ज्येष्ठशुक्लैकादशी निर्जला ॥ अस्यां नित्याचमनादिव्यतिरिक्तजलपानवर्जनेनोपवासे कृते द्वादशैकादश्युपवासफलम् ॥ द्वादश्यां च निर्जलोपोषितैकादशीव्रतांगत्वेन सहिरण्यसशर्करोदकुंभदानं करिष्ये ॥ इति संकल्प्य ॥ "देव देव हृषीकेश संसारार्णवतारक ॥ उदकुंभप्रदानेन यास्यामि परमां गतिम्" इति मंत्रेण शर्करायुतं सहिरण्यम् उदकुंभं दद्यात् ॥ ज्येष्ठमासि तद्द्वादश्यामहोरात्रं त्रिविक्रमपूजनाद् गवामयनाख्यक्रतुफलसिद्धिः ॥ ज्येष्ठपौर्णमास्यां तिलदानादश्वमेधफलम् ॥ ज्येष्ठानक्षत्रयुतायां ज्येष्ठ्यां ( पूनमें ) छत्रोपानद्दानान्नराधिपत्यमाप्तिः ॥ इति निर्जलैकादशीव्रतम् ॥ ज्येष्ठपूर्णिमायां बिल्वत्रिरात्रव्रतमुक्तम् ॥ इयं परविद्धा ग्राह्या ॥ इति ॥

---

## ॥ अथ वटसावित्रीव्रतविधिः ॥

ज्येष्ठशुक्लपौर्णमास्याममायां वा वटसावित्रीव्रतमुक्तम् ॥ अत्र पूर्णिमामावास्ये पूर्वविद्धे ग्राह्ये ॥ "भूतविद्धा न कर्तव्या अमावास्या च पौर्णिमा ॥ वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम्" इति ब्रह्मवैवर्तात् ॥ "ज्येष्ठे मासि सिते पक्षे पूर्णिमायां तथा व्रतम् ॥ चीर्णं व्रतं महाभक्त्या कथितं ते मयाऽनघ ॥" इति स्कान्दभविष्ययोः ॥ दाक्षिणात्यास्त्वेतद्देवा-

चरन्ति ॥ पाश्चात्यादयस्तु अमावास्यायामाचरन्ति ॥ तच्चोक्तं निर्णयामृते भविष्ये॥"अमायां च तथा ज्येष्ठे वटमूले महासतीम्(सावित्रीम्)॥ त्रिरात्रोपोषिता नारी विधिनाऽनेन पूजयेत् ॥ अशक्तौ तु त्रयोदश्यनक्तं कुर्याज्जितेन्द्रिया ॥ अयाचितं चतुर्दश्याममायां समुपोषणम् इति॥ हेमाद्यादिभिस्तु भाद्रपदपौर्णमास्यामिदमुक्तं तत्तु नेदानीं प्रचलति॥ यदा त्वष्टादशघटिका चतुर्दशी तदा तु परैव ॥ "पूर्वविद्धैव सावित्रीव्रते पंचदशीतिथिः ॥ नाड्योऽष्टादश भूतस्य तत्र कुर्यात्परेऽहनि " इति माधवोक्तेः वस्तुतस्तु भूतविद्धानिषेध एव ॥ भूताऽष्टादशनाडीभिरिति वाक्यं नियमविधया प्रवर्तते लाघवात् ॥ अन्यथा सावित्रीव्रतेऽष्टादशनाडीवेधदोषकल्पनायां निषेधान्तरकल्पनागौरवं स्यात् ॥

अथ व्रतविधिर्भविष्ये ॥ "ज्येष्ठे मासि त्रयोदश्यां दन्तधावनपूर्वकम् ॥ दंतकाष्ठं समं शुभ्रं जातीयं चतुरंगुलम् ॥ १ ॥ भक्षयेत् कायशुद्ध्यर्थं व्रतविघ्नविनाशनम् ॥ नित्यं स्नायान्महानद्यां तडागे निर्झरेऽपि वा ॥ २ ॥ विशेषतः पौर्णमास्यां स्नानं सर्षपमृज्जलैः ॥ तिलामलककल्केन केशान्संशोध्य यत्नतः ॥ ३ ॥ स्नात्वा चैव शुचिर्भूत्वा वटं सिंचेद्वहूदकैः ॥ सूत्रेण वेष्टयेद्भक्त्या गंधपुष्पाक्षतैः शुभैः ॥ ४ ॥ नमो वैवस्वतायेति कुर्याच्चैव प्रदक्षिणम् ॥ वृद्धिक्षये तथा रोगे ऋतुमत्यां तथैव च ॥ ५ ॥ कारयेद्विप्रहस्तेन सर्वं संपद्यते शुभम् ॥६॥ इदं च त्रयोदशीमारभ्य पौर्णिमान्तं कर्तव्यम् । तथा च स्कंदभविष्ययोः ॥ ज्येष्ठमासे सिते पक्षे द्वादश्यां रजनीमुखे ॥ व्रतं त्रिरात्रमुद्दिश्य तस्यां रात्रौ स्थिरा भवेत् ॥ ७ ॥" इत्युपक्रमान्ते उपसंहृतम्॥ "सधवा विधवा वापि सुपुत्रा पुत्रवर्जिता॥ भर्तुरायुर्विवृद्ध्यर्थं कुर्याद् व्रतमिदं शुभम् ॥ ज्येष्ठे मासि तु संप्राप्ते पौर्णमास्यां पतिव्रता

स्नात्वा चैव शुचिर्भूत्वा नियमं कारयेत्ततः ॥ ८ ॥ इति ॥

"अथ वटपूजाविधिः"—वटसमीपे गत्वा॥ आचम्य प्राणाना०॥ अत्राद्य० मासपक्षाद्युल्लिख्य मम भर्तुः पुत्राणां चायुरारोग्यप्राप्तये जन्मजन्मनि अवैधव्यप्राप्तये च सावित्रीव्रतमहं करिष्ये ॥ इति संकल्प्य "वटमूले स्थितो ब्रह्मा वटमध्ये जनार्दनः॥ वटाग्रे तु शिवो देवः सावित्री वटसंश्रिता ॥ वट सिंचामि ते मूलं सलिलैरमृतोपमैः ॥ सूत्रेण वेष्टये भक्त्या गंधपुष्पाक्षतैः शुभैः ॥ नमो वटाय सावित्र्यै भ्रामयेच्च प्रदक्षिणम् ॥ सावित्रीं च वटं सम्यगेभिर्मंत्रैः प्रपूजयेत् ॥ एवं विधिर्बहिः कृत्वा सम्यग् व गृहमागता ॥ हरिद्राचन्दनेनैव गृहमध्ये लिखेद्वटम् ॥ तत्रोपविश्य संकल्प्य पूजा कार्या प्रयत्नतः ॥" इति वटं संपूज्य सावित्रीं च प्रपूज्य नियमग्रहणं कुर्यात् ॥ तद्यथा ॥ अद्येत्यादि० मम जन्मजन्मनि अवैधव्यप्राप्तये भर्तुश्चिरायुरारोग्यसंपदादिकामनया सावित्रीव्रतनियममहं करिष्ये ॥ इति संकल्प्य नियमं कुर्यात् ॥ नियममंत्रः ॥ "त्रिरात्रं लंघयित्वा तु चतुर्थे दिवसे त्वहम् ॥ चंद्रायार्घं प्रदत्त्वा च पूजयित्वा च तां सतीम् ॥ मिष्टान्नानि यथाशक्त्या भोजयित्वा द्विजोत्तमान् ॥ भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे शुभे ॥ " इति नियममंत्रः ॥

"अथ पूजनम्"—तत्रादौ भूमिं स्पृष्ट्वा कलशं निधाय पंचपल्लवसप्तमृत्तिकाहिरण्ययवान् कुंभे निक्षिप्य तदुपरि वंशपात्रं निधाय तस्योपरि सप्तधान्यानि पृथक् स्थाप्यानि ॥ तदुपरि वस्त्रं वस्त्रोपरि द्वात्रिंशद्रक्तिकापरिमितां सावित्र्याः वालुकाप्रतिमां ब्रह्मणा सह संस्थाप्य पूजयेत् ॥ पद्मपत्रासनस्थश्च ब्रह्मा कार्यश्चतुर्मुखः ॥ सावित्री तस्य कर्तव्या वामोत्संगगता तथा ॥ आदित्यवर्णा धर्मज्ञा साक्षमालाकरा तथा ॥

ध्यानम् ॥ ब्रह्मणा सहितां देवीं सावित्रीं लोकमातरम् ॥ सत्यव्रतं च सावित्रीं यमं चावाहयाम्यहम् ॥ परिवारसहितब्रह्मसावित्रीभ्यनमः ध्यायामि॥ १॥आसनम्॥ब्रह्मणा सह सावित्रि सत्यवत्सहिते प्रिये॥ हेमासनं गृह्यतां तु धर्मराज सुरेश्वर ॥ परिवारसहितब्रह्मसावित्रीभ्यां नमः आसनं समर्पयामि ॥ २ ॥ पाद्यम् ॥ गंगाजलं समानीतं पाद्यार्थं ब्रह्मणः प्रिये ॥ भक्त्या दत्तं धर्मराज सावित्रि प्रतिगृह्यताम् ॥ ३ ॥ अर्घ्यम् ॥ भक्त्या समाहृतं तोयं फलपुष्पसमन्वितम् ॥ अर्घ्यं गृहाण सावित्रि मम सत्यव्रतप्रिये ॥ ४ ॥ आचमनम् ॥ सुगंधिसह कर्पूरं सुरभि स्वादु शीतलम् ॥ ब्रह्मणा सह सावित्रि कुरुष्वाचमनीयकम् ॥५॥ पंचामृतम् ॥ पयो दधि घृतं चव शर्करामधुसंयुतम् ॥ पंचामृतं मया दत्तं स्नानार्थं देवि गृह्यताम् ॥ ६ ॥ स्नानम् ॥ मंदाकिन्याः समानीतमुदकं ब्रह्मणः प्रिये ॥ सावित्रि धर्मराजेन्द्र स्नानार्थं प्रतिगृह्यताम्॥७॥ वस्त्रम् ॥ सूक्ष्मतंतुमयं वस्त्रयुग्मं कार्पाससंभवम् ॥ सावित्रि सत्यवत्कान्ते भक्त्या दत्तं प्रगृह्यताम् ॥ ८॥ उपवीतम् ॥ सावित्र सत्यवत्कान्ते धर्मराज सुरेश्वर ॥ सावित्रि ब्रह्मणा सार्धमुपवीतं प्रगृह्यताम् ॥९ अलंकाराः ॥ भूषणानि च दिव्यानि मुक्ताहारयुतानि च ॥ त्वदर्थमुपक्लृप्तानि गृहाण शुभलोचने ॥ १० ॥ चंदनम् ॥ कुंकुमागरुकर्पूरं कस्तूरीरोचनायुतम् ॥ चंदनं ते मया दत्तं सावित्रि प्रतिगृह्यताम्॥ ११॥ अक्षताः ॥ अक्षताश्च सुरश्रेष्ठ० ॥ पुष्पाणि ॥ माल्यादीनि सुगंधीनि० ॥

अथांगपूजा ॥ सावित्र्यै० पादौ पूज० ॥ प्रसावित्र्यै० जंघे० ॥ कमलपत्राक्ष्यै० कटी० ॥ भूतधारिण्यै० उदरं० ॥ गायत्र्यै० कंठं० ॥ ब्रह्मणः प्रियायै० मुखं० ॥ सौभाग्यदात्र्यै० शिरः पूज-

---

१ एवं प्रत्युपचारे वक्तव्यम् ॥

यामि ॥ (अथ ब्रह्मसत्यपूजा ॥) धात्रे० पादौ पूज० ॥ विधात्रे० जंघे० ॥ स्रष्ट्रे० ऊरू पूज० ॥ प्रजापतये० मेढ्रं० ॥ परमेष्ठिने० कटी० ॥ अग्निरूपाय० नाभिं० ॥ पद्मनाभाय० हृदयं० ॥ वेधसे० बाहू० ॥ विधये० कंठं पूज० ॥ हिरण्यगर्भाय० मुखं० ॥ ब्रह्मणे० शिरः पूज० ॥ विष्णवे० सर्वांगं पूजयामि ॥

सौभाग्यद्रव्यम् ॥ हरिद्राकुंकुमं चैव सिंदूरं कज्जलान्वितम् सौभाग्यद्रव्यसंयुक्तं सावित्रि प्रतिगृह्यताम् ॥१२॥ धूपः॥ देवद्रुमरसोद्भूतः कालागरुसमन्वितः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ १३ ॥ दीपः ॥ चक्षुर्दं सर्वलोकानां तिमिरस्य निवारणम् ॥ दीपं तु कल्पितं भक्त्या गृहाण परमेश्वरि ॥ १४ ॥ नैवेद्यम् ॥ अन्नं चतुर्विधं स्वादु रसै षड्भिः समन्वितम् ॥ मया निवेदितं भक्त्या गृहाण परमेश्वरि ॥१५॥ ह्रीं प्राणाय स्वाहा०॥ मध्येपा०॥उत्तरा०॥हस्तम०॥ मुखम०॥ करो० चन्द० स०॥ मुखवासार्थे पूगीफलताम्बूलम् ॥१६॥ तांबूलम् ॥ पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् ॥ एलादिचूर्णसंयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥१७॥ दक्षिणा ॥ हिरण्यगर्भगर्भ० ॥ ॥१८॥ आरार्तिक्यम्॥ कर्पूरगौरं करुणा० । कर्पूरपूरेण०॥ १९॥ मंत्रपुष्पांजलिः ॥ सावित्रि च प्रसावित्रि सततं ब्रह्मणः प्रिये ॥ पूजिता सिद्धिजैः सर्वैः स्त्रीभिर्मुनिगणैस्तथा ॥ त्रिसंध्यं देवि भूतानां वंदनीया सुशोभने ॥ मया दत्तामिमां पूजां त्वं गृहाण नमोऽस्तु ते ॥

ततो अर्घ्यत्रयं दद्यात् ॥ ॐकारपूर्विके देवि सर्वदुःखनिवारिणि॥१९ वेदमातर्नमस्तुभ्यं सौभाग्यं च प्रयच्छ मे ॥ १ ॥ अर्घ्यं सम० ॥ पतिव्रते महाभागे ब्रह्माणि च शुचिस्मिते ॥ दृढव्रते दृढमते भर्तुश्च प्रियवादिनि ॥ २ ॥ अर्घ्यं सम०॥ अवैधव्यं च सौभाग्यं देहि त्वं मम

सुव्रते ॥ पुत्रान्पौत्रांश्च सौख्यं च गृहाणार्घ्यं नमोऽस्तु ते ॥ ३ ॥ अर्घ्यं सम० ॥ प्रार्थना ॥ सावित्रि ब्रह्मगायत्रि सर्वदा प्रियभाषिणि ॥ तेन सत्येन मां पाहि दुःखसंसारसागरात् ॥ १ ॥ त्वं गौरी त्वं शची लक्ष्मीस्त्वं प्रभा चंद्रमंडले ॥ त्वमेव च जगन्मातस्त्वमुद्धर वरानने ॥२॥ यन्मया दुष्कृतं सर्वं कृतं जन्मशतैरपि ॥ भस्मीभवतु तत्सर्वमवैधव्यं च देहि मे ॥३॥ अवियोगो यथा देवि सावित्र्या सहितस्य ते॥अवियोगस्तथाऽस्माकं भूयाज्जन्मनि जन्मनि ॥२०॥इति संप्रार्थयेत्॥

सुवासिन्यस्ततः पूज्या दिवसे दिवसे गते ॥ सिंदूरकुंकुमं चैव तांबूलं च पवित्रकम् ॥ १ ॥ तथा दद्याच्च शूर्पाणि भक्ष्यं भोज्यादिकं सदा ॥ माहात्म्यं चैव सावित्र्याः श्रोतव्यं मुनिसत्तम ॥ २ ॥ पुराणश्रवणं कार्यं सतीनां चरितं शुभम् ॥ ३ ॥ ततो व्रतपूजासांगतासिद्ध्यर्थं ब्राह्मणाय वायनप्रदानमहं करिष्ये ॥ इति संकल्प्य ॥ फलं वस्त्रसमायुक्तं सौभाग्यद्रव्यसंयुतम् ॥ वंशपात्रे निधायादौ ब्राह्मणाय निवेदयेत् ॥ ४ ॥ " उपायनमिदं तुभ्यं व्रतसंपूर्तिहेतवे ॥ वायनं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥" इति वायनदानं कुर्यात् ॥

---

## [ ॥ अथाब्दसाध्यं वटसावित्रीव्रतम् ॥

उक्तं हेमाद्रौ स्कान्दे ॥ धर्मराजवरदानान्तरम् ॥ सावित्र्युवाच ॥ या मदीयं व्रतं देव भक्त्या नारी करिष्यति ॥ भर्त्रा सा सहिता साध्वी समस्तसुखभाग्भवेत् ॥ धर्मराज उवाच ॥ गौरी प्रमुग्धा मुग्धा वा अपुत्रा पतिवर्जिता ॥ सभर्तृका सपुत्रा वा कुर्याद् व्रतमिदं शुभम् ॥ ज्येष्ठमासे तु संप्राप्ते पौर्णमास्यां पतिव्रता ॥ स्नात्वा चैव शुचिर्भूत्वा वटं सिंच्य वहूदकैः ॥ सूत्रेण वेष्टयेद्भक्त्या गंधपुष्पाक्षतैः

शुभैः ॥ नमो वैवस्वतायेति भ्रामयन्ति प्रदक्षिणाम् ॥ रात्रौ कुर्वीत नक्तं च शब्दमेकं समाहितम् ॥ तथैव वटवृक्षं च पक्षे पक्षे प्रपूजयेत् ॥ अनेनैव विधानेन कर्त्तव्यं व्रतमुत्तमम् ॥ सर्वान्मनोरथान्प्राप्य शान्ते रुद्रेण मोदते ॥]

---

## ॥ अथ वटसावित्रीव्रतोद्यापनम् ॥

संप्राप्ते तु पुनर्ज्येष्ठे नक्तभुक् द्वादशीं नयेत् ॥ दन्तधावनपूर्वं च स्नात्वा नियममाचरेत् ॥ १ ॥ त्रिरात्रं लंघयित्वा तु चतुर्थे दिवसे त्वहम् ॥ चन्द्रायार्घ्यं प्रदत्वा च पूजयित्वा तु तां सतीम् ॥ २ ॥ मिष्टान्नानि यथाशक्त्या भोजयित्वा द्विजोत्तमान् ॥ भोक्ष्येऽहं तु जगद्धात्रि निर्विघ्नं कुरु मे शुभे ॥ ३ ॥ कृत्वा वंशमये पात्रे वालुकाप्रस्थमेव च ॥ सप्तधान्ययुतं पात्रं प्रस्थैकेन द्विजोत्तम ॥ ४ ॥ वस्त्रद्वय तु संस्थाप्य सावित्रीं ब्रह्मणा सह ॥ हैमीं कृत्वा तयोर्मूर्ती त्रिरात्रव्रत ( उवासयेत् ) माचरेत् ॥ ५ ॥ न्यग्रोधस्य तल तिष्ठेद्यावचैव दिनत्रयम् ॥ सौवर्णीं चैव सावित्रीं सत्येन सह कारयेत् ॥ ६ ॥ रौप्यपर्यंकमारोप्य रथोपरि निवेशयेत् ॥ पलादूर्ध्वं यथाश या रथं रौप्यमयं शुभम् ॥७॥ काष्ठभारं कुठारं च वटं चैव सुविस्तृतम् ॥ धर्मराजं नारदं च तत्रैव परिकल्पयेत् ॥ ८ ॥ वटमूले प्रकुर्वीत मंडलं गोमयेन तु ॥ संस्थाप्य तत्र सावित्रीं चतुष्कोपरि शोभनाम् ॥ ९ ॥ एवं च मिथुने कृत्वा पूजयेद् गतमत्सरा ॥ ''''' ततो रजतपात्रेण चार्घ्यं दद्यात् द्वयोरपि ॥१०॥(१७) '''' त्रिसंध्यं देवि भूतानां वंदनीयासि सुव्रते ॥ मया दत्ता च पूजेयं त्वं गृहाण नमोस्तुऽते ॥११॥(३२)जागरं तत्र कुर्वीत गीतवादित्रमंगलैः ॥ सुवासिन्यस्ततः पूज्या दिवसे दिवसे शुभाः ॥ १२॥ सिंदूरं कुंकुमं चैव तांबूलं च सुपूगकम् ॥ तथा दद्याच्च शूर्पाणि भक्ष्यं

सौभाग्यमष्टकम् ॥ १३ ॥ संतिष्ठेच्च दिवारात्रौ कामक्रोधविवर्जिता ॥ दिनत्रयेऽपि कर्तव्यमेवमर्घ्यादिपूजनम् ॥ १४ ॥

ततश्चतुर्थदिवसे यत्कार्यं तच्छृणुष्व मे ॥ मिथुनानि चतुर्विंशत् षोडश द्वादशाष्ट वा ॥ १५॥ पूजयेद्वस्त्रगोदानैर्भूषणाच्छादनासनैः ॥ अथवा गुरुमेकं च व्रतस्य विधिकारकम् ॥ १६ ॥ सपत्नीकं समभ्यर्च्य वस्त्रालंकारवेष्टनैः ॥ शय्यां सोपस्करां दद्याद् गृहं चैवातिशोभनम् ॥ १७ ॥ अशक्तस्तु यथाशक्त्या स्तोकं च परिकल्पयेत् ॥ सौवर्णी प्रतिमां तत्र पतिना सह दापयेत् ॥ १८ ॥ दानमंत्रः—"सावित्रि त्वं यथा देवि चतुर्वर्षशतायुषम् ॥ सत्यवन्तं पतिं प्राप्ता मया दत्ता तथा कुरु ॥ सावित्री जगतां माता सावित्री जगतः पिता ॥ मया दत्ता च सावित्री ब्राह्मण प्रतिगृह्यताम् ॥" प्रतिग्रहमंत्रः ॥ "मया गृहीता सावित्री त्वया दत्ता सुशोभने ॥ यावच्चन्द्रश्च सूर्यश्च सह भर्त्रा सुखी भव ॥ गुरुं च गुरुपत्नीं च ततो भक्त्या क्षमापयेत् ॥ यन्मया कृतवैकल्यं व्रतेऽस्मिन् दुरधिष्ठितम् ॥ तत्सर्वं पूर्णतां यातु युवयोरर्चनेन तु ॥ वटसेचनमंत्रः ॥ " धर्मराजो यमो धाता नीलः कालान्तकोऽव्ययः ॥ वैवस्वतश्चित्रगुप्तो दध्नो मृत्यु. क्षयो वरः॥"मासि मासि तथा ह्येतैर्नामभिः सेचयेद्वटम् ॥ न्यग्रोधोऽहं वसाम्येव तस्माद्यत्नेन सेचयेत् ॥ इति ॥

॥ अथ सावित्रीव्रतहोमविधिः ॥

ततो द्वितीयदिने प्रातर्नित्यकर्म समाप्य आचम्य प्राणानायम्य जलमादाय—अद्यद्यमहा० अद्य द्वितीयदिने वटसावित्रीव्रतोद्यापनकर्मणः साङ्गतासिद्ध्यर्थम् आवाहितदेवतानां पूजनपूर्वकं सग्रहमखं विहितहोमं करिष्ये । इति संकल्प्य दिग्रक्षणाद्यावाहितदेवतानां पूजनं विधाय स्थंडिलं विरच्य पञ्चगव्यादि कृत्वा पंचभूसंस्कारपूर्वकम् अग्निस्थापनं

तथाच ग्रहाणां स्थापनं च पूजनं च ( १४७–१५९ ) विधाय कुशकंडिकं कृत्वा ग्रहहोमान्तं कर्म कुर्यात् ॥ ततः प्रधानहोमः ॥ प्रधानं ब्रह्मसावित्र्यो ॥ "ब्रह्मसावित्रीभ्यां नमः" इति मूलमंत्रेणाष्टोत्तरशत ( १०८ ) संख्यया तिलपायसाज्यद्रव्यैर्जुहुयात् ॥ ततो मंडूकादिपीठदेवता ( पृष्ठ १६२ ) ब्रह्मादिदेवता ( पृष्ठ १६४–१६५) थेकैकाज्याहुतिं जुहुयात् ॥ न्यूनातिरिक्तदोषपरिहारार्थं तिलद्रव्येण " अग्निवायुसूर्येभ्यो नमः" इत्यष्टाविंशतिसंख्यया ( २८ ) जुहुयात् ॥ तत उत्तरपूजनादि प्रणीताविमोकान्तं (पृष्ठ १६८–१८८) कृत्वा ग्रहानग्निं च विसृज्य मंडलसमीपमागत्य स्थापितदेवतानां यथाशक्तिपूजनं कृत्वा महानीराजनं कृत्वा मूर्तिसहितपीठदानादिकं संकल्पपूर्वकमाचार्याय दत्त्वा ब्राह्मणान् संपूज्य दक्षिणादानपुरःसरम् आशिषो गृहीत्वा तान् भोजयित्वा स्वयं भुञ्जीत ॥ रात्रौ अरुन्धत्यै अधोलिखितमन्त्रैः *अर्घत्रयं दद्यात् ॥

[ १ न्यग्रोधस्य समीपे तु गृहे वा स्थंडिले पि वा ॥ सावित्र्याश्चैव मंत्रेण घृतहोमं तु कारयेत् ॥ पायसं जुहुयाद्भक्त्या घृतेन सह भामिनि ॥ व्याहृत्या चैव मंत्रेण ( अग्निवायुसूर्येभ्यो नमः ) तिलव्रीहियवा स्तथा ॥ होमान्ते दक्षिणां दद्यात् ऋत्विजश्च क्षमापयेत् ॥ भुंजीत वासरान्ते तु नक्ते शान्ता तपस्विनी । अर्घ्यं दद्यादरुंधत्यै दृष्ट्वा चैव प्रणम्य च ॥ (तत्रमन्त्रः) *अरुन्धति नमस्तेऽस्तु वसिष्ठस्य प्रिये शुभे । सर्वदेव नमस्कार्यं पतिव्रते नमोऽस्तु ते ॥ अर्घ्यमेतन्मया दत्तं फलपुष्पसमन्वितम् ॥ पुत्रान् देहि सुखं देहि गृहाणार्घ्यं नमोऽस्तु ते ॥ सखिभिर्ब्राह्मणैः सार्धं भुंजीत विजितेन्द्रिया ॥ एवं करोति या नारी व्रतमेतदनुत्तमम् ॥ भ्रातरः पितरौ पुत्राः श्वशुरौ स्वजनास्तथा ॥

चिरायुषस्तथाऽरोगा भवंति च न संशयः ॥ भर्त्रा च सहिता साध्वी ब्रह्मलोके महीयते ॥ ] ॥ इति सावित्रीव्रतोद्यापनम् ॥

---

## ॥ अथ आषाढमासकृत्यम् ॥

आषाढे दक्षिणायनं कर्कसंक्रान्तिः ॥ कर्कसंक्रान्तौ पूर्वं त्रिंशन्नाड्यः पुण्यकालः ॥ तत्रापि संक्रान्तिसन्निहिता नाड्यः पुण्यतमाः ॥ कर्ककन्याधनुःकुम्भस्थे रवौ केशकर्तनादिकं निषिद्धम् ॥ आषाढे मास एकभक्तव्रते बहुधनधान्यपुत्रप्राप्तिः ॥ अत्र मासे उपानच्छत्रलवणामलकानि वामनप्रीत्य देयानि ॥ आषाढशुक्लद्वितीयायां पुष्यनक्षत्रयुतायां केवलायां वा श्रीरामस्य रथोत्सवः ॥ अथैकादश्यां विष्णुशयनोत्सवः ॥ तत्र सोपस्करमंचके सुप्तां श्रीविष्णुप्रतिमां शंखादिचतुरायुधां लक्ष्मीसंवाहितचरणां नानाविधोपचारैः संपूज्य ॥ "सुप्ते त्वयि जगन्नाथे जगत्सुप्तं भवेदिदम् ॥ विबुद्धे त्वयि बुध्येत तत्सर्वं सचराचरम् " ॥ इति संप्रार्थ्य ॥ उपोष्य जागरं कृत्वा द्वादश्यां पुनः संपूज्य त्रयोदश्यां गीतनृत्यवाद्यादिकं निवेदयेत् ॥ एवमिदं त्रिदिनसाध्यं व्रतम् ॥ नेदं मलमासे कार्यमिति ॥ आषाढशुक्लद्वादश्यामनुराधायोगरहितायां पारणं कार्यम्। तत्रापि प्रथमपादयोग एव वर्ज्यः ॥ द्वादश्यां पारणोत्तरं सायं पूजा कृत्वा चातुर्मास्यव्रतसंकल्पं कुर्यादिति कौस्तुभे ॥ एकादश्यामेवेति निर्णयसिंधुः ॥ चातुर्मास्यव्रतारंभो गुरुशुक्रास्तादावाशौचादौ च भवत्येव ॥

व्रतग्रहणप्रकारः ॥ भगवतो जातीपुष्पादिभिर्महापूजां कृत्वा ॥ "सुप्ते त्वयि जगन्नाथे जगत् सुप्तं भवेदिदम् ॥ विबुद्धे त्वयि बुध्येत प्रसन्नो मे भवाच्युत ॥" इति संप्रार्थ्य ॥ अग्रे कृतांजलिः ॥ चतुरो वार्षिकान्

मासान् देवस्योत्थापनावधिः॥ श्रावणे वर्जयेत् शाकं दधि भाद्रपदे तथा॥ दुग्धमाश्वयुजे मासि कार्तिके द्विदलं तथा ॥ इमं करिष्ये नियमं निर्विघ्नं कुरु मेऽच्युत ॥ इदं व्रतं मया देव गृहीतं पुरतस्तव ॥ निर्विघ्नं सिद्धिमायातु प्रसादात्ते रमापते ॥ गृहीतेऽस्मिन्व्रते देव पंचत्वं यदि मे भवेत् ॥ तदा भवतु संपूर्णं प्रसादात्ते जनार्दन ॥" इति प्रार्थ्य ॥ देवाय शंखेनार्घ्यं निवेदयेत् ॥ हविष्यभक्षणादिव्रतांतरचिकीर्षायां तस्य ऊहः कार्यः ॥ निषिद्धमात्रवर्जनेच्छायां " वृंताकादिनिषिद्धानि हरे सर्वाणि वर्जये" इति संकल्पः॥ आषाढशुक्लद्वादश्यां वामनपूजनेन नरमेधफलम्॥ पूर्वाषाढायुतायां पौर्णमास्यां अन्नपानादिदानादक्षय्यान्नादिप्राप्तिः ॥ अस्यामेव पौर्णमास्यां प्रदोषव्यापिन्यां श्रीशिवस्य शयनोत्सवः॥ अत्र चातुर्मास्यनिमित्तकवर्ज्यपदार्थाः काम्यव्रतादिने च धर्मसिंध्वादिषुद्रष्टव्यम्॥

---

## अथ व्यासपूजा

अस्यां पौर्णमास्यां संन्यासिनां चातुर्मास्यवाससंकल्पांगत्वेन क्षौरव्यासपूजादिकं विहितम् ॥ अत्र कर्मणि औदयिकी त्रिमुहूर्ता पौर्णमासी ग्राह्या ॥ "चातुर्मासस्य मध्ये तु वपनं वर्जयेद्यतिः ॥ चातुर्मासं द्विमासं वा सदैवैकत्र संवसेत् ॥"

अथ विधिः॥ तत्रादौ क्षौरं विधाय द्वादशमृत्तिकास्नानानि प्राणायामादिविधिं च कृत्वा व्यासपूजां कुर्यात् ॥ देशकालौ संकीर्त्य चातुर्मास्यवाससंकल्पं कर्तुं श्रीकृष्णव्यासभाष्यकाराणां सपरिवाराणां पूजनं करिष्ये ॥ इति संकल्प्य मध्ये श्रीकृष्णं तत्पूर्वतः प्रादक्षिण्येन वासुदेवसंकर्षणप्रद्युम्नानिरुद्धमावाह्य श्रीकृष्णदक्षिणभागे व्यासं तत्पूर्वतः प्रादक्षिण्येन सुमन्तुजैमिनिवैशंपायनपैलानीति व्यासपंचकमावाह्य

श्रीकृष्णादिवामे भाष्यकारं श्रीशंकरं तत्पूर्वतः प्रादक्षिण्येन पद्मपाद-विश्वरूपत्रोटकहस्तामलकाचार्यानावाह्य श्रीकृष्णपंचके श्रीकृष्णपार्श्वयोर्ब्रह्मरुद्रौ पूर्वादिचतुर्दिक्षु सनकादीन् ( सनक – सनंदन – सनातन – सनत्कुमार इत्येतान ) श्रीकृष्णपंचकात् पुरतः गुरुपरमगुरुपरमेष्ठिगुरून् ब्रह्मवसिष्ठशक्तिपराशरव्यासशुकगौडपादगोविंदपादशंकराचार्यान् ब्रह्मनिष्ठांश्चावाह्य पंचकत्रयस्याग्नेये गणेशं ईशान्ये क्षेत्रपालं वायव्ये दुर्गां नैर्ऋत्ये सरस्वतीं प्रागाद्यष्टदिक्षु इन्द्रादिलोकपालांश्चावाह्य पूजयेत् ॥ तत्र नारायणाष्टाक्षरेण श्रीकृष्णपूजा अन्येषां प्रणवादिनमोन्तैस्तत्तन्नामभिः पूजा कार्या ॥ पूजान्ते असति प्रतिबंधे चतुरो वार्षिकान् मासानिह वसामि । इति मनसा संकल्प्य ॥ "अहं तावन्निवत्स्यामि सर्वभूतहिताय वै ॥ प्रायेण प्रावृषि प्राणिसंकुलं वर्त्म दृश्यते ॥ १ ॥ अतस्तेषामहिंसार्थं पक्षान्वै श्रुतिसंश्रयान् ॥ स्थास्यामश्चतुरो मासानत्रैवासति बाधके ॥ २ ॥" इति वाचिकसंकल्पं कुर्यात् ॥ ततो गृहस्थाः प्रतिब्रूयुः ॥ "निवसन्तु सुखेनात्र गमिष्यामः कृतार्थताम् ॥ यथाशक्ति च शुश्रूषां करिष्यामो वयं मुदा ॥" ततो वृद्धानुक्रमेण यतीन् गृहस्थाः यतयश्चान्योन्यं नमस्कुर्युः ॥ एतद्विधिः पौर्णमास्यामसंभवे द्वादश्याम् ॥

---

## ॥ अथ अशून्यशयनव्रतम् ॥

आषाढकृष्णद्वितीयायां अशून्यशयनव्रतम् ॥ अत्र लक्ष्मीयुतं विष्णुं पर्यंके संपूज्य ॥ पत्नीभर्तुर्वियोगं च भर्ताभार्यासमुद्भवम् ॥ नाप्नुवन्ति यथा दुःखं दंपत्यानि तथा कुरु ॥ इत्यादिभिर्दंपत्याभंगप्रार्थनार्थैर्मंत्रैः प्रार्थयेत् ॥ ततश्चन्द्रायार्घं दत्वा नक्तभोजनं

कार्यम् ॥ एवं मासचतुष्टये कृष्णाद्वितीयासु लक्ष्मीं विष्णुं च संपूज्य सपत्नीकाय शय्यादानं कृत्वा तां प्रतिमां च सोपस्करां दद्यात् ॥ अस्मिन्व्रते अक्षय्यं दांपत्यसुखं पुत्रधनाद्यवियोगो गार्हस्थ्यावियोगः सप्त जन्मनि भवति ॥ अत्र व्रते चंद्रोदयव्यापिनी तिथिर्ग्राह्या ॥ चंद्रोदये पूजाद्युक्तेः ॥ दिनद्वये सत्त्वेऽसत्त्वे वा परैव ॥

---

## ॥ अथ गोपद्मव्रतम् ॥

आषाढपौर्णमास्यां गोपद्मव्रतम् ॥ आषाढपौर्णमास्यां वा तथाऽष्टम्यां हरेर्दिने ॥ प्रारभेद् व्रतमेतच्च कार्तिकावधि तत्तिथौ ॥ तिलामलककल्केन स्नानं नित्यं विधाय च ॥ नदीतीरेऽथवा गोष्ठे शिवागारे हरेर्गृहे ॥ वृंदावने वापि लिखेद्गोपद्मकपदं शुभम् ॥ त्रयस्त्रिंशत्तु पद्मानि कुर्याद्भक्त्या दिने दिने ॥ तत्संख्यया प्रकर्त्तव्या अर्घ्यमदक्षिणानतीः ॥ बालकृष्णं समुद्दिश्य लक्ष्म्या सह जगद्गुरुम् ॥ चतुर्भुजं महाकायं जांबुनदसमप्रभम् ॥ शंखचक्रगदापद्मरमागरुडशोभितम् ॥ सेवितं मुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः ॥ एवंविधं हरिं ध्यात्वा ततो यजनमारभेत् ॥ एवं ध्यात्वा आवाहनाद्युपचारैः संपूज्य प्रार्थयेत् ॥ देवदेव जगन्नाथ गोपालप्रतिपालक ॥ गोपदैः कृतसंत्राण गृहाण कुसुमांजलिम् ॥ इति पुष्पांजलिं "समर्प्य संप्रार्थ्य तत्तद्द्रव्यैरेकवायनदानम् ॥ परमान्नमिदं दत्तं कांस्यपात्रेण संयुतम् ॥ त्वत्प्रसादादहं विप्र व्रतस्य फलमाप्नुयाम् ॥" इति ॥

---

१ गधाद्यैरुपचारैश्च यथाशक्त्या प्रपूजयेत् ॥ ब्राह्मणांस्तु ततः पूज्य पद्मसंख्यात्प्रमुत्सृजेत् ॥ प्रथमाब्देऽथ घटकैर्द्वितीयेऽपूपकैर्व्रती ॥ तृतीये शालिपिष्टान्नैश्चतुर्थे पूरिकादिभि ॥ पञ्चमे परमान्नैस्तु सम्यग् घै पूजयेद् व्रती ॥

## ॥ गोपद्मव्रतोद्यापनविधिः ॥

" अथोद्यापनविधिः " पूर्णे तु पंचमे वर्षे व्रतस्योद्यापनं भवेत् ॥ श्रीकृष्णप्रतिमा कार्या सुवर्णस्य पलेन वै ॥ पुष्पमंडपिका कार्या चतुर्द्वारसुशोभना ॥ १ ॥ तन्मध्ये पूजयेद्भक्त्या रमया सहितं हरिम् ॥ त्रयस्त्रिंशत्ततो विप्रान् कृत्वा होमं समाचरेत् ॥ २ ॥ (अतो-देवेति०) " कृष्णाय वासुदेवाय हरये परमात्मने ॥ प्रणतक्लेशनाशाय गोविंदाय नमो नमः " मंत्रेण जुहुयात्तिलपायसम् ॥ रक्तवस्त्रयुतां धेनुमाचार्याय निवेदयेत् ॥ ३ ॥ ब्राह्मणांश्च सपत्नीकान् भोजयेत्पूजयेत्तथा ॥ एवं यः कुरुते विप्र तस्य श्रीरचला भवेत् ॥ ४ ॥ यं यं चिन्तयते कामं तं तं प्राप्नोत्यसंशयम् ॥ अन्ते विष्णुपदे गच्छेत्सर्वपापविवर्जितः ॥ इति ॥ भविष्योत्तरपुराणे उद्यापनविधिः ॥

---

## ॥ अथ कोकिलाव्रतम् ॥

आषाढशुक्लपौर्णमास्यां कोकिलाव्रतम् ॥ यदा आषाढाधिकमासस्तदा कोकिलाव्रतानुष्ठानं कार्यम् ॥ तद्विधिः ॥ आचम्य प्राणानायम्य ॥ हस्तेजलमादाय अद्येत्यादि० ममेह जन्मजन्मान्तरस्य सर्वपापक्षयार्थं पुत्रपौत्रलक्ष्मीविवृद्धये सौभाग्यवृद्धिद्वारा अवैधव्याय सपत्नीनाशाय कोकिलारूपगौरीप्रीत्यर्थं कोकिलाव्रतं करिष्ये ॥ इति संकल्प्य ॥ "आषाढपौर्णमास्यां तु संध्याकाले ह्युपस्थिते ॥ संकल्पयेन्मासमेकं श्रावणे प्रत्यहं ह्यहम् ॥ १ ॥ स्नानं करिष्ये नियमाद्ब्रह्मचर्ये स्थिता सती ॥ भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयाम् " ॥२॥ इत्युक्त्वा " स्नानं करोमि देवेशि कोकिले प्राप्तये तव ॥ जलेऽस्मिन्पावने पुण्ये सर्वदैव जलाशये ॥ ३ ॥ " इति मंत्रेण तिलामलकपिष्टेन चाष्टौ सर्वौषधि-

जलेन वचापिष्टेन चाष्टावष्टौ दिनानि प्रत्येकं तिलामलकपिष्टेन सर्वौषधियुक्तेन च षट्दिनान्येवं क्रमेण मासावधि स्नायात् ॥ एवं प्रतिदिनं स्नात्वा रविं ध्यात्वा ॥ आदित्य भास्कर रवे अर्क सूर्य-दिवाकर ॥ प्रभाकर नमस्तुभ्यं गृहाणार्घ्यं नमोऽस्तु ते ॥ ४ ॥ इति तस्मै अर्घ्यं दत्वा ॥ ततः स्वर्णवक्षां रौप्यपादां मौक्तिकनेत्रां प्रवालमुखीं रत्नपृष्ठां चूतचंपकवृक्षस्थां पक्षिरूपिणीं कोकिलां कृत्वा ध्यायेत् ॥ स्वर्णपक्षां रक्तनेत्रां प्रवालमुखपंकजाम् ॥ कस्तूरीवर्णसंयुक्तामुत्पन्नां नंदने वने ॥ ५ ॥ चूतचंपकवृक्षस्थां पुष्टस्वरसमन्विताम् ॥ चिन्तये-त्पार्वतीं देवीं कोकिलारूपधारिणीम् ॥ इति ध्यात्वा आवाहनाद्यु-पचारैः संपूज्य प्रार्थयेत् ॥ कोकिलारूपधारिण्यै जगन्मात्रे नमोऽस्तु ते ॥ शरणागतदीनांश्च त्राहि देवि सदांबिके ॥ ७ ॥ इति संप्रार्थ्य अर्घ्यं दद्यात् ॥ गंधपुष्पाक्षतैर्युक्तं तोयं हेमफलान्वितम् ॥ अर्घ्यं गृहाण देवेशि वांछितार्थं प्रयच्छ मे ॥ ८ ॥ आषाढस्य सिते पक्षे मेघवर्णे हरिप्रिये ॥ कोकिले त्वं जगन्मातर्गृहाणार्घ्यं नमोऽस्तु ते ॥९॥ तिलस्नेहे तिलमुखे तिलसौख्ये तिलप्रिये ॥ सौभाग्यं धनपुत्रांश्च देहि मे कोकिले नमः॥१०॥ व्रतान्ते हैमीं तिलपिष्टां कोकिलां कृत्वा विप्राय दापयेत् ॥ विसर्जनम् ॥ देवि चैत्ररथोत्पन्ने विन्ध्यपर्वतवासिनि ॥ अर्चिता पूजि-ताऽसि त्वं कोकिले हरवल्लभे ॥ ११ ॥ कोकिले कलकंठाऽसि माधवे मधुरस्वरे ॥ वसंते देवि गच्छ त्वं देवानां नंदने वने ॥१२॥ इति ॥

॥ अथ कोकिलाव्रतोद्यापनविधिः ॥

श्रावणे पौर्णमास्यां तु शुक्लपक्षे विशेषतः ॥ द्वितीयायामे-कभक्तं दंतधावनपूर्वकम् ॥१॥ उपवासस्य नियमं कृत्वा व्रतपरायणा ॥ तृतीया पुण्यफलदा मध्याह्ने समुपोषिता ॥ २ ॥ उपलिप्ये शुचौ देशे

मंडलं तत्र कारयेत् ॥ अष्टदलं लिखेत्पद्मं चतुष्कोणं च भद्रकम् ॥ ३ ॥ कलशं वारिपूर्णं च पंचरत्नसमन्वितम् ॥ तस्योपरि न्यसेत् पात्रं शूर्पं वंशैकविंशति ॥ ४ प्रत्येकं सप्तधान्यानां प्रस्थेनैकेन पूरयेत् ॥ तदभावे तदर्धेन कुडवेनाथ नारद ॥ ५ ॥ ऊर्णापट्टयुगं कृष्णवर्णं दद्याच्च शक्तितः ॥ तस्योपरि न्यसेद्देवीं कोकिलाप्रतिमां तथा ॥६॥ अत्र गंधप्रदानं च धूपदीपप्रदानकम् ॥ नैवेद्यं मोदकान् दद्यात् पक्कान्नं घृतसंयुताम् ॥७॥ अर्घ्यं चैव प्रदातव्यं तांबूलं फलमुत्तमम् ॥ रात्रौ जागरणं कार्यं वाद्यनृत्यप्रभृतकम् ॥ ८ ॥ पूजयित्वैकचित्तेन फलं प्राप्नोति चाक्षयम् ॥ प्रभाते विमले तीर्थे स्नानं कृत्वा विधानतः ॥ ९ ॥ पूजयेद्विधिवद् देवीं होमं कुर्यात्तथा द्विज ॥ तिलचंपकपुष्पैश्च तंडुलैर्घृतपायसैः ॥१०॥ अष्टोत्तरशतं हुत्वा दुर्गामंत्रैश्च वादकैः ॥ कोकिलाप्रीतये ब्रह्मन् व्याहृतीनां शतत्रयम् ॥ ११ ॥ ब्राह्मणान् भोजयेत् पश्चात् सपत्नीकांश्च पंच च ॥ अशक्तौ ह्येकयुग्मं च भोजयेच्च तथा गुरुम् ॥ १२ ॥ त्रिस्त्रीभ्यश्च प्रदातव्यं घारिकापंचकं तथा ॥ मोदकांश्च ससूत्रांश्च वंशपात्रसमन्वितान् ॥ १३ ॥ कृष्णान्नेन समायुक्तान् पक्वान्नेन प्रपूरितान् ॥ सर्वोपस्करसंयुक्तांस्त्रिस्त्रीभ्यश्च प्रदापयेत् ॥ १४ ॥ आचार्यं पूजयेद्भक्त्या गां कृष्णां च सवत्सकाम् ॥ उपानहौ तथा शय्यां चामरं छत्रमेव च ॥ १५ ॥ मुद्रिकां कर्णवेष्टे च चन्दनं कुसुमानि च ॥ सर्वं दद्याद् द्विजेन्द्राय सपत्नीकाय नारद ॥ १६ ॥ ज्ञापयेद्विधिवत्सर्वं ब्राह्मणाय कुटुम्बिने ॥ व्रतोपदिष्टदानं च भोजनं च सदाक्षिणम् ॥१७॥ ततो भुञ्जीत नैवेद्यं पुत्रपौत्रसमन्विता ॥ देवि चैत्ररथोत्पन्ने विन्ध्यपर्वतवासिनि ॥ १८ ॥ कोकिले पूजिते गच्छ विधिवत्सर्वकामदे ॥ कारयेत् कोकिलां देवीं सौवर्णां सर्वकामदाम् ॥ १९ ॥ रौप्यचरण-

चंचूभिरान्वितां नेत्रमौक्तिकाम् ॥ पञ्चरत्नयुतां पृष्ठे चूतवृक्षसमाश्रिताम् ॥ २० ॥ एवं या कुरुते राजन् कोकिलाव्रतमुत्तमम् ॥ सर्वं प्राप्नोति सौभाग्यं पुत्रधान्यधनानि च ॥ महाफलमवाप्नोति महामाया प्रसादतः ॥ २१ ॥ इति कोकिलाव्रतोद्यापनम् ॥

---

## अथ ( मलमास ) पुरुषोत्तममासव्रतम्

एतत् प्रथमदिवसे नित्यकर्म समाप्य शुचौ देशे उपलिप्य ॥ तत्राष्टदलं विरच्य शुभासने उपविश्य आचम्य प्राणानायम्य ॥ सुमुखश्चेत्यादि पठित्वा ॥ जलमादाय ॥ अद्येत्यादि० आत्मनो दारिद्र्यपापदुःखनाशपूर्वकं (पुत्रपौत्राद्यनवच्छिन्नसन्ततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयाद्यभीष्टप्राप्त्यतुलभोगसिद्धिद्वारा ) श्रीराधापुरुषोत्तमदेवताप्रीत्यर्थमद्यदिवसमारभ्य अमावास्यापर्यन्तं पुरुषोत्तममास (मलमास) व्रतं करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशार्चनं दीपपूजनं निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं ( स्मरणं वा ) तथा च ( स्वस्तिपुण्याहवचनं )

---

१ मलमास बे प्रकारनो छे एक " अधिकमास " अने बीजो "क्षयमास" जे मासमां सूर्यनी संक्रांति न आवे ते "अधिकमास" अने जे मासमां बे संक्रांति आवे ते "क्षयमास" समजवो. अधिकमास बहुधा ३२॥ मासे आवे छे क्षयमास तो एकसो एकताळीस वर्षे अथवा ओगणीस वर्षे थाय छे, अधिकमासनी पेठे थोडे थोडे वखते थतो नथी. क्षयमास थवो ते कार्तिक, मार्गशीर्ष अने पौष ए मासमांनो एक थाय छे. जे वर्षमां क्षय मास थाय छे ते वर्षमां क्षयमासथी प्रथम एक अने क्षयमास पछी एक ए रीते बे अधिक मास थाय छे, अधिकमास अने क्षयमासमां अनन्यगतिक एटले ( नीमेले समयेज करवानां ) एवां नैमित्तिक अने काम्य

कलशस्थापनं प्रधानदेवतास्थापनपूजनं च करिष्ये॥ पूगीफले गणपतिमावाह्य संपूज्य॥ अष्टदलोपरि विश्वधारासीत्यादिना पूर्णपात्रान्तं कलशं संस्थाप्य तदुपरि कृताग्न्युत्तारणपूर्विकां सुवर्णमयीं राधिकासहितपुरुषोत्तममूर्तिं संस्थाप्य प्राणप्रतिष्ठां च कृत्वा तत्समीपे अखंडं दीपं संस्थाप्य प्रज्वाल्य अक्षतान् गृहीत्वा ॥ भो दीप देवरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ॥ यावन्मासंसमाप्तिः स्यात्तावदत्र स्थिरो भव ॥ दीपस्थदेवता सुप्रष्ठिता वरदा भव॥ ततो "दीपस्थदेवतायै नमः" इति गंधादिना संपूज्य ॥ ततः प्रधानदेवता आवाहयेत् ॥ आगच्छ देवदेवेश श्री कृष्ण पुरुषोत्तम ॥ राधया सहितश्चात्र गृहाण पूजनं मम॥ श्रीराधिकासहितपुरुषोत्तमाय नमः ॥ श्रीराधिकासहितपुरुषोत्तममावाहयामि ॥ इत्यावाह्य "प्रतिष्ठा सर्वदेवानां मित्रावरुणनिर्मिता ॥ प्रतिष्ठां वः करोम्यत्र मंडले दैवतैः सह" इति प्रतिष्ठाप्य "राधिकासहितपुरुषोत्तमाय नमः" इति मंत्रेणासनादि ( आसनं—पाद्यम्-अर्घ्यम्-आचमनीयं-स्नानं-पंचामृतस्नानम्-पूर्वाराधनम्—अभिषेकं—शुद्धोदकस्नानं-वस्त्रे—यज्ञोपवीतम्—चंदनम्—अक्षतान्—पुष्पाणि—मालां—सौभाग्यद्रव्यं-धूपं-दीपं- नैवेद्यं-ताम्बूलं—दक्षिणां—प्रदक्षिणाम्—आरार्तिकं ) मंत्रपुष्पांजलिपर्यन्तं पूजनं कृत्वा प्रार्थयेत् ॥ "बर्हापीडं नटवरवपुः कर्णयोः कर्णिकारं बिभ्रद्वासः कनककपिशं वैजयन्तीं च मालाम् ॥ रन्ध्रान्वेणोरधरसुधया पूरयन् गोपवृंदैर्वृंदारण्यं स्वपदरमणं प्राविशद् गीतकीर्तिः ॥१॥" इति संप्रार्थ्य जलमादाय ॥ अनया पूजया श्रीराधिकासहितपुरुषोत्तमः प्रीयताम् ॥

---

१ केटलाक लोको अधिक मासमां एकलो दीवो अखंड मूके छे, अने तेनी रोज पूजा करे छे. पण राधापुरुषोत्तमनुं स्थापन करता नथी, पण ते खोटुं छे, राधापुरुषोत्तमनुं स्थापन करी तेनी पासे दीवानुं स्थापन करवुं एज योग्य छे.

ततो ब्राह्मणपूजनं कृत्वा तेभ्यः आशीर्वचनं गृह्णीयात् ॥ एवं प्रत्यहं मासपर्यन्तं कुर्यात् ॥

"नियमग्रहणम्"–हस्ते गंधाक्षतजलपुष्पपूगीफलानि सहिरण्यानि गृहीत्वा । प्रतिपत्तिथिमारभ्य दर्श ( अमावास्या ) चैव समापयेत् ॥ मासमेकं करिष्यामि व्रतं श्रीपौरुषोत्तमम् ॥ उपवासेन नक्तं वा एकभुक्तं तथैव च ॥ दीपदानादविच्छिन्नात् प्रीयतां पुरुषोत्तम ॥ स्नानं दानं जपं पूजां तर्पणं द्विजभोजनम् ॥ अस्मिन्मासे करिष्यामि तेन पापं व्यपोहतु ॥ इति ॥

## ॥ अथ (मलमास) पुरुषोत्तममासव्रतोद्यापनप्रयोगः ॥

मलमासोद्यापनं मलमासस्य कृष्णपक्षे चतुर्दश्यां त्रयोदश्यां वाष्टम्यां नवम्यां तृतीयायां वान्यतमतिथौ कार्यम् ॥ तत्रादौ पूर्वाह्णे नद्यादौ भस्मगोमयमृत्तिकादि सामग्रीं संगृह्य तीर्थे गत्वा स्नानपुरःसरं पूर्वोक्तरीत्या देहशुद्धिप्रायश्चित्तं स्नानविधिं च नित्यकर्म समाप्य गृहमागत्य मध्याह्ने पूर्ववन्मंडपादिकं सर्वतोभद्रमंडलं च विरच्य ॥ शुभासने उपविश्य आचम्य प्राणानायम्य गुर्वादीन्नत्वा सुमुखश्चेत्यादि पठित्वा ॥ जलमादाय अद्येत्यादि० ममात्मनो दारिद्र्यपापदुःखनाशपूर्वकं धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं पुत्रपौत्राद्यवच्छिन्नसततिस्थिरलक्ष्मीकीर्तिलाभशत्रुपराजयद्वारा सदभीष्टसिद्ध्यर्थं श्रीपुरुषोत्तमदेवताप्रीत्यर्थं मयाऽऽचरितस्याचरिष्यमाणस्य श्रीपुरुषोत्तममासव्रताख्यस्य कर्मणः सांगतासिद्ध्यर्थं गोलोकदक्षिणपार्श्वस्थवैकुंठशिवपुरनिवासपूर्वकं श्रीपुरुषोत्तमपदगोलोकाधिपराधिकापुरुषोत्तमपादाब्जसेवाद्यक्षय्यफलप्राप्त्यर्थम् एकरात्राधिवासपक्षाश्रयेण

देशकालाद्यनुसारतो यथाज्ञानेन यथामिलितोपचारद्रव्यैः श्रीपुरुषोत्तम-मासव्रतोद्यापनाख्यं कर्माहं करिष्ये ॥

पुनर्जलमादाय तदंगभूतं दिग्रक्षणं कलशाराधनं दीपपूजनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं (मातृकापूजनं वसोर्द्धारामायुष्य-मन्त्रजपं नांदीश्राद्धम् अर्घ्यवंदनम् आचार्यादिसमस्तऋत्विजां वरणं वरणधार्द्धं सर्वतोभद्रमंडलदेवतास्थापनं प्रधानदेवतास्थापनप्रतिष्ठापूजा-नादीनि च करिष्ये। इति संकल्प्य पूर्वोक्तप्रकारेण दिग्रक्षणादि ऋत्विग्वरणान्तं कर्म ( पत्र ६-४४ ) विधाय सर्वतोभद्रमंडले देवतास्थापनं च ( पत्र ९९ थी १०७ ) कृत्वा समन्त्रकं " ब्रह्माद्या-वाहितदेवताभ्यो नमः " इति मूलमंत्रेण वा आवाहनादिमंत्रपुष्पांज-लिपर्यन्तं पूजनं कृत्वा प्रार्थयेत् ॥ यं ब्रह्मावरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः। ध्यानाव-स्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥१॥ एह्येहि विमेन्द्र पितामहेश हंसाधिरूढ त्रिदशैकवंद्य। श्वेतोत्पलाभाब्जकुशादिहस्त गृहाण पूजां भगवन्नमस्ते ॥२॥ इति संप्रा-र्थ्य ॥ जलमादाय—अनया पूजया ब्रह्माद्यावाहितदेवताः प्रीयन्ताम्। ततो मंडलमध्ये विश्वाधारासि०इत्यादिना प्रधानकलशं चतुर्दिक्षु चतुर्व्यू-हकलशांश्च संस्थाप्य ततः सर्वतोभद्रमंडलपरितः पूर्वादिक्रमेण त्रिंशत्कुं-

---

१ मंडलनी वचमां प्रधान कलश मूकी, तेनी चारे दिशामा चार व्यूहकलश गोठववा तथा मंडलनी चारे बाजुए अक्षतपुंज पर त्रिश कलश गोठववा, अने ते दरेक कलशो पर पूर्णपात्र ढांकी तेनापर रेशमी वस्त्रो ढांकी तेना पर चन्दनथी अष्टदल करी अक्षतपुंज तथा मूर्तिओ गोठववी.

भान स्थापयेत् ॥ तदुपरि पूर्णपात्रं निधाय क्षौमवस्त्रं प्रसार्य चंदनादिना अष्टदलं विलिख्य तदुपरि कृताग्न्युत्तारणप्राणप्रतिष्ठापूर्वकं ( पृष्ठ ५१-५२ ) स्वर्णमयीः मूर्तीः स्थापयेत् ॥ ततो मण्डूकादिदेवानावाहयेत् ॥

## ॥ अथ मंडूकादिदेवतास्थापनम् ॥

हस्ते अक्षतान् गृहीत्वा । मंडूकाय० । कालाग्निरुद्राय०। मूलप्रकृत्यै०। आधारशक्त्यै०। कूर्माय०। अनन्ताय०। वराहाय०। पृथिव्यै०। सुधार्णवाय० । क्षीरनिधये० । सप्तद्वीपाय० । सुवर्णपर्वताय० । नदनोद्यानाय० । कल्पवाटिकायै० । करुणातोयपरिखायै०। सुवर्णप्राकाराय० । चिन्तामणिमंडपाय० । मणिमयमंडपाय०। रत्नखचितमंडपाय० । श्वेतच्छत्राय० । रत्नसिंहासनाय० । कल्पवृक्षाय० । स्वर्णवेदिकायै० ॥ (अथासनपादेषु) ( आग्नेय्याम् ) धर्माय० । ( नैर्ऋत्ये ) ज्ञानाय० । ( वायव्ये ) वैराग्याय०। ( ऐशान्याम् ) ऐश्वर्याय०॥ ( अथ गात्रेषु ) (पूर्वे) अधर्माय०। (दक्षिणे) अज्ञानाय०। ( पश्चिमे ) अवैराग्याय० । (उत्तरे) अनैश्वर्याय०॥ (पुनः कर्णिकायाम् ) अनन्ताय०। पद्माय० । आनंदकंदाय० । संविन्नालाय० । प्रकृतिमयपत्रेभ्यो० । विकारमयकेसरेभ्यो० । पंचाशद्बीजाढ्यकर्णिकायै० । लिपिमयकर्णिकायै०। अं-द्वादशकलात्मनेसूर्यमंडलाय०।ईंषोडशकलात्मने चंद्रमंडलाय०। ऊंदशकलात्मने वह्निमंडलाय०। संसत्त्वाय०। रं रजसे०। तं तमसे०।मां मायायै०। विं विद्यायै०।अं अनन्तायै०।पं पद्माय०।आं आत्मने०।अं अन्तरात्मने०। ज्ञां ज्ञानात्मने० । पं परमात्मने० । (पूर्वादिपत्रेषु) विमलायै० । उत्कर्षिण्यै० । ज्ञानायै० । क्रियायै० । योगायै० । प्रणवायै० । सत्यायै० । ईशानायै० । ( पुनः कर्णिकायाम्) अनुग्रहायै०। नमो भगवते विष्णवे

वासुदेवाय संयोगपीठात्मने नमः। इति पीठे पुष्पांजलिं दत्त्वा "पीठस्थदेवताभ्यो नमः" इति यथाशक्तिपीठदेवताः पूजयेत् ॥ इति ॥

## ॥ अथ प्रधानदेवतास्थापनम् ॥

ततः पूर्वस्थापितं राधासहितपुरुषोत्तममानीयात्र स्थापयेत् वा कृताग्न्युत्तारणप्राणप्रतिष्ठां नूतनां सुवर्णनिर्मितां राधापुरुषोत्तममूर्तिं कलशोपरि संस्थाप्य मूर्तौ आवाहनादिकं कुर्यात् ॥ यथा हस्ते अक्षतान् गृहीत्वा ॥ आगच्छ देवदेवेश श्रीकृष्ण पुरुषोत्तम। राधया सहितश्चात्र गृहाण पूजनं मम। श्रीराधिकासहितपुरुषोत्तममावाहयामि स्थापयामि। ( ततश्चतुर्दिक्षु कलशेषु मूर्तेरभावे पूगीफलेषु आवाहयेत् ॥ (पूर्वे)॥१॥ वासुदेवाय नमः वासुदेवमावाहयामि स्थापयामि॥ ( दक्षिणे ) ॥२॥ हलधराय० हलधरम् आ० स्था० ॥ ( पश्चिमे ) ॥३॥ प्रद्युम्नाय० प्रद्युम्नम् आ०स्था० ॥ (उत्तरे)॥४॥ अनिरुद्धाय० अनिरुद्धम् आ० स्था०॥ इति चतुर्व्यूहदेवता आवाह्य ॥ त्रिंशत्कलशेषु मूर्तिं पूगीफलं वा नालिकेरं निधाय पूर्वादिक्रमेण देवता आवाहयेत्। जिष्णवे० जिष्णुम् आ०स्था०॥१॥ विष्णवे०विष्णुम् आ०स्था०॥२॥ महाविष्णवे० महाविष्णुम् आ०स्था०॥३॥हरये०हरिम् आ०स्था०॥४॥ कृष्णाय० कृष्णम् आ० स्था० ॥५॥ अधोक्षजाय० अधोक्षजम् आ० स्था०॥६॥ केशवाय० केशवम् आ०स्था०॥७॥ माधवाय० माधवम्० आ०स्था०॥८॥ रामाय० रामम् आ०स्था०॥९॥ अच्युताय० अच्युतम् आ०स्था० ॥१०॥ पुरुषोत्तमाय० पुरुषोत्तमम् आ०स्था० ॥ ११ ॥ गोविंदाय०गोविन्दम् आ०स्था०॥१२॥वामनाय०वामनम् आ०स्था०। ॥१३॥ श्रीशाय० श्रीशम् आ० स्था० ॥१४॥ श्रीकंठाय० श्रीकण्ठम् आ० स्था० ॥१५॥ विश्वसाक्षिणे० विश्वसाक्षिणम् आ०स्था०॥१६॥

नारायणाय० नारायणम् आ० स्था० ॥१७॥ मधुरिपवे० मधुरिपुम् आ० स्था० ॥१८॥ अनिरुद्धाय० अनिरुद्धम् आ० स्था० ॥ १९ ॥ त्रिविक्रमाय० त्रिविक्रमम् आ० स्था० ॥२०॥ वासुदेवाय० वासुदेवम् आ० स्था० ॥२१॥ जगद्योनये० जगद्योनिम् आ० स्था० ॥२२॥ शेषतल्पगताय० शेषतल्पगतम् आ० स्था० ॥ २३ ॥ संकर्षणाय० संकर्षणम् आ०स्था० ॥२४॥ प्रद्युम्नाय० प्रद्युम्नम् आ०स्था०॥२५॥ दैत्यारये० दैत्यारिम् आ० स्था० ॥२६॥ विश्वतोमुखाय० विश्वतोमुखम् आ०स्था० ॥२७॥ जनार्दनाय० जनार्दनम् आ०स्था०॥२८॥ धराधराय०धराधरम् आ०स्था०॥२९॥श्रीधराय०श्रीधरम् आ०स्था० ॥३०॥एवं देवता आवाह्य॥प्रतिष्ठा सर्वदेवानां०॥श्रीराधिकासहितपुरुषोत्तमाद्यावाहितदेवताः सुप्रतिष्ठिताः वरदाः भवत ॥ इदमत्र गंधं पुष्पं समर्प्य ध्यायेत् ॥ अन्तर्ज्योतिरनन्तरत्नखचिते सिंहासने संस्थितं वंसीनादविमोहितव्रजवधूवृन्दावने सुन्दरम् । ध्यायेद्राधिकया सुकौस्तुभमणिं प्रद्योतितोरःस्थलं राजद्रत्नकिरीटकुंडलधरं प्रत्यग्रपीतांवरम् ॥ १ ॥ श्रीवत्सवक्षसं शान्तं नीलोत्पलदलच्छविम् ॥ त्रिभंगललितं ध्यायेत्सराधापुरुषोत्तमम् ॥ २ ॥ इति ध्यात्वा ॥ गंधादिपंचोपचारैः संपूज्य ॥ चतुर्दिक्षु चतुर्व्यूहकलशसमीपे घृतदीपान् संस्थाप्य ॥ पूर्वव्रताश्च ब्राह्मणा चतुर्व्यूहजपं विष्णुसहस्रनामपाठं तथा च पुरुषोत्तमसहस्रनामपाठादिकं कुर्यात् ॥ इति ॥

## ॥ अथ न्यासविधिः ॥

तत्रादौ पूर्वोक्तरीत्या (पत्र १११–११३) श्रीपुरुषोत्तमपूजनकर्माधिकारार्थे तिलकतुलसीमालाधारणपूर्वकं शंखघंटापूजनं च कुर्यात् ॥ ततो निजशरीरे न्यासांश्च कुर्यात् ॥ लक्ष्मीनारायणाभ्यां नमः

पादयोः ॥ विशालाक्षीकेशवाभ्यां० जान्वोः ॥ सुनंदासंकर्षणाभ्यां० ऊर्वोः ॥ रुक्मिणीमाधवाभ्यां० कट्योः ॥ वैष्णव्यच्युताभ्यां० नाभौ ॥ नारायणीगोविंदाभ्यां० हृदि ॥ मित्रविंदाहृषीकेशाभ्यां० कंठे ॥ पद्माक्षीत्रिविक्रमाभ्यां० हस्तयोः ॥ नारसिंहीनृसिंहाभ्यां० बाह्वोः ॥ सत्यावासुदेवाभ्यां० मुखे ॥ कालिंदीजनार्दनाभ्यां० नासिकयोः ॥ कमलावामनाभ्यां० अक्ष्णोः ॥ सत्याश्रीकृष्णाभ्यां० ललाटे ॥ जांबुवतीश्रीधराभ्यां० मूर्ध्नि ॥ लक्ष्मणाधोक्षजाभ्यां० शिखायाम् ॥ वाराहीपद्मनाभाभ्यां० सर्वांगे । इति महापातकहरन्यासः ॥ वासुदेवाय० अंगुष्ठयोः। अनिरुद्धाय० तर्जन्योः । संकर्षणाय० मध्यमयोः। प्रद्युम्नाय० अनामिकयोः। हृषीकेशाय० कनिष्ठिकयोः।पुरुषोत्तमाय नमः करतलकरपृष्ठयोः।। एवं हृदयादि।। यथा—वासुदेवाय नमः हृदयाय नमः। अनिरुद्धाय० शिरसे० । संकर्षणाय० शिखायै० । प्रद्युम्नाय० कवचाय० । हृषीकेशाय० नेत्रत्रयाय०। पुरुषोत्तमाय० अस्त्राय०।। ( अथ देवन्यासः ) हस्ते तुलसीदलं गृहीत्वा देवान् स्पृशेत् ॥ केशवाय० ( देवस्य ) वामकरे ॥ नारायणाय० ( देवस्य ) दक्षिणकरे ॥ माधवाय० ( देवस्य ) वामपादे ॥ गोविंदाय० ( देवस्य ) दक्षिणपादे ॥ विष्णवे० ( देवस्य ) वामजानुनि ॥ मधुसूदनाय० ( देवस्य ) दक्षिणजानुनि ॥ त्रिविक्रमाय० ( देवस्य) वामकट्याम् ॥ वामनाय० ( देवस्य ) दक्षिणकट्याम् ॥ श्रीधराय० (देवस्य) नाभौ ॥ हृषीकेशाय० ( देवस्य ) हृदये ॥ पद्मनाभाय० ( देवस्य ) कंठे ॥ दामोदराय० ( देवस्य ) वामबाहुमूले ॥ संकर्षणाय० ( देवस्य ) दक्षिणबाहुमूले । वासुदेवाय० ( देवस्य ) मुखे ॥ प्रद्युम्नाय० ( देवस्य ) नेत्रयोः ॥ अनिरुद्धाय० ( देवस्य ) नासिकायाम् ॥ उरगाय०

शुद्धो०–स्नानाय पानीयमिदं त्वदर्थं मयाऽर्पितं गांगजलैः समन्वितम्। गृहाण विष्णो करुणां कुरु त्वमनन्यदेवार्पितचित्तवृत्तिना ॥ १६ ॥ वस्त्रं०–सौवर्णतन्तुरचितानि विचित्रितानि सूक्ष्माणि देवतपनद्युतिसन्निभानि ॥ दिव्यानि नाथ विधिनाथ मयाऽर्पितानि नानाम्बराणि परिधेहि सुखं विधेहि ॥ १७ ॥ यज्ञो०–ॐकारतत्त्वमयतंतुपरीतमीश ब्रह्मात्मभिस्त्रिगुणितं विहितं सविद्या ॥ यज्ञोपवीतमभिमंत्रितमात्मशक्त्या देवाधिदेव विधिवत्कुरु नाथ कंठे ॥ १८ ॥ अलं०–माणिक्यमौक्तिकसुविद्रुमपुष्परागहीरेन्द्रनीलमणिभेदककेतुरत्नैः ॥ नानाप्रकारसुशुभाभरणानि देव भक्त्या समर्पितमिदं बहुप्रेमयुक्तम् ॥ १९ ॥ गंधः–सामोदमोदनघनानिलसुप्तगंधः कर्पूरकुंकुमकुरंगमदांबराढ्यम् ॥ पुष्पोत्कराप्करसमुल्लसितं हि विष्णो गंधं गृहाण सकलेष्टसुगंधबंधो ॥ २० ॥ अक्ष०–रक्ताक्षता गंधविमिश्रिताश्च ललाटपट्टे तिलकोपरि त्वम् ॥ गृहाण देवेश जगन्निवास राधापते स्वीकुरु भालभागे ॥ २१ ॥ पुष्पा०–मंदारकल्पतरुजातिसमुद्भवैश्च मल्लीजपावकुलचंपकपारिजातैः ॥ राधापते रमण गोकुलनाथ भक्त्या पुष्पोत्तमैर्विरचयामि तवांगशोभाम् ॥ प्रेम्णा तुलस्या अतिकोमलानि मया त्वदर्थं प्रतिपादितानि ॥ गृहाण जन्मत्रयपापहारिन् राधापते त्वं च दलानि विष्णो ॥ २२ ॥

## ॥ अथांगपूजा ॥

हस्ते गंधपात्रं गृहीत्वा दक्षिणनार्चयेत् ॥ नंदात्मजाय नमः पादौ पूजयामि ॥ यशोदातनयाय० गुल्फौ पूजं० ॥ केशिसूदनाय० जानुनी पूज० ॥ भूभारोत्तारकाय० जंघे पूज० ॥ अनन्ताय० कटी पूज० ॥ विष्णुरूपधृप० मेढ्रं पूज० ॥ प्रद्युम्नाय० नाभिं पूज० ॥ अनिरुद्धाय०

हृदयं पूज० ॥ श्रीकंठाय० कंठं पूज० ॥ सकलास्त्रधृने० बाहू पूज० ॥ वाचस्पतये० मुखं पूज०॥ केशवाय० नेत्रे पूज०॥ सर्वात्मने० शिरः पूज० ॥ विश्वरूपिणे० सर्वांगं पूज० ॥ इत्यंगपूजा ॥

॥ अथावरणपूजा ॥

हस्ते अक्षतान् गृहीत्वा ॥ पूर्वे हृदयाय नमः। दक्षिणे शिरसे० । पश्चिमे शिखायै० । उत्तरे कवचाय० । ( पूर्वादितः ) शंखाय० । चक्राय० । गदायै० । पद्माय० ॥ अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ प्रथमावरणदेवताभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ जलमादाय ॥ अनया पूजया प्रथमावरणदेवताः प्रीयन्ताम् (एवं सर्वत्र) ॥१॥ " अथ द्वितीयावरणम् "—रुक्मिण्यै०। सत्यभामायै० । नाग्निकायै० । कालिंद्यै० । मित्रविंदायै० । लक्ष्मणायै० । जांबूवत्यै० । चारुहासिन्यै० ॥ अभीष्ट० । द्वितीया० सर्वो० गन्धा० स० ॥ अनेन पू० द्वितीया० प्रीयन्ताम् ॥ २ ॥ अथ तृतीयावरणम् ॥ वासुदेवाय० । देवक्यै० । नंदगोपतये० । यशोदायै० । बलभद्राय० ॥ सुभद्रायै० । गोपेभ्यो० । गोपिकाभ्यो० ॥ अभीष्ट० । तृतीया० सर्वो० गन्धा० स०॥ अनेन पूज० तृतीया० प्रीयन्ताम् ॥३॥ चतुर्थावरणम् ॥ (पूर्वादिदशदिक्षु ॥) इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे०। सोमाय०। ईशानाय०। ब्रह्मणे० । अनन्ताय० ॥ अभीष्ट० । चतुर्था० सर्वो० गन्धा० स० ॥ अनेन पू० चतुर्था०प्रीयन्ताम् ॥ ४ ॥ अथ पंचमावरणम् ॥ विश्वस्मै०। विष्णवे०। महाविष्णवे०। गोविंदाय०। वामनाय० । श्रीशाय० । विश्वसाक्षिणे० । नारायणाय० । मधुरिपवे० । अनिरुद्धाय०। त्रिविक्रमाय०। जगद्योनये० । शेषतल्पगाय० । संकर्ष-

( देवस्य ) ललाटे ॥ सर्वकामदाय० ( देवस्य ) शिखायाम् ॥ सहस्रशीर्षाय० ( देवस्य ) सर्वांगे ॥ ततः पूजनमारभेत ॥

## ॥ श्रीराधापुरुषोत्तमपूजनप्रयोगः ॥

पात्रासादनपूर्वकं पूजनं कर्तव्यं चेत् ( पृ. १३०-१४६ ) रीत्या पूजनं कार्यं वाऽधोलिखितप्रकारेण पूजा विधेया ॥

ध्यानं-इदं जगत्त्वं जगतो जनिस्त्वं जगद्बहिस्त्वं जगदन्तरस्त्वम् ॥ आवाहनाद्याचरणं कथं ते करोमि देवेश ततः प्रसीद ॥ १ ॥ आवा०। विष्णो स्वकीयसदनात्सह सिंधुपुत्र्या सार्धं गणैः सुरगणैः परितः स्तुवद्भिः ॥ आवाहयामि हृदि पूजयितुं प्रभो त्वां तद्विश्वनाथ करुणावरुणालयेहि ॥ २ ॥ आस०-माणिक्यमौक्तिकसुविद्रुमपत्रपुष्पैर्हीरेन्द्रनीलमणिभेदककेतुरत्नैः॥ आधारशक्तिकमलासनकूर्ममूर्ते दिव्यासनं विरचितं च गृहाण विष्णो ॥ ३ ॥ पाद्यं०-कान्तेन्दुकान्तमणिमंडितकंठनालं श्रीकान्तकांचनकमंडलुकर्णपूरम् ॥ दूर्वादलोत्पलसुगंधिमथामलं सत्पादोदकं मुररिपो पदयोर्गृहाण ॥ ४ ॥ अर्घ्यम्-सिद्धार्थगंधकुसुमाक्षतपूगदूर्वातोयैरलं तिलयवैरभिपूर्णपात्रम् ॥ आधारमूर्धनि समर्पितमुक्तमंत्रैरर्घ्यं गृहाण जगदीश दयार्द्रदृष्टे ॥ ५ ॥ आच०-कंकोलकुड्मलदलाकुशलेलविंगजातीफलामलसुगंधियतं मुरारे ॥मंत्रेण मंत्रितमिदं कलधौतद्रव्यमाचम्यतामुचितमाचमनीयमंभः ॥६॥ मधु०-मिश्रं दधिघृतमधुस्थितकांस्यपात्रे पूर्णं सुगंधिसलिलैरभिमंत्रपूर्वम् ॥ हस्तं स्वहस्तकमलांजलिना मया ते दत्तं गृहाण मधुपर्कमिदं मुरारे ॥७॥ आच०-आनंदचिद्घन निरंजन देवदेव श्रीविश्वनाथ करुणार्णव दीनबंधो ॥ भक्त्या मयार्पितमनेकगुणाधिवास राधापते स्वीकुरु ह्याचमनीयमंभः ॥८ ॥ पय०-दिव्यापयोद्रवभवं नवनीतपूर्ण

दिव्यामृताधिकरसं परिकामदं च ॥ स्वर्धेनुजं जगदभीष्टमनोधिरूपं स्नानाय शुद्धमुररीकुरु देव दुग्धम् ॥ ९ ॥ पयःस्नानं समर्पयामि ॥ दधि०कर्पूरकुन्दकुमुदेन्दुकरावदातं मल्लीप्रफुल्लकुसुमाकरकान्तिकान्तम् ॥ स्नानाय शुद्धरसराज यथामलाचिंस्निग्धं गृहाण दधि दीनजनैकबंधो ॥ घृतं०—तेजोमयेन तपनद्युतिपावितेन गन्धेन सर्वविधिनापरमंत्रितेन॥वह्नौ शृतेन रचयामि रसावृतेन स्नानं घृतेन विधिना वसुधामृतेन ॥ ११ ॥ मधु०—नानाविधौषधिलतारससंभृतान्तर्माधुर्यमिष्टममृतप्रतिमं गुणेन ॥ माणिक्यपात्रसमपूरितभक्तिपूर्वमंगीकुरुष्व मधु देव महावरिष्टम् ॥१२॥ शर्क०-पूर्णेन्दुसागरसमुद्भवया प्रसन्नमुक्ताफलद्रवसुधाधिकया महिम्ना। सर्वांगशोधनविधौ वरया मुरारे सुस्नाहि सिद्धवर शर्करया च विष्णो । अभ्यं०—सुगंधतैलं तिलजं मनोहरं सुवासितं चंपकजातिपंकजैः ॥ गृहाण कालोद्भवपुष्पसंयुतं लक्ष्मीपते ह्यंगविलेपनार्थम् ॥ १४ ॥ स्नानं०—दिव्यद्रुमेन्धनसमिद्धहुताशतप्तैः शुद्धोदकैः सुविमलैश्च समुद्धृतैश्च। गोविंदनाथ निधिनाथ यथासुखेन स्नानं विधेहि विधिना विधिवत्प्रदिष्टम् ॥१५॥ देवं पात्रान्तरे कृत्वा पंचोपचारैः संपूज्य उत्तरे निर्माल्यं विसृज्य पुनः संपूज्य घंटानादपुरःसरं देवस्योपरि अभिषेकं कुर्यात् ॥ ब्राह्मणाः पूर्वोक्तं ( पत्र ५६–५८ ) पुरुषसूक्तद्वयं पठेयुः ॥ इति ॥

☞ पेज नं. ४६४ नी ध्यानादिपरनी नोट

"श्रीराधासहितपुरुषोत्तमाय नमः" ध्यानं समर्पयामि ॥ श्रीराधासहित पुरु० आवाहनं स०॥ एवं "श्रीराधासहितपुरुषोत्तमाय नम" इति सर्वोपचारेषु वक्तव्यम् ॥ आप्रमाणे " श्रीराधासहितपुरुषोत्तमाय नमः " ए प्रत्येक पूजाना उपचारमां बोलवुं.

१ वादयेत् सुस्वरां घंटां वैनतेयविचिह्निताम् ॥ धूपे निराजने स्नाने पूजाकाले विलेपने ॥

शुद्धो०–स्नानाय पानीयमिदं त्वदर्थं मयाऽर्पितं गांगजलैः समन्वितम्। गृहाण विष्णो करुणां कुरु त्वमनन्यदेवार्पितचित्तवृत्तिना ॥ १६ ॥ वस्त्रं०–सौवर्णतन्तुरचितानि विचित्रितानि सूक्ष्माणि देवतपनद्युतिसन्निभानि ॥ दिव्यानि नाथ विधिनाथ मयाऽर्पितानि नानाम्बराणि परिधेहि सुखं विधेहि ॥ १७ ॥ यज्ञो०–ॐकारतत्त्वमयतंतुपरीतमीश ब्रह्मात्मभिस्त्रिगुणितं विहितं सवित्र्या ॥ यज्ञोपवीतमभिमंत्रितमात्मशक्त्या देवाधिदेव विधिवत्कुरु नाथ कंठे ॥ १८ ॥ अलं०–माणिक्यमौक्तिकसुविद्रुमपुष्परागहीरेन्द्रनीलमणिवैदकृकेतुरत्नैः ॥ नानाप्रकारसुशुभाभरणानि देव भक्त्या समर्पितमिदं बहुप्रेमयुक्तम् ॥ १९ ॥ गंधः–सामोदमोदनघनानिलसुप्तुगंधः कर्पूरकुंकुमकुरंगमदाम्बराढ्यम् ॥ पुष्पोत्करास्करसमुल्लसितं हि विष्णो गंधं गृहाण सकलेप्सुगंधबंधो ॥ २० ॥ अक्ष०–रक्ताक्षता गंधविमिश्रिताश्च ललाटपट्टे तिलकोपरि त्वम् ॥ गृहाण देवेश जगन्निवास राधापते स्वीकुरु भालभागे ॥ २१ ॥ पुष्पा०–मंदारकल्पतरुजातिसमुद्भवैश्च मल्लीजपाबकुलचंपकपारिजातैः ॥ राधापते रमण गोकुलनाथ भक्त्या पुष्पोत्तमैर्विरचयामि तवांगशोभाम् ॥ प्रेम्णा तुलस्या अतिकोमलानि मया त्वदर्थं प्रतिपादितानि ॥ गृहाण जन्मत्रयपापहारिन् राधापते त्वं च दलानि विष्णो ॥ २२ ॥

## ॥ अथांगपूजा ॥

हस्ते गंधपात्रं गृहीत्वा दक्षिणनार्चयेत् ॥ नंदात्मजाय नमः पादौ पूजयामि ॥ यशोदातनयाय० गुल्फौ पूज० ॥ कंशिसूदनाय० जानुनी पूज० ॥ भूभारोत्तारकाय० जंघे पूज० ॥ अनन्ताय० कटी पूज० ॥ विष्णुरूपधृप० मेढ्रं पूज० ॥ प्रद्युम्नाय० नाभिं पूज० ॥ अनिरुद्धाय०

हृदयं पूज० ॥ श्रीकंठाय० कंठं पूज० ॥ सकलास्त्रधृते० बाहू पूज० ॥ वाचस्पतये० मुखं पूज०॥ केशवाय० नेत्रे पूज०॥ सर्वात्मने० शिरः पूज० ॥ विश्वरूपिणे० सर्वांगं पूज० ॥ इत्यंगपूजा ॥

॥ अथावरणपूजा ॥

हस्ते अक्षतान् गृहीत्वा ॥ पूर्वे हृदयाय नमः। दक्षिणे शिरसे० । पश्चिमे शिखायै० । उत्तरे कवचाय० । ( पूर्वादितः ) शंखाय० । चक्राय० । गदायै० । पद्माय० ॥ अभीष्टसिद्धिं मे देहि शरणागतवत्सल ॥ भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ प्रथमावरणदेवताभ्यो नमः सर्वोपचारार्थे गन्धाक्षतपुष्पाणि समर्पयामि ॥ जलमादाय ॥ अनया पूजया प्रथमावरणदेवताः प्रीयन्ताम् (एवं सर्वत्र) ॥१॥ " अथ द्वितीयावरणम् "–रुक्मिण्यै०। सत्यभामायै० । नाग्निजित्यै० । कालिंद्यै० । मित्रविंदायै० । लक्ष्मणायै० । जांबूवत्यै० । चारुहासिन्यै० ॥ अभीष्ट० । द्वितीया० सर्वो० गन्धा० स० ॥ अनेन पू० द्वितीया० प्रीयन्ताम् ॥ २ ॥ अथ तृतीयावरणम् ॥ वासुदेवाय० । देवक्यै० । नंदगोपतये० । यशोदायै० । बलभद्राय० ॥ सुभद्रायै० । गोपेभ्यो० । गोपिकाभ्यो० ॥ अभीष्ट० । तृतीया० सर्वो० गन्धा० स०॥ अनेन पूज० तृतीया० प्रीयन्ताम् ॥३॥ चतुर्थावरणम् ॥ (पूर्वादिदशदिक्षु ॥) इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । सोमाय० । ईशानाय० । ब्रह्मणे० । अनन्ताय० ॥ अभीष्ट० । चतुर्थो० सर्वो० गन्धा० स० ॥ अनेन पू० चतुर्थो०प्रीयन्ताम् ॥ ४ ॥ अथ पंचमावरणम् ॥ विश्वस्मै० । विष्णवे० । महाविष्णवे० । गोविंदाय० । वामनाय० । श्रीशाय० । विश्वसाक्षिणे० । नारायणाय० । मधुरिपवे० । अनिरुद्धाय० । त्रिविक्रमाय० । जगद्योनये० । शेषतल्पगाय० । संकर्ष-

णाय०। प्रद्युम्नाय० । दैत्यारये० । विश्वतोमुखाय० । जनार्दनाय० । धराधराय०। श्रीधराय०॥ अभीष्ट०। पञ्चमा० सर्वो० गन्धा० सम०॥ अनेन पू० पञ्चमा० प्रीयन्ताम् ॥ ५॥ अथ षष्ठावरणम् ॥ वज्राय० । शक्तये० । दंडाय० । खड्गाय० । पाशाय० । अंकुशाय० । गदायै०। त्रिशूलाय० । चक्राय० । पद्माय० ॥ अभीष्टसिद्धिं० । षष्ठा० सर्वो० गन्धा० सम० ॥ अनेन पू० षष्ठा० प्रीयन्ताम् ॥ इत्यावरणपूजा ॥

॥ अथ पुष्पपूजा ॥

श्रीवल्लभाय० मुचकुंदपुष्पं सम० ॥ गोविंदाय० विष्णुक्रान्तापुष्पं० ॥ मुकुंदाय० केतकीपुष्पं० ॥ हरये० पारिजातकपुष्पं० ॥ कंसारये० करवीरपुष्पं० ॥ दामोदराय० दाडीमपुष्पं० ॥ अच्युताय० अशोकपुष्पं० ॥ जनार्दनाय० बकुलपुष्पं० ॥ वासुदेवाय० चंपकपुष्पं० ॥ भूभारोत्तारकाय० शतपत्रपुष्पं० ॥ यदुवंशविवर्धनाय० पद्मपुष्पं० ॥ श्रीकृष्णाय० नानाविधपुष्पं० ॥ पुनः केशवादिचतुर्विंशतिनामभिः पुष्पाण्यर्पयेत् ॥ केशवाय नमः । नारायणाय० । माधवाय० । गोविन्दाय० । विष्णवे० । मधुसूदनाय० । त्रिविक्रमाय० । वामनाय० । श्रीधराय० । हृषीकेशाय० । पद्मनाभाय० । दामोदराय० । संकर्षणाय० । वासुदेवाय० । प्रद्युम्नाय० । अनिरुद्धाय० । पुरुषोत्तमाय० । अधोक्षजाय० । नारसिंहाय० । अच्युताय० । जनार्दनाय० । उपेन्द्राय० । हरये० । श्रीकृष्णाय नमः ॥२४॥ ततः पुरुषोत्तमसहस्रनामभिः तुलसीदलैः पुष्पैरक्षतैर्वा पूजनं कुर्याद् ॥ सौभा०—श्वेतं च रक्तं शबलं गुलालं वर्णं विभासं वसनातिशोभम् ॥ ऋतौ वसन्ते प्रिय ते प्रदत्तं गृहाण पूजां भगवन्नमस्ते ॥ २३ ॥

धूपः—घृतेन युक्तं परमं रमेश सुगंधितं चंदनदारुकाद्यैः ॥
गृहाण दामोदर विश्वकाय धूपं मनोहारिदशागयुक्तम् ॥२४॥
दीपः—घृताक्तवर्तित्रयनिर्मितं शुभं चन्द्रोज्वलं कांचनपात्रदीपितम् ॥
बाह्यान्तराज्ञानतमःसुहारकं राधापते दीपमभीप्सित कुरु ॥ २५ ॥
नैवे०—आज्येन युक्तं रसपट्युतं च लेह्यं च पेयं मधुरं मनोज्ञम् ॥
गृहाण नैवेद्यमतिप्रियं ते श्रिया सहैवात्र जनार्दनाच्युत ॥ २६ ॥
आच०—गंगादितीर्थाबुलवंगवासितं सुधाकरश्रीधवलं करेऽर्पितम् ॥
प्रभाकर ह्याचमनं पवित्रितं गृहाण राधारमणार्पितं प्रभो ॥ २७ ॥
जलं०—शीतलं मधुरमुत्तमोत्तमं वासितं बहुविधैः सुगंधिभिः ॥
स्वीकुरुष्व करुणानिधे प्रभो गांगमंबु कमलालया सह ॥ २८ ॥
तांबू०—जातीफलेन्दुमृगनाभिसुगंधियुक्तमेलालवंगखदिरारुणपूर्णचूर्णम्
तांबूलवीटकमनेकरसं सुरेश संकल्पितं स्ववदनांबुरुहे गृहाण ॥२९॥
दक्षि०—न्यूनातिरिक्तपरिपूजनपूर्तिकामःकामप्रदाय कमलापतये च भक्त्या
नाथाय सर्वजगतां सुरवंदिताय मुद्रार्पणं भगवते परिकल्पयामि ॥३०॥
नीरा०—सुवर्णपात्रे निहितैः प्रदीप्तैः सवर्तिकैर्भूरिघृतैः प्रपूरितैः ॥
राधापते प्रोज्ज्वलितैः प्रदीपकैः करोमि चारार्तिकमेव विष्णो ॥३१॥
लक्ष्मीविलासकमलासननाकनाथैरामृष्टमौलिमणिदीधितिधोरणीभिः ।
नीराजितं त्रिजगदेकगुरो नमामि राधापते सहचरस्य पदारविंदम् ॥३२॥
(पृ. ९१) वन्दे गोपालम्०कर्पूरपूरेण० इत्यादिना नीराजनं कुर्यात् ॥
प्रद०—नश्यन्तु सर्वदुरितानि मया कृतानि जन्मान्तरे गुरुलघुन्यथवेह यानि ॥ प्रादक्षिणेन तु समुद्धर मां दयालो योगीश पूर्णकृपया सुभवाब्धिमध्यात् ॥३३॥ पुष्पां०—तव निजजनसार्धे संगमो मे प्रदीश भवतु विषयबंधच्छेदने तीक्ष्णखङ्गः ॥ तव चरणसरोजे स्थानदाने-

कहेतुर्जनुषि जनुषि भक्तिं देहि पादारविंदे ॥ ३४ ॥ स्तुतिः—अन्तर्ज्योतिरनन्तरत्नरचिते सिंहासने संस्थितं वंशीनादविमोहितव्रजवधूवृन्दावने सुन्दरम् ॥ ध्यायेद्राधिकया सकौस्तुभमणिप्रद्योततोरःस्थलं राजद्रत्नकिरीटकुण्डलधरं प्रत्यग्रपीताम्बरम्॥ नम०—नौमि नवघनश्यामं पीतवाससमच्युतम् ॥ श्रीवत्सभासितोरस्कं राधिकासहितं हरिम् ॥ ॥ ३५ ॥ विशे०—श्रीफलं श्रीपदं प्रोक्तं श्रीफलं सुखवर्धनम् ॥ श्रीफलार्घप्रदानेन प्रसीद पुरुषोत्तम ॥ ३६ ॥ यथाशक्त्या जपं कृत्वा देवाय समर्प्य जलं गृहीत्वा—अद्येत्यादि० आचार्यादीन् अद्याह्नि भोजयिष्ये भूयसीं च दास्ये ॥ स्वस्त्यस्तु ते० इत्याशीर्वादः॥ चरणोदकं प्रसादं च गृहीत्वा ॥ जलं गृहीत्वा अनेन पूजनेन श्रीराधिकासहितपुरुषोत्तमाद्यावाहितदेवताः प्रीयन्ताम् ॥ गीताशास्त्रपुराणकथाश्रवणादिना रात्रिं निनयेद् ॥ इति ॥

## ॥ अथ द्वितीयदिवसकृत्यम् ॥

द्वितीयेऽह्नि प्रातरुत्थाय नित्यवत् स्नात्वा नित्यकर्म समाप्य स्वासने उपविश्य ॥ आचमनप्राणायामान् कृत्वा शांतिपाठपठनपूर्वकं सुमुखश्चेति पठित्वा हस्ते जलमादाय अद्येत्यादि० कृतस्य (मल) पुरुषोत्तममासव्रतोद्यापनाख्यकर्मणः सांगतासिद्ध्यर्थं स्थापितदेवतानां यथोक्तद्रव्यैः सग्रहमख हवनाख्यं कर्माहं करिष्ये ॥ तदङ्गत्वेनाद्य द्वितीयदिने दिग्रक्षणादि स्थापितदेवतानां च यथामिलितोपचारैः पूजनमहं करिष्ये । इति संकल्प्य दिग्रक्षणादि कृत्वा गणपतिपूजनमारभ्य प्रधानदेवतान्तं पूजनं कुर्यात् । अनेन पूजनेन राधासहितपुरुषोत्तमः प्रीयताम् ॥ इति संकल्पयेत् । ततश्चतुरस्रं हस्तपरिमितं स्थण्डिलं विधाय तत्पश्चिमे उपविश्य दिग्रक्षणं पञ्चगव्यं कृत्वा (पत्र १४७–४८) कर्मभूमिं

यज्ञसंभारांश्च संप्रोक्ष्य भूमिकूर्मानन्तदेवतानांपूजनं पुष्पैर्देवागमनादिकं च विधाय स्थंडिले ब्राह्मणद्वारा पञ्चभूसंस्कारान्(१५०) कृत्वा अग्निप्रतिष्ठापनं कुर्यात्(१५०–५१) ततो नवग्रहादीनां स्थापनं(१५३-१५९) पूजनं च कृत्वा कुशकंडिकां ( १५९-१६० ) विधाय आघारावाज्यभागौ हुत्वाऽग्निपूजनं विधाय ( १६१ ) द्रव्यत्यागसंकल्पं कृत्वा वराहुतिं दत्वा ग्रहहोमान्तं कर्म कुर्यात् ॥ ततः प्रधानहोमः ॥ "ह्रीं श्रीराधासहितपुरुषोत्तमाय नमः" ॥ इति मंत्रेण समित्तिलाज्यचरुभिः वा पायसेन अयुतं ( १०००० ) वा सहस्रम् ( १००० ) आहुतीर्जुहुयात् ॥ ततः चतुर्व्यूहदेवान् आज्येन २८ अष्टाविंशतिसंख्यया परिवारादिकान् एकैकामाज्याहुतिं जुहुयात् ॥ तद्यथा वासुदेवाय० ॥२८॥ हलधराय नमः ॥२८॥ प्रद्युम्नाय० ॥ २८ ॥ अनिरुद्धाय० ॥ २८ ॥ एता (४) व्यूहदेवताः ॥ जिष्णवे० ॥ १ ॥ विष्णवे० ॥ महाविष्णवे० । हरये० । कृष्णाय० । अधोक्षजाय० । केशवाय० । माधवाय० । रामाय० । अच्युताय० । पुरुषोत्तमाय० ॥ गोविंदाय० । वामनाय० । श्रीशाय० । श्रीकंठाय० । विश्वसाक्षिणे० । नारायणाय० । मधुरिपवे० । अनिरुद्धाय० । त्रिविक्रमाय० । वासुदेवाय० । जगद्योनये० । शेषतल्पगताय० । संकर्षणाय० । प्रद्युम्नाय० । दैत्यारये० । विश्वतोमुखाय० । जनार्दनाय० । धराधराय० । श्रीधराय० । एताः परिवारदेवताः ॥ ततो मंडूकादिदेवताभ्यः(पत्र १६३) आज्येन एकैकाहुतिं जुहुयात्॥ ततो ब्रह्मादिदेवताभ्यः (पत्र१६४)आज्येनैकैकामाहुतिं जुहुयात्॥ ततः फलहोमं गुग्गुलसर्षपहोमं लक्ष्मीहोमं (१६८) च विधाय न्यूनातिरिक्तदोषपरिहारार्थमष्टोतरशत(१०८)मष्टाविंशतिर्वा(२८) संख्यया तिलद्रव्येण "अग्निवायुसूर्येभ्यो नमः" इति मंत्रेण व्याहृतिहोमं समाप्य

स्थापितदेवतानां मृडाग्रेश्चोत्तरपूजनपूर्वकं ( १६९-१८८ ) प्रणीताविमोकान्तं कर्म कृत्वा पूर्णपात्रदानादिकं वृतेभ्यो दक्षिणां दत्वा तेभ्य आशिषो गृहीत्वा अग्निं ग्रहदेवताश्च विसृज्य यथाकुलाचारं कुर्यादिति ॥

## ॥ अथ अपूपवायनदानविधिः ॥

ततः भद्रमंडलसमीपमागत्य आचम्य स्थापितदेवतानां गंधाद्युपचारैः पूजनपूर्वकं महानीराजनं कृत्वा पुष्पांजलिं समर्प्य ॥ जलमादाय ॥ अद्येत्यादि० कृतस्य कर्मणः सांगतासिद्ध्यर्थं ताम्रपात्रं तिलपूरितं रुद्रदैवतं कांस्यपात्रं घृतपूरितं सूर्यदैवतं ताम्रकलशं जलपूरितं वरुणदैवतं तथाच उमामाहेश्वरवस्त्राणि गंधपुष्पाद्यर्चितानि तथाच पददानं छत्रोपानत्कमंडलुहस्तमुद्रिकाकुंडलादिकसहितं गंधपुष्पाद्यर्चितं तथा च सुखशय्यादानं तथा च प्रत्यक्षगोदानं सवत्सं सर्वोपस्कारसहितं तथा च सुवर्णदानं शास्त्रोक्तपुण्यफलप्राप्त्यर्थम् आचार्याय दास्ये ॥ पुनर्जलमादाय ॥ अद्येत्यादि० इदं सर्वतोभद्रमंडलं दास्यमानोपस्करसहितं यजमानोपस्करसहितं गंधपुष्पाद्यर्चितं श्रीराधिकापुरुषोत्तमपदप्राप्तये आचार्याय दास्ये ॥ तदुपरि दक्षिणां दद्यात् ॥ अपूपवायनदानम् ॥ घृतहिरण्यसहितान् त्रयस्त्रिंश(३३)दपूपान् ( मालपूडा ) कांस्यपात्रे निधाय दद्यात् ॥ अद्येत्यादि० पुरुषोत्तम-(मल)मासव्रतसांगतासिद्ध्यर्थं श्रीराधापुरुषोत्तमदेवताप्रीत्यर्थमपूपवायनदानं करिष्ये ॥ तदंगभूतं ब्राह्मणपूजनं करिष्ये ॥ नमोऽस्त्वनन्ताय० श्रीजनार्दनरूपिणे ब्राह्मणाय इदमासनं पाद्यं अर्घ्यम् आचमनं गंधाः पान्त्वित्यादिना संपूज्य वायनं हस्ते गृहीत्वा ॥ "अधिमासे तु संप्राप्ते श्रीजनार्दनतुष्टये ॥ नरकोद्धारणार्थाय मया दानं प्रदीयते ॥ १ ॥ त्रयस्त्रिंशदपूपांश्च शर्कराघृतसंयुतान् ॥ सदक्षिणानहं तुभ्यं कांस्यपात्रे

निधाय च ॥ २ ॥ दास्ये जनार्दनप्रीत्यै गृहाण त्वं द्विजोत्तम ॥ मलमासस्तु मासानां मलिनः पापसंभवः ॥ तत्पापस्य विशुद्ध्यर्थं वायनं संप्रदाम्यहम् ॥ ३ ॥ इदं त्रयस्त्रिंशत्संख्यकापूपवायनदानं कांस्यपात्रस्थितं सदक्षिणाघृततांबूलसहितं सद्वस्त्रवेष्टितं तुभ्यमहं संप्रददे ॥ प्रतिगृह्यताम् ॥ 'प्रतिगृह्णामि' इति विप्रो वदेत् । एवं त्रयस्त्रिंशत्कुंभान् वंशपात्रीसहितान् नानानामगोत्रेभ्यो सपत्नीकेभ्यो विभज्य विभज्य दास्ये । इति दद्यात् ॥ यस्य स्मृत्या च० इति क्षमाप्य देवताश्च विसृज्य ब्राह्मणान् भोजयित्वा सपरिवारः स्वयं भुंजीयात् ॥

॥ इति पुरुषोत्तम (मल) मासव्रतोद्यापनविधिः ॥

---

## ॥ अथ व्यतीपातयोगव्रतम् ॥

मार्गशीर्षादिशुभमासे यदा व्यतीपातयोगस्तद्दिने नद्यादौ स्नात्वा प्रातःकर्म विधाय शुभासने चोपविश्य आचम्य प्राणानायम्य॥जलमादाय अद्येत्यादि० तिथौ ममात्मनो निरतिशयैहिकसुखप्राप्तिद्वारा सकलपापक्षयपूर्वकं दिव्यविमानारूढो गीतनृत्यविलास्यप्सरोगणैर्वीज्यमानः सकलभोगयुतकल्पकोटिसूर्यलोकनिवासोत्तरं पुत्रपौत्रादिसकलसंपत्सहितमहैश्वर्यादिगुणयुक्तराजराजत्वकामोऽमुककामो वा व्यतीपातयोगव्रतं करिष्ये ॥ पुनर्जलमादाय–तदंगभूतं गणपतिपूजनं करिष्ये ॥ इति

१ विधानं व्यतिपातस्य शृणु राजन्प्रयत्नतः ॥ द्वाविंशति– (२२) समुत्पत्तौ भ्रमणं चैकविंशतिः (२१) ॥ पतने दशनाड्यस्तु (१०) पतिते सप्तनाडिका (७) ॥ यत्फलं लक्षमुत्पत्तौ भ्रमणे कोटिरुच्यते ॥ पतने दशकोट्यस्तु पतिते दत्तमक्षयम् ॥ आकृतिर्मूर्च्छना काष्ठा शैलतुल्याश्च नाडिकाः ॥ लक्षकोट्यर्बुदगुणमनन्तं स्याद्यथाक्रमम् ॥ व्यतीपातविभागेषु दानमुक्तं नृपोत्तमम् ॥ इति वाराहे ॥

संकल्प्य पूर्ववत् गणपतिं संपूज्य ॥ शुद्धभूमौ पचरंगोपेतकमले विश्वाधारासीत्यादिना शर्करापूरित ताम्रकलशं प्रतिष्ठाप्य तत्र ताम्रमये पूर्णपात्रे कांचनाब्जे अष्टादशभुजं कांचन व्यतीपातविग्रहं नाममंत्रेण प्रतिष्ठाप्य यथालाभोपचारैः संपूजयेत् ॥ तत पंचरत्नान्वितपुष्पांजलिं दद्यात् ॥ तत्र मंत्रः ॥ नमस्तेऽस्तु व्यतीपात सोमसूर्यसुत प्रभो ॥ यज्ज्ञानादिव्रतं किंचित्तदनन्तमिहास्तु मे ॥ पुष्पांजलिं दत्वा ॥ यथाशक्ति सुवर्णादि दत्त्वा पुराणपठनादिना रात्रिं निनयेत् ॥ तद्दिने उपवासः ॥

प्रातर्देवं संपूज्य सपत्नीकं द्विजं च संपूज्य तत्पीठं सुवर्णसहितं तस्मै दत्वा ब्राह्मणभोजनपुरःसरं स्वय भुंजीत ॥ "कुर्यादेवं मासि मासि व्यतीपातास्त्रयोदश ॥ चतुर्दशे व्यतीपाते कुर्यादुद्यापनं शुभम्" ॥ इति ॥

## ॥ अथ व्यतीपातव्रतोद्योपनविधिः ॥

तत्रादौ नद्यादौ गत्वा स्नात्वा देहशुद्धिप्रायश्चित्तं कृत्वा स्नानं विधाय गृहमागत्य प्रातःकर्म समाप्य शुभासने उपविश्य आचम्य प्राणानायम्य जलमादाय अद्येत्यादि० तिथौ ममात्मनो निरतिशयैहिकसुखप्राप्तिद्वारा सकलपापक्षयपूर्वकं दिव्यविमानारूढो गीतनृत्यविलासप्सरोगणैर्वीज्यमानः सकलभोगयुतकल्पकोटिसूर्यलोकनिवासोत्तरं पुत्रपौत्रादिसकलसंपत्सहितमहैश्वर्यादिगुणयुक्तराजराजत्वकामोऽमुक्कामो वाऽहं मया आचरितस्य आचरिष्यमाणस्य व्यतीपातव्रतस्य सांगतासिद्धये तदुद्यापनाख्यं कर्म करिष्ये ॥ पुनर्जलमादाय—तदङ्गभूत दिग्रक्षणं कलशाराधनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नान्दीश्राद्धम् आचार्यादिवरणं सर्वतोभद्रमंडले देवता-

---

"नारदपुराणमां व्यतीपातना उद्यापनमां प्रधानदेवनी जग्याए लक्ष्मीनारायणनुं स्थापनपूजन लख्युं छे"

स्थापनादीनि च करिष्ये ॥ इति संकल्प्य दिग्रक्षणादिब्राह्मणवरणान्तं कर्म (६-४९) कृत्वा ॥ सर्वतोभद्रमंडले देवतानां स्थापनं (९९-१०७) पूजनं कृत्वा ॥ मध्ये शर्करापूरितं ताम्रकलशं संस्थाप्य तदुपरि क्षौमवस्त्रं प्रसार्य तत्र सुवर्णपद्मं निधाय वा चंदनेन पद्मं विलिख्य मंडूकादिपीठदेवता आवाह्य ( १०७-१०८ ) संपूज्य ॥ ततः कृताग्न्युत्तारणप्राणप्रतिष्ठम् अष्टादशभुजं सुवर्णमयं व्यतीपातविग्रहं पद्मे संस्थाप्य ध्यायेत् ॥ शंखवर्णं प्रलंबोष्ठं लंबभ्रूदीर्घनासिकम् ॥ अष्टनेत्रं चतुर्वक्त्रं भुजैरष्टादशैर्युतम् ॥ १ ॥ इति ध्यात्वा शतयोजनविस्तीर्णं सोमसूर्यसुतं ध्रुवम् ॥ इहागत्य गृहाणार्चां सोमसूर्यसुत प्रभो ॥ २ ॥ इति आवाह्य प्रतिष्ठाप्य ॥ "ह्रीं व्यतीपाताय नमः" इति मूलमंत्रेण आसनादिमंत्रपुष्पांजलिपर्यन्तं पूजनं कार्यम् ॥ ततः स्तुतिपाठः ॥ वंदे व्यतीपातमहं महान्तं रवीन्दुसूनुं सकलेष्टसिद्ध्यै ॥ समस्तपापस्य मम क्षयोऽस्तु पुण्यस्य वृद्धिर्मम सर्वदाऽस्तु ॥ इति स्तुतिपाठं पठित्वा ॥ विशेषार्घः ॥ व्यतीपात दिने देव तव सर्वं समर्पितम् ॥ भवत्वनन्तफलदं मम जन्मनि जन्मनि ॥ व्यतीपाताय नमः विशेषार्घं सम० ॥ नमस्तेऽस्तु व्यतीपात सोमसूर्यसुत प्रभो ॥ यद्दानादिव्रतं किंचित्तदनन्तमिहास्तु मे ॥ व्यतीपाताय० प्रार्थनापूर्वकं नमस्कारं सम० ॥ अनेन पूजनेन व्यतीपातः प्रीयताम् न मम ॥ तत आचार्यं संपूज्य भूयसीं च दत्त्वा आशिषो गृह्णीयात् ॥ ततः पुराणपठनादिना रात्रिं निनयेत् ॥ इति ॥

॥ अथ द्वितीयदिवसकृत्यम् ॥

द्वितीयदिने प्रातर्नित्यकर्म समाप्य गणपत्यादिपूजनं कृत्वा स्थंडिलं कृत्वा दिग्रक्षणं पञ्चगव्यकरणं प्रोक्षणं भूम्यादिपूजनं देवतागमनादि कृत्वा पञ्चभूसंस्कारपूर्वकम् अग्निस्थापनं कुर्यात् ॥

(१४७–१६१) अग्निं संस्थाप्य ग्रहाणां स्थापनं पूजनं (१५३–१६०) कुशकंडिकां विधाय अघारावाज्यभागौ हुत्वा ग्रहहोमान्तं कर्म कृत्वा प्रधानहोमं कुर्यात् ॥ अत्र प्रधानं देवं व्यतीपातं क्षीरवृक्षसमिदाज्य-पयःफलम् इति द्रव्यचतुष्टयेन प्रत्येकमष्टोत्तरशतसंख्यया "ह्रींव्यतीपाताय नमः" इति मूलमंत्रेण जुहुयात् ॥ ततो मंडूकादिदेवताभ्यो (६१) ब्रह्मादिदेवताभ्य (६६) श्चैकैकाज्याहुतिं जुहुयात् ॥ ततः "अग्निवायुसूर्येभ्यो नमः" इत्यष्टोत्तरसंख्यया तिलद्रव्येण व्याहृतिहोमं समाप्य स्थापितदेवतानां मृडाग्नेश्चोत्तरपूजनं विधाय (१६९–१८८) प्रणीताविमोकान्तं कर्म कुर्यात् ॥ पूर्णपात्रदानादिकं च कृत्वा पूर्ववदाचार्यं संपूज्य तस्मै सोपस्करं पीठं दत्त्वा वृतेभ्यो दक्षिणादिकं च दत्त्वा तेभ्यः आशिषो गृहीत्वा ब्राह्मणान् संभोज्य स्वयं भुंजीत ॥

॥ इति व्यतीपातव्रतोद्यापनम् ॥

---

## ॥ अथ सोमवतीव्रतम् ॥

अथ सोमवतीव्रतविधिः॥ शुभासने उपविश्य आचम्य प्राणानायम्य ॥ अद्येत्यादि० तिथौ मम अस्यां सोमवत्यमायां सकलपापक्षयार्थं पुत्रपौत्राद्यभिवृद्ध्यर्थं जन्मजन्मनि अवैधव्यसन्ततिचिरंजीवितपरमसौभाग्यप्राप्तिकामा अश्वत्थमूले लक्ष्मीसहितब्रह्मशिवसहिताश्वत्थनारायणप्रीत्यर्थं विष्णुपूजां तदंगतया कलशपूजनं च करिष्ये ॥ शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभांगं लक्ष्मीकान्तं कमलनयनं योगिभिर्ध्यानगम्यं वंदे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ १ ॥ इति ध्यात्वा ॥ अक्षतान् गृहीत्वा ॥

---

१ आकडानी समिध ॥ १ सोमवारवाळी अमावास्या

विश्वव्यापकविश्वेश कृपया दीनवत्सल ॥ मयोपपादितां पूजां गृहाणेमां हि माधव ॥ लक्ष्मीसहितब्रह्मशिवसहिताश्वत्थनारायणाय० आवाहनं सम० ॥ व्यक्ताव्यक्तस्वरूपाय सृष्टिस्थित्यन्तकारिणे ॥ आदिमध्यान्तहीनाय विष्टरश्रवसे नमः ॥ मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ॥ अग्रतः शिवरूपाय अश्वत्थाय नमो नमः ॥ इति मंत्राभ्यां वा नाममंत्रेण आसनादिपुष्पांजलिपर्यन्तं पूजनं कृत्वा चतस्रः प्रदक्षिणाः कार्याः ॥

---

## ॥ अथ अमासोमपूजा ॥

अमायै च नमस्तुभ्यं सोमाय च नमोनमः ॥ उभयोः संगमे विष्णुपूजाफलमवाप्नुयात् ॥ अनेन मंत्रेण वा "सोमवत्यमायै नमः" इति मूलमंत्रेण यथालाभोपचारैः अश्वत्थोपरि पूजनं कुर्यात् ॥ ततो ब्राह्मणं संपूज्य ततो अश्वत्थस्य अष्टोत्तरशतं १०८ प्रदक्षिणाः कार्याः ॥ तत्र मंत्रः ॥ "मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ॥ अग्रतः शिवरूपाय अश्वत्थाय नमो नमः" ॥ इति मंत्रेण अश्वत्थं (पीपलो) प्रदक्षिणीकुर्यात् ॥ ततो वायनदानम् ॥ अमासोमव्रतस्यास्य संपूर्णफलहेतवे ॥ वायनं द्विजवर्याय सहिरण्यं ददाम्यहम् ॥ इति फलादिवस्तूनां दानम् ॥ ततः "यन्मया मनसा वाचा नियमात् पूजनं कृतम् ॥ सर्वं संपूर्णतां यातु तद्विष्णोश्च प्रसादतः" ॥ इति संप्रार्थ्य ॥ पुनरश्वत्थे विष्णुं गंधादिना पूजयेत् ॥ ब्राह्मणपूजनपूर्वकं दक्षिणां दत्वा आशिषो गृह्णीयात् ॥ अनेन कर्मणा श्रीलक्ष्मीसहितब्रह्माविष्णुशिवसहितः अश्वत्थनारायणः प्रीयताम् ॥ इति सोमवत्यमावास्याव्रतम् ॥

---

[1] सोमवती अमावास्याने दिवसे पीपळानीज प्रदक्षिणा करवी. केटलांक तुलसीनी पण करे छे.

## ॥ अथ अर्द्धोदयपर्वविधिः ॥

पौषामावास्यायां अर्द्धोदययोगः॥ अमाऽर्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः ॥ अर्द्धोदयः स विज्ञेयः कोटिसूर्यग्रहैः समः ॥ १ ॥ किंचिन्न्यूनं महोदय इति चतुर्थपदं केचित्पठन्ति ॥ पोषमाघयोर्मध्यवर्तिनीत्यर्थ इत्येके ॥ दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन ॥ अर्द्धोदये तु संप्राप्ते सर्वं गंगासमं जलम् ॥ २ ॥ शुद्धात्मनो द्विजाः सर्वे भवेयुर्ब्रह्मसन्निभाः॥ यत्किंचिद् दीयते दानं तद्दानं मेरुसन्निभम् ॥

॥ इति अर्द्धोदयपर्वयोगः ॥

---

## ॥ अथ मकरसंक्रान्तिविधिः ॥

दिवा मकरसंक्रमणे मकरसंक्रान्त्यनन्तरं चत्वारिंशन्नाड्यः पुण्याः॥घटिकाद्यल्पदिनशेषे मकरसंक्रान्तौ संक्रान्त्यासन्नपूर्वकाले दिवैव स्नानश्राद्धदानभोजनानि कार्याणि ॥ रात्रौ श्राद्धदानादेर्निषेधात्स्वल्पदिनभागे स्नानश्राद्धभोजनादेः कर्त्तुमशक्यत्वाद्रात्रौ भोजननिषेधात्पुत्रवद्गृहिण उपवासनिषेधाच्च । तस्मादीदृशे विषये परपुण्यकालत्वं बाधित्वा मकरसंक्रान्तेः पूर्वभाग एव पुण्यत्वं ज्ञेयम् ॥ रात्रौ पूर्वभागे परभागे निशीथे वा मकरसंक्रमे उत्तरदिनं पुण्यम् तत्राप्युत्तरदिनपूर्वार्द्धं पुण्यतरम् ॥ तत्रापि सूर्योदयोत्तर पंचनाड्यः पुण्यतमाः ॥

अत्र कृत्यम् ॥ रविसंक्रमणे प्राप्ते न स्नायाद्यस्तु मानवः ॥ सप्तजन्मनि रोगी स्यान्निर्धनश्चैव जायते ॥ इति वचनान्मनुष्यमात्रस्य स्नानमावश्यकम्॥ एवं श्राद्धमप्यधिकारिणो नित्यम्॥ तच्च अपिण्डकम्॥ अयनसंक्रान्तौ त्रिदिनमुपवासः॥ अयमुपवासःसापत्यगृहस्थेन न

कार्यं॥धेनुं तिलमयीं राजन् दद्याच्चैवोत्तरायणे॥ तिलतैलेन दीपाश्च देयाः शिवगृहे शुभाः॥ सतिलैस्तंडुलैश्चैव पूजयेद्विधिवच्छिवम्॥ तस्यां कृष्णतिलैः स्नानं कार्यं चोद्वर्तनं तिलैः॥ तिला देयाश्च होतव्या भक्ष्याश्चैवोत्तरायणे॥ शुक्लतिलैर्देवतर्पणम्॥ कृष्णतिलैः पितृतर्पणम्॥ अस्मिन्दिने शिवोपरि घृताभिषेके महाफलम्॥ अत्र सुवर्णयुतं तिलताम्रपात्रं देयम्॥ अत्र शिवपूजाव्रतम्॥ पूर्वदिने उपोष्य संक्रांतिदिने तिलोद्वर्तनतिलस्नानतिलतर्पणानि कृत्वा शिवं गव्येनाज्येन मर्दयित्वा शुद्धोदकेन प्रक्षाल्य वस्त्राद्युपचारैः पूजयित्वा सुवर्णहीरकनीलपद्मरागमौक्तिकामिति पंचरत्नानि कर्षार्धतः सुवर्णं समर्प्य तिलदीपैः ससुवर्णैर्वा साक्षतैस्तिलैः संपूज्य घृतकम्बलं दत्वा वितानचामरे समर्प्य विप्रेभ्यः ससुवर्णतिलान् दत्वा तिलान् हुत्वा विप्रान्यतींश्च संभोज्य दक्षिणां दत्वा सतिलं पञ्चगव्यं पीत्वा पारणं कुर्यात्॥ अत्र वस्त्रदाने महाफलम्॥ दधिमंथनदानमप्युक्तम्। विशेषो व्रतराजे॥ तिलपूर्वमनड्वाहं दत्वा रोगैः प्रमुच्यते॥ अत्र क्षीरेण भास्करं स्नापयेत् सूर्यलोकप्राप्तिः॥ अयनादिनं तत्परं करिसंज्ञकं च दिनं शुभेषु वर्ज्यमित्युक्तम्॥ तत्रार्द्धरात्रादर्वागयनसंक्रान्तौ तद्दिनं तत्परदिनं च वर्ज्यम्॥ इति मकरसंक्रमणविधिः॥

---

## ॥ अथ ग्रहणविषयकनिर्णयः ॥

चन्द्रसूर्यग्रहणं यावच्चाक्षुपदर्शनयोग्यं तावत्पुण्यकालः॥ मेघादिप्रतिबंधेन चाक्षुपदर्शनासंभवे शास्त्रादिना स्पर्शमोक्षकालौ ज्ञात्वा स्नानदानाद्याचरेत्॥ रविवारे सूर्यग्रहणं चंद्रवारे चंद्रग्रहणं चूडामणिसंज्ञकं तदा दानादिकेनानन्तफलम्॥ अत्र गोभूहिरण्यधान्यादिदानं महाफलदम्॥ तपोविद्योभययुक्तं मुख्यं दानपात्रम्॥ सत्पात्रे दानात्पुण्यातिशयः॥

सर्वं गंगासमं तोयं सर्वे व्याससमा द्विजाः ॥ सर्वं भूमिसमं दानं ग्रहणे चंद्रसूर्ययोः ॥ चन्द्रसूर्योपरागे च स्नात्वा पूर्वमुपोषितः ॥ स्पर्शादिमोक्षपर्यन्तं जपेन्मंत्रं समाहितः ॥

ग्रहणे विधिः–स्पर्शकालात्पूर्वं स्नात्वा अद्येत्यादि०–अमुकगोत्रः अमुकोहं राहुग्रस्ते दिवाकरे (निशाकरे वा) अमुकदेवताया अमुकमंत्रसिद्धिकामो ग्रासादिमुक्तिपर्यन्तम् अमुकमंत्रस्य जपरूपं पुरश्चरणं करिष्ये ॥ आसनबंधनन्यासादिकं च स्पर्शात्पूर्वमेव विधाय स्पर्शादिमोक्षपर्यन्तं मूलमंत्रजपं कुर्यात् ॥ पुरश्चरणमकुर्वद्भिरपि गुरूपदिष्टः स्वस्वेष्टदेवतामन्त्रजपः कार्यः ॥ ग्रहणकाले शयने कृते रोगोद्भवः ॥ मूत्रे दारिद्र्यम् । पुरीषे कृमिः ॥ मैथुने ग्रामसूकरजन्मप्राप्तिः ॥ अभ्यंगे कुष्ठी ॥ भोजनकृते तु नरके वासः ॥ पूर्वं पकान्नं ग्रहणोत्तरं त्याज्यम् ॥ एव ग्रहणकालस्थितजलपाने पादकृच्छ्राभिधानात् जलमपि त्याज्यम् ॥ कांजिकं तक्र घृततैलपाचितमन्नं क्षीरं च पूर्वसिद्धं ग्रहणोत्तरं ग्राह्यम् ॥ घृते संचिते गोरसेषु ग्रहणकाले कुशान्तरायं कुर्यात् ॥

अथ ग्रहणवेधविचारः ॥ सूर्यग्रहे ग्रहणप्रहरादर्वाक् यामचतुष्टयम् वेधः ॥ चंद्रग्रहे तु प्रहरत्रयम् ॥ बालवृद्धातुरविषये तु सार्द्धप्रहरात्मको मुहूर्तत्रयात्मको वा वेधः ॥ शक्तस्य वेधकाले भोजने त्रिदिनमुपोषणं प्रायश्चित्तम् ॥ जन्मराशेः सकाशात् फलम् ॥ त्रिषड्दशायोपगतं नराणां शुभप्रदं स्याद् ग्रहणं रवीन्द्वोः ॥ द्विसप्तनंदेषु च मध्यमं स्यात् शेषेष्वनिष्टं मुनयो वदन्ति ॥ पक्षान्तरे ॥ ग्रासात्तृतीयोष्टमगश्चतुर्थस्तथाऽऽयसंस्थः शुभदः स्वराशौ ॥ ग्रासाद्द्विः पंचनवर्तुमध्यस्ततोधमोऽन्यो विबुधैः प्रदिष्टः ॥ इति फलम् ॥ यस्य जन्मराशौ जन्मनक्षत्रे वा ग्रहणं तस्य विशेषतोऽनिष्टप्रदम् । तेन गर्गाद्युक्ता शान्तिः कार्या ॥

अथवा बिम्बदानं कार्यम् । यथा—चन्द्रग्रहे रजतमयं बिम्बं सुवर्णमयं नागबिम्बं च कृत्वा सूर्यग्रहे सौवर्णं सूर्यबिम्बं च कृत्वा घृतपूर्णे ताम्रपात्रे कांस्यपात्रे वा निधाय तिलवस्त्रदक्षिणासाहित्यं संपाद्य अद्ये० मम जन्मराशिजन्मनक्षत्रस्थितामुकग्रहसूचितसर्वानिष्टप्रशांतिपूर्वकमेकादशस्थानास्थितग्रहसूचितशुभफलावाप्तये ग्रहणनिमित्तं बिम्बदानमहं करिष्ये॥इति संकल्प्य सूर्यचन्द्रं राहुं वा ध्यात्वा नमस्कृत्य॥ तमोमयमहाकाय सोमसूर्यविमर्दन ॥ हेमतारप्रदानेन मम शांतिप्रदो भव ॥ विधुन्तुद नमस्तुभ्यं सिंहिकानन्दनाच्युत ॥ दानेनानेन नागस्य रक्ष मां वेधजाद्भयात् ॥ इति मन्त्रमुच्चार्य इदं सौवर्णं राहुबिम्बं नागं सौवर्णं रविबिम्बं राजतं चन्द्रबिम्बं च घृतपूर्ण(ताम्र)कांस्यपात्रनिहितं यथाशक्ति तिलवस्त्रदक्षिणासहितं ग्रहणसूचितारिष्टविनाशार्थं शुभफलप्राप्त्यर्थं च तुभ्यमहं संप्रददे । इति पूजितब्राह्मणाय दद्यात् ॥ एवं चतुर्थाद्यनिष्टस्थानेष्वपि दानं देयम् ॥ खंडग्रहणे तु चतुर्दश्यादि दिनत्रयं वर्ज्यम् ॥ ग्रस्तास्ते पूर्व दिनत्रयं वर्ज्यम् ॥ ग्रस्तोदये परं दिनत्रयं वर्ज्यम् ॥ पूर्वसंकल्पितस्य द्रव्यस्य ग्रहणोत्तरं दाने तद् द्विगुणं देयं भवति ॥ इति ग्रहणनिर्णयः ॥

---

## ॥ अथ गंगापूजनम् ॥

कृतनित्यक्रियः सपत्नीको यजमानः श्रीपर्णादिदारुनिर्मितपीठोपरि उपविश्य ॥ आचम्य प्राणानायम्य ॥ शान्तिपाठपाठनपूर्वकं देवगुरुब्राह्मणान्नमस्कृत्य सुमुखश्चेत्यादि पठित्वा ॥ जलमादाय ॥ अद्येत्यादि० तिथौ ममात्मनः कायिकाद्यखिलपापनिरासार्थं तथा च करिष्यमाणगंगापूजनकर्मण्यधिकारार्थं त्रीन् संख्यांकान् प्राजापत्यान्

प्रतिगोन्यक्तिपादकृच्छ्रपरिमितद्रव्येण रजतमत्याम्नायद्वारा वा व्यावहारिकद्रव्येणाहमाचरिष्ये ॥ तेन करिष्यमाणकर्मण्यधिकारसिद्धिरस्तु ॥ पुनर्जलमादाय ॥ अद्येत्यादि० तिथौ अस्मिन्पुण्याहे श्रीतत्सत्परमेश्वरप्रीत्यर्थ ममात्मनः पुराणोक्तफलप्राप्त्यर्थं कायिकाद्यखिलपापशमनपूर्वकं पितृमातृतश्च दशपूर्वान् दशापरान् आत्मना सह एकविंशतिपुरुषानुद्धर्तुं चतुर्विधपुरुषार्थसिद्ध्यर्थं च [ श्रीवेणीमाधवतीर्थराजश्रीगयाक्षेत्रस्थ—गदाधर—श्रीविष्णुपदादिश्रीविरजाक्षेत्रस्थ-श्रीरत्नाकरस्नानादिपूर्वकश्रीजगदीशपूजनकाशीक्षेत्रस्थश्रीपरमेश्वरमाणिकर्णिकादिसंभाविताद्यनेकतीर्थ—अयोध्यादि—चित्रकूटस्थ—श्रीरामचंद्रक्षेत्रकृतमदक्षिणादेवपूजनपूर्वकमार्गान्तर्गतश्रीमधुपूर्वाद्यखिलभूमिपर्यटनश्रीगोवर्धनश्रीयमुनान्तर्गतश्रीराधाकृष्णवृंदावननिवासपूर्वकश्रीमहाकाल-ओंकार—अमलेश्वरवृद्धगोटा-त्र्यंबकेश्वर—रामक्षेत्रादि ] तीर्थदेवताप्रीत्यर्थं सकुटुंबपरिवारसहितैः अस्माभिः कृताया महायात्रायाः संपूर्णफलावाप्त्यर्थं गृहीतगंगादीनां यथामिलितोपचारैर्द्रव्यैः गंगापूजनाख्यं कर्म करिष्ये ॥ तदंगभूतं दिग्रक्षणं कलशाराधनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नांदीश्राद्धं ब्राह्मणवरणं च करिष्ये इति संकल्प्य दिग्रक्षणादि ब्राह्मणवरणान्तं ( ६—४५ ) कर्म कुर्यात् ॥ ततः पीठोपरि श्वेतवस्त्रं प्रसार्य तदुपरि श्वेताक्षतैरष्टदलं विरच्य ॥ तदुपरि गंगाजलकलशं संस्थाप्य हस्ते पुष्पं गृहीत्वा ध्यायेत् ॥ विश्वेशं माधवं ढुंढिं दंडपाणिं च भैरवम् ॥ वंदे काशीं गुहां गंगां भवानीं मणिकर्णिकाम् ॥१॥ सितमकरनिषण्णां शुभवर्णां त्रिनेत्रां करधृतकलशां तां सोत्पला—

१ केवल स्त्रीपक्षे मातृकापूजन नांदीश्राद्ध न करवुं अने पंचवाक्य पुण्याहवाचन करवुं

मत्यभीष्टाम् ॥ विधिहरिहररूपां सेन्दुकोटीरजुष्टां कलितसितदुकूलां जाह्नवीं त्वां नमामि ॥ २ नमामि गंगे तव पादपंकजं सुरासुरैर्वंदितदिव्यरूपम् ॥ भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम् ॥ ३ ॥ त्रिपथगामिन्यै गंगायै नमः ध्यायामि ॥ इति॥१॥

॥ अथ गंगादितीर्थानामावाहनम् ॥

तत्रादौ गंगाजलकलशं समीपे संस्थाप्य तत्र तीर्थान्यावाहयेत् ॥ एह्येहि गंगे दुरितौघनाशिनि झषाधिरूढे उदकुंभहस्ते ॥

---

१. काशी कुशस्थली मायाऽवन्त्ययोध्या मधोः पुरी ॥ शालीग्रामं च गोकर्णं नर्मदा च सरस्वती ॥१॥ झषारूढा सरोजाक्षी पद्महस्ता शशिप्रभा॥ आगच्छन्तु सरिज्जेष्ठा गंगा पापप्रणाशिनी ॥२॥ नीलोत्पलदलश्यामपद्महस्तांबुजेक्षणा॥ आयान्तु यमुना देवी कूर्मयानस्थिता सदा ॥३॥ प्राची सरस्वती पुण्या पयोष्णी गौतमी तथा ॥ उर्मिला चन्द्रभागा च सरयूर्गंडकी तथा ॥ ४ ॥ जंबुका च शतद्रुश्च कलिका सुप्रभा तथा ॥ वितस्ती च विपाशा च शर्मदा च पुनः पुनः ॥ ५ ॥ गोदावरी महावर्ता शर्करावर्तमार्जुनी ॥ कावेरी कौशिकी चैव तृतीया च महानदी ॥ ६ ॥ विटंका प्रतिकूला च सोमनंदा च विश्रुता ॥ करतोया वेत्रवती देविका वेणुका च या ॥ ७ ॥ आत्रेयगंगा वैतरणी काश्मिराल्हादिनी तथा ॥ श्रावनी च शमत्रासा कल्माषा संदिनी तथा ॥ ८ ॥ वशिष्ठा च ह्यपाख्या च सिंधुवत्यारुणी तथा ॥ ताम्रा चैव त्रिसंध्या च तथा मंदाकिनी परा ॥९॥ तैलिका हि च पारा च दुंदुमा नकुली तथा । नीलगंधा च पोधा च पूर्णचंद्रा शशिप्रभा ॥ १० ॥ अमरेशं प्रभासं च नैमिषं पुष्करं तथा॥ आषाढिं दुंढिमारत्नं भारभूत चलाकुलम् ॥ ११ ॥ हरिश्चंद्रं परं गुह्यमध्यमंकेश्वरं तथा ॥ श्रीपर्वतं समाख्यातं ज्वालेश्वरमतःपरम् ॥ १२ ॥ आम्रातकेश्वरं चैव महाकालेश्वरं तथा ॥ केदारमुत्तमं गुह्यं महाभैरवमेव च ॥ १३ ॥ कुरुक्षेत्रं गया चैव गुह्यकं नखलं तथा ॥ विमलं चंद्रहासं च माहेन्द्र भीममष्टमम् ॥ १४ ॥ वस्त्रादं रुद्रकोटिं च

श्रीविष्णुपादांबुजसंभवे त्वं पूजां गृहीतुं शुभदे नमस्ते ॥ श्रीत्रिपथगामिन्यै गंगायै० आवाहनं सम० ॥२॥ सिंहांकितस्वर्णपीठं नानारत्नोपशोभितम् ॥ अनेकशक्तिसंयुक्तमासनं प्रतिगृह्यताम् ॥ श्रीत्रिपथगा० गं० आसनं स०॥३॥ पाद्यम् ॥ पाटलोशीरकर्पूरसुरभिस्वादु शीतलम्॥ तोयमेतत् सुखस्पर्शं पाद्यार्थं प्रतिगृह्यताम्॥ श्रीत्रिपथ० गं० पाद्यं० स०॥ ॥४॥ अर्घ्यम्॥ अर्घ्यं गृहाण देवेशि गंधपुष्पाक्षतैः सह॥ पुण्यदं शंखतोयाक्तं मया तुभ्यं निवेदितम्॥ श्रीत्रिपथ० गं० अर्घ्यं स०॥५॥ आचमनम् ॥ गंगादिसर्वतीर्थेभ्यो मया प्रार्थनया हृतम् ॥ तोयमाचमनीयार्थं देवेशि प्रतिगृह्यताम् ॥ श्रीत्रिपथ०गं० आच०स०॥६॥ स्नानं० गंगा च गोदा सरयूश्च सिंधुः सरस्वती सूर्यसुता च रेवा॥ कालिंदिका स्नानविधौ समस्ता आयान्तु पुण्याः सरितां प्रवाहाः ॥ गंगा च यमुना चैव नर्मदा च सरस्वती ॥ तापी पयोष्णी ताभ्यश्च जलं स्नानार्थमाहृतम् ॥ ॥२॥ श्रीत्रिपथ० गं० स्नानं स०॥७॥ [पंचामृतस्नानम् ॥ कामधेनु० । पयः स्ना० स० ॥ १ ॥ पयसस्तु०। दधिस्ना० स० ॥ २ ॥ नवनीतस०। घृतस्ना० स० ॥ ३ ॥ तरुपुष्प० । मधुस्ना० स० ॥ ४ ॥ इक्षुसार० । शर्करास्ना० स० ॥५॥] पयोदधि घृतं चैव मधुशर्करयान्वितम् ॥ पंचामृतेन देवेशि स्वीकुरु स्नानमुत्तमम् ॥ श्रीत्रिपथ० गं० पंचामृतस्ना० स०॥८॥ मधुपर्कस्ना०। दधिक्षीरं घृतं चैव मधुखण्डाविनि-

---

अविमुक्त महालयम् ॥ गोकर्णं भद्रकर्णं च माहेशं स्थानमुत्तमम् ॥ १५ ॥ छागलांदं द्विरंडं च कर्कोटं मंडलेश्वरम् ॥ कालंजरवनं चैव देवदारुवनं तथा ॥ १६ ॥ शंकुकर्णं तथैवेह स्थलेश्वरमतः परम् ॥ एता नद्यश्च तीर्थानि गुह्यक्षेत्राणि सर्वशः ॥ तीर्थान्येतानि कुंभेऽस्मिन् विशन्तु ब्रह्मशासनात् ॥ १७ ॥ इति ॥

र्मितम् ॥ तुष्ट्यर्थं तव देवेशि मधुपर्कं ददाम्यहम् ॥ श्रीत्रिपथ० गं० मधुप० स्ना० स०॥९॥ अभ्यंगस्नानम् ॥ अभ्यंगार्थं च हे गंगे तैलं पुष्पादिसंभवम्॥ सुगंधद्रव्यसमिश्रं संगृहाण महेश्वरि॥ श्रीत्रिपथ०गं० अभ्यंगस्ना०स०॥१०॥उद्व०स्ना०–अंगोद्वर्त्तनकं देवि कस्तूर्यादिविमिश्रितम्॥ लेपनार्थं गृहाणेदं हरिद्राकुंकुमैर्युतम् ॥ श्रीत्रिपथ० गंगायै० अंगोद्वर्त्तनस्नानं सम०।११। ततः पंचोपचारैः संपूज्य ।उत्तरे निर्माल्यं विसृज्य पुनः संपूज्य "महिम्नः पारं ते०" (पृ.३९२) इति स्तोत्रेण एकादशावृत्त्या महाभिषेकं कुर्यात् ॥ शुद्धोदकस्नानम् ॥ सर्वतीर्थात्समुद्धृत्य गंधतोयं कुशोदकम्॥ स्नानार्थं ते मया दत्तं गृहाण परमेश्वरि ॥ श्रीत्रिपथ० गं० शुद्धो० स्ना०स० ॥१२॥ वस्त्रे ॥सूक्ष्मतंतुमयं वस्त्रं कार्पासेन विनिर्मितम्॥मयोपपादितं तुभ्यं वासोयुग्मं प्रगृह्यताम्॥ श्रीत्रिपथ०गं०वस्त्रयु० स०१३ आभरणानि॥अनेकरत्नखचितं सर्वाभरणभूषितम्।गृहाण भूषणं देवि इष्टसिद्धिं च देहि मे ॥ श्रीत्रिपथ०गं० आभ०स०॥ गंधः–गोरोचनं चंदनदेवदारुकर्पूरकृष्णागरुनागरात्तः॥कस्तूरिकाकेसरमिश्रगंधो यथोचितं देवि मयाऽर्पितस्ते॥ श्रीत्रिपथ० गं० गन्धं स० ॥१४॥ अक्षताः ॥ अक्षताश्च०। श्रीत्रिपथ० गं० अक्षतान् स०॥१५॥ पुष्पाणि ॥ करवीरैर्जातीकुसुमैश्चंपकैर्बकुलैः शुभैः ॥ शतपत्रैश्च कल्हारैरर्चयेत्परमेश्वरीम् ॥ श्रीत्रिपथ० गं० पुष्पाणि स० ॥ १६ ॥

"अथांगपूजा" चन्द्रिकायै० पादौ पूजयामि ॥ चन्द्रकान्तायै० जंघे पूज० ॥ चंचलायै० कटी पूज० ॥ चलद्युत्यै० नाभिं पूज० ॥ चिन्मयायै० हृदयं पूज० ॥ चित्तिरूपिण्यै० स्तनौ पूज० ॥ चंद्रायुतशताननायै० भुजौ पूज० ॥ कमलपाण्यै० हस्तौ पूज० ॥ कंबुग्रीवायै० कंठं पूज० ॥ भवान्यै० मुखं पूज०॥ चांपेयलोचनायै० नेत्रे

पूज० ॥ चार्वंगिन्यै० कर्णौ पूज० ॥ चारुगामिन्यै० नासिकां पूज० ॥ आर्यायिन्यै० ललाटं पूज० ॥ चारित्रनिलयायै० शिरः पूज० ॥ गंगायै० सर्वांगं पूजयामि ॥

अथावरणपूजा ( पूर्वादिदिक्षु ) नंदिन्यै०। नलिन्यै०। सितायै०। मालत्यै० । मलापहंत्र्यै० । विष्णुपादाब्जसंभूत्यै० । गंगायै० । त्रिपथगामिन्यै० । भागीरथ्यै० । भगवत्यै०। जाह्नव्यै०। त्रिदशेश्वर्यै०॥ हस्ते पुष्पांजलिं गृहीत्वा। अभीष्टसिद्धिं मे देहि०॥अनेन पूज०आ०दे०प्रीय०॥

यथावकाशेन गंगासहस्रनामभिः बिल्वदलार्पणं कुर्यात् ॥ ततः श्वेतचूर्णं०। श्रीत्रिप० गं० सौ० स०॥१७॥ वनस्पति०। श्रीत्रिपथ०गं० धूपमा०॥१८॥ साज्यं च० श्रीत्रिपथ० गं०दीपं द० ॥१९॥ शर्करा०। श्रीत्रिप० गं० नैवे० निवे०॥ प्राणा० स्वाहा इत्यादिकं कुर्यात्॥२०॥ पूगीफलं०। श्रीत्रिप० गं० पूगी०ता०स०॥२१॥हिरण्यगर्भ०। श्रीत्रिप० गं० हिरण्यद० स० ॥२२॥ ततो महानीराजनं कुर्यात् ॥ निराजनदीपं प्रज्वाल्य संपूजयेत् ॥

जयदेवि जयदेवि जयमोहिनिरूपे ( २ ) मामिह जननि समुद्धर (२) पतितं भवकूपे ॥ जय० ध्रुव ॥ प्रवरातीरनिवासिनि निगमप्रतिपाद्ये (२) पारावारविहारिणि (२) नारायणि हृद्ये ॥ प्रपंचसारे जगदाधारे श्रीविद्ये (२)प्रपन्नपालननिरते (२) मुनिवृंदाराध्ये ॥ जयदेवि० ॥ १ ॥ दिव्यसुधाकरवदने कुंदोज्ज्वलरदने ( २ ) पदनखनिर्जितमदने (२)मधुकैटभकदने॥ विकसितपंकजनयने पन्नगपतिशयने(२)खगपतिवहने गहने (२) संकटवनदहने ॥ जय देवि० ॥२॥ मंजीरांकितचरणे मणिमुक्ताभरणे (२) कञ्चुकिवस्त्राभरणे (२) वक्त्राम्बुजधरणे ॥ शक्रामयभयहरणे भूसुरसुखकरणे ( २ ) करुणां कुरु मे शरणे ( २ )

गजनक्रोद्धरणे ॥ जय देवि० ॥३॥ छित्वा राहुग्रीवां पासि त्वं विबुधान् (२) ददासि मृत्युं हरये (२) देवेभ्यस्तु सुधाम् ॥ विहरसि दानवक्रुद्धा समरे संसिद्धा (२) मध्वमुनीश्वरवरदे (२)पालय संसिद्धाम्॥जयदेवि० ॥४॥ कर्पूरगौरं० ॥ कर्पूरपूरेण० ॥ त्रिपथगामिन्यै गंगाय० नीराजनं सम०॥२३॥ पुष्पांजलिः ॥ पुष्पांजलिमिमां देवि नानापुष्पमनोहराम्॥ प्रसीदानेन देवेशि तुष्टा भव महेश्वरि ॥ श्रीत्रिप० गं० मन्त्रपु० स०॥ ॥२४॥ विशेषार्घः॥ गांगं वारि मनोहारि मुरारिचरणच्युतम् ॥ त्रिपुरारिशिरश्चारि पापहारि पुनातु माम्॥ इदं फलं० श्रीत्रिप०गं विशे०स० ॥ ॥ २५ ॥ नमस्कारः ॥ नमामि गंगे तव पादपंकजं सुरासुरैर्वंदितदिव्यरूपम् ॥ भुक्तिं च मुक्तिं च ददासि नित्यं भावानुसारेण सदा नराणाम्॥२६॥स्तुतिपाठः॥ पापापहारि दुरितारि तरंगधारि शैलप्रचारि गिरिराजगुहाविदारि ॥ झंकारकारि हरिपादरजोपहारि गांगं पुनातु सततं शुभकारि वारि ॥ श्रीत्रिप०गं० स्तुतिपाठं स०॥२७॥आवाहनं न जानामि०॥ भावहीनं भक्तिहीनं० ॥ इति संप्रार्थ्य तिलपात्रादिदानानि दत्वा आचार्यादिब्राह्मणान् संपूज्य तेभ्यो दक्षिणां दत्वा तेभ्यः आशिषो गृहीत्वा ब्राह्मणभोजनादि संकल्प्य तान् भोजयित्वा स्वयं भुंजीत ॥ इति ॥ ॥ इति गंगापूजनम् ॥

---

## ॥ अथ रविवारव्रतम्[1] ॥

आचम्य प्राणानायम्य । हस्ते जलमादाय-मम समस्तरोगनिरासार्थमायुरारोग्यवृद्ध्यादिसकलकामनासिद्ध्यर्थं श्रीसूर्यनारायणप्रीत्यर्थं

---

१ रविवारेऽनुष्ठेयमिदं व्रतं मदनरत्ने सौरधर्मे लिखितम् ॥ अस्मिन् व्रते प्रतिमासे सूर्यपूजने विशेषोऽयं ज्ञेयः ॥ मार्गशीर्षे

श्रीसूर्यव्रतं करिष्ये ॥ तदङ्गत्वेन दिग्रक्षणं कलशार्चनं दीपपूजनं गणपतिपूजनं (स्मरणं वा) सूर्यपूजनं च करिष्ये ॥ इति संकल्प्य त्रिधा-धारासि० इति कलशं संस्थाप्य तत्र ताम्रपात्रे रक्तचंदनेनाष्टदलं कृत्वा तत्र अग्न्युत्तारणपूर्वकं सूर्यमूर्तिं संस्थाप्य पूजयेत् ॥ यथाध्यानम्— तेजोरूपं

---

यजेन्मित्रं नारिकेलार्घ्यमुत्तमम् ॥ नैवेद्ये तंडुला देयाः साज्याश्च गुडसंयुताः ॥ १ ॥ पत्रत्रयं तुलस्यास्तु प्राश्य तिष्ठेज्जितेन्द्रियः ॥ दद्याद्विप्राय भोज्यं तु दक्षिणासहितं नृप ॥२॥ पौषे विष्णुं समभ्यर्च्य नैवेद्ये कृसरं तथा बीजपूरेण चैवार्घ्यं घृतं प्राश्यं पलत्रयम् ॥ ३ ॥ दद्याद् घृतं तु विप्राय भोजनेन समन्वितम्॥ माघे वरुणनामानं संपूज्य सतिलं गुडम्॥४॥ भोजनं दक्षिणां दद्यान्नैवेद्यं कदलीफलम् ॥ अर्घ्यं तेनैव दत्त्वा तु प्राश्या मुष्टित्रयं तिलाः ॥५॥ फाल्गुने सूर्यमभ्यर्च्य नैवेद्यं सघृतं दधि ॥ अर्घ्यं जंबीरसहितं दधि प्राश्यं पलत्रयम् ॥६॥ दधितंडुलदानं च भोजने समुदाहृतम्॥ चैत्रे भानुं च संपूज्य नैवेद्ये घृतपूरिकाः॥७॥ दाडिमीफलमर्घ्ये च प्राश्यं दुग्धपलत्रयम्॥ विप्राय भोजनं दद्याद् मिष्टान्नं तु सदक्षिणम् ॥८॥ वैशाखे तपनः प्रोक्तो माषान्नं सघृतं स्मृतम् ॥ अर्घ्यं दद्यात्तु द्राक्षाभिः प्राशने गोमयं स्मृतम् ॥९॥ कुर्यान्माषान्नदानं च सघृतं वै सदक्षिणम् ॥ इन्द्रं ज्येष्ठे यजेद्राजन् नैवेद्ये तु करम्भकम्॥ १० ॥ अर्घ्यं च सहकारेण प्राश्यं जलांजलित्रयम् ॥ दध्योदनसमायुक्तं भोजनं ब्राह्मणस्य वै ॥११॥ आषाढे रविमभ्यर्च्य जाती चिपिटकं तथा ॥ विप्राय भोजनं दद्यात् प्राशयेन्मरिचत्रयम् ॥१२ ॥ गभस्ति श्रावणेऽभ्यर्च्य नैवेद्ये सक्तुपूरिकाः ॥ अर्घ्यदाने च हि प्रोक्तं त्रपुसीफलमेव च ॥ १३ ॥ मुष्टित्रयं च सक्तूनां प्राशने समुदाहृतम् ॥ विप्राय भोजनं दद्यात् दक्षिणासहितं नृप ॥ १४ ॥ यमो भाद्रपदे पूज्यः कूष्मांडं साज्यमोदनम् ॥ गोमूत्रं प्राशने ह्युक्तं ब्राह्मणान्भोजयेत्तथा ॥ १५ ॥ हिरण्यरेता आश्विने च नैवेद्ये शर्करा स्मृता ॥ दाडिमेनार्घ्यदानं तु प्राश्यं खंडपलत्रयम् ॥ १६ ॥ विप्राय परया भक्त्या भोजनं शालिशर्कराः ॥ दिवाकरः कार्तिके च रम्भाया फलमेवच ॥१७॥ पायसं चैव नैवेद्ये पायसं प्राशने स्मृतम् ॥ पायसैर्भोजयेद्विप्रान् दद्यात्तांबूलदक्षिणे ॥ एवं व्रतं समाप्यैतत्तत उद्यापनं चरेत् ॥ १८ ॥

सहस्रांशुं सप्ताश्वरथगं वरम् ॥ द्विभुजं वरदं पद्मलांछनं सर्वकामदम् । भगवते श्रीसूर्यनारायणाय नमः ध्यायामि ॥१॥ आवाहनम्—आगच्छ भगवन् सूर्यमंडले च स्थिरो भव ॥ यावत्पूजा समाप्येत तावत्वं सन्निधौ भव ॥ भगवते श्रीसूर्यनारायणाय नमः आवाहयामि ॥२॥ आसनम्-हेमासनं महादिव्यं नानारत्नविभूषितम् ॥ दत्तं मे गृह्यतां देव दिवाकर नमोऽस्तु ते॥ भगवते सूर्यना० नमः आसन सम० ॥ ३ ॥ पाद्यम्—गंगाजलं समानीतं परमं पावनं महत् ॥ पाद्यं गृहाण देवेश धामरूप नमोऽस्तु ते ॥ ४ ॥ अर्घ्यम्— भोभो सूर्य महाभूत ब्रह्मविष्णुस्वरूपिणे ॥ अर्घ्यमंजलिना दत्तं गृहाण परमेश्वर ॥ ५ ॥ आचमनीयम्—गंगादितीर्थजं तोयं जातीपुष्पैश्च वासितम् ॥ ताम्रपात्रे स्थितं दिव्यं गृहाणाचमनीयकम् ॥ ६ ॥ मलापकर्षस्नानम्—जाह्नवीजलमत्यन्तं पवित्रकरणं परम् ॥ स्नानार्थं च मयाऽऽनीतं स्नानं कुरु जगत्पते ॥७॥ पंचामृतस्नानम्—पयोदधिघृतैश्चैव शर्करामधुसंयुतैः ॥ कृतं मया च स्नपनं प्रीयतां परमेश्वरः ॥ ८ ॥ ततः पंचोपचारैः संपूज्य उत्तरे निर्माल्यं विसृज्य पुनः गंधाक्षतैः संपूज्य आदित्यहृदयेन वा सूर्यस्तोत्रेणाभिषिच्य शुद्धोदकस्नानं कारयेत् ॥ स्नानम्— गंगा गोदावरी चैव यमुना च सरस्वती ॥ नर्मदा सिंधुः कावेरी ताभ्यः स्नानार्थमाहृतम्॥९॥ वस्त्रम्— रक्तपट्टयुगं देव सूक्ष्मतंतुविनिर्मितम् ॥ शुद्धं चैव मया दत्तं गृहाण कमलाकर ॥ १० ॥ उपवीतम्— नमः कमलहस्ताय विश्वरूपाय ते नमः ॥ उपवीतं मया दत्तं तद् गृहाण दिवाकर ॥ ११ ॥ गंधः— कुंकुमागरुकस्तुरीसुगंधैश्चंदनादिभिः ॥ रक्तचंदनयुक्त तु गंधं गृह्ण प्रभाकर ॥ १२ ॥ अक्षताः— रक्तचंदनसंमिश्रा अक्षताश्च

१ " भगवते श्रीसूर्यनारायणाय नमः ॥ " इति प्रत्युपचारं वक्तव्यम् ॥

सुशोभनाः ॥ मया दत्ता गृहाण त्वं वरदो भव भास्कर ॥ १३ ॥ पुष्पाणि— जपाकदम्बकुसुमरक्तोत्पलयुतानि च ॥ पुष्पाणि देव गृह्यन्तां सर्वकामप्रदो भव ॥ १४ ॥ ततो रक्ताक्षतैः अङ्गपूजां कुर्यात् ॥

मित्राय नमः पादौ पूजयामि ॥ रवये० जङ्घे पू० ॥ सूर्याय० जानुनी पू० ॥ खगाय० ऊरू पू० ॥ पूष्णे गुह्यं पू० ॥ हिरण्यगर्भाय कटी पू० ॥ मरीचये० नाभिं पू० ॥ आदित्याय० जठरं पू० ॥ सवित्रे० हृदयं पू० ॥ अर्काय० स्तनौ पू० ॥ भास्कराय० कंठं पू० ॥ अर्यम्णे० स्कन्धौ पू० ॥ प्रभाकराय० हस्तौ पू० ॥ अहस्कराय० मुखं पू० ॥ ब्रध्नाय० नासिकां पू० ॥ जगदेकचक्षुषे० नेत्रे पू० ॥ सवित्रे० कर्णौ पू० ॥ त्रिगुणात्मधारिणे० ललाटं पू० ॥ विरिंचिनारायणशंकरात्मने० शिरः पू० ॥ तिमिरनाशिने० सर्वाङ्गं पूजयामि ॥

धूपः—दशाङ्गो गुग्गुलोद्भूतः कालागरुसमन्वितः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥ १५ ॥ दीपः—कार्पासवर्तिसंयुक्तं गोघृतेन समन्वितम् ॥ दीपं गृहाण देवेश त्रैलोक्यतिमिरापह ॥१६॥ नैवेद्यम्—पायसं घृतसंयुक्तं नानापक्वान्नसंयुतम् ॥ नैवेद्यं च मया दत्तं शांतिं कुरु जगत्पते ॥ १७ ॥ प्राणाय स्वाहा । अपानाय० इत्यादि ॥ मध्येपानीयं समर्पयामि ॥ उत्तरापोशानम्—कर्पूरवासितं तोयं मंदाकिन्याः समाहृतम् ॥ आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः १८ करोद्वर्तनम्—मलयाचलसंभूतं कर्पूरेण समन्वितम् ॥ करोद्वर्तनकं चारु गृह्यतां जगतः पते ॥ १९ ॥ तांबूलम्—एलालवंगकर्पूरखदिरैश्च सपूगकैः ॥ नागवल्लीदलैर्युक्तं तांबूलं प्रतिगृह्यताम् ॥ २० ॥ दक्षिणा— दक्षिणां काञ्चनीं देव स्थापितां च तवाग्रतः ॥ गृहाण सुमुखो भूत्वा प्रभाकर नमोऽस्तु ते ॥२१॥ नीराजनम्—पञ्चवर्तिसमायुक्तं सर्वमंग-

लदायकम् ॥ नीराजनं गृहाणेदं सर्वसौख्यकरो भव ॥ कर्पूरगौरं० ॥ कर्पूरपूरेण० ॥ २२ ॥ प्रदक्षिणा—यानि कानि च पापानि जन्मान्तरकृतानि च ॥ विलयं यान्ति तानीह प्रदक्षिण पदे पदे ॥ २३ ॥ विशेषार्घः-इदं फलं मया देव स्थापितं पुरतस्तव ॥ तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥ २४ ॥ नमस्कारः-नमः पंकजहस्ताय नमः पंकजमालिने ॥ नमः पंकजनेत्राय भास्कराय नमो नमः ॥ २५ ॥ प्रार्थना-उदयगिरिमुपेतं० विश्ववन्द्यम् ॥ यस्योदये स्याज्जगतः प्रबोधो यः कर्मसाक्षी भुवनस्य गोप्ता ॥ कुष्ठादिकव्याधिविनाशको यः स भास्करो मे दुरितं विहन्यात् ॥ २६ ॥ हस्ते जलमादाय-अनेन पूजनेन भगवान् सूर्यनारायणः प्रीयताम् न मम ॥ ततो ब्राह्मणाय वायनं दद्यात् ॥ तत्र मंत्रः—तंडुलैः पूरित पात्रं हिरण्येन समन्वितम् ॥ रक्तवस्त्रयुगं चैव भूसुर त्वं गृहाण मे ॥ ( ब्राह्मणाय निवेदयेत् ) ॥ इति ब्राह्मणाय दत्वा—अनेन वायनदानेन भगवान् सविता सूर्यनारायणः प्रीयताम् ॥ इति रविवारव्रतपूजाविधिः ॥

## ॥ रविवारव्रतोद्यापनविधिः ॥

प्रातः समुत्थाय दन्तधावनादिकं कृत्वा नद्यादौ विमले जले स्नात्वा देवपितॄन् संतर्प्य गृहमागत्य शुचौ देशे उपलिप्य रक्ताक्षतैः सकर्णिकं द्वादशारं पद्मं विलिखेत्। ( वा सर्वतोभद्रमंडलं विरच्य ) तत्र कलशं संस्थाप्य तस्योपरि तंडुलपूरितं पात्रं निधाय तत्र क्षौमं वस्त्रं प्रसार्य तत्र रौप्यमये रथे सुवर्णनिर्मितं संज्ञासहितसूर्यं पूजयेत् ॥

तत्र प्राक् शुभासने उपविश्य आचम्य प्राणानायम्य । या श्रीस्वयं० इति भद्रसूक्तं सुमुखश्चेति पठित्वा जलमादाय—अत्राद्य०तिथौ

ममात्मनः सर्वव्याधिविनाशार्थं आयुरारोग्यैश्वर्यादिप्राप्त्यर्थं श्रीसूर्यनारायणप्रीत्यर्थं मया कृतस्य श्रीसूर्यनारायणव्रतस्योद्यापनाख्यं कर्माहं करिष्ये। तदङ्गत्वेन दिग्रक्षणं कलशार्चनं दीपपूजनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नान्दीश्राद्धमाचार्यादिवरणं च करिष्ये इति संकल्प्य दिग्रक्षणादि आचार्यवरणान्तं कर्म (६–४५) कुर्यात्॥ ततः रक्ते द्वादशारे पद्मे (वा सर्वतोभद्रमंडलोपरि सर्वतोभद्रमंडलब्रह्मादिदेवानावाह्य संपूज्य (९६-१०७) तत्र ) कलशं संस्थाप्य रक्तक्षौमवस्त्रेणाच्छाद्य चंदनेन तंडुलैर्वा द्वादशपत्रं पद्ममालिख्य तत्र पत्रेषु, मित्राय नमः मित्रम् आवा०स्थापया० इति॥ मित्रं विष्णुं वरुणं सूर्यं भानुं तपनं इन्द्रं रविं गभस्तिं शमनं हिरण्यरेतसं दिनकृत मंडूकादिपीठदेवताश्चावाह्य संपूज्य मध्ये संज्ञासहितसूर्यस्य मूर्तेः अग्न्युत्तारपूर्वकमाणप्रतिष्ठां कृत्वा "संज्ञासहितसहस्रकिरणाय नमः" इति मंत्रेण यथोपचारैः पूजनं कार्यम् ॥ ततः "नमः सहस्रकिरण सर्वव्याधिविनाशन॥ गृहाणार्घ्यं मया दत्तं संज्ञया सहितो हरे" इति मंत्रेण नारिकेलादिना अर्घ्यं दत्वा संप्रार्थ्य व्रतेभ्यो ब्राह्मणेभ्यो दक्षिणां दत्वा ब्राह्मणान् भोजयित्वा कीर्तनादिना रात्रिं निनयेत्॥

## ॥ अथ रविवारव्रतहोमविधिः ॥

ततो द्वितीयदिने प्रातर्नित्यकर्म समाप्य आचम्य प्राणानायम्य जलमादाय अद्य द्वितीयदिने रविवारव्रतोद्यापनकर्मणः साङ्गतासिद्ध्यर्थम् आवाहितदेवतानां पूजनपूर्वकं सग्रहमखं विहितहोमं करिष्ये। इति संकल्प्य दिग्रक्षणाद्यावाहितदेवतानां पूजनं विधाय स्थंडिलं विरच्य पञ्चगव्यादि कृत्वा पंचभूसंस्कारपूर्वकम् अग्निस्थापनं तथा च ग्रहाणां स्थापनं च पूजनं च ( १४७–१५९ ) विधाय कुशकंडिकां

कृत्वा ग्रहहोमान्तं कर्म कुर्यात् ॥ ततः प्रधानहोमः ॥ प्रधानं संज्ञासहित-सहस्रकिरणं " ह्रीं संज्ञासहितसहस्रकिरणाय नमः " इति मूलमंत्रेणाष्टोत्तरशतसंख्यया ( १०८ ) तिलपायसाज्यद्रव्यैर्जुहुयात् ॥ ( ततो मंडूकादिपीठदेवता ( पृष्ठ १६२ ) ब्रह्मादिदेवता ( पृष्ठ १६४–१६५ ) मित्रादिदेवांश्चैकैकाज्याहुतिं जुहुयात् ॥ न्यूनातिरिक्तदोषपरिहारार्थं तिलद्रव्येण " अग्निवायुसूर्येभ्यो नमः " इति मंत्रेण अष्टाविंशतिसंख्यया ( २८ ) जुहुयात् ॥ तत उत्तरपूजनादि प्रणीताविमोकान्तं (पृष्ठ १६८–१८८) कृत्वा ग्रहानग्निं च विसृज्य मंडल-समीपमागत्य स्थापितदेवतानां यथाशक्तिपूजनं कृत्वा महानीराजनं कृत्वा मूर्तिसहितपीठदानादिकं संकल्पपूर्वकमाचार्याय दत्त्वा ब्राह्मणान् संपूज्य दक्षिणादानपुरःसरम् आशिषो गृहीत्वा तान् भोजयित्वा स्वयं भुञ्जीत ॥ इति रविवारव्रतोद्यापनविधिः ॥

## ॥ अथ आशादित्यव्रतम् ॥

आश्विनादिरविवारेषु आशादित्यव्रतं कार्यम् ॥ प्रातः स्नात्वा नित्यकर्म विधाय आचम्य प्राणानायम्य । अत्राद्य०तिथौ ममसमस्तरोगनिरासार्थम् आयुर्वृद्ध्यादिसकलकामनासिद्ध्यर्थं द्वादशवर्षात्मकं वर्षात्मकं[1] वा आशादित्यव्रतं करिष्ये । इति संकल्प्य तदङ्गत्वेन दिग्रक्षणादिकं करिष्ये । इति संकल्प्य दिग्रक्षणं कलशाराधनं दीपपूजनं गणपतिपूजनं स्मरणं वा विधाय ताम्रमयपीठे रजतमयरथे सौवर्णं सूर्यं पूजयेत् तत्र पूर्ववत्सूर्यपूजनविधाने अयं विशेषः ॥

---

१ इदं व्रतं द्वादशवार्षिकं वार्षिकं वा कार्यम् ॥

व्रतसमाप्तौ उद्यापनं कार्यम् । तत्र "यथाशा विमलाः सर्वा सूर्यभास्करभानुभिः ॥ तथाशाः सफला मह्यं कुरु नित्यं ममार्घ्यतः ॥" इति अर्घमंत्रः ॥ उद्यापने गोमयलिप्तायां भूमौ रक्तचंदनरेखाभिः कुंकुमेन विशेषेण मंडलं विलिख्य तत्र सकर्णिकम् द्वादशारं पद्मं विलिख्य दलेषु सिंदूरं पूरयित्वा जपाकुसुमैः शोभनं कृत्वा तन्मध्ये प्रवालांकुरयुतं शालितंडुलसंपूर्णं शर्कराचन्दनयुक्तं कलशं संस्थाप्य तस्योपरि ताम्रपात्रं निधाय रक्तवस्त्रयुग्मवेष्टितं कृत्वा तत्र पद्महस्तं सौवर्णं सूर्यं यथाविधि ध्यानादिना पूर्ववत् पूजयेत् ॥

अङ्गपूजायां विशेषः ॥ सूर्याय नमः पादौ पूजयामि ॥ वरुणाय० जङ्घे प०॥ माधवाय० जानुनी पू०॥ धात्रे० ऊरू प० ॥ हरये० कटी पू०॥ भगाय० गुह्यं पू० ॥ सुवर्णरेतसे नमः नाभिं पू० ॥ अर्यम्णे० जठरं पू०॥ दिवाकराय० हृदयं पू०॥ तपनाय० कण्ठं पू०॥ भानवे० स्कन्धौ पू०॥ हंसाय० हस्तौ पू०॥ मित्राय० मुखं पू०॥ रवये० नासिकां पू० ॥ खगाय० नेत्रे पू० ॥ पूष्णे० कर्णौ० पू० ॥ हिरण्यगर्भाय० ललाटं पू०॥ आदित्याय० शिरः पू० ॥ भास्कराय० सर्वाङ्गं पू० ॥

एवं संपूज्य " नमो नमः पापविनाशनाय विश्वात्मने सप्ततुरंगमाय ॥ सामर्ग्यजुर्धामनिधे विधातर्भवाब्धिपोताय नमः सवित्रे ॥" इति प्रार्थ्य पूजनं समाप्य रात्रिं कथाकीर्तनादिना निनयेत् ॥

द्वितीयदिने पूर्ववत् पूजनं होमादिकं च कृत्वा ब्राह्मणान् संपूज्य दक्षिणाप्रदानादिकं विधायाचार्यपूजनं कृत्वा पीठादिकं दत्त्वा तेभ्य आशिषो गृहीत्वा तान् संभोज्य सकुटुम्बः स्वयं भुञ्जीत ॥

॥ इत्याशादित्यव्रतम् ॥

## ॥ अथ सोमवारव्रतविधिः ॥

स्कान्दे व्रतग्रहणविधिः ॥ "श्रावणे चैत्रवैशाखे ज्येष्ठे वा मार्गशीर्षके" ॥ एतेषामन्यतमे मासि शुक्लपक्षेन्दुवारयुतायाम् अष्टम्यां व्रतं ग्राह्यम् अथवा प्रथमसोमवारे च ॥ यावज्जीवमष्टवर्षपर्यन्तं वा कार्यम् ॥ प्रातर्नद्यादौ स्नात्वा ॥ अद्येत्यादि० अमुककामनया सोमवारव्रतं करिष्ये ॥ इति संकल्प्य प्रदोषे पीठे देवं वक्ष्यमाणप्रकारेण पूजयेत् ॥

आचम्य प्राणानायम्य ॥ तीक्ष्णदंष्ट्र महाकाय कल्पान्तदहनोपम ॥ भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ॥ इति भैरवस्यानुज्ञां गृहीत्वा सुमुखश्चेत्यादि पठित्वा ॥ अद्येत्यादि० मम सकुटुंबस्य क्षेमस्थैर्यविजयायुरारोग्यैश्वर्याभिवृद्धये उमामहेश्वरप्रीत्यर्थं चतुर्दशवर्षपर्यन्तं ( यावज्जीवं वा ) सोमवारव्रतं करिष्ये ॥ तदङ्गत्वेनादौ दिग्रक्षणं कलशाराधनं गणपतिपूजनं शंखघंटाद्यर्चनं षोडशोपचारैः उमामहेश्वरपूजनमहं करिष्ये । इति संकल्प्य दिग्रक्षणादि घंटाद्यर्चनान्तं कृत्वा महेश्वरपूजनं कुर्यात् ॥ यथा ॥ ध्यायेन्नित्यं महेशं० इति शंकरं ध्यात्वा ॥ "ह्रीं सदाशिवाय नमः" इति मंत्रेण यथाशक्त्या षोडशोपचारैः पूजनं कुर्यात् ॥ इति व्रतविधिः ॥

## ॥ अथ सोमवारव्रतोद्यापनम् ॥

पूर्वन्मण्डपादिकं कृत्वा शुभासने उपविश्याचम्य ॥ अद्येत्यादि० अशेषपापक्षयपूर्वकं सत्पुत्रप्राप्तिधनधान्यैश्वर्यादिवृद्धि द्वारा ऽमुककामनया आचरितस्य आचरिष्यमाणस्य सोमवारव्रतस्य साङ्गतासिद्ध्यर्थम् ( एकरात्राधिवासपक्षाश्रयेण ) सोमवारव्रतोद्यापनं करिष्ये ॥ तदंगतया दिग्रक्षणं कलशार्चनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नान्दीश्राद्धं आचार्यादिवरणं देवतास्थापनादि

च करिष्ये॥ इति संकल्प्य दिग्रक्षणादि ब्राह्मणवरणान्तं कर्म (६–४५) पूर्वोक्तरीत्या कुर्यात् ॥ तत आचार्यः चतुर्द्वारोपशोभितं मंडपान्तः अष्टादशांगुलोत्सेधां वितस्तिद्वयविस्तृतां समचतुरस्रां मृदा वेदिं विधाय तत्र शुक्लतंदुलैः षोडशारं कमलं विरच्य॥ अथवा पंचरंगशोभितं सर्वतोभद्रमंडलं लिंगतोभद्रमंडलं वा विरच्य ॥ तस्मिन् मंडले ब्रह्माद्यावाहितदेवानावाह्य संपूज्य (९९–१०७) ॥ तदुपर्यक्षतपुंजेषु मध्ये एकं श्वेतवस्त्रयुग्मोपेतं कलशं परितश्च मंडले षोडशकलशानन्यांश्च विश्वाधारासीत्यादिना पूर्णपात्रान्तान् संस्थाप्य ॥ मध्यकलशोपरि क्षौमवस्त्रं प्रसार्य चंदनेनाष्टदलं विलिख्य मध्ये मंडूकादिदेवता आवाह्य गंधादिभिः संपूजयेत् ( १०७ ) ॥ ततः कृताग्न्युत्तारणप्राणप्रतिष्ठां सौवर्णमयीं शिवगौरीप्रतिमां च पुरतो रजतनिर्मितां वृषभप्रतिमां संस्थाप्य आवाहयेत् ॥ *यथा–गंधर्वकिन्नरमहर्षिसुरेन्द्रमन्दैः* संसेव्यते च मनसा वृषभावरूढम् ॥ आवाहयामि गिरिजासहितं प्रसन्नं श्रीचन्द्रशेखरमहं शिरसा नमामि ॥१॥ महारुद्र इहागच्छ इह तिष्ठ महारुद्राय० महारुद्रमावा० स्था० ॥ गौरि इहा० गौर्यै० गौरीमावा० पुरतः॥ वृषभाय० वृषभमावा०॥ पुरतः पूर्वादिक्रमेण ॥ अनन्ताय०अनन्तम् आ०स्था०॥ सूक्ष्माय० सूक्ष्मम् आ० ॥ शिवाय० शिवम् आ० स्था०॥ उत्तमाय० उत्तमम् आ० स्था०॥ त्रिमूर्त्तये० त्रिमूर्तिम् आ०स्था०॥ रुद्राय०रुद्रम् आ०स्था०॥ श्रीकंठाय० श्रीकण्ठम् आ०स्था०॥ शिखंडिने०शिखण्डिनम् आ०स्था०॥८॥ पुनराग्नेयादिविदिक्षु॥ गणेशाय०गणेशम् आ० स्था०॥ मातृभ्यो० मातृः आ० स्था०॥ दुर्गायै० दुर्गाम् आ० स्था० । क्षेत्रपालाय० क्षेत्रपालम् आ० स्था० । पुनः पूर्वादिदशदिक्षु इन्द्रादीन् आवाहयेत् । यथा–इन्द्राय० इन्द्रम् आ० स्था०॥ अग्नये० अग्निम्

आ० स्था० ॥ यमाय० यमम्० आ० स्था०॥ निर्ऋतये० निर्ऋतिम् आ० स्था० ॥ वरुणाय० वरुणम्० आ० स्था० ॥ वायवे० वायुम् आ० स्था० ॥ कुवेराय० कुवेरम् आ० स्था० ॥ ईशानाय० ईशानम् आ० स्था० ॥ ब्रह्मणे० ब्रह्माणम् आ० स्था० ॥ अनन्ताय० अनन्तम् आ० स्था० १० ॥ ततो मंडलात्परितः षोडशकुंभोपरि पूगीफलेषु ॥ सोमेश्वराय० सोमेश्वरम् आ० स्था० ॥ ईशानाय० ईशानम् आ० स्था० ॥ शंकराय० शंकरम् आ० स्था० ॥ गिरिजाधवाय० गिरिजाधवम् आ०स्था० ॥ महेशाय० महेशम्० आ० स्था० ॥ सर्वभूतेशाय० सर्वभूतेशम्० आ० स्था० ॥ स्मरारये० स्मरारिम् आ० स्था० ॥ त्रिपुरान्तकाय० त्रिपुरान्तकम्० आ० स्था० ॥ शिवाय० शिवम् आ० स्था० ॥ पशुपतये० पशुपतिम् आ० स्था० ॥ शंभवे० शंभुम् आ० स्था० ॥ त्र्यंबकाय० त्र्यम्बकम् आ० स्था० ॥ चन्द्रशेखराय० चन्द्रशेखरम् आ० स्था० ॥ गंगाधराय० गङ्गाधरम् आ० स्था० ॥ महादेवाय० महादेवम् आ० स्था० ॥ वामदेवाय० वामदेवम् आ० स्था० ॥१६॥ इत्यावाह्य प्रतिष्ठा सर्व० ॥ महादेवाद्यावाहितदेवाः सुप्रतिष्ठिता वरदा भवत ॥ इति प्रतिष्ठाप्य ॥ "महारुद्राद्यावाहितदेवताभ्यो नमः" इति मूलमंत्रेण वा संपूज्य ॥ अद्येo तिथौ मम सकुटुंवस्याशेषपापक्षयपूर्वकं पुत्रपौत्राद्यविच्छिन्नसंतति० ॥ श्रीमहारुद्रपूजनमहं करिष्ये ॥ तत्रादौ न्यासः ॥ ह्रीं नं अङ्गुष्ठाभ्यां नमः ॥ मं तर्जनीभ्यां०॥ शिं मध्यमाभ्यां०॥ वां अनामिकाभ्यां० ॥ यं कनिष्ठिकाभ्यां०॥ शिवाय० करतलकरपृष्ठाभ्यां०॥ एवं हृदयादि ॥ अथ ध्यानम् ॥ पञ्चवक्त्रं दशभुजं सर्वाभरणभूषितम् ॥ चन्द्रकोटीप्रतीकाशं त्रिनेत्रं चन्द्रभूषणम् ॥ आगच्छ भगवन् शंभो स्थाने चात्र

स्थिरो भव ॥ यावत्पूजां करिष्येऽहं तावत्त्वं सन्निधौ भव ॥ २ ॥ उमामहेश्वराभ्यां नमः ध्यायामि ॥ गणपतिं संपूज्य वृषभं संपूज्य आवाहनादि पुष्पान्तं पूर्ववत् संपूज्य ततः (पृ. ३९७—शिवरात्रिव्रतोद्यापनवत्) पूर्वोक्तरीत्या पञ्चवक्त्रपूजनं कृत्वा सौभाग्यद्रव्यादिमार्थनान्तं पूजनं कुर्यात् ॥ ततः आचार्यादीन् संपूज्य आशिषो गृहीत्वा पुराणकथादिना रात्रिं निनयेत् ॥ इति ॥

## ॥ अथ सोमवारव्रतहोमविधिः ॥

द्वितीयादिने प्रातर्नित्यकर्म समाप्य ॥ अद्येत्यादि० सोमवारव्रतोद्यापनस्य संपूर्णतासिद्ध्यर्थं ग्रहमखसहितं विहितहोमं करिष्ये ॥ तत्रादौ गणपतिपूजनादिग्रहहोमान्त पूर्ववत् विधाय ॥ प्रधानहोमः ॥ "रुद्राय नमः" इति मन्त्रेण पलाशसमिद्भिरष्टोत्तरसंख्यया जुहुयात् ॥ ततः सोमेश्वरादिदेवेभ्यः "सोमेश्वराय नमः" इत्यादिमन्त्रैः पृषदाज्य(दधिघृतचंदनपुष्पजल) यवव्रीहिपायसतिलाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्यया जुहुयात् ॥ "गार्यै नमः" इति मंत्रेण त्रिमध्वाक्तदूर्वाभिरष्टोत्तरशतसंख्यया जुहुयात् ॥ परिवारदेवतामंडूकादिदेवताब्रह्मादिदेवताभ्यश्चैकैकमाज्याहुतिं दद्यात् ॥ "अग्निवायुसूर्येभ्यो नमः" इति मंत्रेण तिलद्रव्येण (२८) व्याहृतिहोमः ॥ उत्तरपूजनादिमणीताविमोकान्त पूर्ववत् ॥ ततो मंडपसमीपं गत्वा प्रधानदेवतायाः पूजनपूर्वकं महानीराजनं कृत्वा नमस्कृत्य ॥ षोडशब्राह्मणान् संपूज्य षोडशकुम्भान् तैरेव नामभिस्तेभ्यो दद्यात् ॥ अथवा—भवाय नमः । शर्वाय० । रुद्राय० । पशुपतये० । उग्राय० । महते० । भीमाय० । ईशानाय० । सद्योजाताय० । वासुदेवाय० । अघोराय० । तत्पुरुषाय० । ईशानाय० । इति त्रयोदशकुंभपक्षे त्रयोदशब्राह्मणान् त्रयोदशनामभिः संपूज्य फलपत्रादिदरभाजने तडुलैर्वा पूरितान् घटान्

दक्षिणासहितान् वंशपात्रीसंयुतान् दद्यात् ॥ ततस्तेभ्य आशिषो गृहीत्वा तान् भोजयित्वा स्वयं भुंजीत ॥ इति सोमवारव्रतोद्यापनविधिः ॥

---

## ॥ अथ प्रदोषव्रतविधिः ॥

कार्तिकादिमासेषु त्रयोदश्यां प्रदोषव्रतम् ॥ वर्षात्मकं यावज्जीवं वा शनियोगे महाफलम् ॥ भौमयोगे ऋणमोचनम् ॥ "एकवत्सरपर्यन्तं प्रतिपक्षे त्रयोदशी ॥ प्रदोषे शिवमभ्यर्च्य नक्तं भोक्ष्यामि शंकर ॥१॥" तत्र चोक्तेन मंत्रेण व्रतसंकल्पमाचरेत् ॥ स्नात्वा तु लोहिते भानौ नद्यादौ नियमी व्रती ॥ शिवालये ततो गत्वा प्रदोषे शिवमर्चयेत् ॥२॥

### ॥ अथोद्यापनम् ॥

शुभासने उपविश्य आचम्य प्राणानायम्य हस्ते जलं गृहीत्वा अद्येत्यादि० तिथौ ममात्मनः अखिलपापक्षयशत्रुपराजयपूर्वकमायुरारोग्यैश्वर्यपुत्रपौत्राद्यभिवृद्धिद्वारा श्रीउमामहेश्वरप्रीत्यर्थम् आचरितस्य आचरिष्यमाणस्य प्रदोषव्रतस्य संपूर्णफलावाप्तये एकरात्राधिवासपक्षाश्रयेण प्रदोषव्रतोद्यापनं करिष्ये ॥ तदंगभूतं दिग्रक्षणं कलशाराधनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारामायुष्यमन्त्रजपं नांदीश्राद्धं ब्राह्मणवरणं देवतास्थापनं च करिष्ये इति संकल्प्य दिग्रक्षणादिब्राह्मणवरणान्तं (६–४५) कर्म कृत्वा लिंगतोभद्रमंडले ब्रह्मादिदेवता(९९) लिङ्गतोभद्रदेवतास्थापनपूजनं (३८२) विधा-

---

१ हरिहरात्मकद्वादशलिङ्गतोभद्रमंडले सति (९९-१०१) पृष्ठस्थश्लोकैर्वा (३८७) पृष्ठस्थब्रह्मादीनां नाममंत्रैः सर्वतोभद्रमंडलदेवतानां स्थापनं कृत्वा लिङ्गतोभद्रमंडलदेवता. (३८२) स्थापयेत् ॥ चतुस्त्रिंद्रेखात्मके लिङ्गतोभद्रमंडले वा चतुर्लिङ्गतो भद्रमंडले च सति (३८४–३८८) तत्रोक्तदेवान् स्थापयेत् ॥

य ॥ मध्ये त्रिश्वाधारासीत्यादिना पूर्णपात्रान्तं कलशं स्थापयित्वा तदुपरि क्षौमवस्त्रं प्रसार्य चंदनेनाष्टदलं विलिख्य मध्ये मंडूकादिपीठदेवता आवाह्य ( पृ. १०७ ) गंधादिना संपूज्य ॥ तदुपरि कृताग्न्युत्तारण-प्राणप्रतिष्ठां सौवर्णमयीं उमामहेश्वरमूर्तिं संस्थाप्य तत्पुरतः राजतं वृषभं च संस्थाप्य आवाहयेत् ॥ मंदारमालाकुलतालकायै कपालमा-लांकितशेखराय ॥ दिव्यांबरायै च दिगंबराय नमः शिवायै च नमः शिवाय ॥ उमामहेश्वरौ आवा०॥ परितः असितांगभैरवाय० । रुरुभैरवा-य०। चंडभैरवाय०। उन्मत्तभैरवाय०। भीषणभैरवाय०।संहारभैरवाय०। कपालभैरवाय० । कालभैरवाय० ॥ इत्यावाह्य ॥ प्रतिष्ठा०इति प्रति-ष्ठाप्य "उमामहेश्वराद्यावाहितदेवताभ्यो नमः" इति मंत्रेण यथाशक्त्या पूजनं कुर्यात् ॥ पुनर्नाममंत्रेणाष्ट (८) प्रदक्षिणा नमस्कारांश्च कुर्यात् ॥ भवाय० । महादेवाय० । रुद्राय० । नीलकंठाय० । शशिमौलिने० । उग्राय० । भीमाय० । ईशानाय० । ततो रजतादिपात्रे क्षीरकुशदधि-तंडुलसिद्धार्थगंधपुष्पसमन्वितं अर्घं गृहीत्वा ॥ "भयरोगादिदारिद्र्यपा-पक्षुदपमृत्यवः ॥ ऋणशोकमनस्तापा मम नश्यन्तु सर्वदा ॥" इति त्रिरर्घं दद्यात् ॥ ततः प्रार्थयेत् । "प्रसीद देवदेवेश प्रसीद परमेश्वर ॥ प्रसीद सोम सर्वज्ञ प्रसीद करुणाकर"॥१। उमामहेश्वराभ्यां नमः प्रार्थना० नमस्कारान् सम०॥ इति नमस्कृत्य ब्राह्मणान् संपूज्य दक्षिणापुरःसरं आशिषो गृहीत्वा तान् संतर्प्य पुराणकथादिना रात्रिं निनयेत् ॥ इति ॥

" अथ होमविधिः ॥–द्वितीयदिने प्रातर्नित्यकर्म समाप्य आचम्य प्राणा०।अद्य०ममात्मनः०प्रदोषव्रतोद्यापनाङ्गभूतं ग्रहमखसहितं विहितहोमं करिष्ये ॥ इति संकल्प्य । तदङ्गत्वेन दिग्रक्षणादीनि करिष्ये इति च संकल्प्य दिग्रक्षणकलशाराधनगणपतिपूजनादि ग्रहहोमान्तं

कृत्वा ॥ प्रधानं उमामहेश्वरं पलाशसमिधबिल्वपत्रपायसाज्यद्रव्यैः प्रत्येकमष्टोत्तरशतसंख्यया " उमामहेश्वराभ्यां नमः " ॥१०८॥ इति मन्त्रेण जुहुयात्॥ मंडूकादिपीठदेवताब्रह्मादिदेवताभ्यश्चैकैकामाज्याहुतिं जुहुयात् ॥ ततः"अग्निवायुसूर्येभ्यो नमः" इति व्याहृतिहोमादि प्रणीताविमोकान्तं कर्म समाप्य॥ मंडलसमीपमागत्य प्रधानदेवतापूजनं महानीराजनं च कृत्वा दानादिकं दत्वा ब्राह्मणान् संपूज्य दक्षिणापुरःसरं तान् संतोष्य भोजयित्वा च स्वयं भुंजीत ॥ इति प्रदोषव्रतविधिः ॥

---

## ॥ अथ भौमवारव्रतविधिः ॥

अथ पूजाप्रकारः ॥ मार्गशीर्षमाघवैशाखेषु शुभे मासे वा शुक्लपक्षे चंद्रानुकूल्ये भौमवासरे अरुणोदयकाले अपामार्गकाष्ठेन दंतधावनं मौनेन कृत्वा आचम्य तिलामलकचूर्णेन अंगोद्वर्तनं कृत्वा नद्यादौ गृहे वा स्नात्वा धौतं रक्तं वस्त्रमुत्तरीयं धृत्वा संध्यादिकं कर्म विधाय ॥ रक्तचंदनरक्ताक्षतैः रक्तपुष्पैश्च ताम्रपात्रस्थजलेन अंगारकगायत्र्या ( अग्निर्मूर्धा० इति मंत्रेण वा ) एकविंशतिवारमंगारकाय अर्घं

---

१ ॥ यंत्रप्रकारः ॥ उक्तं च भविष्ये–"त्रिकोण पूर्वमुद्धृत्य पचधा विभजेत्तत० ॥ तृतीयरेखाचिह्नाभ्यां लांछयेत्समभागतः ॥ १ ॥ आद्यरेखाग्रयुगलं तृतीयाचिह्नयोर्न्यसेत् ॥ तृतीयरेखामध्ये तु चिह्नयेत्समभागत ॥२॥ तुर्यां चिह्नद्वयेनाथ त्रिभिश्चिह्नैस्तु पंचमीम् ॥ तृतीयाग्रे प्रकुर्वीत पंचम्या मध्यचिह्नगम्॥३॥तुर्याग्रे योजयेत्सम्यक् पंचम्या चिह्नयोर्द्वयोः। युक्त्या मम द्वये दद्यात् त्रिकोणे विंशतिर्भवेत् ॥ ४ ॥ तृतीयतुर्ययोर्मध्ये त्रिकोणे तु समर्चयेत् ॥ एव तदग्रतो मंत्रान् त्रिकोणे दक्षिणक्रमात् ॥५॥ मंगलाद्यास्तारपूर्वान्नमोन्तानेकविंशतिम् ॥ एकविंशतिकोष्ठेषु नाममंत्रान् समालिखेत् ॥६॥ ततः पूजा प्रकर्त्तव्या पुत्रसंपत्तिहेतवे ॥७॥ इति यंत्रम् ॥

२ " अङ्गारकाय विद्महे भूमिपुत्राय धीमहि तन्नो भौमः प्रचोदयात्॥

दत्त्वा ततो गृहमागत्य भूमिपतितेन गोमूत्रेण सुरभिगोमयेन हस्तमात्रीं भूमिं विलिप्य तदुपरि साग्रं त्रिकोणं मंडलं रक्तचन्दनेन संविलिख्य तत्र प्रस्थपरिमितगोधूमराशिं कृत्वा तत्र ताम्रमयं रक्तं मृन्मयं वा कलशं संस्थाप्य तदुपरि ताम्रमयं पूर्णपात्रं निधाय ॥ तत्र रक्तचन्दनेन त्रिकोणं मंडलं विधाय ॥ तत्र ताम्रमयं भूर्जपत्रमयं वा त्रिकोणमेकविंशतिकोष्ठकात्मकमेकविंशतिनामयुतं यंत्रं संस्थाप्य जासामग्रीं संपाद्य संकल्पं कुर्यात् ॥

तद्यथा॥ शुद्धासने उपविश्य आचम्य प्राणाना० । श्रीमन्महा० सुमुखश्च० इति पठित्वा हस्ते जलमादाय ॥ अद्येत्यादि० तिथौ मम आत्मनः पूजोपकरणपूर्वकधनधान्यपुत्रपौत्राद्यभिष्टमनोरथसिद्ध्यर्थं मंगलव्रतसंपूर्णफलावाप्तये भौमपूजनं च करिष्ये ॥ तदङ्गभूतं दिग्रक्षणं कलशाराधनं गणपतिपूजनं पुण्याहवाचनं च करिष्ये ॥ इति संकल्प्य दिग्रक्षणादि पुण्याहवाचनान्तं ( ६–२७ ) कृत्वा भौमपूजनं कुर्यात् ॥ तत्रादौ प्रार्थयेत् ॥ "अथ देवेश ते भक्त्या करिष्ये व्रतमुत्तमम् ॥ ऋणदुःखादिनाशाय पुत्रसन्तानहेतवे ॥ अभीष्टान्मम देवेश कुरु पूर्णमनोरथान् ॥" इति संप्रार्थ्य ॥ ततो विश्वाधारासीति पूर्णपात्रान्तं कलशं संस्थाप्य तदुपरि कृताग्न्युत्तारणप्राणप्रतिष्ठं भौमयंत्रं संस्थाप्य ॥ ततो भूतशुद्ध्यादि न्यासान् (११५-१२६पृष्ठे) कृत्वा विशेषन्यासान् कुर्यात्॥

विशेषन्यासाः॥ ह्रीं मंगलाय० शिखायाम् ॥ भूमिपुत्राय० मूर्ध्नि॥ ऋणहर्त्रे० ललाटे ॥ धनप्रदाय० चक्षुषोः ॥ स्थिरासनाय०कर्णयोः ॥ महाकायाय० नासिकयोः ॥ सर्वकर्मावरोधकाय० मुखे ॥ लोहिताय० हनौ । लोहिताक्षाय० कंठे ॥ सामगानां कृपाकराय०स्कंधयोः ॥ धरात्मजाय० बाह्वोः ॥ कुजाय० करयोः ॥ भौमाय०हृदये ॥ भूतिदाय०

उदरे ॥ भूमिनंदाय० नाभौ ॥ अंगारकाय० कट्याम् ॥ यमाय० ऊर्वोः ॥ सर्वरोगापहारकाय० जान्वोः ॥ वृष्टिकर्त्रे० जङ्घयोः ॥ वृष्टिहर्त्रे० गुल्फयोः ॥ सर्वकामफलप्रदाय० पादयोः ॥ ततः षडंगन्यासः ॥ मां हृदयाय० । मीं शिरसे० । मूं शिखायै० । मैं कवचाय० । मौं नेत्रत्रयाय० । मः अस्त्राय० ॥ ततः स्ववामे कलशाराधनं पूर्ववत् कृत्वा तत्पश्चिमतः स्ववामभागे षट्कोणं वृत्तं चतुरस्रात्मकं मंडलं विरच्य तदुपरि साधारमर्घ्यपात्रं निधाय । जलेनापूर्य गंधाक्षतपुष्पादि तत्र प्रक्षिप्य " ह्रीं मंगलाय नमः " इति मंत्रेण वा " अंगारकाय विद्महे भूमिपुत्राय धीमहि । तन्नो भौमः प्रचोदयात् ॥ " इति गायत्र्या वाष्टवारमभिमंत्रयेत् ॥ तद्दक्षिणे त्रिकोणमंडले साधारं सजलं प्रोक्षणीपात्रं संस्थाप्य ॥ गंधपुष्पाक्षतादि प्रक्षिप्य मूलेनाष्टवारमभिमंत्र्य तज्जलं किंचिदर्घ्यपात्रे निक्षिप्य धेनुमुद्रां प्रदर्श्य ॥ प्रोक्षणीपात्रजलेन आत्मानं दक्षिणस्थपूजाद्रव्याणि च प्रोक्ष्य ॥ पात्रान्तरे स्थापितं यंत्ररूपं देवं ध्यायेत् ॥ पिंगाक्षं रक्तवर्णं सुरतरुदलभं रक्तवस्त्रेण युक्तं मेषारूढं ग्रहेन्द्रं ह्यभिलषितजनैः पूजितं सुप्रसन्नम् ॥ ध्यायेदेतान्दधानं वरदकरयुतं शूलशक्तिं गदां च भौमं चैश्वर्यसिद्धिं निखिलनिधिविभुं मंगलं चिन्तयामि ॥ १ ॥ एह्येहि भगवन्भौम स्थाने चात्र स्थिरो भव ॥ त्वयि सर्वमिदं प्रोतं त्रैलोक्यं सचराचरम् ॥ २ ॥ उज्जयिन्यां समुद्भूत शूलशक्तिगदाधर ॥ भरद्वाजकुलोत्पन्न स्कन्दप्रिय तडित्प्रभ ॥ ३ ॥ यावत्पूजा समाप्येत तावत्त्वं सन्निधो भव ॥४॥ ( " ह्रीं मंगलाय नमः॥" इति मूलमंत्रः॥ 'अङ्गारकाय विद्महे भूमिपुत्राय धीमहि तन्नो भौमः प्रचोदयात् ॥ ' इति गायत्री "अग्निर्मूर्द्धा०" इति वैदिको मंत्रः॥ ) मंगलं सांगं सपरिवारम् आवा०॥

परितः पूर्वादि क्रमेण परिवारदेवताः स्थापयेत् ॥ पूर्वे–शक्तये० । आग्नेय्यां–शूलाय० । दक्षिणे–धनुषे० । नैर्ऋत्ये–शराय० । पश्चिमे–गदायै० । वायव्यां–वरदाय० । उत्तरे–षडाननाय० । ऐशान्यां धरायै०। इत्यावाह्य ॥ प्रतिष्ठा सर्व० इति प्रतिष्ठाप्य–ह्रीं सपरि० भूमिपुत्राय आसनं सम०। धनप्रदाय० पाद्यं सम०॥स्थिरासनाय० अर्घं सम०। मंगलाय० आचमनं सम०। महाकायाय० पंचामृतस्नानं समः। ऋणहर्त्रे० स्नानं सम० ॥ गन्धादि पंचोपचारैः संपूज्य ( पृष्ठ ५६–५८ ) पुरुषसूक्तेनाभिषेकः ॥ सर्वकर्मावरोधकाय० शुद्धोदकस्नानं सम० । लोहिताय० वस्त्रं सम०। लोहिताक्षाय० उपवीतं सम० । सामगानां कृपाकराय० गंधं० । धरात्मजाय० पुष्पं सम० ॥

अथांगपूजा ॥ मंगलाय० पादौ पूज० ॥ भूमिपुत्राय० गुल्फौ पूज०॥ऋणहर्त्रे०जंघे पूज०॥ धनप्रदाय०जानुनी पूज०॥स्थिरासनाय० ऊरू पूज० ॥ महाकायाय० कटी पूज०॥ सर्वकर्मावरोधकाय० नाभिं पूज०॥ लोहिताय०उदरं पूज०॥ लोहिताक्षाय० हृदयं पूज० सामगानां कृपाकराय० करौ पूज० ॥ धरात्मजाय० बाहू पूज० ॥ कुजाय० ॥ स्कंधौ पूज० ॥ भौमाय० कंठं पूज० ॥ भूतिप्रदाय० हनुं पूज० ॥ भूमिनंदनाय०मुखं पूज०॥ अंगारकाय० नासिकां पूज०॥यमाय०कर्णौ पूज० ॥ सर्वरोगापहारकाय० चक्षुषी पूज० ॥ दृष्टिकर्त्रे० ललाटं पूज०॥ दृष्टिहर्त्रे० शिरः पूज०। सर्वकामफलप्रदाय० सर्वांगं पूज०। इत्यंगपूजा ॥

" अथावरणपूजा–अथैकविंशतिकोष्टकेषु अंगानि एकविंशतिनामभिः पूजयेत् ॥ यथा–मङ्गलाय नमः॥ भूमिपुत्रा०॥ ऋणहर्त्रे० ॥ धनप्रदा०॥ स्थिरासना०।महाकाया०।सर्वकर्मविरोधकाय०॥लोहिता०॥ लोहिताक्षा० ॥ सामगानां कृपाकरा०॥ धरात्मजा०॥ कुजा०॥ भौमा०॥

भूतिदाय० ॥ भूतिनंदनाय० ॥ अङ्गारकाय० ॥ यमा० ॥ सर्वरोगापहारका० ॥ वृष्टिकर्त्रे० ॥ वृष्टिहर्त्रे० ॥ सर्वकामफलप्रदा० ॥ अनेनावरणपूजनेन भौमः प्रीयताम् ॥ भौमाय नमः सौभाग्यद्रव्यं सम० ॥ कुजाय० धूपं स० ॥ भौमाय० दीपं स० ॥ भूतिदाय० गुडमिश्रगोधूमान्ननैवेद्यं स० ॥ प्राणाय० । मध्ये० । उत्त० । हस्तप्र० । मुखप्र० । करो० गं० ॥ भूमिनंदनाय० तांबूलं स० ॥ यमाय० दक्षिणां स० ॥ सर्वरोगापहारकाय० निराजनं स० ॥ वृष्टिकर्त्रे० पुष्पांजलिं सम० ॥ वृष्टिहर्त्रे० प्रदक्षिणां सम० ॥ सर्वकामफलप्रदाय० नमस्कारं सम० ॥ तत एकविंशत्यर्घं दद्यात् ॥ "भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः ॥ धनार्थी त्वां प्रपन्नोऽस्मि गृहाणार्घं नमोऽस्तु ते ॥" रक्तपुष्पाक्षतयुतेन ताम्रपात्रस्थजलेन मंगलाय नमः इदमर्घं समर्प० ॥ एवमेकविंशत्यर्घं दद्यात् ॥ तद्यथा ॥ मंगलाय० इदमर्घ्यं स० । भूमिपुत्राय० इद० ॥

---

१ (श्रीफलं) श्रीफलं च मया देव स्थापितं पुरतस्तव ॥ तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि ॥१॥ (उत्तती-खारेक) वृत्तीनां सुखदो नित्यं दुखदारिद्र्यनाशन ॥ सन्तानसुखदो नित्यमुत्तत्यर्घं प्रकल्पये ॥१॥ (कूष्मांड ॥) रूपं देहि जयं देहि भाग्यं भगवन् देहि मे ॥ कुष्मांडार्घप्रदानेन प्रसीद व्रतनायक ॥ ३ ॥ ( बीजोरु ॥) मातुलिंगं मनोहारि महास्वादु रसान्वितम् ॥ प्रमोदार्घः पुरस्तेऽयं कल्पितः व्रतराणमया ॥४॥ (जंबीरं-जमरुख) फलमध्येषु सर्वेषु जंबीरं सुमनोहरम् ॥ एतत्फलार्घ्यदानेन व्रतराट् प्रीयतामिति ॥५॥ (नारिंगं-नारिंगी) उद्यन्मार्तंडसदृशं नारिंगं सुमनोहरम् ॥ एतत्फलार्घ्यदानेन व्रतराट् प्रीयतां मम ॥ ६ ॥ (दाडिमं-दाडम) मुक्ताफलसमं कान्त्या बीजगर्भितसंग्रहम् ॥ फलं दाडिमसंभूतं गृहाण परमेश्वर ॥ ७ ॥ (कदलीफलम् ॥) नारायण नमस्तेऽस्तु नरकार्णवतारक ॥ अर्घं गृहाण देवेश मम सौख्यं विवर्द्धय ॥८॥ (चीभडुं ॥) उर्द्वालुकफलं रम्यं बीजैर्गर्भितविग्रहम् ॥ उर्द्वालुफलदानेन

ऋणहर्त्रे० इद० ॥ धनप्रदाय० इद० ॥ स्थिरासनाय० इद० ॥ महाकायाय० इद०॥ सर्वकर्मावरोधकाय० इद०॥ लोहिताय० इद० ॥ लोहिताक्षाय० इद० ॥ सामगानां कृपाकराय० इद० ॥ धरात्मजाय० इद० ॥ कुजाय० इद० ॥ भौमाय० इद० ॥ भूतिप्रदाय० इद० ॥ भूमिनंदनाय० इद० ॥ अंगारकाय० इद० ॥ यमाय० इद० ॥ सर्वरोगापहारकाय० इद० ॥ वृष्टिकर्त्रे० इद० ॥ वृष्टिहर्त्रे० इद० ॥ सर्वकामफलप्रदाय० इद० ॥ २१ ॥ इत्यर्घं दत्वा जपं कुर्यात् ॥

---

व्रतराज नमोऽस्तु ते ॥ ९ ॥ (खडबुचु ॥) कौशांतके फलं रम्यं नानाकोटिविराजितम् ॥ कौशांतक्यर्घदानेन प्रसीद व्रतनायक ॥ १० ॥ (जांबु ॥) जांबु फलमिदं रम्यं कंठमाधुर्यवृद्धिदम् ॥ जांबुफलार्घदानेन प्रसीद परमेश्वर ॥११॥ (आम्रफलं–केरी) फलमात्रेषु सर्वेषु श्रेष्ठमाम्रफलं नवम् ॥ आम्रफलार्घदानेन प्रसीद व्रतनायक ॥ १२ ॥ (फणस) फनसं बहु बीजाढ्यं कंचुकाच्छन्नविग्रहम् ॥ फनसार्घप्रदानेन प्रसीद परमेश्वर॥१३॥ (जातिफलं-जायफल) महास्वादकरं चारु स्निग्धं नित्यं मुखप्रियम् ॥ जातिफलार्घदानेन प्रीयतां कमलापतिः ॥ १४ ॥ (एलची॥) पक्वैलाफलमाशीतं सुखस्वादुकरं परम् ॥ भक्त्या मे कल्पितं तेऽद्य सुखसौभाग्यदायकम् ॥१५॥ (अखरोड) अक्षोडार्घमिदं रम्यं स्थापितं पुरतस्तव ॥ अक्षोडार्घप्रदानेन मम सौख्यं विवर्धय ॥ १६ ॥ (द्राक्षा ॥) पक्वं द्राक्षफलं रम्यं सुखस्वादकरं परम् ॥ द्राक्षाफलार्घदानेन व्रताधीश प्रसीद मे ॥ १७ ॥ (वंशपात्रम् – करंडीयो) अष्टसौभाग्यसंयुक्तं वंशवृद्धिकरं परम् ॥ वंशपात्रमिदं देव कल्पितं गृह्यतां विभो ॥ १८ ॥ (पूगीफलं) पूगीफलं महद्दिव्यं पवित्रं पापनाशनम् । ददामि तेन ते ह्यर्घं मङ्गलः प्रीयतामिति ॥ १९ ॥ (पद्मबीजं–कमरकाकडी) पद्मबीजमिदं रम्यं भूतिदं कमलाप्रियम् ॥ भौमाय ते ददाम्यर्घं प्रसीद भूमिनंदन ॥ २० ॥ लवङ्गं तु सुगन्धाढ्यं पुष्टिदं तुष्टिकारकम् ॥ तेन दत्तमिमं चार्घं गृहाणाङ्गारक प्रभो ॥ २१ ॥ इति ॥

अस्य श्रीमंगलमंत्रस्य ब्रह्मा ऋषिः त्रिष्टुप् छंदः मंगलो देवता मं बीजं माहेश्वरो भूमिपुत्र इति शक्तिः मम ऋणविमोचनाद्यभीष्टसिद्ध्यर्थमेकशताधिकद्विसहस्र (२१००) परिमितं ( यथाशक्ति वा ) जपं करिष्ये ॥ इति संकल्प्य मां मीं मूं मैं मौ मः इत्यनेन षडंगानि न्यस्य मूलमंत्रं ( २१०० ) जप्त्वा अन्ते पुनः षडंगं न्यस्य कवचं जपेत् ॥ इति ॥

" अथ जपदशांशहोमः "

अद्येत्यादि० मंगलव्रतांगभूतं कृतजपदशांशेन हवनं करिष्ये ॥ देवस्याग्रे मृत्तिकया त्रिकोणं स्थंडिलं कृत्वा ॥ अग्निं प्रतिष्ठाप्य अत्र खादिर (खेर) समिदत्र प्रधानं मंगलं गुडाज्यमिश्रिततिलद्रव्येण मूलमंत्रेण कृतजपदशांशेन जुहुयात् ॥ खर्जूरीफलेनात्र पूर्णाहुतिं हुत्वा होमशेषं समापयेत् ॥ ततो गायत्रीं पठित्वा " मंगलं तर्पयामि " इति गोदुग्धेन होमदशांशेनैकविंशतिनामभिः तर्पणं कुर्यात् ॥ ततो वायनदानम् ॥ ब्राह्मणं संपूज्य तांबूलदक्षिणासहितान् एकविंशतिसंख्याकान् गुडमिश्रतिलचूर्णलड्डुकान् तस्मै श्रद्धया दद्यात् ॥ तत्र

---

१. शिखायां मंगलः पातु भूमिपुत्रस्तु मूर्द्धनि ॥ ललाटे ऋणहर्ता च चक्षुषोश्च धनप्रदः ॥ १ ॥ स्थिरासनः श्रवणयोर्महाकायस्तु नासिके ॥ आस्यजिह्वोष्ठदन्तेषु सर्वकर्मावरोधकः ॥ २ ॥ हनौ मां लोहितः पातु कंठं लोहितलोचनः ॥ स्कंधयोरुभयो रक्षेत्सामगानां कृपाकरः ॥ ३ ॥ धरात्मजो भुजौ पातु कुजो रक्षेत्करद्वयम् ॥ भौमो मां हृदये पातु भूमिजस्तु तथोत्तरे ॥ ४ ॥ भूनंदनोऽथ नाभौ च कट्यामंगारकोऽवतु ॥ सक्थिनी मंगलो रक्षेज्जान्वो रोगापहारकः ॥ ५ ॥ जंघयोर्वृष्टिकर्ता च वृष्टिहर्ता च गुल्फयोः ॥ पादांगुष्ठौ च पादौ च सर्वकर्मफलप्रदः ॥ ६ ॥ शक्तिर्मे पूर्वतो रक्षेच्छूलं रक्षतु दक्षिणे ॥ पश्चिमे मां धनू रक्षेदुत्तरे च शरस्तथा ॥ ७ ॥ ऊर्ध्वं षडाननः पातु अधस्तात्पृथिवी तथा ॥ एवं हि कवचं जप्त्वा पश्चाद्धोमं समाचरेत् ॥ ८ ॥ इति भौमकवचम् ॥

मंत्रः ॥ " मंगलाय नमस्तुभ्यं सर्वमंगलकारक ॥ वायनेन च संतुष्टो मम कामान् प्रपूरय ॥ " अनेन वायनदानेन ऋणमोचनभौमः प्रीयताम् ॥ ततः खादिराङ्गारकेन ( १ खेरना लाकडानो बळतो अगारो ) " ऋणसंज्ञकरेखात्रयं कृत्वा वामपादतलेन मार्जयेत् ॥ तत्र मंत्रः ॥ दुःखदौर्भाग्यनाशाय धनसंतानहेतवे ॥ मार्जयाम्यसिता रेखास्तिस्रो जन्मत्रयोद्भवाः॥" ततो मंगलस्तोत्रपाठकर्तुश्च ब्राह्मणस्य पूजनं कृत्वा मंगलस्तोत्रं श्रुत्वा ॥ "यान्तु देवगणा०" इति उत्थाप्य पूजास्थाने संस्थाप्य वा विसर्जयेत् ॥ कथां श्रुत्वा ब्राह्मणभोजनपुरःसरं सगुडगोधूमान्नं मौनी भुंजीत ॥ एवंप्रकारेण प्रतिभौमवासरे एकविंशतिभौमवारपर्यन्तं कृत्वा द्वाविंशतितमे भौमवासरे व्रतोद्यापनं कुर्यात् ॥इति॥

## ॥ अथ भौमवारव्रतोद्यापनम् ॥

पूर्ववन्मण्डपादिकं विधाय आचम्य प्राणानायम्य ॥ अद्येत्यादि० ममामीष्टकामनासिद्ध्यर्थम् आचरितं यद्भौमवारव्रतं तत्संपूर्णफलावाप्तये तदुद्यापन करिष्ये ॥ तदंगभूतं दिग्रक्षणं कलशाराधनं गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजन वसोर्द्धारामायुष्यमन्त्रजपं नांदीश्राद्धं ब्राह्मणवरणं सर्वतोभद्रमडले देवतास्थापनादिकं च करिष्ये इति संकल्प्य दिग्रक्षणादि भद्रमंडले ब्रह्मादिदेवतास्थापनपूजनान्तं ( ६–९९ ) कर्म पूर्ववत् कृत्वा ॥ मध्ये विश्वाधारासीत्यादि पूर्णपात्रान्तं कलशं संस्थाप्य

---

१ " अथ भौमस्तोत्रम् " मगलो भूमिपुत्रश्च ऋणहर्त्ता धनप्रद ॥ स्थिरासनो महाकाय सर्वकर्मावरोधक ॥ १ ॥ लोहितो लोहिताक्षश्च सामगाना कृपाकर ॥ धरात्मज कुजो भौमो भूतिदो भूमिनदन ॥ २ ॥ अगारको यमश्चैव सर्वरोगापहारक' ॥ वृष्टे कर्त्तापहर्त्ता च सर्वकामफलप्रद. ॥ ३ ॥ एतानि कुजनामानि नित्य य' प्रयत पठेत् ॥ ऋणं न जायते तस्य धन शीघ्रमवाप्नुयात् ॥ ४ ॥ इति

तदुपरि रक्तं क्षौमवस्त्रं प्रसार्य चंदनेन त्रिकोणमंडलं विलिख्य मंङ्कादिदेवता ( १०७ ) आवाह्य संपूज्य ॥ ततः परितः एकविंशतिकुंभान् संस्थाप्य "मंगलाय नमः" (इत्यादि एकविंशति नामभिः संपूज्य) ततो हैमं मंगलमुक्तपूजाविधिना संपूज्य सुवर्णपुष्पैर्विशेषपूजां कृत्वा ॥ आचार्यपूजनपूर्वकं ब्राह्मणान् संपूज्य दक्षिणादिभिस्तान् संतोष्य तेभ्य आशिषो गृहीत्वा पुराणपठनादिना रात्रिं निनयेत् ॥ इति ॥

" अथ होमविधिः "–द्वितीयादिने प्रातर्नित्यकर्म समाप्य आचम्य प्राणा० । अद्येत्यादि० भौमव्रतोद्यापनस्य संपूर्णफलावाप्तये ग्रहमखसहितं विहितहोमं करिष्ये ॥ तत्रादौ दिग्रक्षणाद्यावाहितदेवतानां पूजनम् अग्निप्रतिष्ठापनं ग्रहस्थापनं पूजनं च करिष्ये ॥ इति संकल्प्य दिग्रक्षणाद्यावाहितदेवतानां पूजनं विधाय स्थंडिलं विरच्य पञ्चगव्यादि- कृत्वा पंचभूसंस्कारपूर्वकम् अग्निं प्रतिष्ठाप्य संपूज्य ग्रहाणां स्थापनं पूजनं च विधाय कुशकंडिकां कृत्वा ग्रहहोमान्तं कर्म कुर्यात् ॥ ततः प्रधानहोमः ॥ अत्र प्रधानं मंगलं गुडाज्यमिश्रिततिलद्रव्येणाष्टोत्तरसहस्राष्टोत्तरशतसंख्यया वा " ह्रीं भौमाय नमः " इति मूलमंत्रेण जुहुयात् ॥ एकविंशतिपरिवारदेवतास्तेनैव द्रव्येण अष्टाष्टसंख्यया जुहुयात् ॥ ततो ब्रह्मादिदेवता ( १६४–१६५ ) मंङ्कादिदेवताभ्य- ( १६६ ) श्चैकैकामाज्याहुतिं दद्यात् ॥ मंगलो भूमिपुत्रश्चेत्याद्येकविंशतिदेवतास्तासां नाममंत्रेण ( पृ० ५०४ ) आज्याहुतिं दद्यात् ॥ ततो न्यूनातिरिक्तदोषपरिहाराय अष्टाविंशतिसंख्यया " अग्निवायुसूर्येभ्यो नमः " इति मंत्रेण व्याहृतीर्जुहुयात् ॥ एवं होमं समाप्य ततः स्थापितदेवतानामुत्तरपूजनादिप्रणीताविमोकान्तं ( पृष्ठ- १६८–१८८ ) कृत्वा ग्रहानग्निं च विसृज्य ॥ मंडलसमीपमागत्य

( यथाशक्ति स्थापितदेवतापूजनं कृत्वा ) महानीराजनं कुर्यात् ॥ ततो ब्राह्मणान् संपूज्य तेभ्यो दक्षिणादिकं दद्यात् ॥ दानम् ॥ पूर्वोक्तरेकविंशतिद्विजान संपूज्य तेभ्यो रक्तचन्दनचर्चितान् गुडमिश्रितनिलचूर्णपूरितान् रक्तवस्त्रदक्षिणासहितान् कुम्भान् वस्त्रपात्रीसहितान् दद्यात् ॥ तत्र मंत्रः ॥ " मंगलः प्रतिगृह्णाति मंगलो वै ददाति च ॥ मंगलस्तारकोभाभ्यां मंगलाय नमो नमः ॥ " इति दत्वा आशिषो गृहीत्वा तान् भोजयित्वा स्वयं भुञ्जीत ॥ इति मङ्गलव्रतोद्यापनविधिः॥

---

## ॥ अथ चान्द्रायणादिव्रतानि ॥

तत्र त्रिंशत् कृच्छ्रात्मको अब्दः ॥ कृच्छ्रस्तु द्वादशदिनसाध्यः॥ तथाहि–प्रथमदिने मध्याह्ने हविष्यस्यैकभक्तस्य षड्विंशतिर्ग्रासाः भोक्तव्याः । द्वितीयेऽहनि नक्तं द्वाविंशतिर्ग्रासाः । तृतीये अयाचितस्य चतुर्विंशतिर्ग्रासाः। चतुर्थे निरशनम् अय पादकृच्छ्रः ॥ कथंचित् त्रिगुणीकृतोऽय प्राजापत्यः कृच्छ्रः ॥ एकभक्तनक्तायाचितद्व्योपवासद्वयैरर्धकृच्छ्रः ॥ यदा त्र्यहमयाचितं त्र्यहमुपवास इत्यर्धकृच्छ्रः ॥ येषु नवादिनेषु भोजनप्राप्तिस्तत्र ग्रासनियमं त्यक्त्वा पाणिपूरान्नभोजने अतिकृच्छ्रः ॥ एकग्रासपर्याप्तस्य प्राणधारणपर्याप्तस्य वा दुग्धस्य एकविंशतिदिनेषु भक्षणे कृच्छ्रातिकृच्छ्रः ॥ एकदिने सकुशोदकमिश्र पचगव्याशनम् एक उपवास इति द्वैरात्रिकं सांतपनकृच्छ्रः ॥ पंचगव्यकुशोदकानाममिश्राणामेकैकस्यैकैकदिने अशनमेक उपवास इति सप्ताहसाध्यो महासांतपनः ॥ त्र्यहं मिश्रितपंचगव्याशने यतिसांतपनम् ॥ तप्तानां दुग्धघृतजलानामेकैकस्य त्रिदिने पानमुपवासत्रयं चेति तप्तकृच्छ्रः ॥ शीतानां पाने शीतकृच्छ्रः ॥ यद्वा तप्तानां घृतादीनामेकैकदिने

अशनं चतुर्थदिने उपवास इति दिनचतुष्टयसाध्यस्तप्तकृच्छ्रः ॥ द्वादशाहोपवासेन पराकृच्छ्रः ॥ शुक्लपक्षे प्रतिपदादितिथिषु मयूरांडसमानैकैकग्रासान्वर्धयन्पूर्णिमायां पंचदशग्रासाः क्षये चतुर्दश वृद्धौ षोडशसंपद्यते कृष्णपक्षे एकैकग्रासन्ह्रासेनामायामुपवास इति माससाध्यं यवमध्यसंज्ञं चान्द्रायणम् ॥ कृष्णपक्षे प्रतिपदि चतुर्दशग्रासान् भुक्त्वा एकैकग्रासह्रासेन दर्शे अनशनं शुक्ले वृद्धिरिति कृष्णादि शुक्लान्ते ते पिपीलिकामध्यचान्द्रायणम् ॥ ( अब्दगणना तु प्राजापत्यकृच्छ्रैरेव ॥)

अथ प्रत्याम्नायाः ॥ तत्र प्राजापत्यप्रत्याम्नायाः दशसहस्रगायत्रीजपः॥गायत्र्या सहस्रं तिलहोमः॥कश्चित्सहस्रं व्याहृत्या तिलहोम उक्तः॥ शतद्वयं प्राणायामाः॥ द्वादशब्राह्मणभोजनम्॥ यावत्क्लेशशोषणं विरम्य तीर्थे द्वादशस्नानानि॥वेदसंहितापारायणम्॥ योजनयात्रा॥ द्वादशसहस्रं नमस्काराः ॥ द्वात्रिंशदुत्तरशतं प्राणायामान् कृत्वा अहोरात्रमुपोषितः प्राङ्मुखास्तिष्ठेत् ॥ गोमूत्रेण यावकभक्षणे ऐकाहिककृच्छ्रम् ॥ कश्चित् रुद्रैकादशिनीजपात्कृच्छ्रमाह ॥ पावकेष्टिः पवमानेष्टिः षडुपवासाः प्राजापत्यप्रत्याम्नायाः॥ एकविप्रभोजनमुपवासस्य अत्यशक्तौ सहस्रगायत्रीजपो द्वादशप्राणायामा वेति स्मृत्यर्थसारे॥ "प्राजापत्येप्यशक्तस्तु धेनुं दद्यात्पयस्विनीम्॥ धेनोरभावे निष्कं स्यात्तदर्धं पादमेव वा॥" अशीति गुंजात्मकः कर्षः॥ चत्वारः कर्षा निष्कम् ॥ निष्कनिष्कार्धनिष्कपादान्यतमप्रमाणं हेमरूप्यं वा धेनुमूल्यं देयम् ॥ अत्यशक्तेन निष्कपादार्धरजतं तत्समं धान्यादि वा देयम् ॥ अतिकृच्छ्रे गोद्वयं सांतपने गोद्वयं पराके तप्तकृच्छ्रे च गोत्रयं कृच्छ्रातिकृच्छ्रे गोचतुष्टयं गोत्रयं वा चांद्रायणे अष्टौ पंच चतस्रस्तिस्रो वा गावः ॥ मासं पयोव्रते यावकव्रते मासोपवासे च पंचगावः मासं गोमूत्रयावकव्रते षट् गावः ॥ इति ॥

## ॥ अथ तांबूलदानोद्यापनम् ॥

सर्वेषामेव दानानां तांबूलं चोत्तमं स्मृतम् ॥ आनंदो दीर्घमायुष्यं सौमनस्यं च पुष्टितः ॥ सौभाग्यं च धनादिभ्यो विद्यालाभस्तथैव च ॥ एतत्तु पंचकं राजन् तांबूलाल्लभ्यते नरैः ॥ द्वात्रिंशत्पत्रकैर्युक्तं पूगीफलसमन्वितम् ॥ एलालवंगकर्पूरयुक्तं तांबूलमुच्यते ॥ यथालाभं भवेद्वापि देयं द्विजवराय च ॥ द्विजाभावे सुवासिन्यै तदभावे कुमारिकाम् ॥ उद्यापनं प्रकर्तव्यं यथाविभवसारतः ॥ शुभेह्नि मासे कर्त्तव्यमृक्षे वैवाहिके ततः ॥ पंच सप्त च सद्विप्रान सपत्नीकान्प्रपूजयेत् ॥ पूर्वरात्रौ च संपूज्य लक्ष्मीनारायणावुभौ ॥ उमामहेश्वरौ पूज्यौ सावित्रीं ब्रह्मणा सह॥ रतिं च पंचबाणं च पूजयेच्च यथाविधि ॥ ऋद्धिं सिद्धिं विघ्नराजं लोकपालांश्च पूजयेत् ॥ तांबूलोपस्करांस्तत्र देवतोत्तरतो न्यसेत् ॥ पुरुषोत्तमाय०। शार्ङ्गपाणये०। गरुडध्वजाय०। अनन्ताय०। यज्ञपुरुषाय०। पुंडरीकाक्षाय०। नित्याय०। विदगर्भाय०। गोवर्धनाय०। सुब्रह्मण्याय०। शौरिणे०। ईश्वराय०। एतानि द्वादशनामानि पूजने हवने तथा॥ घृतं वा पायसं वापि पंचामृततिलौदनम् ॥ तत्तन्मंत्रैश्च होतव्यमष्टाविंशतिसंख्यया॥ पर्णस्थापनपात्रं च चूर्णपात्रं तथैव च ॥ स्वर्णं रौप्यमयं वापि पैत्तलं सीससंभवम् ॥ सर्वशोभासमायुक्ता लोहजा पूगभाजिका (सुडी)॥ तेषां पूजा प्रकर्त्तव्या गंधपुष्पादिभिस्तथा॥ पूर्णाहुतिं ततः कुर्याद् ब्राह्मणान्भोजयेत्ततः ॥ तांबूलं सुष्ठु यो दद्यात् ब्राह्मणेभ्योऽतिभक्तितः ॥ मेधावी सुभगः प्राज्ञो दर्शनीयश्च जायते ॥ फलेन तृप्यते ब्रह्मा पत्रेण भगवान् हरिः ॥ चूर्णमीश्वरतृप्त्यर्थं खदिरः कामतृप्तये ॥ कर्पूरैलालवंगादिजातीपत्रफलैस्तथा ॥ इन्द्राद्या लोकपालाश्च संतुष्टाश्च भवन्ति हि ॥ वारिदः सुखमाप्नोति राज्यं प्राप्नोति चान्नदः ॥ दीपदश्चक्षुराप्नोति त्रयं तांबूलदानतः ॥ इति तांबूलदानोद्यापनम् ॥

---

## ॥ अथ मौनव्रतोद्यापनम् ॥

चातुर्मास्ये व्रतं कुर्यात्मौनाख्यं मुनिसत्तम ॥ यस्याचरणमात्रेण गम्यते विष्णुमंदिरम् ॥ व्रतमध्ये व्रतस्यान्ते व्रतादौ वा यथाविधि॥ उद्यापनं प्रकुर्वीत व्रतसंपूर्तिहेतवे ॥ स्नात्वा नित्यविधिं कृत्वा कुर्यात्संकल्पमादृतः॥ सर्वतोभद्रमालिख्य तत्र विष्णुं मपूजयेत्॥ लक्ष्म्या युतं तु देवेशं ब्रह्माद्या देवतास्तथा ॥ द्वारदेशे तु संपूज्यौ पुण्यशीलसुशीलकौ ॥ जयं च विजयं चैव गदादीन्यायुधानि च ॥ मंडपं तोरणैर्युक्तं पट्टवस्त्रेण शोभितम्॥ सुवर्णप्रतिमां कृत्वा घंटां गरुडलांछिताम् ॥ उपचारैः षोडशभिरर्चयित्वा रमापतिम्॥ रात्रौ जागरणं कुर्याद् गीतवाद्यादिमंगलैः॥ घृतेनाष्टोत्तरशतं पावके हवनं चरेत् ॥ अतोदेवेति मंत्रेण ब्राह्मणान् भोजयेत्ततः॥ पीठदानं ततः कुर्याद् घंटादानं तथैव च ॥ दीपदानं ततः कुर्यात् व्रतसंपूर्तिहेतवे ॥ य इदं कुरुते वत्स स साक्षान्मामकी तनुः ॥ इति ॥

### मौनव्रते विशेषः

भाद्रशुक्लप्रतिपदि प्रातरुत्थाय वाग्यतः ॥ संपादयेत्प्रयत्नेन पूजासंभारमादृतः ॥ १ ॥ नानाफलानि लड्डूकान् षोडशातिमनोहरान् ॥ दधिभक्तं च धूपादीन् दूर्वादींश्च प्रकल्पयेत् ॥ २ ॥ ततो गृहीत्वा तत्सर्वं मौनी द्विजपुरःसरः ॥ गत्वा नदीं तडागं च स्नायान्मृत्स्नानपूर्वकम् ॥ ३ ॥ कांडैः षोडशभिर्युक्तां दूर्वामादाय कन्यके ॥ सूत्रेण षोडशग्रन्थियुक्तेन सहितां तु ताम् ॥ ४ ॥ करे बद्ध्वा स्थावरे वा मृन्मये वाऽपि भक्तितः ॥ लिङ्गे संपूजयेद्रुद्रमुपचारैर्मनोरमैः ॥ ५ ॥ दूर्वाः षोडश संगृह्य शिवलिङ्गेऽर्पयेत्ततः ॥ पक्वान्नफललड्डूकदधिभक्तानि चार्पयेत् ॥ ६ ॥ ततः पूजां समाप्याय ब्राह्मणान्

पूजयेत्ततः ॥ दधिभक्तं जले क्षिप्त्वा गृहीत्वा फलकद्दुकान् ॥ ७ ॥ गृहं गत्वा ब्राह्मणांश्च भोजयेत तदाज्ञया ॥ स्वयं भुञ्जीत हि ततो धृतं मौनं विसर्जयेत् ॥ ८ ॥ एवं षोडश वर्षाणि विधायोद्यापनं चरेत् ॥ एवं कृत्वा व्रतं सम्यग्वांछितं फलमाप्नुयात् ॥ ९ ॥ पुत्रपौत्रसमायुक्तो धनधान्यसमृद्धिमान् ॥ इहलोके सुखं भुक्त्वा कैलासे रमतेऽनिशम् ॥१०॥ इति (व्र.पु.च) भविष्यपुराणे मौनव्रतोद्यापनम् ॥

---

## ॥ अथ धारणापारणाव्रतम् ॥

आषाढशुक्लैकादशीमारभ्य कार्तिकशुक्लैकादशीपर्यंतं व्रतं कार्यम् ॥ एकस्मिन् दिवसे उपवासः द्वितीयादिवसे पारणमिति आषाढे कार्तिके वा चातुर्मास्यपर्यंतं कार्यम् ॥ पारणादिने " ह्रीं नमो नारायणाय " इत्यष्टाक्षरमंत्रेण विष्णुमुद्दिश्याष्टोत्तरशतमर्घ्यमदानं कार्यम् ।[1] आरम्भदिने गणेशपूजनं पुण्याहवाचनं कारयित्वा सकल्प्य व्रतारंभ कार्यः॥ एवं व्रतं कृत्वोद्यापनं कार्यम् ॥ चातुर्मास्यव्रते प्रतिमासमुद्यापनम् ॥ उपवासदिने दिग्रक्षणादिऋत्विग्वरणान्तं कर्म कृत्वा कलशोपरि लक्ष्मीनारायणमूर्तेः प्राणप्रतिष्ठादिकं कृत्वा पूजनं कार्यम् ॥

द्वितीयदिवसे आवाहितदेवान् संपूज्य लक्ष्मीनारायणपूजनं च विधाय अग्निं प्रतिष्ठाप्य ग्रहस्थापनपूजनं विधाय होमं कृत्वा " श्रीलक्ष्मीनारायणाभ्यां नमः" इति मंत्रेण तिलौदनाहुतीर्घृतौदनेन (१०८) आहुतीर्हुत्वा "ह्रीं नमो नारायणाय" इति मन्त्रेण (१०८) पायसाहुतीर्जुहुयात् ॥ पश्चात्पूर्णाहुतिं कृत्वा होमं समाप्यारार्तिकं कृत्वा ब्राह्मणेभ्यो दक्षिणां दत्त्वा संभोज्य स्वयं भुञ्जीत ॥ इति धारणापारणाव्रतम् ॥

---

१ आ व्रतथी अनेक जातनां पापोनो नाश थाय छे. तेथी संकल्पमां तेनो उद्दे करवो

## ॥ अथ प्रपादानविधिः ॥

माघकृष्णचतुर्दश्यां यत्र मार्गादिषु जनैर्जलमपेक्ष्यते तत्र द्वारयुक्तं मंडपं विरच्य तत्र स्वस्तिवाचनादिकं कारयित्वा ताम्रस्य मृत्तिकाया वा पात्रेषु जलं प्रपूर्य जनानां जलपानार्थं प्रपादानं कर्तव्यं (परब मंडाववी)। यदि शक्तिः स्याच्चेत्तक्रं लवणं भोज्यपदार्थादिकमपि स्थापनीयं नोचेत्केवलं जलमेव। इदं प्रपादानं यावद्वर्षाऋतुस्तावत्करणीयम्॥ पश्चात्तस्योद्यापनं कृत्वा पात्रादिकं ब्राह्मणेभ्यो दत्वा ब्राह्मणभोजनं कारयितव्यं तेन महाफलम्। पितृनिमित्ते सति तेषां समुद्धारः॥

॥ इति प्रपादानविधिः ॥

---

## ॥ अथ लक्षपद्मविधिः ॥

स्त्रीभिः स्वकामनापरिपूर्णार्थं गुरुशुक्रास्तादिदोषरहिते मासे शुभे दिने आरभ्य प्रतिदिनं पवित्रस्थले विविधवर्णैः श्वेतैस्तण्डुलैर्वा कमलानि कर्तव्यानि च भगवतः सूर्यस्य पूजनं कर्तव्यम्॥ लक्षकमलसंपूर्तौ तस्योद्यापनं कर्तव्यम्॥ तत्र गणपतिपूजनादिकं कृत्वा ततो वेदीं विधाय तत्र कमलं विरच्य तत्र विश्वाधारासीत्यादिना कलशं संस्थाप्य सूर्यमूर्तेः पूजनं कार्यम्। सुवर्णकमलं सूर्याय समर्पयेत्॥ ततः "सूर्यनारायणाय नमः" इति मंत्रेण अथवा सूर्यमंत्रेण तलघृतपायसैरष्टोत्तरसहस्रं वाऽष्टोत्तरशतमाहुतीर्जुहुयात्॥ सूर्यप्रीत्यर्थं गोमदानं कुर्यात्॥ आचार्याय सर्वं दत्वा १०८ ब्राह्मणभोजनं यथाशक्ति वा कारयितव्यम्॥ (इदं व्रतं सौरपुराणेऽभिहितम्)॥

॥ इति लक्षपद्मविधिः ॥

---

## ॥ अथ लक्षदीपप्रदानविधिः ॥

वर्षद्वयपर्यंतं वर्षमेकं षण्मासावधिं वा महादेवस्य समीपं प्रतिदिनमेकादशसंख्याकं प्रज्वलितदीपस्थापनं कर्तव्यम् ॥ वा कार्तिकमासे लक्षद्वयमेकलक्षार्धलक्षसंख्याकं दीपत्रयं प्रज्वाल्य दीपमालायां शिवलोकमाप्तिः ॥ कौसुम्भतैलेनातसीतैलेन वा दीपमालायामेकविंशतिपुरुषैः सह स्वोद्धारं कर्तुं समर्थो भवति कैलासे निवसति ॥ कर्पूरेण शिवालये आरार्तिकं कुर्वाणास्तैलेन वा दीपकर्तारोऽपि भाग्यवन्तो भवन्ति ॥

एवं व्रते कृते दीपसंख्यासमाप्तावुद्यापनं कर्तव्यम् ॥ तत्र पूर्वदिवसे उपवासं कृत्वा गणपतिपूजनं स्वस्तिवाचनादिकं कृत्वा कमलं विरच्य तत्र शंकरपार्वतीमूर्तिं सौवर्णीं कृत्वा सविधि संस्थाप्य संपूज्य कथादिकं श्रुत्वा रात्रिं निनयेत् ॥

द्वितीयदिने स्थापितदेवतानां पूजनं विधायाग्निं प्रतिष्ठाप्य ग्रहान् संस्थाप्य संपूज्य ग्रहहोमं विधाय प्रधानदेवतायै "उमामहेश्वराभ्यां नमः" इति मंत्रेण तिलघृतयवचरुभिस्तथा च सघृतत्रिलपत्रै (१०८) रष्टोत्तरशतमाहुतीर्जुहुयात् ॥ ततो होमं समाप्याचार्यं संपूज्य मूर्त्यादिकं दत्वा ब्राह्मणान् भोजयित्वा स्वयं भुञ्जीत ॥ अनेन व्रतेन पापविनाशो भोगैश्वर्यादिप्राप्तिरुत्तमलोकावाप्तिश्च भवति ॥

## ॥ लक्षदूर्वापूजनप्रकारश्चोद्यापनम् ॥

श्रावणमासस्य भौमवारयुक्तचतुर्थीमारभ्य वा शुभदिनमारभ्य लक्षदूर्वापूजनारंभः कार्यः ॥ आचम्य प्राणानायम्य संकल्प कृत्वा गणेश संपूज्य प्रतिदिनमेकक्रमेणैव यावल्लक्षदूर्वासमाप्तिः स्यात् तावद् व्रतं कृत्वा तत उद्यापनं कर्तव्यम् ॥

माघकार्तिकभाद्रपदाषाढश्रावणमासेषु शुभे वाऽन्यस्मिन्मासे उद्यापनं कार्यम् ॥ देवगृहे देवालये वा गोमयेन मृत्तिकया वा भूमिमुपलिप्य पञ्चब्राह्मणानां वरणं कृत्वा स्वस्तिवाचनादिकं कर्तव्यम्॥ देशकालादिकमुच्चार्य संकल्पं विधाय सर्वतोभद्रमंडले ब्रह्मादीन् संपूज्य तत्र कलशं संस्थाप्य ताम्रमयं पूर्णपात्रं निधाय तत्र सुवर्णदूर्वामासनार्थे संस्थाप्य तत्र सौवर्णीं गणेशमूर्तिं संस्थाप्य चंदनाक्षतरक्तपुष्पैः शमीपत्रदूर्वादिभिश्च पूजनं यथाविधि कर्तव्यम् ॥ चंदनयुक्तसहस्रदूर्वाः शतसंख्यका वा दूर्वा गणेशायार्पयेत्॥ मोदकैर्नैवेद्यं कर्तव्यम्॥

द्वितीयदिने गणेशं स्थापितदेवांश्च संपूज्यैकविंशतिब्राह्मणानां वरणं कृत्वा अग्निं प्रतिष्ठाप्य ग्रहस्थापनपूजनं ग्रहहोमं च विधाय प्रधानहोमे द्विजैर्गणानात्वेतिमंत्रेणान्यैश्च " त्वं दूर्वेऽमृतजन्मासि वंदिताऽसि सुरासुरैः॥ सौभाग्यं संततिं देहि सर्वकार्यकरी भव ॥१॥ यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले॥ तथा ममापि संतानं देहि त्वमजरामरम्"॥ २ ॥ इति दूर्वामंत्रैर्दशसहस्राहुतिभिर्जुहुयात् । गणेशसहस्रनामभिरपि होमं कुर्यात् ॥ तत्र मधुसंयुक्ततिलैर्घृतलाजाभिरिक्षुदंडैर्मोदकैः पायसेन घृतेन च होमः कार्यः ॥ ततो देवताभ्यो बलिं समर्प्य पूर्णाहुतिं कृत्वा होमं समाप्य महानीराजनादिकं विधाय ब्राह्मणान् संपूज्य दक्षिणां दत्त्वा भोजयित्वा स्वयं स्वजनैर्भुञ्जीत ॥

---

## ॥ शिवलक्षप्रदक्षिणोद्यापनम् ॥

कर्ता यमनियमसंयुतः श्रावणे वैशाखे कार्तिके माघे वा मासे विधिपुरःसरं शिवलिङ्गप्रदक्षिणाः कुर्यात् ॥ प्रदक्षिणाकर्त्रा निन्दादिकं प्रतिग्रहादिकं च न कर्तव्यम् ॥ लक्षप्रदक्षिणासंपूर्तावुद्यापनं कार्यम् ॥

प्रातः स्नानादिकं विधाय संकल्पं कृत्वा पवित्रस्थले देवालये वा मंडपं विरच्य गणेशपूजनं स्वस्तिपुण्याहवाचनादिकं कृत्वाऽऽचार्यमेकादशर्त्विजश्च वृत्वा लिङ्गतोभद्रमंडलदेवताः संस्थाप्य संपूज्य तत्र सविधिकलशं संस्थाप्य तत्र वृषभस्थितशिवपार्वतीमूर्तिं संस्थापयेत् ॥ दक्षिणपार्श्वे ब्रह्मसावित्र्योर्वामभागे विष्णुलक्ष्म्योश्च स्थापनं कर्तव्यम् ॥ ततस्तेषां विधिपुरःसरं पूजनं कार्यम् ॥ तस्मिन् दिवसे व्रतकर्त्रोपवासः कार्यः ॥ रात्रिं जागरणं कृत्वा कथादिना निनयेत् ॥

द्वितीयदिने स्थापितदेवतानां पूजनं विधाय वेद्यामग्निप्रतिष्ठापनं कृत्वा ग्रहादीनां स्थापनपूजनं च कृत्वा होमं विधाय प्रधानहोमं स्वशाखामंत्रेण शंकरमंत्रेण " ह्रीं नमःशिवाय " इति मूलमंत्रेण शिवगायत्र्या शिवसहस्रनाम्ना वा पलाशसमिद्भिः लाजातलयवघृतैश्च प्रदक्षिणासंख्याप्रमाणेन कुर्यात् । एवं दशांशहोमं तद्दशांशतर्पणं तद्दशांशमार्जनं शतांशेन ब्रह्मभोजनं चेति कर्तव्यम् ॥ ततः स्विष्टकृतादिकं पूर्णाहुतिं च कृत्वा होमं समाप्य सपत्नीकमाचार्यं संपूज्य पीठदानादिकं कर्तव्यम् ॥ व्रतेभ्यो ब्राह्मणेभ्यो दक्षिणां दत्त्वा ब्रह्मभोजनं कारयित्वा स्वजनैः सह स्वयं भुञ्जीत ॥ अनेन व्रतेनानेकजन्मार्जितघोरपापक्षयो मनःकामनासंपूर्तिः ॥ इति शिवलक्षप्रदक्षिणोद्यापनम् ॥

---

## ॥ विष्णोर्लक्षप्रदक्षिणाविधिः ॥

आषाढशुक्लैकादश्यां वा द्वादश्यां चतुर्दश्यां पूर्णिमायां वा नद्यां स्नात्वा व्रतारंभः कार्यः ॥ " अनन्ताव्यय विष्णो श्रीलक्ष्मीनारायण प्रभो ॥ जगदीश नमस्तुभ्यं प्रदक्षिणपदे पदे ॥" अनेन मंत्रेण प्रदक्षिणाः कार्याश्च प्रतिदिनं षोडशोपचारैर्विष्णोः पूजनं कार्यम् ॥ कार्तिक-

शुक्लैकादश्यां लक्षप्रदक्षिणासमाप्तिः कार्या ॥ तत उद्यापनं कर्तव्यम् ॥ तत्र पूर्ववत् भद्रसूक्ताद्याचार्यादिऋत्विग्वरणान्तं कर्म कृत्वा गरुड-स्थितविष्णोः सौवर्णीं मूर्तिं स्थापयित्वा पूजयित्वा तद्दिने उपवासं कुर्यात्।

द्वितीयदिवसे स्थापितदेवतानां पूजनं विधाय अग्निप्रतिष्ठापना-दिकं कृत्वा ग्रहहोमं समाप्य विष्णुगायत्रीमंत्रेण " नारायणाय विद्महे। वासुदेवाय धीमहि।तन्नो विष्णुः प्रचोदयात्" इति मन्त्रेण "विष्णवे नमः" इति मंत्रेण वा तिलघृतपायसैर्दशसहस्राहुतीर्जुहुयात् ॥

ततः कार्पासलवणदानं तथा च दुग्धवतीं गां प्रदद्यात् ॥ मूर्त्यादिकमाचार्याय दत्वा ऋत्विजः संपूज्य दक्षिणां दत्वाऽऽशिषो गृहीत्वा पंचविंशतिब्राह्मणान् संभोज्य सकुटुंबः स्वयं भुञ्जीत ॥

---

## ॥ पिप्पलप्रदक्षिणाविधिरुद्यापनं च ॥

प्रातः स्नात्वा नित्यकर्म विधाय पिप्पलसमीपे गत्वा गोमयेनो-पलिप्य पिप्पलं काषायवर्णेन रञ्जयित्वा तं सूत्रेण वेष्टयेत् ॥ ततः ऋत्विजो वरयित्वा गणेशपूजनं पुण्याहवाचनं कृत्वा विष्णुं च संपूज्य ततो विष्णुरूपं पिप्पलं श्वेतचन्दनादिना विधिपुरःसरं पूजयेत् ॥ पश्चात्तत्र लक्ष्मीसहितं विष्णुं पुरुषसूक्तेन ध्यात्वा हुत्वा तर्पयित्वा नमस्कृत्य पिप्पलं "आरात्ते अग्निरस्त्वारात्परशुरस्तु ते सदा॥ निवाते त्वभिवर्षन्तु स्वस्ति तेऽस्तु वनस्पते ॥ १ ॥ अक्षिस्पंदं भुजस्पंदं दुःस्वप्नं दुर्विचि-न्तितम् ॥ शत्रूणां च समुत्पन्नमश्वत्थ शमयस्व मे ॥ २ ॥ इति मंत्र-

१ पृथ्व्यादिषु सजातोत्पातविनाशार्थं शत्रुभय-देशविप्लव-दु॰-स्वप्न-दुष्टशकुन-युद्धभय-विषूचिकाद्युपद्रव-कुष्ठप्रमेहादिरोग-ग्रहपीडा दिसर्वप्रशमनार्थं पुत्रपौत्राद्यभिवृद्ध्यर्थं चेदं व्रतं कर्तव्यम् ॥

द्वयेनाभिमन्त्रयेत् ॥ ततः प्रदक्षिणाः कुर्यात् ॥ [ स्वकार्यानुसारेण लक्षादिद्वादशलक्षान्ताः प्रदक्षिणा व्रतिना कार्याः ] प्रदक्षिणासंपूर्तौ शुभे दिने उद्यापनं कार्यम् ॥

तत्र प्रातः स्नात्वा नित्यकर्म समाप्य देवालये पिप्पलसमीपे वा मंडपं विधाय पुष्पैर्वस्त्रैश्च सुशोभनं कृत्वा तत्र देवतानमस्कारादि कृत्वा संकल्पं विधाय सर्वतोभद्रमंडलदेवताः संस्थाप्य संपूज्य तत्र सविधि कलशं संस्थाप्य तत्र ताम्रस्य वंशस्य मृत्तिकायाः पूर्णपात्रं निधाय तत्र लक्ष्मीनारायणस्य पिप्पलस्य च सौवर्णी मूर्तिं संस्थाप्य विविधसाहित्येन यथाविधि पूजयेत् ॥ तस्मिन् दिने व्रती उपवासं रात्रौ च जागरणं कृत्वा कथादिकं शृणुयात् ॥

द्वितीयदिने नित्यकर्म समाप्यावाहितदेवतानां पूजनं कृत्वा षोडशब्राह्मणान् वरयित्वा स्थंडिलेऽग्निं प्रतिष्ठाप्य ग्रहादीनां स्थापनं पूजनं होमं च विधाय समिद्भिस्तिलैर्घृतेन पायसेन च प्रदक्षिणासंख्याप्रमाणेन होमं कुर्यात्॥ (तद्दशांशेन तर्पणं तद्दशांशेन ब्राह्मणांश्च भोजयेत्॥) एवं होमं समाप्य रौप्यादिपट्टोपरि ह्यर्धद्रोणपरिमितं तिलराशिं कृत्वा तत्र पिप्पलपूजनं कुर्यात् ॥ ततो दीनं ब्राह्मणमुत्तराभिमुखं कृत्वा सुवर्णपिप्पलस्य दानं कर्तव्यम्॥तत आचार्याय पीठादिकं सुवर्णपिप्पलं च गोप्रदानं दद्यात् ॥ पिप्पलदाने मंत्रः । " पिप्पलो वृक्षराजेन्द्र ह्यग्निगर्भस्त्वमेव हि ॥ प्रभुर्वनस्पतीनां च पूर्वजन्मनि मत्कृतम् ॥१॥ अघौघं नाशयेः क्षिप्रं तवरूपप्रदानतः ॥ अमुं तरुं गृहाण त्वं विष्णुरूप द्विजोत्तम ॥२॥

---

१ व्रती जितेन्द्रियो हविष्यान्नसेवी, भूशायी, मौनी भूत्वा प्रदक्षिणा कुर्यात् ॥ तस्मिन् दिने स्तुतौ पुरुषसूक्त विष्णुसहस्रनाम वाऽन्यानि विष्णुस्तोत्राणि यथाशक्ति पठेत् ॥ स्वस्याशक्तयान्यद्वारापीव व्रत भवति॥

स्वीकृत्य दुष्करं घोरं क्षिप्रं शान्तिं प्रयच्छ मे ॥ ३ ॥ ततो ब्राह्मणेभ्यो दक्षिणां दत्वा भोजयित्वा ससुजनः स्वयं भुञ्जीत ॥ इति ॥

---

## ॥ अथ सप्तमीस्नपनव्रतम् ॥

नारद उवाच ॥ किमुद्वेगाद्भुते कृत्यमलक्ष्मीः केन हन्यते । मृतवत्साभिषेकादिकार्येषु च किमिष्यते ॥१॥ श्रीभगवानुवाच ॥ पुरा कृतानि पापानि फलन्त्यस्मिंस्तपोधन । रोगदौर्गत्यरूपेण तथैवेष्टवधेन च ॥ २ ॥ तद्विघाताय वक्ष्यामि सदा कल्याणकारकम् । सप्तमीस्नपनं नाम जनपीडाविनाशनम् ॥ ३ ॥ बालानां मरणं यत्र क्षीरपानां प्रदृश्यते । तद्वद्वृद्धेतराणाञ्च यौवने चापि वर्तताम् ॥ ४ ॥ शान्तये तत्र वक्ष्यामि मृतवत्साभिषेचनम् । एतदेवाद्भुतोद्वेगचित्तभ्रमविनाशनम् ॥५॥ भविष्यति च वाराहो यत्र कल्पस्तपोधन ! । वैवस्वतश्च तत्रापि यदा तु मनुरुत्तमः ॥ ६ ॥ कृतवीर्येण वै पृष्टं इदं वक्ष्यति भास्करः । अशेषदुष्टशमनं सदा कल्मषनाशनम् ॥७॥ सूर्य उवाच ॥ अलं क्लेशेन महता पुत्रस्तत्र नराधिप ! । भविष्यति चिरञ्जीवी किन्तु कल्मषनाशनम् ॥८॥ सप्तमी स्नपनं वक्ष्ये सर्वलोकहिताय वै । जातस्य मृतवत्सायाः सप्तमे मासि नारद ! ॥ ९ ॥ अथवा शुक्लसप्तम्यामेतत् सर्वं प्रशस्यते ॥ ग्रहताराबलं लब्ध्वा कृत्वा ब्राह्मणवाचनम् ॥ १० ॥ बालस्य जन्मनक्षत्रं वर्जयेत्तां तिथिं बुधः । तद्वद्वृद्धेतराणाञ्च कृत्यं-स्यादितरेषु च ॥ ११ ॥ गोमयेनानुलिप्तायां भूमावेकाग्निवत्तदा । तण्डुलै रक्तशालीयैश्चरुं गोक्षीरसंयुतम्॥१२॥निर्वपेत् सूर्यरुद्राभ्यां तन्मन्त्राभ्यां विधानतः ॥ कीर्तयेत् सूर्यदैवत्यं सप्तार्चिं च घृताहुतीः ॥ १३ ॥

जुहुयाद्रुद्रसूक्तेन तद्वद्रुद्राय नारद ! ॥ होतव्याः समिधश्चात्र तथैवार्कपलाशयोः ॥ १४ ॥ यवकृष्णतिलैर्होमः कर्त्तव्योऽष्टशतं पुनः ॥ व्याहृतीभिस्तथाज्येन तथैवाष्टशतं पुनः ॥ १५ ॥ हुत्वा स्नानञ्च कर्त्तव्यं मङ्गलं येन धीमता ॥ विप्रेण वेदविदुषा विधिवद्दर्भपाणिना ॥१६॥ स्थापयित्वा तु चतुरः कुम्भान्कोणेषु शोभनान् ॥ पञ्चमञ्च पुनर्मध्ये दध्यक्षतविभूषितम् ॥१७॥ स्थापयेदव्रणं कुम्भं सप्तर्चेनाभिमन्त्रितम् ॥ सौरेण तीर्थतोयेन पूर्णं रत्नसमन्वितम् । सर्वान्सर्वौषधैर्युक्तान् पञ्चगव्यसमन्वितान् ॥ १८ ॥ पञ्चरत्नफलैः पुष्पैर्वासोभिः परिवेष्टयेत् । गजाश्वरथ्यावल्मीकात्सङ्गमाद्ध्रदगोकुलात् ॥ १९ ॥ संशुद्धां मृदमानीय सर्वेष्वेव विनिक्षिपेत् ॥ चतुर्ष्वपि च कुम्भेषु रत्नगर्भेषु मध्यमम् ॥ ॥ २० ॥ गृहीत्वा ब्राह्मणस्तत्र सौरान्मन्त्रानुदीरयेत् ॥ नारीभिः सप्तसंख्याभिरव्यङ्गाङ्गीभिरत्र च ॥ २१ ॥ पूजिताभिर्यथाशक्त्या माल्यवस्त्रविभूषणैः॥ सविप्राभिश्च कर्त्तव्यं मृतवत्साभिषेचनम् ॥२२॥ दीर्घायुरस्तु बालोऽयं जीवत्पुत्रा च भामिनी । आदित्यश्चन्द्रमा सार्द्धं ग्रहनक्षत्रमण्डलैः ॥२३॥ सशक्रा लोकपाला वै ब्रह्मविष्णुमहेश्वराः । एते चान्ये च देवौघाः सदा पान्तु कुमारकम् ॥२४॥ मित्रः शनिर्वा हुतभुक् ये च बालग्रहाः क्वचित् । पीडां कुर्वन्तु बालस्य वा मातुर्जनकस्य वै ॥२५॥ ततः शुक्लाम्बरधरा कुमारपतिसंयुता । सप्तकं पूजयेद्भक्त्या स्त्रीणामथ गुरुं पुनः ॥ २६ ॥ काञ्चनीञ्च ततः कुर्यात् ताम्रपात्रोपरि स्थिताम् । प्रतिमां धर्मराजस्य गुरवे विनिवेदयेत् ॥२७॥ वस्त्रकाञ्चनरत्नौघैर्भक्ष्यैः सघृतपायसैः॥ पूजयेद् ब्राह्मणांस्तद्वद्वित्तशाठ्यविवर्जितः॥२८॥ भुक्त्वा च गुरुणा चेयमुच्चार्या मन्त्रसन्ततिः । दीर्घायुरस्तु बालोऽयं यावद्वर्षशतं सुखी ॥२९॥ यत् किञ्चिदस्य दुरितं तत् क्षिप्तं वडवानले । ब्रह्मा रुद्रो

वसुः स्कन्दो विष्णुः शक्रो हुताशनः॥३०॥ रक्षन्तु सर्वे दुष्टेभ्यो वरदाः सन्तु सर्वदा। एवमादीनि वाक्यानि वदन्तं पूजयेद् गुरुम् ॥ ३१ ॥ शक्तितः कपिलां दद्यात् प्रणम्य च विसर्जयेत्। चरुञ्च पुत्रसहिता प्रणम्य रविशङ्करौ ॥ ३२ ॥ हुतशेषं तदाश्नीयादादित्याय नमोऽस्त्विति। इदमेवाद्भुतोद्वेगदुःस्वप्नेषु प्रशस्यते॥३३॥ कर्तुर्जन्मदिनर्क्षञ्च त्यक्त्वा संपूजयेत् सदा। शान्त्यर्थं शुक्लसप्तम्यामेतत्कुर्वन्न सीदति ॥ ॥ ३४ ॥ सदाऽनेन विधानेन दीर्घायुरभवन्नरः। संवत्सराणां प्रयुतं शशास पृथिवीमिमाम् ॥३५॥ पुण्यं पवित्रमायुष्यं सप्तमीस्नपनं रविः। कथयित्वा द्विजश्रेष्ठ! तत्रैवान्तरधीयत ॥ ३६ ॥ एतत् सर्वं समाख्यातं सप्तमीस्नानमुत्तमम्॥ सर्वदुष्टोपशमनं बालानां परमं हितम्॥३७॥ आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात्। ईश्वराज्ज्ञानमिच्छेच्च मोक्षमिच्छेज्जनार्दनात् ॥ ३८ ॥ एतन्महापातकनाशनं स्यात्परं हितं बालविवर्द्धनञ्च। शृणोति यश्चैनमनन्यचेतास्तस्यापि सिद्धिं मुनयो वदन्ति ॥ ३९ ॥ इति श्रीमत्स्यपुराणे सप्तमीस्नपनव्रतकथनं नाम सप्तषष्टितमोऽध्यायः।

---

## ॥ अथ पादपोद्यापनविधिः ॥

ऋषय ऊचुः।

पादपानां विधिं सूत! यथावद्विस्तराद्वद। विधिना केन कर्तव्यं पादपोद्यापनं बुधैः॥ ये च लोकाः स्मृतास्तेषान्तानिदानीं वदस्व नः॥१॥

सूत उवाच

पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु। तडागविधिवत् सर्वमासाद्य

जगदीश्वर ! ॥ २ ॥ ऋत्विड्मण्डपसम्भारश्चाचार्यश्चैव तद्विधः । पूजयेत् ब्राह्मणांस्तद्वद्धेमवस्त्रानुलेपनैः ॥३॥ सर्वौषध्युदकैः सिक्तान पिष्टातकविभूषितान् । वृक्षान्माल्यैरलङ्कृत्य वासोभिरभिवेष्टयेत् ॥ ४ ॥ सूच्या सौवर्णया कार्यं सर्वेषां कर्णवेधनम् । अञ्जनश्चापि दातव्यं तद्वद्धेमशलाकया ॥ ५ ॥ फलानि सप्त चाष्टौ वा कालधौतानि कारयेत् । प्रत्येकं सर्ववृक्षाणां वेद्यान्तान्यधिवासयेत् ॥ ६ ॥ धूपोऽत्र गुग्गुलः श्रेष्ठस्ताम्रपात्रैरधिष्ठितान् । सर्वान्धान्यस्थितान् कृत्वा वस्त्रगन्धानुलेपनैः ॥ ७॥ कुम्भान् सर्वेषु वृक्षेषु स्थापयित्वा नरेश्वर ! । सहिरण्यानशेषांस्तान् कृत्वा बलिनिवेदनम् ॥८॥ यथास्वं लोकपालानामिन्द्रादीनां विशेषतः । वनस्पतेश्च विद्वद्भिर्होमः कार्यो द्विजातिभिः ॥ ९ ॥ ततः शुक्लाम्बरधरां सौवर्णकृतभूषणाम् । सकांस्यदोहां सौवर्णशृङ्गाभ्यामतिशालिनीम्॥१०॥ पयस्विनीं वृक्षमध्यादुत्सृजेद् गामुदङ्मुखीम्॥ ततोऽभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः ॥ ११ ॥ ऋग्यजुःसाममन्त्रैश्च वारुणैरभितस्तथा ॥ तैरेव कुम्भैः स्नपनं कुर्यात् ब्राह्मणपुङ्गवः ॥१२॥ स्नातः शुक्लाम्बरस्तद्वद्यजमानोऽभिपूजयेत् । गोभिर्विभवतः सर्वान् ऋत्विजस्तान् समाहितः ॥ १३ ॥ हेमसूत्रैः सकटकैरङ्गुलीयपवित्रकैः । वासोभिः शयनीयैश्च तथोपस्करपादुकैः ॥ १४ ॥ क्षीरेण भोजनं दद्याद्यावद्दिनचतुष्टयम्॥ होमश्च सर्षपैः कार्यो यवैः कृष्णतिलैस्तथा॥१५॥ पलाशसमिधः शस्ताश्चतुर्थेऽह्नि तथोत्सवः ॥ दक्षिणा च पुनस्तद्वद्देया तत्रापि शक्तितः ॥ १६ ॥ यद्यदिष्टतमं किञ्चित् तत्तद् दद्यादमत्सरी । आचार्ये द्विगुणं दद्यात्प्रणिपत्य विसर्जयेत् ॥ १७ ॥ अनेन विधिना यस्तु कुर्यात् वृक्षोत्सवं बुधः ॥ सर्वान् कामानवाप्नोति फलञ्चानन्त्यमश्नुते ॥ १८ ॥ यश्चैकमपि राजेन्द्र ! वृक्षं संस्थापयेन्नरः । सोऽपि-

स्वर्गे वसेद्राजन् । यावदिन्द्रायुतत्रयम् ॥ १९ ॥ भूतान् भव्यांश्च मनुजांस्तारयेद् द्रुमसंमितान् । परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥ २० ॥ य इदं शृणुयान्नित्यं श्रावयेद्वापि मानवः । सोऽपि संपूजितो देवैर्ब्रह्मलोके महीयते ॥ २१ ॥ इति श्रीमत्स्यपुराणे पादपोद्यापनविधिवर्णनं नामोनषष्टितमोऽध्यायः ।

---

## ॥ अथ सत्यनारायणव्रतम् ॥

स्नात्वा धौते वाससी परिधाय पत्न्या सह उपविशेत् ॥ यजमानभाले तिलकं कुर्यात् ॥ उदकस्पर्शः ॥ सुमुखश्चेत्यादि पठित्वा ॥ साक्षतजलमादाय ॥ अद्येत्यादि० तिथौ समस्तदुरितोपशान्त्यर्थम् अलक्ष्मीपरिहारपूर्वकं लक्ष्मीप्राप्त्यादिमनोभिलषितकामनासिद्धिद्वारा इहामुत्र च सकलभोगादिचतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीसत्यनारायणपूजनं च तदुक्तं कथाश्रवणाख्यं कर्म करिष्ये ॥ तत्रादौ दिग्रक्षणं कलशाराधनं दीपपूजनं गणपतिपूजनं पुण्याहवाचनं च करिष्ये इति संकल्प्य दिग्रक्षणं कलशाराधनं गणपतिपूजनं पुण्याहवाचनं च (६–२१) पूर्वोक्तरीत्या कुर्यात् ॥

अत्र केचित् नवग्रहाणां स्थापनं पूजनं च कुर्वन्ति तत्तु यथाचारं कर्तव्यम् । तदा जपाकुसुम० इति सूर्यम् । दधिशंख० इति चन्द्रमसम् । धरणीगर्भ० इति भौमम् । प्रियंगुकलिका० इति बुधम् । देवानां च ऋषी० इति बृहस्पतिम् । हिमकुन्द० इति शुक्रम् । नीलांजनसमा० इति शनैश्चरम् । अर्धकायं महा० इति राहुम् । पलाशपुष्प० इति केतुञ्च संस्थाप्य पूजयेत् ॥ जलमादाय ॥ अद्येत्यादि० तिथौ० रुक्मिण्याद्यष्टपट्टराज्ञीनां पंचोपचारैः पूजनं करिष्ये ॥ अक्षतान् गृहीत्वा ॥ रुक्मिण्यै० रुक्मिणीम् आ० स्था० । सत्यभामायै० सत्यभामाम् आ० स्था० ॥ जांबवत्यै० जाम्बवतीम् आ० स्था० ॥

सत्यायै० सत्याम् आ० स्था० ॥ कालिंद्यै० कालिन्दीम् आ० स्था० ॥ मित्रवृंदायै० मित्रवृन्दाम् आ० स्था० ॥ लक्ष्मणायै० लक्ष्मणाम् आ० स्था० ॥ चारुहासिन्यै० चारुहासिनीम् आ० स्था० ॥ इत्यावाह्य रुक्मिण्याद्यष्टशक्तिभ्यो० गधं पुष्पं धूपं दीपं नैवेद्यादि समर्पयेत् ॥ ततः परिवारदेवता आवाहयेत् ॥ मंडूकाय० । कालाग्नि-रुद्राय० । आधारशक्तये० । कूर्माय० । वराहाय० । अनन्ताय० । पृथिव्यै० । रत्नद्वीपाय० । मणिमंडपाय० । कल्पतरवे० । वेदि-कायै० । मंचकाय० । ( तत्पादचतुष्के ) धर्माय० । ज्ञानाय० । वैराग्याय० । ऐश्वर्याय० । अधर्माय० । अज्ञानाय० । अवैराग्याय० । अनैश्वर्याय० । ( मध्ये ) आनंदकंदाय० । संविन्नालाय० । प्रकृति-मयपत्रेभ्यो० । विकारमयकेसरेभ्यो० । पंचाशद्बीजाढ्यकर्णिकायै० । सूर्यमंडलाय० । चंद्रमंडलाय० । वह्निमंडलाय० । सत्त्वाय० । रजसे० । तमसे० । आत्मने० । अन्तरात्मने० । परमात्मने० । ज्ञानात्मने । मायातत्त्वाय० । कलातत्त्वाय० । विद्यातत्त्वाय० । पर-तत्त्वाय० । ( पश्चात् दशदिक्षु प्रागादितः ) तीव्रायै० । ज्वालिन्यै० । नंदायै० । भोगदायै० । कामरूपिण्यै० । उग्रायै० । तेजोवत्यै० । सत्यायै० । पद्मवासिन्यै० । पीठशक्त्यै० । ( वामे ) ह्रींसर्वशक्ति-कमलासनाय० । ( दक्षिणे ) पराशक्तिरुद्राय० । ( अष्टदलमध्यात्प-श्चिमे उदक्संस्थाः ) गणपतये० । गौर्यै० । वरुणाय० । ब्रह्मणे० । विष्णवे० । रुद्राय० । ( अष्टदलसंध्यग्रे बहिः ) सूर्याय० । चंद्रमसे० । भौमाय० । बुधाय० । बृहस्पतये० । शुक्राय० । शनैश्चराय० । राहवे० । केतवे० । ( अष्टदलेषु ) इन्द्राय० । अग्नये० । यमाय० । निर्ऋतये० । वरुणाय० । वायवे० । सोमाय० । ईशानाय० ।

( चतुर्दलेषु ) गणपतये० । दुर्गायै० । क्षेत्रपालाय० । वास्तोष्पतये० । इत्यावाह्य मंडूकादिपरिवारदेवताभ्यो गंधं पुष्पं धूपं दीपं नैवेद्यादि समर्पयेत् ॥ ततो मध्ये ताम्रकलशोपरि लक्ष्मीसहितसत्यनारायणस्य मूर्तिं कृताग्न्युत्तारणप्रतिष्ठां संस्थाप्य ॥ लक्ष्मीसहितसत्यनारायणं षोडशोपचारैः पूजयेत् ॥ ततः पूजनान्ते विष्णुसहस्रनामभिः अष्टोत्तरशतनामभिर्वा तुलसीदलान्यर्पयेत् ॥ ततः पुस्तकपूजनं व्यासपूजनं च कृत्वा एकाग्रवृत्त्या कथाश्रवणं कुर्यात् ॥ इति ॥ ततः उत्तरपूजनं कृत्वा महाप्रसादं धृत्वा महादक्षिणां दत्त्वा महानीराजनं कुर्यात् ॥ पुष्पाञ्जलिं समर्प्य पूजनं समाप्य आचार्यपूजनं कृत्वा दक्षिणां दद्यात् ॥ तत आचार्येण स्वजनैश्च साकं भुञ्जीत ॥

॥ इति सत्यनारायणपूजनविधिः ॥

---

## ॥ चतुर्विंशतिगायत्र्यः ॥

ब्रह्मगायत्री—ॐ तत्सवितु० ॥ १ ॥ विष्णु०—ॐ नारायणाय विद्महे । वासुदेवाय धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ २ ॥ शिव०—ॐ तत्पुरुषाय विद्महे । महादेवाय धीमहि ॥ तन्नो रुद्रः प्रचोदयात् ॥ ३ ॥ राम०—ॐ दाशरथाय विद्महे । सीतावराय धीमहि ॥ तन्नो रामः प्रचोदयात् ॥ ४ ॥ लक्ष्मण०—ॐ दाशरथाय विद्महे । उर्मिलेशाय धीमहि । तन्नो लक्ष्मणः प्रचोदयात् ॥ ५ ॥ कृष्ण०—ॐ देवकीनन्दनाय विद्महे । वासुदेवाय धीमहि ॥ तन्नः कृष्णः प्रचोदयात् ॥ ६ ॥ नृसिंह०—ॐ नृसिंहाय विद्महे । वज्रदंताय धीमहि ॥ तन्नो नृसिंहः प्रचोदयात् ॥ ७ ॥ जल०—ॐ जलबिंबाय विद्महे । नीलपुरुषाय धीमहि ॥ तन्नोऽम्बु प्रचोदयात् ॥ ८ ॥ सूर्य०—ॐ भास्कराय विद्महे । दिवाकराय धीमहि ॥

तन्नः सूर्यः प्रचोदयात् ॥ ९ ॥ अग्नि०-ॐ महाज्वालाय विद्महे । अग्निमथ्याय धीमहि ॥ तन्नो अग्निः प्रचोदयात् ॥ १० ॥ पृथ्वी० ॐ पृथ्वीदेव्यै च विद्महे । धरामूर्तये धीमहि ॥ तन्नः पृथ्वी प्रचोदयात् ॥ ११ ॥ नारायण०-ॐ नारायणाय विद्महे । शेषशायिने धीमहि ॥ तन्नो विष्णुः प्रचोदयात् ॥ १२ ॥ हनुमद्गा०-ॐ अंजनीजाय विद्महे । स्वर्णपुत्राय धीमहि ॥ तन्नो वीरः प्रचोदयात् ॥ १३ ॥ गरुडगा० ॐ तत्पुरुषाय विद्महे । स्वर्णपक्षाय धीमहि ॥ तन्नो गरुडः प्रचोदयात् ॥ १४ ॥ देवी०-ॐ देव्यै ब्रह्माण्यै विद्महे । महाशक्त्यै च धीमहि ॥ तन्नो देवी प्रचोदयात् ॥ १५ ॥ गोपालगा०-ॐ गोपीप्रियाय विद्महे । वासुदेवाय धीमहि ॥ तन्नो गोपः प्रचोदयात् ॥ १६ ॥ परशुराम०-ॐ जामदग्न्याय विद्महे । महावीराय धीमहि ॥ तन्नो विप्रः प्रचोदयात् ॥ १७ ॥ तुलसी०-ॐ तुलसीपत्राय विद्महे । विष्णुप्रियाय धीमहि ॥ तन्नो वृन्दा प्रचोदयात् ॥ १८ ॥ गुरु०-ॐ परब्रह्मणे विद्महे । गुरुदेवाय धीमहि ॥ तन्नो गुरुः प्रचोदयात् ॥ १९ ॥ आकाश०-ॐ आकाशाय विद्महे । नभोदेवाय धीमहि ॥ तन्नो खं हि प्रचोदयात् ॥२०॥ चन्द्र०-ॐ क्षीरपुत्राय विद्महे । अमृतत्वाय धीमहि ॥ तन्नश्चंद्रः प्रचोदयात् ॥ २१ ॥ हंस०-ॐ परमहंसाय विद्महे । महत्तत्त्वाय धीमहि ॥ तन्नो हंसः प्रचोदयात् ॥२२॥ लक्ष्मी०-ॐ महालक्ष्म्यै च विद्महे । विष्णुप्रियायै धीमहि ॥ तन्नो लक्ष्मीः प्रचोदयात् ॥ २३ ॥ गंगा०- ॐ भागीरथ्यै च विद्महे । विष्णुपद्यै च धीमहि ॥ तन्नो गंगा प्रचोदयात् ॥ ॥ २४ ॥ इति चतुर्विंशतिगायत्र्यः ॥

वेदाधिकाररहितानां गायत्रीमंत्रः ॥ ह्रीं यो देवः सविताऽस्माकं मनःप्राणेन्द्रियक्रियाः ॥ प्रचोदयति तद् भर्गो वरेण्यं समुपास्महे ॥१॥

---

# ॥ परिशिष्टप्रकरणम् ॥

## ॥ श्रीनवचण्डीशतचण्ड्यादिप्रयोगः ॥

श्रीगणेशं शिवं दुर्गां विष्णुं सूर्यं च शारदाम् ॥
मातापितृगुरून् नत्वा कुर्वे ग्रन्थमिमं लघुम् ॥ २ ॥

श्रीगणेशाय नमः ॥ पूर्वविहितप्रायश्चित्तः कृतमंगलस्नानो यजमानः सपत्नीको धौते वाससी परिधाय तिलकं कृत्वा नित्यकर्म संविधाय पूजोपयोगिसंभारान् गृहीत्वा शुभे काले शुभासने प्राङ्मुख उदङ्मुखो वोपविश्य ब्राह्मणद्वारा शांतिसूक्तं पठेत् ॥

शान्तिसूक्तम्—या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः ॥ श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ १ ॥

[ किं वर्णयाम तव रूपमचिन्त्यमेतत्किं चातिवीर्यमसुरक्षयकारि भूरि। किं चाहवेषु चरितानि तवातियानि सर्वेषु देव्यसुरदेवगणादिकेषु ॥ २ ॥हेतु' समस्तजगतां त्रिगुणाऽपि दोषैर्न ज्ञायसे हरिहरादिभिरप्यपारा ।सर्वाश्रयाऽखिलमिदं जगदंशभूतमव्याकृता हि परमा प्रकृतिस्त्वमाद्या ॥ ३ ॥ यस्याः समस्तसुरतासमुदीरणेन तृप्तिं प्रयान्ति सकलेषु मखेषु देवी ॥ स्वाहाऽसि वै पितृगणस्य च तृप्तिहेतुरुच्चार्यसे त्वमत एव जनै· स्वधा च ॥ ४ ॥ ]

शान्तिः शान्तिः सुशान्तिर्भवतु ॥

तत आचार्यो यजमानभाले तिलकं कुर्यात् ॥ स्वस्तिस्तु याऽविनाशाख्या धर्मकल्याणवृद्धिदा । विनायकप्रिया नित्यं ताश्च स्वस्तिं ब्रुवन्तु नः ॥१॥ नारदाद्या ऋषिगणा ये चान्ये च तपोधनाः । भवन्तु यजमानस्य ह्याशीर्वादपरायणाः ॥२॥ ततो यजमानो हस्ते दक्षिणासहितं साक्षतं सताम्बूलं फलं गृहीत्वा गुरुपादाभिवन्दनं कुर्यात् ॥

गुरुपादाभिवन्दनम्—ब्रह्मानंदं परमसुखदं केवलं ज्ञानमूर्तिं द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ॥ एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥ १ ॥ आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजभावयुक्तम् ॥ योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ॥ २ ॥ समस्तसंपत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ॥ अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥ ३ ॥ आपद्घनध्वान्तसहस्रभानवः समीहितार्थार्पण-कामधेनवः ॥ समस्ततीर्थाम्बुपवित्रपाणयः पुनन्तु मां ब्राह्मणपादपांसवः ॥ ४ ॥ नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः ॥ आचार्यसिद्धेश्वरपादुकाभ्यो नमोऽस्तु वै विप्रपदाम्बुजेभ्यः ॥ ५ ॥ इति ॥

आचमनम्—ह्रीं केशवाय नमः । ह्रीं नारायणाय नमः । ह्रीं माधवाय नमः । ह्रीं गोविन्दाय नमः । इति हस्तं प्रक्षालयेत् ॥

प्राणायामः—ह्रीं नमो भगवते वासुदेवाय ॥ एवं पूरककुम्भकरेचकक्रमेण त्रिवारं कुर्यात् वा पठेत् ॥ ततो देवतानमस्कारान् कुर्यात् ॥

देवतानमस्काराः—सुमुहूर्तमस्तु ॥ माङ्गल्यमस्तु ॥ श्रीमन्महागणाधिपतये नमः । इष्टदेवताभ्यो नमः । कुलदेवताभ्यो नमः । ग्रामदेवताभ्यो नमः । स्थानदेवताभ्यो नमः । वास्तुदेवताभ्यो नमः । वाणीहिरण्यगर्भाभ्यां नमः । श्रीलक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां नमः । शचीपुरन्दराभ्यां नमः । मातापितृचरणकमलेभ्यो नमः । सर्वेभ्यो देवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्यो नमः । एतत्कर्मप्रधानदेवताभ्यो नमः ॥ पुण्यं पुण्याहं दीर्घमायुरस्त्विति भवन्तो ब्रुवन्तु । "पुण्यं पुण्याहं दीर्घमायुरस्तु" (इत्याचार्यो वदेत्) ॥ सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ॥ लंबोदरश्च विकटो विघ्ननाशो विनायकः । । धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ॥ द्वादशैतानि नामानि यः पठेच्छृणुयादपि । विद्या-

रंभे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलायतनो हरिः ॥ तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ॥ विनायकं गुरुं भानुं ब्रह्मविष्णुमहेश्वरान् । सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥

प्रधानसङ्कल्पः-(यजमानः साक्षतं जलमादाय) विष्णुर्विष्णुर्विष्णुः।

स्वस्ति श्रीसच्चिदानन्दरूपस्य ब्रह्मणोऽनिर्वाच्यमायया यथाशक्तिविजृंभिताविद्यायोगात्कालकर्मस्वभावाविर्भूतमहत्तत्त्वोदिताहंकारत्रयोद्भूतवियदादिपञ्चकेन्द्रियदेवतानिर्मिताण्डकटाहे चतुर्दशलोकात्मके लीलया तन्मध्यवर्तिभगवतः श्रीनारायणस्य नाभिकमलोद्भूतसकललोकस्य पितामहस्य ब्रह्मणः सृष्टिं कुर्वतस्तदुद्धारणाय च प्रजापतिप्रार्थितस्य महापुरुषस्य श्वेतवाराहावतारेण ध्रियमाणायामस्यां धरित्र्यां भूलोकसंज्ञितायां सप्तद्वीपमंडितायां क्षीरोदादिसमुद्रतद्द्वीपवलयीकृतलक्षयोजनविस्तीर्णे जम्बूद्वीपे स्वर्गस्थितामरादिसेवितगंगादिसरिद्भिः पाविते निखिलजनपावनकर्तृशौनकादिमहामुनिनिवासभूते नैमिषारण्यादियुक्ते मोक्षसाधनभूते विविधतपःकर्तृमहातपस्विभिः पवित्रितभूमिप्रदेशे भारते वर्षे

श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य अद्य ब्रह्मणो द्वितीये परार्धे श्रीश्वेतवाराहकल्पे सप्तमे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथमचरणे भूर्लोके भारतवर्षे भारतखण्डे जम्बूद्वीपे ( रामक्षेत्रे परशुरामाश्रमे दण्डकारण्ये श्रीगोदावर्याः अमुकदिग्भागे श्रीमद्धरणाख्येः अमुके तटे ) आर्यावर्तान्तर्गतब्रह्मावर्त्तैकदेशे अमुके श्रीशालिवाहनशके अमुकनामसंवत्सरे तथा च अमुके श्रीविक्रमवर्षे अमुकनामसंवत्सरे अमुकायने अमुकर्तौ अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुकराशिस्थिते श्रीसूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथायथं राशिस्थानस्थितेषु सत्सु एवं गुणविशेषेण विशिष्टायां शुभपुण्यतिथौ मम अमुकगोत्रोत्पन्नस्य अमुकदासस्य सपरिवारस्य आत्मनः शास्त्रोक्तपुराणोक्तपुण्यफलावाप्त्यर्थं मम ऐश्वर्याभिवृद्ध्यर्थम् अप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्तलक्ष्म्याश्चिरकालसंरक्षणार्थं सकलमनईप्सितकामनासंसिद्ध्यर्थं लोके वा सभायां राजद्वारे वा सर्वत्र यशोविजयलाभादिप्राप्त्यर्थं [ तथा च मम सभार्यस्य सपुत्रस्य अखिलकुटुंबसहितस्य सपशोः समस्तभयव्याधिजरापीडामृत्युपरिहारद्वारा आयुरारोग्यैश्वर्याभिवृद्ध्यर्थं तथा च मम जन्मराशेरखिलकुटुम्बस्य वा जन्मराशेः सकाशाद्ये केचिद्विरुद्धचतुर्थाष्टमादिस्थानस्थिताः क्रूरग्रहास्तैः सूचितं सूचयिष्यमाणञ्च यत्सर्वारिष्टं तद्विनाशद्वारा सर्वदा तृतीयैकादशस्थानस्थितवच्छुभफलप्राप्त्यर्थं पुत्रपौत्रादिसन्ततेरविच्छिन्नवृद्ध्यर्थम् इन्द्रादिदिक्पालप्रसन्नतासिद्ध्यर्थम् आधिदैविकाधिभौतिकाध्यात्मिकत्रिविधतापोपशमनार्थं धर्मार्थकाममोक्षचतुर्विधफलावाप्त्यर्थम् ] श्रीमहाकाली-

१ शकादिमासादिकं वक्तव्यम् ॥-शकविगेरे ने मास विगेरे बोलवा ॥

महालक्ष्मीमहासरस्वतीस्वरूपिणी–त्रिगुणात्मिका–जगदम्बिकाप्रीत्यर्थं कवचार्गलाकीलकनवार्णमंत्ररात्रिसूक्तपठनपूर्वकस्य देवीसूक्तनवार्णमंत्ररहस्यत्रयपठनान्तस्य श्रीमार्कंडेयपुराणान्तर्गतस्य "श्रीमार्कंडेय उवाच इत्यारभ्य सावर्णिर्भविता मनुः" इत्यन्तस्य श्रीचण्डीसप्तशतीपाठस्य नवावृत्त्या शतावृत्त्या सहस्रावृत्त्या वा ( सप्तशत्याः प्रतिमन्त्रम् अमुकमन्त्रेण संपुटितं ) पाठाख्यं कर्म ( ब्राह्मणद्वारा ) करिष्ये । तथा च श्रीजगदम्बिकाप्रीतिकामस्तद्दशांशेन सप्तशत्याः प्रतिमंत्रं पायसादिद्रव्यैः सग्रहमखं हवनाख्यं कर्म ( तद्दशांशेन तर्पणादीनि च ) करिष्ये ॥

पुनःसंकल्पः–तदङ्गत्वेन दिग्रक्षणं कलशार्चनं शंखघण्टापूजनं दीपपूजनञ्च निर्विघ्नतासिद्धये गणपतिपूजनं स्वस्तिपुण्याहवाचनं मातृकापूजनमायुष्यमंत्रजपं नान्दीश्राद्धमाचार्यादृत्विग्वरणं [ मंडपप्रवेशादीनि ] च करिष्ये ॥

ततो दिग्रक्षणादि आचार्यवरणान्तं कर्म ( पृष्ठ ६–४५ ) कुर्यात् ॥

[ ततो मंडपे सति मंडपप्रवेशार्थवर्धिनीकलशपूजनं कुर्यात् ॥

## ॥ अथ वर्धिनीकलशपूजनम् ॥

जलमादाय ॥ अद्येत्यादि० तिथौ "मण्डपप्रवेशाख्य" कर्मनिमित्तं वर्धिनीकलशस्थापनपूर्वकं पूजन करिष्ये ॥ हस्ते अक्षतान् गृहीत्वा ॥ वर्धिन्यै० वर्धिनीमावा० ॥ ततः कलशे ॥ ब्रह्मणे० विष्णवे० मातृभ्यो० सागराय० मह्यै० नदीभ्यो० तीर्थेभ्यो० गायत्र्यै० ऋग्वेदाय० यजुर्वेदाय० सामवेदाय० अथर्ववेदाय० अग्नये० आदित्याय० रुद्राय० मरुद्भ्यो० गंधर्वाय० ऋषये० वरुणाय० वायवे० धनदाय० यमाय० धर्माय० शिवाय० यक्षाय० विश्वेभ्यो देवेभ्यो० ॥ इत्यावाह्य ॥ प्रतिष्ठाः सर्वे० ॥ वर्धिन्याद्यावाहितदेवताः सुप्रतिष्ठिताः वरदा भवत ॥ "वर्धिन्याद्यावाहितदेवताभ्यो नम" इति मूलमंत्रेण पंचोपचारैः संपूज्य वर्धिनीकलशं गृहीत्वा सपत्नीको यजमानः सपरिवारः सालंकृतो मंत्रनिर्घोषसुवासिनीगीतवाद्यनि स्वनैर्मंगलसूक्तानि पठन् मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारसमीपे तिष्ठेत् ॥

## ॥ अथ मंडपप्रवेशः ॥

एवं ब्राह्मणपुरःसरः शुक्लमाल्यानुलेपनस्तादशपुत्रपौत्रादिसमेतः सुशकुनसूचिताभ्युदयः सपत्नीको यजमानो दूर्वाम्रपल्लवनालिकेरादियुतं जलपूर्णं कलशं गृहीत्वा मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारे स्थित्वा द्वारशाखां पूजयेत् ॥ अद्ये० मम सकलेष्टसिद्ध्यर्थं मंडपप्रवेशांगभूतं द्वारशाखाधिष्ठातॄणां पूजनमहं करिष्ये ॥ तद्यथा ॥ देहल्यग्रतः कुंकुमादिना त्रिकोणं कृत्वा तदुपरि वृत्तं तदुपरि चतुरस्रं मंडलं कृत्वा ॥ तत्र "असुरान्तकचक्राय नम" इति मंत्रेण प्रक्षालितं ताम्रादिपात्रं स्थापयित्वा कृष्णाय० हृदयाय० इति जलं पूरयेत् ॥ गंगे च यमु० इति मंत्रेण अंकुशमुद्रया तीर्थान्यावाह्य पुष्पादि निक्षिपेत् ॥ "असुरान्तकचक्राय०" इति द्वारमभ्युक्ष्य ॥ हस्ते अक्षतान् गृहीत्वा ॥ ऊर्ध्वं द्वारश्रियै० ॥ द्वारपीठस्य मध्ये देहल्यां वास्तुपुरुषाय० । दक्षिणशाखायां गंगायै० । वामशाखायां यमुनायै० । दक्षिणे शंखनिधये० वामे पद्मनिधये० । (द्वारस्य चतुष्कोणेषु आग्नेयाद्यूर्ध्वाध· क्रमेण ॥) आग्नेय्यां गणपतये० नैर्ऋत्यां दुर्गायै० वायव्यां सरस्वत्यै० । ऐशान्यां क्षेत्रपालाय० ॥ "द्वारश्रियाद्यावाहितदेवेभ्यो नमः" सक्षीरजलेन स्नानं सम० ॥ द्वारश्रि० गंध-पुष्पं-धूपं-दीपं-नैवेद्यान्तं संपूज्य ॥ पश्चिमद्वारे जयाय० विजयाय० सुसीमतोरणाय नमः गंधं पुष्प स० ॥ इति संपूज्य ॥ यजमानः मूलमंत्र मनसा जपन् दिवं दृष्ट्वा उर्ध्वाधस्तालनयं कृत्वा वामपार्ष्णिना त्रिभिर्घातैर्भूमिं ताडयेत् ॥ सर्षपान् गृहीत्वा ॥ अपसर्प० इत्यादिना विघ्नानुत्सार्य शान्तिसूक्तादिपठद्भिर्ब्राह्मणैः सह शनैरंगं संकोचयन् स्वदक्षिणांशेन द्वारवामांश स्पर्शयित्वा स्वदक्षिणपादपुरःसरं देहलिं स्पृशन् प्रविशेत् ॥ पत्नीहस्तधृतवर्धिनीकुंभमैशान्यामाग्नेय्यां वा अक्षताग्रदलोपरि प्रार्थनापूर्वकं स्थापयेत् ॥ मृन्मयी त्वं महाभागा सदा तिर्थोदकान्विता ॥ वर्धिनि त्वं जगन्माता भव त्वं कुलवर्धिनी ॥ तव तोयेन कलशान्पूजार्थे पूरयाम्यहम् ॥ इति ॥

तत आचार्यः पंचगव्यं कृत्वा ( पृ. १४८ ) पंचगव्येन मंडपं अपवि० ॥ इति मंत्रेण प्रोक्षयेत् ॥ इति मंडपप्रवेशः ॥

---

## ॥ अथ वास्तुदेवतास्थापनम् ॥

तत्रादौ मंडपस्याग्नेय्यां पीठोपरि गणपतिं संस्थाप्य पंचोपचारैः पूजयेत् ॥ ततो मंडपस्य नैर्ऋत्यभागे हस्तमात्रविस्तृतं चतुरंगुलोच्छ्रायं वास्तुपीठं कृत्वा तस्य आग्नेयादिचतुर्षु कोणेषु चतुरः शकून् रोपयेत् ॥ मंत्रः॥ विशन्तु भूतले नागा लोकपालाश्च सर्वतः ॥ मंडपे चात्र तिष्ठन्तु आयुर्बलकराः सदा ॥ १ ॥ प्रतिशंकु अस्यैव मंत्रस्यावृत्तिः ॥ ४ ॥ ततो रोपणक्रमेण पंचोपचारैः संपूज्य मापभक्तबलिं दद्यात् ॥ मंत्रा ॥ अग्निभ्यो-प्यथ सर्पेभ्यो ये चान्ये तत्समाश्रिता ॥ बलिं तेभ्यः प्रयच्छामि पुण्य-मोदनमुत्तमम् ॥१॥ नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसा ॥ बलिं तेभ्य प्रयच्छामि पुण्यमोदनमुत्तमम् ॥२॥ नमो वै वायुरक्षोभ्यो ये चान्ये तत्समाश्रिता ॥ बलिं ते०॥३॥ रुद्रेभ्यश्चैव सर्वेभ्यो ये चान्ये तत्स०। बलि०। ॥ ४ ॥ शकुदेवताभ्यो० मापभक्तबलीन्स० ॥ इति ॥ अथ पीठस्योपरि सुवर्णरजतादिशलाकया पश्चादारभ्या प्रागन्ता उदक्संस्था चतुःषष्टि पदमंडलार्थे नवरेखा कुर्यात् ॥ लक्ष्म्यै० यशोवत्यै० कांतायै० सुप्रियायै० विमलायै० शिवायै० सुभगायै० सुमत्यै० ईडायै०॥१॥ ततो दक्षिणारभ्या उदगन्ता प्राक्संस्थाश्च नवरेखा कुर्यात् ॥ धन्यायै०प्राणायै०विशालायै० स्थिरायै० भद्रायै० जयायै० निशायै० विरजायै०विभवायै०॥२॥ रेखादेवताभ्यो नम ०॥ इति पचोपचारैः पूजयेत् ॥ [ततस्तस्योपरि श्वेतवस्त्रमाच्छाद्य पचवर्णैस्तंडुलैः स्वस्तिकं कृत्वा तदुपरि रक्तवस्त्रमाच्छाद्य तस्योपरि शुक्लतंडुलैर्यथोक्तमंडलं कृत्वा ॥] जलमादाय ॥ अद्ये० अस्मिन् वास्तुपीठे देवतास्थापनं करिष्ये ॥ यथोक्तस्थानेषु ॥ (१) शिखिने० शिखिन-मावा०।(२)पर्जन्याय० पर्जन्यमा०(३)जयन्ताय० जयन्तमा०। (४) इन्द्राय० इन्द्रमा० । (५) सूर्याय० सूर्यमा० । (६) सत्याय० सत्यमा० । (७) भृशाय० भृशमा० । (८) अंतरिक्षाय० अंतरिक्षमा० । (९) वायवे० वायुमा० । (१०) पूष्णे० पूषणमा० । (११) वितथाय० वितथमा० । (१२) गृहक्षताय० गृहक्षतमा० । (१३) यमाय० यममा० । (१४) गंधर्वाय० गधर्वमा० । (१५) भृंगराजाय० भृंगराजमा० । (१६) मृगाय० मृगमा०

---

१ दक्षिणत ॥ २ पश्चिमत ॥

( १७ ) पितृभ्यो० पितृना० । ( १८ ) दौवारिकाय० दौवारिकमा० । ( १९ )सुग्रीवाय० सुग्रीवमा० । ( २० ) पुष्पदंताय० पुष्पदंतमा० । (२१) वरुणाय० वरुणमा० । ( २२ ) असुराय० असुरमा० । ( २३ ) शेषाय० शेषमा० । ( २४ ) पापाय० पापमा० । ( २५ ) रोगाय० रोगमा० । ( २६ ) नागाय० नागमा० । ( २७ ) मुख्याय० मुख्यमा० ( २८ ) भल्लाटाय० भल्लाटमा० । ( २९ ) सोमाय० सोममा० । ( ३० ) उरगाय० उरगमा० । ( ३१ ) अदितये० अदितिमा० । ( ३२ ) दितये० दितिमा० । ( ३३ ) अद्भ्यो०अप आवा० ( ३४ ) आपवत्साय आपवत्समा० । (३५) अर्यम्णे० अर्यमणमा० । ( ३६ ) सावित्राय० सावित्रमा० । ( ३७ ) सवित्रे० सवितारमा ० । ( ३८ ) विवस्वते नमः विवस्वन्तमा० स्थाप० । ( ३९ ) विबुधाधिपाय० विबुधाधिपमा० । ( ४० ) जयन्ताय० जयन्तमा० । ( ४१ ) मित्राय० मित्रमा० । ( ४२ ) राजयक्ष्मणे० राजयक्ष्माणमा० । ( ४३ ) रुद्राय० रुद्रमा० । ( ४४ ) पृथ्वीधराय० पृथ्वीधरमा० । ( ४५ ) ब्रह्मणे० ब्रह्माणमा० ॥ ( मंडलाद्बहिः ) ईशानादिषु चरक्यादीनावाहयेत् ॥ ( ४६ ) चरक्यै० । ( ४७ ) विदार्यै० । ( ४८ ) पूतनायै० । ( ४९ ) पाप राक्षस्यै० ॥ ( पूर्वादिदिक्षुस्कंदादीन् ) ( ५० ) स्कन्दाय० । ( ५१ ) अर्यम्णे० । ( ५२ ) जृम्भकाय० । ( ५३ ) पिलिपिच्छाय० ॥ ( प्रागादि दिक्षु इंद्रादीन् ) ( ५४ ) इंद्राय० । ( ५५ ) अग्नये० । ( ५६ ) यमाय० । ( ५७ ) निर्ऋतये० । ( ५८ ) वरुणाय० । ( ५९ ) वायवे० । ( ६० ) कुबेराय० । ( ६१ ) ईशानाय० । ( ६२ ) ब्रह्मणे० । ( ६३ ) अनंताय० ॥ इत्यावाह्य ॥ प्रतिष्ठा० इति प्रतिष्ठां कृत्वा ( गंधादिभिः संपूज्य ॥ ) मध्ये ताम्रकलशं स्थापयेत् ॥ कलशपूजनं पूर्ववत् ॥ तदुपरि कृताग्न्युत्तारणादिं सुवर्णादिमयीं वास्तुध्रुवमूर्तिं च स्थापयेत् ॥ मंत्रः ॥ वास्तोष्पतिं महादेवं सर्वसिद्धिविधायकम्॥शान्तिकर्तारमीशानं तं वास्तुं प्रणतोऽस्म्यहम् ॥ १ ॥ ( आवाहनम् ) नमो भगवते वास्तुपुरुषाय महाबलपराक्रमाय सर्वाधिवासशरीराय ब्रह्मपुत्राय सकलब्रह्माण्डधारिणे भूभारार्पितमस्तकाय पुरपत्तनप्रासादगृहवापीसरःकूपादेः सन्निवेशसान्निध्यकराय सर्वसिद्धिप्रदाय प्रसन्नवदनाय विश्वंभराय परमपुरुषाय शक्रवरदाय वास्तोष्पते नमस्ते नमस्ते ॥ इत्यावाह्य ॥ अथ ध्यानम् ॥ भगवन् देव-

देवेश ब्रह्मादिदेवतात्मक ॥ तव पूजां करिष्यामि प्रसादं कुरु मे प्रभो ॥ १ ॥ "ह्रीं शिख्यादिवास्तुमण्डलदेवतासहितवास्तुपुरुषाय नमः।" इति मंत्रेण वास्तुपुरुषस्य षोडशोपचारैः पूजनं कृत्वा ॥ मंडपाद्बहिः बलिं दद्यात् ॥ यथा—"शिखिने नमः पायसबलिं समर्पयामि" । इत्यादि ॥ यज्ञभागं प्रतीक्षस्व पूजां चैव बलिं मम ॥ नमो नमस्ते देवेश मम स्वस्तिकरो भव॥१॥ एह्येहि वास्तोष्पते इमं मयोपनीतं बलिं गृहाण मम यज्ञमच्छिद्रं कुरु सर्वदुष्टेभ्यो मां रक्ष रक्ष ॥ इति बलिदानम् ॥ प्रार्थना ॥ यथा मेरुगिरेः शृंगे देवानामालयं सदा ॥ तथा शिख्यादिदेवानामत्र भूमौ स्थिरो भव ॥ १ ॥ अनेन स्थापनपूजनेन शिख्यादिवास्तुमंडलदेवतासहितवास्तुपुरुषः प्रीयताम् ॥ इति वास्तुदेवतास्थापनम् ॥ ]

---

## ॥ अथ चतुःषष्टियोगिनीस्थापनम् ॥

आग्नेयकोणे पीठोपरि रक्तवस्त्रं प्रसार्य तदुपरि तंदुलैश्चतुःषष्टिपदं त्रिकोणात्मकं समचतुरस्रं वा मंडलं निर्माय तस्योपरि शारदातिलकोक्ताः चतुःषष्टियोगिनीदेवताः पंक्तिरूपेण स्थापयेत् ॥ जलमादाय ॥ अद्येत्यादि० तिथौ चतुःषष्टियोगिनीनां स्थापनप्रतिष्ठापूजनमहं करिष्ये ॥ [अन्यत्र॥श्रीमहाकाल्यै नम ।श्रीमहालक्ष्म्यै नम ।श्रीमहासरस्वत्यैनम ।इति तत ] ह्रीं विश्वदुर्गायै० विश्वदुर्गामावा० स्था० (एवं सर्वत्र) उद्योतन्यै० मालाधर्यै० महामायायै० मायावत्यै० शुभायै० यशस्विन्यै० त्रिनेत्रायै० लोलजिह्वायै० शंखिन्यै० यमघंटायै० कालिकायै० चर्चिकायै० यक्षिण्यै० सरस्वत्यै० चंडिकायै० चित्रघंटायै० सुगंधायै० कामाक्ष्यै० भद्रकाल्यै० परायै० क्रान्तराक्ष्यै० कोटराक्ष्यै० नीलाकायै० सर्वमंगलायै० ललितायै० त्वरितायै० भुवनेश्वर्यै० खड्गपाण्यै० शूलिन्यै० दंडिन्यै० अंबिकायै० शूलेश्वर्यै० बाणवत्यै० धनुर्धर्यै० महोल्लासायै० विशालाक्ष्यै० त्रिपुरायै० भगमालिन्यै० दीर्घकेश्यै० घोरघोणायै० वाराह्यै० महोदर्यै०

कामेश्वर्यै० गुहेश्वर्यै० भूतनाथायै० महारवायै० ज्योतिष्मत्यै० कृत्तिवासायै० मुंडिन्यै० शवनादिन्यै० शिवाकायै० लिंगहस्तायै० भगवत्रायै० गगनायै० मेघवाहनायै० मेघघोषायै० नारासंह्यै० कालिन्द्यै० श्रीधर्यै० तेजस्यै० श्यामायै० मातंग्यै० नरवाहनायै० ॥ ६४ ॥ (मंडलाद्बहिः ॥ इन्द्राण्यै० दुर्गायै० जयायै० विजयायै० अजितायै० विश्वमंगलायै० भद्ररूपिण्यै० भुवनेश्वर्यै० श्रीराजराजेश्वर्यै० ॥९॥) अक्षतान् गृहीत्वा ॥ प्रतिष्ठा सर्व० ॥ १ ॥ विश्वदुर्गाद्यावाहितदेवताः सुप्रतिष्ठिता वरदा भवत ॥ "श्रीविश्वदुर्गाद्यावाहितदेवताभ्यो नमः" इति मूलमंत्रेण यथालाभोपचारैः संपूज्य जलमादाय ॥ अनया पूजया विश्वदुर्गाद्यावाहितदेवताः प्रीयन्तां नमम ॥ इति योगिनीस्थापनम् ॥

---

## ॥ अथ चतुःषष्टिभैरवस्थापनम् ॥

ततो देव्या दक्षिणपीठे रक्तवस्त्रोपरि तडुलैश्चतुःषष्टिपदं समचतुरस्रमंडलं कृत्वा पंक्तिरूपाः भैरवाः स्थापनीयाः ॥ अद्येत्यादि० तिथौ चतुःषष्टिभैरवानां स्थापनप्रतिष्ठापूजनमहं करिष्ये ॥ श्रीमद्भैरवाय नमः श्रीमद्भैरवमावाहयामि स्थापयामि ( एवं सर्वत्र) शंभुभैर० नीलकंठभैर० विशालभैर० मार्त्तण्डभैर० मनुमभभैरवाय० स्वच्छन्दभैरवाय० असितांगभैरवाय० खेचर० संहार० विरूप० विरूपाक्ष० नानारूपधर० वराह० रुरु० कुंदवर्ण० सुगात्र० उन्मत्त० मेघनाद० मनोवेग० क्षेत्रपाल० विपापहार० निर्भय० विजीत० प्रेत० लोकपाल० गदाधर० वज्रहस्त०

१ मडपाभावे देव्या वामभागे योगिनीना दक्षिणभागे च भैरवाणा स्थापन कर्तव्यम् ॥ मडपे सति वायवीयपीठे अजरादिक्षेत्रपालस्थापन कर्तव्यम् देव्या दक्षिणे भैरवस्थापन न कर्तव्यम् ॥

महाकाल० प्रचंड० अजेय० अन्तक० भ्रामक० संहार० कुलपाल० चंडपाल० प्रजापाल० रक्तांग० वेगावीक्षण० अरुण० धरापाल० कुंडलनेत्र० मंत्रनाथ० रुद्रपितामह० विष्णु० वटुकनाथ० भूतनाथ० वैताल० त्रिनेत्र० त्रिपुरान्तक० वरद० पर्वतवास०शशिसकलभूषण० सर्वभूतहृदय० घोरसायक० भयंकर०भुक्तिमुक्तिप्रद०कालाग्नि० महारुद्र० भयानक० दक्षिणमुख० भीषण० क्रोध० सुखसंपत्तिदायकभैरवाय० ॥ ६४ ॥ प्रतिष्ठा सर्व० इति प्रतिष्ठां कृत्वा ॥ " श्रीमद्भैरवाद्यावाहितदेवताभ्यो नमः" इति मंत्रेण यथाशक्त्या पूजयेत् ॥ प्रार्थना॥ कौलिरे चित्रकूटे हिमगिरिविवरे शस्त्रजालान्धकारे सौराष्ट्रे सिंधुदेशे मगधपुरवरे कौसले वा कलिंगे ॥ कर्णाटे कौंकणे वा भृगुसुतनगरे कान्यकुब्जस्थिते वा सर्वस्मात्सर्वदा वा ह्यपमृतिभयतः पातु नः क्षेत्रपालः ॥ १ ॥ यं यं यं यक्षरूपं दशदिशिवदनं भूमिकंपायमानं सं सं संहारमूर्तिं शिरसि धृतजटाशेखरं चन्द्रबिंबम् । दं दं दं दीर्घकायं कृतनरवपुषं ऊर्ध्वरेखाकरालं प पं पं पापनाशं प्रणमत सततं भैरवं क्षेत्रपालम् ॥ २ ॥ इति चतुःषष्टिभैरवस्थापनम् ॥

---

## [ ॥ अथ क्षेत्रपालस्थापनम् ॥

तत क्षेत्रपालीयपीठदेवता स्थापयेत् ॥ प्रारीप्सितकर्मण साङ्गता सिद्ध्यर्थं वायव्यां क्षेत्रपालपीठे अजरादिक्षेत्रपालस्थापनं करिष्ये इति संकल्प्य स्थापयेत् ॥ अजराय नम अजरम् आ०स्था ॥ ( एवं सर्वत्र ) इन्द्रचोराय० व्यापकाय०इन्द्रमूर्त्तये०उक्षाय०कूष्माडाय० वरुणाय०वटुकाय०विमुक्ताय० लिप्तकाय० लीलाकाय० एकदंष्ट्राय० औषधीघ्नाय० बधनाय० ऐरावताय० दीव्यकाय० कवलाय० क्षोभणाय० गवयाय० कालाय० बलधराय० अजवे० चन्द्रवारणाय० फटाटोपाय० जटिलाय०

ऋतवे० घंटेश्वराय० विकटाय० मणिमानाय० गुणबंधाय० डामराय० ठंडपफणाय० स्थविराय० दंतुराय० धनदाय० नागकर्णाय० फेत्काराय० महाबलाय० वीरकाय० सिंहाय० मृगाय० यक्षाय० मेघवाहनाय० तीक्ष्णोष्ठाय० अनलाय० सुमतये० सुधालापाय० बकाय० घाताय० यापनाय० ॥१०॥ एवं पंचाशत्क्षेत्रपालान्संस्थाप्य प्राणप्रतिष्ठितक्षेत्रपालमूर्तिं संस्थाप्य प्रतिष्ठा०इति प्रतिष्ठाप्य "अजराद्यावाहितक्षेत्रपालदेवताभ्यो नमः ॥" इति आसनाद्युपचारैः संपूज्य॥ "ह्रां ह्रीं ह्रूं नमः" इति वटुकाय प्रभूतबलिं दद्यात् ॥ मंत्राः ॥ योगिन्यः क्षेत्रपालाश्च सर्वे यत्र समागताः॥ नगरे वाथ ग्रामे वा अटव्यां सरितस्तथा ॥१॥ ते सर्वे चैव संतुष्टा बलिं गृह्णन्तु मे सदा ॥ शरणागतोऽस्म्यहं तेषां सर्वे ते मम सुप्रदाः॥२॥ बलिदानेन संतुष्टाः प्रयच्छन्तु ममेप्सितम् ॥सर्वकार्याणि कुर्वन्तु दोषांश्च घ्नन्तु मे सदा॥३॥इति बलिं समर्प्य-प्रणमेत्॥ इति क्षेत्रपालस्थापनम्॥ ]

---

ततः प्रधानदेवतास्थापनार्थं पूर्वं सर्वतोभद्रमंडले ब्रह्मादिदेवतानां स्थापनं पूजनं च कुर्यात् ( पृ. ९९–१०७ द्रष्टव्यम् )

ततो मंडलमध्ये धान्यराशिं कृत्वा तदुपरि पूर्णपात्रान्तं कलशं संस्थाप्य तदुपरि क्षौमं वस्त्रं प्रसार्य तस्योपरि " मध्ये बिन्दुं त्रिकोणं षट्कोणं तदुपरि वृत्तमष्टौ दलानि तदुपरि वृत्तं तदुपरि चतुर्विंशतिपत्राणि तद्बाह्ये चतुर्द्वारं चतुरस्रत्रयम् " इति यंत्रं विलिखेत् ॥

अथ पीठपूजा ॥ हस्ते अक्षतान् गृहीत्वा–ॐ पूर्वपीठाय नमः । ॐ पं पूर्णपीठाय नमः । कं कामपीठाय० । प्राच्यां दिशि– ॐ उं उड्यानपीठाय०। आग्नेय्यां–मां मातृपीठाय० । दक्षिणे–जं जालंधरपीठाय०।नैर्ऋत्ये–कं कोल्हापुरोपपीठाय०। पश्चिमे–पूं पूर्णगिरिपीठाय० वायव्यां–सौं सौहारोपपीठाय० । उत्तरे–कं कोल्हागिरिपीठाय० । ऐशान्यां–कं कामरूपीठाय०॥१॥ इति पीठं सम्पूज्य ॥नमस्कारः— दक्षिणे–गुरवे०। परमगुरवे०। परमेष्ठिगुरवे० । गुरुपंक्तये० । मातापि-

तृभ्यां० । उपमन्युनारदसनकव्यासादिभ्यो० ॥ ६ ॥ वामे गं गणपतये० । दुं दुर्गायै० । सं सरस्वत्यै० । क्षं क्षेत्रपालाय० ॥ ४ ॥ इति नत्वा ॥ पीठदेवताः स्थापयेत्—पीठमध्ये-मं मण्डूकाय० । आं आधारशक्त्यै० । मूं मूलप्रकृत्यै० । कां कालाग्निरुद्राय० । तदुपरि-आं आदिकूर्माय० । अं अनन्ताय० । आं आदिवराहाय० । पं पृथिव्यै० । तदुपरि-अं अमृतार्णवाय० । रं रत्नद्वीपाय० । हं हेमगिरये० । नं नन्दनोद्यानाय० । कं कल्पवृक्षाय० । मं मणिभूतलाय० । दं दिव्यमण्डपाय० । सं स्वर्णवेदिकायै० । रं रत्नसिंहासनाय० । धं धर्माय० । ज्ञां ज्ञानाय० । वैं वैराग्याय० । ऐं ऐश्वर्याय० । इति सम्पूज्य ॥ पूर्वे—अं अनैश्वर्याय० । पुनर्मध्ये-सं सत्वाय० । प्रं प्रबोधात्मने० । रं रजसे० । मं प्रकृत्यात्मने० । तं तमसे० । मं मोहात्मने० । सों सोममण्डलाय० । सूं सूर्यमण्डलाय० । वं वह्निमण्डलाय० । मं मायातत्त्वाय० । विं विद्यातत्त्वाय० । शं शिवतत्त्वाय० । ब्रं ब्रह्मणे० । मं महेश्वराय० । आं आत्मने० । अं अन्तरात्मने० । पं परमात्मने० । जं जीवात्मने० । ज्ञं ज्ञानात्मने० । कं कन्दाय० । नं नीलाय० । पं पद्माय० । मं महापद्माय० । रं रत्नेभ्यो० । कं केसरेभ्यो० । कं कर्णिकायै० ॥४८॥

अथ नवशक्तीः स्थापयेत् ॥ तद्यथा-पूर्वाद्यष्टसु दिक्षु ॥ नन्दायै० । भगवत्यै० । रक्तदन्तिकायै० । शाकम्भर्यै० । दुर्गायै० । भीमायै० । कालिकायै० । भ्रामर्यै० । मध्ये शिवदूत्यै० ॥ ९ ॥ इति संस्थाप्य यथाशक्त्या "शक्तिसहितपीठदेवताभ्यो नमः" इति पूजयेत् ॥ इति ॥

अथ यंत्रदेवतास्थापनम्—हस्ते अक्षतान् गृहीत्वा ॥ विंदुमध्ये "ऐंह्रींक्लीं चामुंडायै विच्चे" श्रीमहाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणीश्रीत्रिगुणात्मिकादुर्गादेवतायै नमः श्रीमहाकाली० दुर्गादेवता-

मावा० स्था० (विंदोः परितो गुरुचतुष्टयमावाहयेत् ॥)गुरवे०। परात्पर-
गुरवे०। परमेष्ठिगुरवे०। गुरुपंक्तये०॥ (षडंगम्) ॥ ऐं हृदयाय नमः।
ह्रीं शिरसे०। क्लीं शिखायै०। चामुंडायै कवचाय०। विच्चे नेत्रत्रयाय०।
मूलेनै अस्त्राय० ॥ ( अथ त्रिकोणे स्वाग्रादिप्रादक्षिण्येन क्रमेण ॥ )
स्वरया सह विधात्रे०। श्रिया सह विष्णवे०। उमया सह शिवाय०।
दक्षिणे हुं सिंहाय०। वामे हुं महिषाय०। षट्कोणे ( अग्नीशासुर-
वायव्ये मध्ये दिक्षु च )॥ ऐं नन्दजायै०। ह्रीं रक्तदन्तिकायै०। क्लीं
शाकंभर्यै०। दुं दुर्गायै०। हुं भीमायै०। ह्रीं भ्रामर्यै० ॥ ६ ॥ (ततो
अष्टपत्रे स्वाग्रादिप्रादक्षिण्यक्रमेण ।) ऐं ब्राह्म्यै०। ह्रीं माहेश्वर्यै०। क्लीं
कौमार्यै०। ह्रीं वैष्णव्यै०। हुं वाराह्यै०। क्ष्म्यौं नारसिंह्यै०। लं ऐन्द्र्यै०।
स्फं चामुण्डायै०॥ ८ ॥ (ततश्चतुर्विंशतिदले ॥ ) विं विष्णुमायायै०। चें
चेतनायै०। बुं बुद्ध्यै०। निं निन्द्रायै०। क्षु क्षुधायै०। छां छायायै०।
शं शक्त्यै०। तृ तृष्णायै०। क्षां क्षान्त्यै०। जां जात्यै०। लं लज्जायै०।
शां शान्त्यै०। श्रं श्रद्धायै०। कां कान्त्यै०। लं लक्ष्म्यै०। धृं धृत्यै०।
वृं वृत्त्यै०। श्रुं श्रुत्यै०। स्मृं स्मृत्यै०। दं दयायै०। तुं तुष्ट्यै०। पुं पुष्ट्यै०।
मां मातृभ्यो०। भ्रां भ्रान्त्यै०॥ २४॥ (भूपुरे कोणचतुष्टये आग्नेयादि-
कोणे)॥ गं गणपतये०। क्षं क्षेत्रपालाय०। वं वटुकाय०। यां योगिन्यै०।
( पूर्वादिदिक्षु ) इन्द्राय०। अग्नये०। यमाय०। निर्ऋतये०। वरुणाय०।
वायवे०। सोमाय०। ईशानाय०। ब्रह्मणे०। अनन्ताय०॥ तद्बहिः–
वज्राय०। शक्तये०। दंडाय०। खड्गाय०। पाशाय०। अंकुशाय०।
गदायै०। त्रिशूलायै०। पद्माय०। चक्राय० ॥१०॥ तद्बहिः ॥ वज्रह-

---

१ ऐं ह्रीं क्लीं चामुडायै विच्चे ॥ इति मूलमन्त्र ॥

स्तायै गजारूढायै कादंवरीदेव्यै० । शक्तिहस्तायै अजवाहनायै उल्कादेव्यै० । दंडहस्तायै महिषारूढायै करालीदेव्यै० । खड्गहस्तायै शववाहनायै रक्ताक्षीदेव्यै० । पाशहस्तायै मकरवाहनायै श्वेताक्षीदेव्यै० । अंकुशहस्तायै मृगवाहनायै हरिताक्षीदेव्यै० । गदाहस्तायै सिंहारूढायै यक्षिणीदेव्यै० । शूलहस्तायै वृषभवाहनायै कालीदेव्यै० । पद्महस्तायै हंसवाहनायै सुरज्येष्ठादेव्यै० । चक्रहस्तायै सर्पवाहनायै सर्पराज्ञीदेव्यै नमः ॥१०॥ इत्यावाह्य "यन्त्रस्थदेवताभ्यो नमः" इति मूलमंत्रेण यथाशक्त्या पूजनं कुर्यात् ॥ इति यन्त्रदेवतास्थापनम् ॥

ततो देव्या मूर्तेः अग्न्युत्तारणपूर्वकप्राणप्रतिष्ठां कुर्यात् ।

## ॥ अथाग्न्युत्तारणपूर्वकप्राणप्रतिष्ठा ॥

तत्रादौ सुवर्णमयमूर्तीनां ताम्रपात्रे स्थापनं कृत्वा ॥ जलमादाय ॥ अद्येत्यादि० आसां मूर्तीनामंगप्रत्यंगसंधिसमुत्पन्नटंकाराद्यातपाग्निजनितदोषपरिहारार्थमग्न्युत्तारणपूर्वकं ब्राह्मणद्वारा प्राणप्रतिष्ठां करिष्ये ॥ मूर्तीः घृतेनाभ्यज्य उपरि जलधारां कुर्यात् ॥ अग्निर्वैश्वानरो वह्निर्वीतिहोत्रो धनंजयः ॥ अग्न्युत्तारणार्थाय मूर्तीनां शुद्धिहेतवे ॥ १ ॥ एवं त्रिवारं पठित्वा ॥ प्राणप्रतिष्ठां कुर्यात् ॥ अस्य श्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामाथर्वाणिछंदांसि जगत्सृष्टिकारिणी प्राणशक्तिर्देवता आंबीजं ह्रींशक्तिः क्रौं कीलकम् आसां मूर्तीनां प्राणप्रतिष्ठापने विनियोगः ॥ मूर्तिषु हस्तं निधाय पठेत् ॥ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः—सोऽहम् आसां मूर्तीनां प्राणा इह प्राणाः ॥ पुनः आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः—सोऽहम् ।

१ अस्या मूर्तेः अनयोर्मूर्त्योः आसां मूर्तीनाम् इति एकद्विबहुमूर्तिविषये वक्तव्यम्।

आसां मूर्तीनां जीवा इह स्थिताः॥ पुनः आं ह्रीं क्रौं यं रं लं वं शं षं सं हं सः-सोऽहम् । आसां मूर्तीनां सर्वेन्द्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु नमः ॥ ततो गर्भाधानादि षोडसंस्कारासिद्ध्यर्थं षोडशप्रणवावृत्तिं करिष्ये॥ ह्रीं इति षोडशवारमुच्चरेत्॥ अनेन षोडसंस्काराः संपद्यन्ताम्॥ तन्मूर्तिपात्रं कलशोपरि संस्थाप्य पूजां कुर्यात् ॥ इति ॥

तत्रादौ हृदिस्थां ज्योतिर्मयीं सपरिवारां महालक्ष्मीं ध्यायेत्॥ अथवा देवीध्यानम्-विद्युद्दामसमप्रभां मृगपतिस्कंधस्थितां भीषणां कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ॥ हस्तैश्चक्रदरालिखेटविशिखांश्चापं गुणं तर्जनीं बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ॥ १ ॥ इति ध्यात्वा ॥ हस्ते पुष्पाण्यादाय-आगच्छ वरदे देवि दैत्यदर्पनिषूदिनि ॥ पूजां गृहाण सुमुखि नमस्ते शङ्करप्रिये ॥ १ ॥ सर्वतीर्थमयं वारि सर्वदेवसमन्वितम्॥ इमं घटं समागच्छ तिष्ठ देवगणैः सह ॥ २ ॥ दुर्गे देवि समागच्छ सान्निध्यमिह कल्पय ॥ बलिपूजां गृहाण त्वमष्टाभिः शक्तिभिः सह॥३॥कल्याणजननीं सत्यां कामदां करुणाकराम् ॥ अनन्तशक्तिसंपन्नां दुर्गामावाहयाम्यहम्॥४॥ साङ्गां सपरिवारां सावरणां सायुधां दुर्गामावाहयामि ॥ महाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणीदुर्गे देवते आवाहिता भव ॥ स्थापिता भव ॥ सन्निहिता भव ॥ सन्निरुद्धा भव ॥ संमुखीकृता भव ॥ षडङ्गेन सकलीकृता भव ॥ अवगुण्ठिता भव ॥ अमृतीकृता भव ॥ परमीकृता भव ॥ इत्यावाहनादि मुद्राः[1] प्रदर्श्य ॥ प्रतिष्ठा सर्वदेवा० ( ॐ मनोजूति० )

१ आवाहनादिमुद्राः ( पृ. १३२ ) द्रष्टव्याः ॥

श्रीमहाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणि ( दुर्गे देवते ) सुप्रतिष्ठिता वरदा भव ॥ ततः श्रीसूक्तेन देवीन्यासं कृत्वा यथाशक्ति श्रीसूक्तेन वा जयन्ती मङ्गला० मूलेन वा षोडशोपचारैः पूजयेत् ॥

अत्रावसरे "जापकाः जपत पाठकाः पठत" इति सर्वे विप्राः यजमानेन सप्तशतीपाठपूजनं कारयित्वा ततः कृताङ्गन्यासाः कवचार्गलाकीलकानि पठित्वाऽष्टोत्तरशतनवार्णमंत्रं जप्त्वा सप्तशतीं ( संपुटितां ) जप्त्वाऽन्तेऽष्टोत्तरशतनवार्णमंत्रं जप्त्वा रहस्यत्रयं पठेयुः ॥ एकस्मिन्दिनेऽनेकावृत्तौ तु मत्स्यावृत्ति न कवचादीनामावृत्तिः ॥ नवार्णजपकर्तारो नवार्णमंत्रस्य जपं कुर्युः ॥

ततो यथावकाशं देवीराजोपचारपूजनं कुर्यात् ॥

अथ देवीपूजाप्रयोगः ॥ मूलेनाचम्य प्राणानायम्य ॥ शिखाबन्धनम् ॥ अद्ये० अमुक नाम्नो मम चतुर्विधपुरुषार्थसिद्ध्यर्थं श्रीमहाकालीमहालक्ष्मीमहासरस्वतीत्रिगुणात्मिकाजगदम्बिकादेवताप्रीत्यर्थं पात्रासादनपूर्वकं श्रीत्रिगुणात्मिकाया जगदम्बिकाया यथामिलितोपचारद्रव्येण पूजनमहं करिष्ये ॥ तदङ्गतया पूजनाधिकारार्थं भूतशुद्ध्यादिन्यासानेकादशन्यासांश्च करिष्ये ॥ इति संकल्प्य पूर्ववत् भूशुद्धिभूतशुद्ध्यादिन्यासान्(पृ.११४-१२६)कुर्यात्॥तत एकादशन्यासान् कुर्यात्॥

---

## ॥ अथैकादशन्यासाः ॥

ह्रीं अस्य श्री नवार्णमन्त्रस्य ब्रह्मविष्णुरुद्राऋषयः गायत्र्युष्णिगनुष्टुप्छन्दांसि श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यो देवताः नन्दाशाकम्भरीभीमाः शक्तयः रक्तदन्तिकादुर्गाभ्रामर्यो बीजानि अग्निवा-

पुरुषार्थस्तत्त्वानि सर्वाभीष्टसिद्ध्यर्थं श्रीजगदम्बिकापूजाङ्गत्वेन न्यासे विनियोगः॥ ऋष्यादिन्यासः—ह्रीं ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि॥ गायत्र्युष्णिगनुष्टुप्छन्दोभ्यो नमः मुखे ॥ श्रीमहाकालीमहालक्ष्मी-महासरस्वतीदेवताभ्यो नमः हृदि ॥ नंदाशाकम्भरीभीमाशक्तिभ्यो नमो दक्षिणस्तने ॥ रक्तदन्तिकादुर्गाभ्रामरीबीजेभ्यो नमो वामस्तने ॥ अग्निवायुसूर्येभ्यस्तत्त्वेभ्यो नमः नाभौ ॥ इति ऋष्यादिन्यासः ॥ मूलेन ( ऐं ह्रीं क्लीं चामुंडायै विच्चे ) इति करौ संशोधयेत् ॥

अथैकादशन्यासाः दुर्गोपासनाकल्पद्रुमस्थाः॥ ( १ )( प्रथमो मातृका-न्यासो देवसारूप्यदः स्मृतः ॥ स च अङ्गुष्ठानामिकामेलनरूपया तत्त्वमुद्रया सर्वत्र न्यसेत्॥ सर्वत्रादौ प्रणवोच्चारः) ह्रीं अं नमो मूर्ध्नि। आं नमो ललाटे । इं नमो दक्षिणनेत्रे । ईं नमो वामनेत्रे । उं नमो दक्षिणकपोले । ऊं नमो वामकपोले । ऋं नमो दक्षिणकर्णे । ॠं नमो वामकर्णे । ऌं नमो दक्षनासापुटे । ॡं नमो वामनासापुटे । एं नमः ऊर्ध्वोष्ठे । ऐं नमः अधरोष्ठे । ओं नमः ऊर्ध्वदन्तपङ्क्तौ । औं नमः अधोदन्तपङ्क्तौ । अं नमः जिह्वायाम् । अः नमस्तालुनि । कं नमो दक्षिणबाहुमूले । खं नमो दक्षिणकूर्परे । गं नमो दक्षिणमणिबन्धे । घं नमो दक्षिणाङ्गुलिमूले । ङं नमो दक्षिणाङ्गुल्यग्रे । चं नमो वाम-बाहुमूले । छं नमो वामकूर्परे । जं नमो वाममणिबन्धे । झं नमो वामाङ्गुलिमूले । ञं नमो वामाङ्गुल्यग्रे । टं नमो दक्षिणपादमूले । ठं नमो दक्षिणजानुनि । डं नमो दक्षिणपादगुल्फे । ढं नमो दक्षिणपादाङ्गुलिमूले । णं नमो दक्षिणपादाङ्गुल्यग्रे । तं नमो वामपादमूले । थं नमो वामजानुनि । दं नमो वामपादगुल्फे । धं नमो वामपादाङ्गुलिमूले । नं नमो वामपादाङ्गुल्यग्रे । पं नमो

दक्षिणपार्श्वे । फं नमो वामपार्श्वे । बं नमो पृष्ठे । भं नमो नाभौ । मं नमः उदरे । यं नमस्त्वचि । रं नमः असृजि । लं नमो मांसे । वं नमः स्नायुषु । शं नमः अस्थिनि । षं नमः मज्जायाम् । सं नमः मेदसि । हं नमः शुक्रे । क्षं नमः सर्वत्र । ( इति मातृकान्यासः प्रथमः येन मांत्रिकः साङ्गवेदसमो भाति) ॥१॥ (२) (द्वितीयः सारस्वतो न्यासः )॥ ह्रीं ऐं ह्रीं क्लीं कनिष्ठिकाभ्यां नमः । ह्रीं ऐं ह्रीं क्लीं अनामिकाभ्यां नमः । ह्रीं ऐं ह्रीं क्लीं मध्यमाभ्यां नमः । ह्रीं ऐं ह्रीं क्लीं तर्जनीभ्यां नमः । ह्रीं ऐं ह्रीं क्लीं अङ्गुष्ठाभ्यां नमः । ह्रीं ऐं ह्रीं क्लीं करतलाभ्यां नमः । ह्रीं ऐं ह्रीं क्लीं करपृष्ठाभ्यां नमः । ह्रीं ऐं ह्रीं क्लीं कूर्पराभ्यां नमः । ह्रीं ऐं ह्रीं क्लीं मणिबन्धाभ्यां नमः । ह्रीं ऐं ह्रीं क्लीं हृदयाय नमः । ह्रीं ऐं ह्रीं क्लीं शिरसे नमः । ह्रीं ऐं ह्रीं क्लीं शिखायै नमः । ह्रीं ऐं ह्रीं क्लीं कवचाय नमः । ह्रीं ऐं ह्रीं क्लीं नेत्रत्रयाय नमः। ह्रीं ऐं ह्रीं क्लीं अस्त्राय नमः । ह्रीं ऐं ह्रीं क्लीं पूर्वायै नमः । ह्रीं ऐं ह्रीं क्लीं अग्नये नमः। ह्रीं ऐं ह्रीं क्लीं दक्षिणायै नमः । ह्रीं ऐं ह्रीं क्लीं निर्ऋतये नमः। ह्रीं ऐं ह्रीं क्लीं पश्चिमायै नमः। ह्रीं ऐं ह्रीं क्लीं वायवे नमः। ह्रीं ऐं ह्रीं क्लीं उत्तरायै नमः। ह्रीं ऐं ह्रीं क्लीं ईशानाय नमः । ह्रीं ऐं ह्रीं क्लीं ऊर्ध्वायै नमः। ह्रीं ऐं ह्रीं क्लीं अधस्तान्नमः। (इति द्वितीयः सारस्वतो न्यासः येन दुरितं जाड्यं वाक्पापसञ्चयश्च विलयं याति ) ॥ २ ॥ ( ३ ) (तृतीयो मातृगणन्यासः ॥) ब्रह्माणी मां पूर्वतः पातु । माहेश्वरी माम् आग्नेय्यां पातु । कौमारी मां दक्षिणे पातु । वैष्णवी मां नैर्ऋत्यां पातु । वाराही मां पश्चिमे पातु । नारसिंही मां वायव्यां पातु । इन्द्राणी माम् उत्तरे पातु । चामुण्डा माम् ईशान्यां पातु । व्योमेश्वरी माम् ऊर्ध्वं पातु । सप्तद्वीपेश्वरी मां

भुवि पातु। नागेश्वरी माम् अधः पातु ॥ ( इति तृतीयो मातृगणन्यासः येन कर्ता त्रिषु लोकेषु निर्भयः सन्सर्वदेवप्रियो भवति ) ॥ ३ ॥ ( ४ ) (चतुर्थः जरामृत्युनाशको न्यासः॥) कमलाङ्कुशमण्डिता नन्दजा पूर्वाङ्गं मे पातु। खड्गपात्रधरा रक्तदन्तिका दक्षिणाङ्गं मे पातु। पुष्पपल्लवमूलादिहस्ता शाकम्भरी पश्चिमाङ्गं मे पातु। धनुर्बाणधरा दुर्गार्तिहारिणी दुर्गा वामाङ्गं मे पातु। शिरःपात्रकरा भीमा मस्तकाच्चरणावधि मां पातु। चित्रकान्तिभृद्भ्रामरी चरणान्मस्तकावधि मां पातु ॥( इति चतुर्थः जरामृत्युनाशको न्यासः येन कर्ता अग्निवारिभ्यां निर्भयो भूत्वा जरामरणवर्जितो भवति ) ॥ ४ ॥ ( ५ ) ( पंचमो वशीकरणः अभेद्यो न्यासः ॥ ) ऐं पादादिनाभिपर्यन्तं ब्रह्मा मां पातु। श्रीं नाभेर्विशुद्धिपर्यन्तं जनार्दनो मां पातु। हं सौं विशुद्धेः शिखापर्यन्तं त्रिलोचनो रुद्रो मां पातु। ऐं हंसो मे पदद्वन्द्वं पातु। श्रीं वैनतेयो मे करद्वन्द्वं पातु। हंसौं वृषभः चक्षुषी मे पातु। ह्रीं गजाननः सर्वाङ्गं मे पातु। ह्रीं आनन्दमयो हरिः परापरौ देहभागौ मे पातु ॥(इति पंचमः वशीकरणः अभेद्यो न्यासः येन कर्ता महापापातिपापाभ्यां मुक्तो भवति ) ॥५॥ ( ६ ) (षष्ठः सद्गतिप्रापको न्यासः ॥) ह्रीं अष्टादशभुजा महालक्ष्मीः मध्यमाङ्गं मे पातु। अष्टभुजासरस्वती ऊर्ध्वं मां पातु। क्लीं त्रिंशल्लोचना महाकाली अधो मां पातु। क्षौं सिंहो हस्तद्वयं मे पातु। ऐं परहंसोऽक्षिमण्डलं मे पातु। महिषारूढः प्रेतः पदद्वयं मे पातु। हंसौं महेशश्चण्डिकायुक्तः सर्वाङ्गं मे पातु॥( इति षष्ठः सद्गतिप्रापको न्यासः येन वैकुण्ठसुखं सर्वकष्टोपशान्तिश्च भवति) ॥ ६ ॥ ( ७ ) (सप्तमो रोगनाशको न्यासः ॥) ऐं नमो ब्रह्मरन्ध्रे ॥ ह्रीं नमो दक्षिणनेत्रे। क्लीं नमो वामनेत्रे। चां नमो दक्षिणकर्णे। मुं नमो वामकर्णे। डां नमो

दक्षिणनासापुटे । यैं नमो वामनासापुटे । विं नमो मुखे । चें नमो पायौ ॥ (इति सप्तमो मूलाक्षरो रोगनाशको न्यासो येन सर्वरोगक्षयो भवति )॥७॥ (८) (अष्टमः सर्वदुःखहरो न्यासः) च्चें नमः पायौ। विं नमो मुखे । यैं नमो वामनासापुटे । डां नमो दक्षिणनासापुटे । मुं नमो वामकर्णे । चां नमो दक्षिणकर्णे। क्लीं नमो वामनेत्रे। ह्रीं नमो दक्षिणनेत्रे । ऐं नमो ब्रह्मरन्ध्रे॥(इति अष्टमो विलोमाक्षरः सर्वदुःखहरो न्यासो येन सर्वदुःखं विनश्यति ) ॥ ८ ॥ ( ९ ) ॥ ( नवमो देवताप्राप्तिक्रन्न्यासः ) ॥ मूलमुच्चार्य । मस्तकाच्चरणांतं चरणान्मस्तकान्तम् अष्टवारं व्यापकं कुर्यात् यथा—प्रथमं पुरतो मूलेन मस्तकाच्चरणावधि ॥ ततश्चरणान्मस्तकावधि मूलोच्चारेण व्यापकम् ॥ एवं दक्षिणतः पश्चाद्वामभागे चेति प्रतिदिग्भागेऽनुलोमविलोमतया द्विर्द्विरिति ॥ (इति नवमो मूलव्यापको देवताप्राप्तिक्रन्न्यासो येन साधको देववद्भवेत् ) ॥९॥ (१०) दशमस्त्रैलोक्यवशक्रन्न्यासः॥) मूलमुच्चार्य हृदयाय नमः। शिरसे स्वाहा। शिखायै वषट्। कवचाय हुम्। नेत्रत्रयाय वौषट् । अस्त्राय फट् । इति एवं मूलमुच्चार्य षडंगेषु न्यसेत् । (इति दशमस्त्रैलोक्यवशक्रन्न्यासो येन साधको यद्वदति तदेव भवति यद्दृष्ट्या पश्यति तत्तथैव भवति)॥१०॥ (११) (एकादशः सर्वरक्षाकरो न्यासो दशन्याससमफलदायकः॥ ) खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा॥ शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥ १ ॥ सौम्या सौम्यतराऽशेषसौम्येभ्यस्त्वतिसुन्दरी ॥ परापराणां परमा त्वमेव परमेश्वरी॥ २ ॥ यच्च किञ्चित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ॥ तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे मया ॥ ३ ॥ यया त्वया जगत्स्रष्टा जगत्पात्यत्ति यो जगत्॥ सोपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ॥४॥

विष्णुः शरीरग्रहणमहमीशान एव च ॥ कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान्भवेत् ॥ ५ ॥ आद्यं वाग्बीजं ऐं श्यामवर्णं ध्यात्वा सर्वाङ्गे विन्यसेत् ॥१॥ शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ॥ घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥ १ ॥ प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे ॥ भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरी ॥ २ ॥ सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते ॥ यानि चात्यन्तघोराणि तैरक्षास्माँस्तथा भुवम् ॥ ३ ॥ खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ॥ करपल्लवसङ्गीनि तैरस्मान्रक्ष सर्वतः ॥ ४ ॥ द्वितीयं मायाबीजं ह्रीं बालार्कवर्णं ध्यात्वा सर्वाङ्गे विन्यसेत् ॥२॥ सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ॥ भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते॥१॥एतत्ते वदनं सौम्यं लोचनत्रयभूषितम्॥ पातु नः सर्वभूतेभ्य कात्यायनि नमोऽस्तु ते ॥ २ ॥ ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ॥ त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥ ३ ॥ हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ॥ सा घण्टा पातु नो देवि पापेभ्योऽनः सुतानिव ॥४॥ असुरासृग्वसापङ्कचर्चितस्ते करोज्ज्वलः ॥ शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ॥ ५ ॥ तृतीयं कामबीजं क्लीं स्फटिकाभासं ध्यात्वा सर्वाङ्गे विन्यसेत् ॥३॥ इति सर्वानिष्टहरः सर्वाभीष्टदः सर्वरक्षाकरश्चैकादशो न्यासः ॥ ११ ॥ इत्येकादशन्यासाः ॥

॥ इत्येकादशन्यासाः ॥

एवमेकादशन्यासान कृत्वा देवीकलामातृकान्यासं कुर्यात् ॥

---

।

## ॥ अथ देवीकलामातृकान्यासः ॥

जलमादाय। अस्य श्रीदेवीकलामातृकान्यासस्य प्रजापतिर्ऋषिः गायत्रीछंदः श्रीमातृकाशारदादेवता हलो बीजानि स्वराः शक्तयः सप्तशतीपाठजपादौ (होमादौ च) मातृकान्यासे विनियोगः॥ प्रजापतिऋषये० शिरसि। गायत्रीछंदसे० मुखे। शारदादेवतायै० हृदि॥ हलबीजेभ्यो० गुह्ये॥ स्वरशक्तये० पादयोः। विनियोगाय० सर्वांगे॥ अं आं हृदयाय०। इं ईं शिरसे०। उं ऊं शिखायै०। एं ऐं कवचाय०। ओं औं नेत्रत्रयाय०। अं अः अस्त्राय०॥ एवं करांगन्यासं कृत्वा ध्यायेत्॥ शंखचक्राब्जपरशुकपालाक्षकमालिकाः॥ पुस्तकातनुकुंभौ च त्रिशूलं दधतीं करैः॥१॥ सितपीतसितश्वेतरक्तवर्णैस्त्रिलोचनैः॥ पंचास्यसंयुतां चंद्रसकान्ति शारदां भजे॥२॥ इति ध्यात्वा मातृका न्यसेत्॥ ह्रीं अं निवृत्त्यै० ललाटे। आं प्रतिष्ठायै० मुखवृत्ते। इं विद्यायै० दक्षनेत्रे। ईं शान्त्यै० वामनेत्रे। उं धरायै० दक्षकर्णे॥ ऊं दीपिकायै० वामकर्णे। ऋं रेचिकायै० दक्षनासापुटे।। ॠं मोचिकायै० वामनासापुटे। ऌं परायै० दक्षकपोले॥ ॡं सूक्ष्मायै० वामकपोले। एं सूक्ष्मामृतायै० ऊर्ध्वोष्ठे। ऐं ज्ञानामृतायै० अधरोष्ठे॥ ओं आप्यायिन्यै० ऊर्ध्वदन्तपंक्तौ॥ औं व्यापिन्यै० अधोदन्तपंक्तौ॥ अं व्योमरूपायै० जिह्वायाम्। अः अनन्तायै० कंठे॥ कं सृष्ट्यै० दक्षबाहुमूले। खं ऋद्ध्यै० दक्षकूर्परे। गं स्मृत्यै० दक्षमणिबंधे॥ घं मेधायै० दक्षहस्तांगुलिमूले। ङं श्रियै०। दक्षहस्तांगुल्यग्रे। चं लक्ष्म्यै० वामबाहुमूले। छं द्युत्यै नमः वामकूर्परे। जं स्थिरायै० वाममणिबंधे॥ झं स्थित्यै० वामहस्तांगुलिमूले॥ ञं सिद्ध्यै० वामहस्तांगुल्यग्रे॥ टं जरायै० दक्षपादमूले। ठं पालिन्यै० दक्षजानुनि। डं क्षान्त्यै० दक्षगुल्फे। ढं ईश्वर्यै० दक्षपादांगुलि-

मूले ॥ णं रत्यै० दक्षपादांगुल्यग्रे ॥ तं कामिकायै० वामपादमूले । थं वरदायै०वामजानुनि ॥ दं आल्हादिन्यै० वामगुल्फे । धं प्रीत्यै० वामपादांगुलिमूले ॥ नं दीर्घायै० वामपादांगुल्यग्रे ॥ पं तीक्ष्णायै० दक्षपार्श्वे ॥ फं रौद्र्यै० वामपार्श्वे ॥ बं भयायै० पृष्ठे ॥ भं निद्रायै० नाभौ ॥ मं तन्द्रिकायै० जठरे ॥ यं क्षुधायै० हृदि ॥ रं क्रोधिन्यै० दक्षांसे ॥ लं क्रियायै० ककुदि ॥ वं उल्कायै० वामांसे ॥ शं मृत्युकायै० हृदयादिदक्षहस्तान्तम् ॥ षं पीतायै० हृदयादिवामहस्तान्तम् ॥ सं श्वेतायै० हृदयादिदक्षपादान्तम् ॥ हं अरुणायै० हृदयादिवामपादान्तम् ॥ ळं असितायै० मूर्द्धादिपादान्तम् ॥ क्षं अनन्तायै० पादादिमूर्द्धान्तम् ॥ इति ॥

॥ इति देवीकलामातृकान्यासः ॥

एवं देवीकलामातृकान्यासं कृत्वा गणपतिं स्मृत्वा देव्या दक्षिणे घृतदीपं तन्मध्ये बिन्दुत्रिकोणं षट्कोणं देव्या वामे तैलदीपं तन्मध्ये बिन्दुत्रिकोणषट्कोणात्मकं यन्त्रं विलिख्य सपूज्य दीपं प्रज्वाल्य सम्पूज्य प्रार्थयेत् ॥ भो दीप देवीरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ॥ यावत्कर्मसमाप्तिः स्यात्तावत्त्वं सुस्थिरो भव ॥ १ ॥ इति दीपं संस्थाप्य शरीरशुद्ध्यर्थं मूलमन्त्रेण — ऐं ह्रीं क्लीं चामुंडायै विच्चे हृदयाय नमः ॥ ऐं ह्रीं क्लीं चामुंडायै विच्चे शिरसे नमः ॥ ऐं ह्रीं क्लीं चामुंडायै विच्चे शिखायै नमः ॥ ऐं ह्रीं क्लीं चामुंडायै विच्चे कवचाय नमः ॥ ऐं ह्रीं क्लीं चामुंडायै विच्चे नेत्रत्रयाय नमः ॥ ऐं ह्रीं क्लीं चामुंडायै विच्चे अस्त्राय नमः ॥ इति षडङ्गन्यासं कृत्वा कलशे वरुणं संपूज्य शङ्खं घण्टां च सम्पूज्य कलशजलेन सर्वत्र प्रोक्षयेत् । अपवित्रः पवित्रो वा सर्वावस्थां गतोपि वा ॥ यः स्मरेत् पुंडरीकाक्षं सबाह्याभ्यंतरः शुचिः ॥ इति ॥ ततः पात्रासादनं कुर्यात् ॥

## ॥ अथ पात्रासादनप्रयोगः ॥

| ॥कलश ॥ | ॥सामान्यार्घ ॥ | ॥विशेषार्घ ॥ | ॥पाद्यपात्रम् ॥ |
|---|---|---|---|
| ॥अर्घ्यपात्रम् ॥ | ॥आचमनीयपात्रम् ॥ | ॥ मधुपर्क ॥ | ॥मोक्षणीपात्रम् ॥ |

"अथ पात्रस्थापनम्"—तत्रादौ (१) कलशः ॥ स्ववामे बिंदुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं यंत्रं विलिख्य अक्षतैः पूजयेत् ॥ मध्ये मूलम्—ऐं ह्रीं क्लीं चामुंडायै विच्चे नम। त्रिकोणे त्रिपदैः—ऐं ह्रीं क्लीं। चामुंडायै। विच्चे नमः ॥ एवं द्विरावृत्त्या षट्कोणे ॥ मातृकया वृत्तम्-अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ॥ कं

चारि आवाहनादिदशमुद्राः प्रदर्शयेत् ॥ यथा ॥ मूलेन–आवाहिता भव ॥ स्थापिता भव ॥ संनिहिता भव ॥ सन्निरुद्धा भव ॥ संमुखीकृता भव ॥ मूलं हृदयायेत्यादि षडंगेन सकलीकृता भव । अवगुंठिता भव ॥ अमृतीकृता भव ॥ परमीकृता भव ॥ योनिमुद्रां प्रदर्श्य ॥१०॥ मूलेन संपूज्य । मत्स्यमुद्रयाऽऽच्छाद्य । मूलेनाष्टवारमभिमंत्र्य ॥ धेनुं योनिं च प्रदर्शयेत् ॥ इति कलशः ॥ १ ॥

" अथ (२) सामान्यार्घः–विंदुत्रिकोणवृत्तचतुरस्रं यंत्रं विलिख्य । अक्षतैः पूजयेत् ॥ मध्ये मूलम् । ऐं ह्रीं क्लीं चामुंडायै विच्चे नमः । त्रिकोणे त्रिपदैः–ऐं ह्रीं क्लीं । चामुंडायै । विच्चे नमः ॥ मातृकया वृत्तम्–अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति ॥ चतुरस्रे षडंगानि-( आग्नेये ) ऐं हृदयाय नमः । (ऐशाने) ह्रीं शिरसे० । (नैर्ऋत्ये) क्लीं शिखायै० । (वायव्ये) चामुंडायै कवचाय० । (मध्ये) विच्चे नेत्रत्रयाय० ।(चतुर्दिक्षु) मूलं अस्त्राय० ॥ इति यंत्रं संपूज्य ॥ हुं फडिति आधारं प्रक्षाल्य । मूलेन संस्थाप्य । मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिकादुर्गादेवतासामान्यार्घपात्राधाराय नमः इति आधारं संपूज्य । हुं फट् इति पात्रं प्रक्षाल्य । मूलेन संस्थाप्य । सूर्यमण्डलाय द्वादशकलात्मने श्री-

---

१ आवाहनादिमुद्राः ( पृ. १३२ ) द्रष्टव्याः ॥

२ कामनापरत्वेन कलशमध्ये निक्षेप्यपदार्थाः मंत्रमहार्णवे निर्दिष्टाः ॥ धनकामो न्यसेद्धेम धान्यकामस्तु मौक्तिकम् ॥ श्रीकामः कमलं न्यस्य कामार्थी दमनं न्यसेत् ॥ मोक्षकामो न्यसेद्दलं जयकामोऽपराजिताम् ॥ उच्चाटनार्थं हिंगुलं वश्यार्थं शिखिमूलकम् ॥ मारणाय मरीचं च केतकीं मोहनाय च ॥ आकर्षणार्थं धत्तूर प्रक्षिपेत्कलशोपरि ॥

मूलेन संस्थाप्य ॥ ह्रीं मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिकादुर्गादेवताकलशपात्राधाराय नमः॥ इतिआधारं संपूज्य तत्र दशकलाः पूजयेत्॥ यं धूम्रार्चिषे नमः। रं ऊष्मायै नमः। लं ज्वलिन्यै नमः॥ वं ज्वालिन्यै नमः॥ शं विस्फुलिंगिन्यै नमः। षं सुश्रियै नमः। सं सुरूपायै नमः। हं कपिलायै नमः। ळं हव्यवाहायै नमः। क्षं कव्यवाहायै नमः ॥१०॥ इति संपूज्य । हुं फट् इति पात्रं प्रक्षाल्य । मूलेन संस्थाप्य । सूर्यमंडलाय द्वादशकलात्मने श्रीत्रिगुणात्मिका दुर्गादेवता-कलशपात्राय नमः इति पात्रं संपूज्य॥तत्र द्वादशकलाःपूजयेत्॥ॐ कं भं तपिन्यै नमः॥खं बं तापिन्यै०॥ गं फं धूम्रायै०। घं पं मरीच्यै०। ङं नं ज्वालिन्यै०। चं धं रुच्यै०। छं दं सुषुम्णायै० । जं थं भोगदायै० । झं तं विश्वायै० । ञं णं बोधिन्यै० । टं ढं धारिण्यै० । ठं डं क्षमायै० ॥ १२ ॥ इति संपूज्य ॥ तत्र विलोममातृकया शुद्धजलमापूरयेत् ॥ तद्यथा ॥ क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं॥ गालिनीमुद्रया निरीक्ष्य॥ षोडशकलात्मने चंद्रमंडलाय श्रीत्रिगुणात्मिका-दुर्गादेवता-कलशामृताय नमः इति संपूज्य ॥ तत्र षोडशकलाः पूजयेत्॥अं अमृतायै०। आं मानदायै०। इं पूषायै०।ईं पुष्ट्यै०।उं तुष्ट्यै०। ऊं रत्यै०। ऋं धृत्यै०। ॠं शशिन्यै०। ऌं चंद्रिकायै०। ॡं कान्त्यै०। एं ज्योत्स्नायै०। ऐं श्रियै०। ओं प्रीत्यै०। औं अंगदायै०। अं पूर्णायै० अः पूर्णामृतायै०॥१६॥ इति संपूज्य ॥ फडिति संरक्ष्य मूलेन देवीमा-

१ "ऐं ह्रीं क्लीं चामुण्डायै विच्चे" इति मूलमंत्र सर्वत्र ज्ञेय ॥ २ कनिष्ठयाद्वयुतमन्यस्य संयोगे गालिनी मुद्रा।

चाथ आवाहनादिदशमुद्राः प्रदर्शयेत् ॥ यथा ॥ मूलेन–आवाहिता भव ॥ स्थापिता भव ॥ संनिहिता भव ॥ सन्निरुद्धा भव ॥ संमुखीकृता भव ॥ मूलं हृदयायेत्यादि षडंगेन सकलीकृता भव । अवगुंठिता भव ॥ अमृतीकृता भव ॥ परमीकृता भव ॥ योनिमुद्रां प्रदर्श्य ॥१०॥ मूलेन संपूज्य । मत्स्यमुद्रयाऽऽच्छाद्य । मूलेनाष्टवारमभिमंत्र्य ॥ धेनुं योनिं च प्रदर्शयेत् ॥ इति कलशः ॥ १ ॥

'' अथ (२) सामान्यार्घः–बिंदुत्रिकोणवृत्तचतुरस्रं यंत्रं विलिख्य । अक्षतैः पूजयेत् ॥ मध्ये मूलम् । ऐं ह्रीं क्लीं चामुंडायै विच्चे नमः । त्रिकोणे त्रिपदैः–ऐं ह्रीं क्लीं । चामुंडायै । विच्चे नमः ॥ मातृकया वृत्तम्–अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति ॥ चतुरस्रे षडंगानि-(आग्नेये) ऐं हृदयाय नमः । (ऐशाने) ह्रीं शिरसे० । (नैर्ऋत्ये) क्लीं शिखायै० । (वायव्ये) चामुंडायै कवचाय० । (मध्ये) विच्चे नेत्रत्रयाय० ।(चतुर्दिक्षु) मूलं अस्त्राय० ॥ इति यंत्रं संपूज्य ॥ हुं फडिति आधारं प्रक्षाल्य । मूलेन संस्थाप्य । मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिकादुर्गादेवतासामान्यार्घपात्राधाराय नमः इति आधारं संपूज्य । हुं फड् इति पात्रं प्रक्षाल्य । मूलेन संस्थाप्य । सूर्यमण्डलाय द्वादशकलात्मने श्री·

१ आवाहनादिमुद्रा' ( पृ. १३२ ) द्रष्टव्याः ॥

२ कामनापरत्वेन कलशमध्ये निक्षेपपदार्थाः मन्त्रमहार्णवे निर्दिष्टाः ॥ धनकामो न्यसेद्धेम धान्यकामस्तु मौक्तिकम् ॥ श्रीकामः कमलं न्यस्य कामार्थी दमनं न्यसेत् ॥ मोक्षकामो न्यसेद्रत्नं जयकामोऽपराजिताम् ॥ उच्चाटनार्थं हिंगुलं वश्यार्थं शिरिमूलकम् ॥ मारणाय मरीचं च कैतकीं मोहनाय च ॥ आकर्षणार्थं धत्तूरं प्रक्षिपेत्कलशोपरि ॥

त्रिगुणात्मिकादुर्गादेवतासामान्यार्घपात्राय नमः इति पात्रं संपूज्य तत्र मूलेन शुद्धजलमापूर्य । गालिनीमुद्रया निरीक्ष्य । चंद्रमंडलाय षोडशकलात्मने श्रीदुर्गादेवतासामान्यार्घपात्रामृताय नमः इति सम्पूज्य ॥ मत्स्यमुद्रयाऽऽच्छाद्य । मूलेनाष्टधाऽभिमंत्र्य । धेनुमुद्रां योनिमुद्रां च प्रदर्शयेत् ॥ इति सामान्यार्घः ॥ २ ॥

"अथ (३) विशेषार्घः-स्ववामे बिंदुत्रिकोणषट्कोणवृत्तचतुरस्रात्मकं यंत्रं विलिख्य अक्षतैः पूजयेत् ॥ मध्ये मूलम्—ऐं ह्रीं क्लीं चामुडायै विच्चे नमः । त्रिकोणे त्रिपदैः—ऐं ह्रीं क्लीं । चामुडायै । विच्चे नमः ॥ एवं द्विरावृत्त्या षट्कोणे ॥ मातृकया वृत्तम्—अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति ॥ चतुरस्रे षडंगानि–(आग्नेये) ऐं हृदयाय नमः । (ऐशाने) ह्रीं शिरसे० ।(नैर्ऋत्ये) क्लीं शिखायै० ।(वायव्ये) चामुंडायै कवचाय० ।(मध्ये) विच्चे नेत्रत्रयाय० । (चतुर्दिक्षु) मूलं अस्त्राय० ॥इति यंत्रं संपूज्य हुं फट् इति आधारं प्रक्षाल्य ॥ मूलेन संस्थाप्य ॥ ह्रीं मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिकादुर्गादेवताविशेषार्घपात्राधाराय नमः । इति आधारं संपूज्य तत्र दशकलाः पूजयेत् ॥ यं धूम्रार्चिषे नमः । रं ऊष्मायै नमः । लं ज्वलिन्यै नमः । वं ज्वालिन्यै नमः । शं विस्फुलिंगिन्यै नमः । षं सुश्रियै नमः । सं सुरूपायै नमः । हं कपिलायै नमः । ळं हव्यवाहायै नमः । क्षं कव्यवाहायै नमः ॥१०॥ इति संपूज्य । हुं फट् इति पात्रं प्रक्षाल्य । मूलेन संस्थाप्य । सूर्यमंडलाय द्वादशकलात्मनेश्रीत्रिगुणात्मिका-दुर्गादेवताविशेषार्घपात्राय नमः इति पात्रं संपूज्य ॥ तत्र द्वादशकलाः पूजयेत् ॥ ॐ कं भं तपिन्यै नमः ॥ खं बं तापिन्यै० । गं फं धूम्रायै० । घं पं मरीच्यै० । ङं नं ज्वालिन्यै० । चं धं

रुच्यै० । छं दं सुषुम्णायै० । जं थं भोगदायै० । झं तं विश्वायै० । ञं णं बोधिन्यै० । टं ढं धारिण्यै० । ठं डं क्षमायै० ॥ १२ ॥ इति संपूज्य ॥ तत्र विलोममातृकया शुद्धजलमापूरयेत् ॥ तद्यथा ॥ क्षं ळं हं सं षं शं वं लं रं यं मं भं बं फं पं नं धं दं थं तं णं ढं डं ठं टं ञं झं जं छं चं ङं घं गं खं कं अः अं औं ओं ऐं एं ॡं ऌं ॠं ऋं ऊं उं ईं इं आं अं॥ गालिनीमुद्रया निरीक्ष्य ॥ षोडशकलात्मने चंद्रमंडलाय श्रीत्रिगुणा-त्मिका-दुर्गादेवता-विशेषार्घामृताय नमः इति संपूज्य ॥ तत्र षोडशकलाः पूजयेत् ॥ अं अमृतायै० । आं मानदायै० । इं पूषायै० । ईं पुष्ट्यै० । उं तुष्ट्यै० । ऊं रत्यै० । ऋं धृत्यै० । ॠं शशिन्यै० । ऌं चंद्रिकायै० । ॡं कान्त्यै० । एं ज्योत्स्नायै० । ऐं श्रियै० । ओं प्रीत्यै० । औं अंगदायै० । अं पूर्णायै० । अः पूर्णामृतायै० ॥ १६ ॥ इति संपूज्य ॥ फडिति संरक्ष्य । मूलेन देवीमावाह्य आवाहनादिदशमुद्राः प्रदर्शयेत् ॥ यथा ॥ मूलेन-आवाहिता भव ॥ स्थापिता भव ॥ संनिहिता भव ॥ संनिरुद्धा भव ॥ संमुखीकृता भव ॥ मूलं हृदयायेत्यादि षडंगेन सकलीकृता भव । अवगुं-ठिता भव ॥ अमृतीकृता भव ॥ परमीकृता भव ॥ योनिमुद्रां प्रदर्श्य॥ १० ॥ मूलेन संपूज्य । मत्स्यमुद्रयाऽऽच्छाद्य । मूलेनाष्टवारमभिमंत्र्य ॥ धेनुं योनिं च प्रदर्शयेत् ॥ इति विशेषार्घः ॥ ३ ॥

" अथ ( ४ ) पाद्यपात्रम्–बिंदुत्रिकोणवृत्तचतुरस्रं यंत्रं विलिख्य । अक्षतैः पूजयेत् ॥ मध्ये मूलम् । ऐं ह्रीं क्लीं चामुंडायै विच्चे नमः । त्रिकोणे त्रिपदैः–ऐं ह्रीं क्लीं । चामुंडायै । विच्चे नमः ॥ मातृकया ...त्तम् । अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति ॥ चतुरस्रे षडङ्गानि–(आग्नेये) ऐं

हृदयाय नमः।(ऐशाने) ह्रीं शिरसे०।(नैर्ऋत्ये) क्लीं शिखायै०। (वायव्ये) चामुंडायै कवचाय०। (मध्ये) विच्चे नेत्रत्रयाय०।(चतुर्दिक्षु) मूलं अस्त्राय० ॥ इति यंत्रं संपूज्य ॥ हुं फडिति आधारं प्रक्षाल्य। मूलेन संस्थाप्य। मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिकादुर्गा-देवतापाद्यपात्राधाराय नमः इति आधारं संपूज्य। हुं फट् इति पात्रं प्रक्षाल्य। मूलेन संस्थाप्य। सूर्यमण्डलाय द्वादशकलात्मने श्री-त्रिगुणात्मिकादुर्गादेवतापाद्यपात्राय नमः। इति पात्रं संपूज्य। तत्र मूलेन शुद्धजलमापूर्य। मालिनीमुद्रया निरीक्ष्य। चंद्रमंडलाय षोडशकलात्मने श्रीदुर्गादेवतापाद्यपात्रामृताय नमः। इति सम्पूज्य॥ मत्स्यमुद्रयाऽऽच्छाद्य। मूलेनाष्टधाऽभिमंत्र्य। धेनुमुद्रां योनिमुद्रां च प्रदर्शयेत्॥ इति पाद्यपात्रम् (४)

" अथ (५) अर्घ्यपात्रम्—विंदुत्रिकोणवृत्तचतुरस्रं यंत्रं विलिख्य। अक्षतैः पूजयेत्॥ मध्ये मूलम्। ऐं ह्रीं क्लीं चामुंडायै विच्चे नमः। त्रिकोणे त्रिपदैः—ऐं ह्रीं क्लीं। चामुंडायै। विच्चे नमः॥ मातृकया वृत्तम्—अं आं इं ईं उं ऊं ऋं ॠं लृं लॄं एं ऐं ओं औं अं अः॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति॥ चतुरस्रे षडंगानि—(आग्नेये) ऐं हृदयाय नमः। (ऐशाने) ह्रीं शिरसे०। (नैर्ऋत्ये) क्लीं शिखायै०। (वायव्ये) चामुंडायै कवचाय०। (मध्ये) विच्चे नेत्रत्रयाय०। (चतुर्दिक्षु) मूलं अस्त्राय० ॥ इति यंत्रं संपूज्य॥ हुं फडिति आधारं प्रक्षाल्य। मूलेन संस्थाप्य। मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिकादुर्गा-देवतार्घ्यपात्राधाराय नमः। इति आधारं संपूज्य। हुं फट् इति पात्रं प्रक्षाल्य। मूलेन संस्थाप्य। सूर्यमण्डलाय द्वादशकलात्मने श्री-

त्रिगुणात्मिकादुर्गादेवताार्घ्यपात्राय नमः इति पात्रं संपूज्य । तत्र मूलेन शुद्धजलमापूर्य । गालिनीमुद्रया निरीक्ष्य । चंद्रमंडलाय षोडशकलात्मने श्रीदुर्गादेवतार्घ्यपात्रामृताय नमः इति सम्पूज्य ॥ मत्स्यमुद्रयाऽऽच्छाद्य । मूलेनाष्टधाऽभिमंत्र्य । धेनुमुद्रां योनिमुद्रां च प्रदर्शयेत् ॥ इति अर्घ्यपात्रम् ॥ ५ ॥

" अथ ( ६ ) आचमनीयपात्रम्–बिंदुत्रिकोणवृत्तचतुरस्रं यंत्रं विलिख्य । अक्षतैः पूजयेत् ॥ मध्ये मूलम् । ऐं ह्रीं क्लीं चामुंडायै विच्चे नमः । त्रिकोणे त्रिपदैः–ऐं ह्रीं क्लीं । चामुंडायै । विच्चे नमः ॥ मातृकया वृताम्-अं आं इं ईं उं ऊं ऋं ॠं ऌं ॡं एं ऐं ओं औं अं अः ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति ॥ चतुरस्रे षडंगानि–( आग्नेये )ऐं हृदयाय नमः । (ऐशाने) ह्रीं शिरसे० । (नैर्ऋत्ये) क्लीं शिखायै० । (वायव्ये) चामुंडायै कवचाय० । (मध्ये) विच्चे नेत्रत्रयाय० । (चतुर्दिक्षु) मूलं अस्त्राय० ॥ इति यंत्रं संपूज्य ॥ हुं फडिति आधारं प्रक्षाल्य । मूलेन संस्थाप्य । मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिकादुर्गा-देवताऽऽचमनीयपात्राधाराय नमः इति आधारं संपूज्य । हुं फट् इति पात्रं प्रक्षाल्य । मूलेन संस्थाप्य । सूर्यमण्डलाय द्वादशकलात्मने श्री-त्रिगुणात्मिकादुर्गादेवताऽऽचमनीयपात्राय नमः इति पात्रं संपूज्य । तत्र मूलेन शुद्धजलमापूर्य । गालिनीमुद्रया निरीक्ष्य । चंद्रमंडलाय षोडशकलात्मने श्रीदुर्गादेवताऽऽचमनीयपात्रामृताय नमः इति सम्पूज्य । मत्स्यमुद्रयाऽऽच्छाद्य । मूलेनाष्टधाऽभिमंत्र्य । धेनुमुद्रां योनिमुद्रां च प्रदर्शयेत् ॥ इति आचमनीयपात्रम् ॥ ६ ॥

" अथ ( ७ ) मधुपर्कः–बिंदुत्रिकोणवृत्तचतुरस्रं यंत्रं विलिख्य ।

अक्षतैः पूजयेत् ॥ मध्ये मूलम् । ऐं ह्रीं क्लीं चामुंडायै विच्चे नमः ॥ त्रिकोणे त्रिपदैः–ऐं ह्रीं क्लीं । चामुंडायै । विच्चे नमः ॥ मातृकया वृत्तम्–अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति ॥ चतुरस्रे षडंगानि–(आग्नेये) ऐं हृदयाय नमः । (ऐशाने) ह्रीं शिरसे० । (नैर्ऋत्ये) क्लीं शिखायै० । (वायव्ये) चामुंडायै कवचाय० । (मध्ये) विच्चे नेत्रत्रयाय० । (चतुर्दिक्षु) मूलं अस्त्राय० ॥ इति यंत्रं संपूज्य ॥ हुं फडिति आधारं प्रक्षाल्य । मूलेन संस्थाप्य । मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिकादुर्गादेवतामधुपर्कपात्राधाराय नमः इति आधारं संपूज्य । हुं फट् इति पात्रं प्रक्षाल्य । मूलेन संस्थाप्य । सूर्यमण्डलाय द्वादशकलात्मने श्री त्रिगुणात्मिका–दुर्गादेवतामधुपर्कपात्राय नमः । इति पात्रं संपूज्य । तत्र मूलेन शुद्धजलमापूर्य । गालिनीमुद्रया निरीक्ष्य । चंद्रमंडलाय षोडशकलात्मने श्रीदुर्गादेवतामधुपर्कपात्रामृताय नमः । इति संपूज्य ॥ मत्स्यमुद्रयाऽऽच्छाद्य मूलेनाष्टवाऽभिमंत्र्य धेनुमुद्रां योनिमुद्रां च प्रदर्शयेत् ॥ इति मधुपर्कः ॥

" अथ (८) प्रोक्षणीपात्रम्–बिंदुत्रिकोणवृत्तचतुरस्रं यंत्रं विलिख्य । अक्षतैः पूजयेत् ॥ मध्ये मूलम् । ऐं ह्रीं क्लीं चामुंडायै विच्चे नमः । त्रिकोणे त्रिपदैः–ऐं ह्रीं क्लीं । चामुंडायै । विच्चे नमः ॥ मातृकया वृत्तम्–अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः ॥ कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं यं रं लं वं शं षं सं हं ळं क्षं इति ॥ चतुरस्रे षडंगानि–( आग्नेये ) ऐं हृदयाय नमः । (ऐशाने) ह्रीं शिरसे० । (नैर्ऋत्ये ) क्लीं शिखायै० ।

(वायव्ये) चामुंडायै कवचाय०।(मध्ये) विच्चे नेत्रत्रयाय०। (चतुर्दिक्षु) मूलं अस्त्राय० ॥ इति यंत्रं सपूज्य ॥ हुं फडिति आधारं प्रक्षाल्य । मूलेन संस्थाप्य । मं वह्निमंडलाय दशकलात्मने श्रीत्रिगुणात्मिकादुर्गा-देवताप्रोक्षणीपात्राधाराय नमः इति आधारं सपूज्य। हुं फट् इति पात्रं प्रक्षाल्य । मूलेन संस्थाप्य । सूर्यमण्डलाय द्वादशकलात्मने श्री-त्रिगुणात्मिकादुर्गादेवताप्रोक्षणीपात्राय नमः। इति पात्रं संपूज्य। तत्र मूलेन शुद्धजलमापूर्य । गालिनीमुद्रया निरीक्ष्य । चंद्रमंडलाय षोडशकलात्मने श्रीदुर्गादेवताप्रोक्षणीपात्रामृताय नमः। इति सम्पूज्य। मत्स्यमुद्रयाऽऽच्छाद्य। मूलेनाष्टधाऽभिमंत्र्य। धेनुमुद्रां योनिमुद्रां च प्रदर्शयेत् ॥ इति प्रोक्षणीपात्रम् ॥ ८ ॥

पाद्यपात्रे श्यामाक (सामो) दुर्वाविष्णुक्रान्तादीनि प्रक्षिपेत्। अर्घ्य-पात्रे सर्षपातिलदूर्वाङ्कुरप्रक्षेपः । आचमनीयपात्रे जातीफलैलालवंग-कंकोल ( चिनकबाला ) प्रक्षेपः । मधुपर्कपात्रे दधिमधुघृतानि प्रक्षिप्य विशेषार्घबिन्दुं सर्वपात्रेषु प्रक्षिप्य मूलेन प्रोक्षणीपात्राज्जलं गृहीत्वा तज्जलेन पूजासामग्रीं मूलेन सम्प्रोक्ष्य आत्मानं प्रोक्षयेत् ॥

॥ इति पात्रासादनप्रयोगः ॥

---

इत्थं पात्रासादनं कृत्वा अन्तर्यजन यथाधिकारं कुर्यात् ॥ यथा-स्वहृ-त्पद्मस्थां महालक्ष्मीं ध्यात्वा मानसोपचारैः संपूजयेत् ॥ —लं पृथिव्यात्मकं गन्धं परिकल्पयामि ॥ह आकाशात्मकं पुष्पं परिकल्पयामि। य वाय्वा-त्मकं धूपं परिकल्पयामि। रं तेज आत्मकं दीपं परिकल्पयामि। वं अमृतात्मकं नैवेद्यं परिकल्पयामि। सं सोमात्मकं ताम्बूलं परिकल्पयामि। छत्रचामरमुकुरमुकुटपादुकाः परिकल्पयामि ॥ इति स्वात्मना सहैक्यं

भावयेत्॥ तत आत्मपूजां कुर्यात्। यथा मं मंडूकाय०आधारे। कालाग्निरुद्राय० स्वाधिष्ठाने।कच्छपाय०नाभौ।आधारशक्तिकूर्मानन्तपृथिवीसागररत्नद्वीपमासादहेमपीठेभ्यो० हृदि। धर्माय० दक्षांसे। ज्ञानाय० वामांसे। वैराग्याय० वामपार्श्वे। अवैराग्याय० नाभौ। अनैश्वर्याय० दक्षिणपार्श्वे। अनन्ताय० हृदि। तत्त्वपद्माय०। आनन्दमयकन्दाय०। संविन्नालाय०। विकारमयकेसरेभ्यो०। प्रकृतिमयपत्रेभ्यो०। पंचाशद्वर्णबीजाढ्यकर्णिकायै०। सूर्यमंडलाय०। चंद्रमंडलाय०। अग्निमंडलाय०। इत्यन्तं हृदि न्यसेत्॥ (पीताद्याः पीठशक्तयः) पीतायै०। श्वेतायै०। अरुणायै०। कृष्णायै०। धूम्रायै०। तीव्रायै०। स्फुलिंगिन्यै०। रुचिरायै०। ज्वालिन्यै०॥ रं वह्न्यासनाय०। इति स्वदेहे पीठशक्तिं विन्यसेत्॥ इति॥

तत आत्मानं गन्धपुष्पैरभ्यर्च्य॥ मूलेन त्रिः स्वशिरसि पुष्पांजलिं दत्वा मानसोपचारैः संपूज्य देवरूपः सन् मूलं जप्त्वा देव्यै जपं निवेद्य पुष्पमाघ्राय "कुंभोदराय नमः" इति वामे क्षिप्त्वा हस्तं प्रक्षाल्य राजोपचारपूजां कुर्यात्॥

---

॥ प्रकारान्तरेणान्तर्यागप्रयोगः॥

[ तत्रादौ मंडूकादिपरतत्त्वान्तं पीठमंत्रान्तं च स्वदेहे गंधादिभिः संपूज्य स्वहृदि देवान् ध्यात्वा मूलाधारोत्थितां कुंडलिनीं शिवेन संपूज्य तदुत्थितामृतधारया हृद्गतदेवान् समाप्लाव्य मूलेन षडंगं विधाय मानसोपचारैः संपूज्य स्वशिरसि पुष्पांजलिं दत्वा आत्मानं गंधादिभिः समभ्यर्च्य स्वशिरसि दिव्यौघत्रयं स्वगुर्वादींश्च पूजनादिना संतोष्य स्वहृदि ध्यानदेवतां संतोष्य॥ पूर्णश्चेत् स्वपादुकां

## ॥ अथदेवीराजोपचारपूजाप्रयोगः ॥

तत्रादौ स्ववामे स्नानशालां विभाव्य देवीं संस्थाप्य ध्यायेत् ।
ध्यानम्—खड्गं चक्र०॥ अक्षस्रक्०॥ घंटाशूल०॥ मूलम् ॥ १ ॥

आवाहनम्—उपसि मागधमंगलगायनैर्झटिति जागृहि जागृहि जागृहि ।
अतिकृपार्द्रकटाक्षनिरीक्षणैर्जगदिदं जगदंब सुखीकुरु ॥ २ ॥
मूलम्—श्रीमहाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणीदुर्गायै नमः ।
दुर्गाम् आवाहयामि ( एवं सर्वत्र उक्त्वा उपचारान् कुर्यात् )
कनकमयवितर्दिशोभमानं दिशि दिशि पूर्णसुवर्णकुंभयुक्तम् ।

मणिमयशुभमंडपं त्वमेहि मयि कृपयेति समर्चनं गृहीतुम् ॥ ३ ॥
हेमरत्नवरणेन वेष्टितं विस्तृतारणवितानशोभितम् ॥

सज्जसर्वपरिचारिकाजनं पश्य मज्जनगृहं मनोहरम् ॥ ४ ॥
आसनम्—कनकमयवितर्दिस्थापिते तूलिकाढ्ये विविधकुसुमकीर्णे कोटि-

---

मूलाधारे प्रतर्प्य देहचतुष्टयशुद्धिं कृत्वा आचारात् ब्रह्मरन्ध्रगां बीसतन्तु-तनीयसीं विद्युत्कोटिभासुरां अशेषजगदुत्पत्तिस्थितिसंहारकारिणीं वह्नि-सूर्यसोममंडलाख्यस्थानत्रये भिन्नस्वरूपावस्थितां ऐक्यरूपेण विभाव्य आत्मानं कामकलासादृश्येन च विभाव्य यथाशक्ति मूलम् अक्षमालया प्रजप्य पुनः षडंगं विन्यस्य जपं देव्यै निवेदयेदिति ॥ ततो गंध-पुष्पाभ्यां हस्तौ संमर्द्य पुष्पमाघ्राय । ते सर्वे विलयं यान्तु ये मां हिंसन्ति हिंसकाः ॥ मृत्युरोगभयक्लेशाः पतन्तु रिपुमस्तके ॥ १ ॥ इति संमंत्र्य "कुंभोदराय नमः" इति स्ववामे प्रक्षिप्य हस्तौ प्रक्षाल्य वहिर्यजनमारभेत ॥ इति ॥ ]

बालार्कवर्णे । भगवति रमणीये रत्नसिंहासनेऽस्मिन्नुपविश पदयुग्मं हेमपीठे निधेहि* ॥ ५ ॥

पाद्यम्-दूर्वया सरसिजान्वितविष्णुक्रान्तया च सहितं कुसुमाढ्यम् ।
पद्मयुग्मसदृशे पदयुग्मे पाद्यमेतदुररीकुरु मातः ॥ ६ ॥
अर्घ्यम्-गंधपुष्पयवसर्षपदूर्वासंयुतं कुशतिलाक्षतमिश्रम् ।
हेमपात्रनिहितं सह रत्नैरर्घ्यमेतदुररीकुरु मातः ॥ ७ ॥
आचमनीयम्-जलजद्युतिना करेण जातीफलकंकोललवंगगंधयुक्तैः ॥
अमृतैरमृतैरिवासितैर्भगवत्याचमनं विधीयताम् ॥ ८ ॥
मधुपर्कः-मधुनिहितं कनकस्य संपुटे पिहितं रत्नपिधानकेन यत् ॥
तदिदं भगवति करेऽर्पितं मधुपर्कं जननि प्रगृह्यताम् ॥ ९ ॥
आचमनीयम्-पाद्यं ते परिकल्पितं च पदयोरर्घ्यं तथा हस्तयोः
सौधीभिर्मधुपर्कमंब मधुरं धाराभिरास्वादय ॥ तोयेनाचमनं विधेहि
शुचिना गांगेन मत्कल्पितं साष्टांगं प्रणिपातमंब कमले दृष्ट्या कृतार्थं कुरु ॥
पयःस्नानम्-स्वर्धेनुजातं बलवीर्यवर्धनं दिव्यामृतात्यन्तरसमर्दं सितम् ॥
श्रीचंडिके दुग्धसमुद्रसंभवे गृहाण दुग्धं मनसा मयाऽर्पितम् ॥ ११ ॥
दधिस्नानम्-क्षीरोद्भवं स्वादु सुधामयं च श्रीचंद्रकान्तिसदृशं सुशोभनम् ॥
श्रीचंडिके शुंभनिशुंभनाशिनि स्नानार्थमंगीकुरु तेऽर्पितं दधि ॥ १२ ॥
घृतस्नानम्-श्रीक्षीरजोद्भूतमिदं मनोज्ञं प्रदीप्तवह्निद्युतिपावितं च ।
श्रीचंडिके दैत्यविनाशदक्षे हैयंगवीनं परिगृह्यतां च ॥ १३ ॥
मधुस्नानम्-माधुर्यमिश्रं मधुमक्षिकागणैर्वृक्षालिरम्ये मधुकानने चितम् ॥

---

१ ( पाद्यपात्रात् ) पादयो पाद्यं सं० ॥ २ ( अर्घ्यपात्रात् ) हस्तयोरर्घ्यं स० ॥
३ आचमनीयपात्रात् आचमनं स० ॥ ४ मधुपर्कपात्रात् मधुपर्कं स० ॥ ५ आच० आ० स० ॥
* श्रीनिर्गुणात्मिकाजगदम्बिकादुर्गादेव्यै नमः आसन सम० इत्यादि सर्वत्र वक्तव्यम् ॥

श्रीचंडिके शंकरप्राणवल्लभे स्नानार्थमंगीकुरु तेऽर्पितं मधु ॥ १४॥
शर्करास्नानम्–पूर्णेक्षुकांभोधिसमुद्भवामिमां माणिक्यमुक्ताफलदाम-
मंजुलाम्।श्रीचंडिके चंडविनाशकारिणि स्नानार्थमंगीकुरु शर्करां शुभाम्॥
सुगं०स्ना०–एतच्चंपकतैलमंब विविधैः पुष्पैर्मुहुर्वासितं न्यस्तं रत्नमये
सुवर्णचषके भृंगैर्भ्रमद्भिर्वृतम् ॥ सानन्दं व्रजसुंदरीभिरभितो हस्तैर्धृतं
चिन्मये केशेषु भ्रमरप्रभेषु सकलेष्वंगेषु चालिप्यताम् ॥ १६ ॥
उद्वर्तनस्नानम्–मातः कुंकुमपंकनिर्मितमिदं देहे तवोद्वर्तनं भक्त्याऽहं
फलयामि हैमरजसा संमिश्रितं केसरैः॥ केशानामलकैर्विशोध्य विशदा-
न्कस्तुरिकार्चितैः स्नानं ते नवरत्नकुंभविधिना संवासितोष्णोदकैः॥
स्नानम्–एलाशीरसुवासितैः सुकुसुमैर्गंगादितीर्थोदकैर्माणिक्यादिकमौ-
क्तिकामृतयुतैः स्वच्छैः सुवर्णोदकैः॥ मंत्रान्वैदिकतान्त्रिकान्परिपठन्सा-
नंदमत्यादरात् स्नानं ते परिकल्पयामि जननि स्नेहात्त्वमंगीकुरु ॥१८॥
" श्रीमहालक्ष्म्याद्यावाहितदेवताभ्यो नमः " इति मूलमंत्रेण वा
पंचोपचारैः संपूज्य । उत्तरे निर्माल्यं विसृज्य पुनः गन्धाक्षतपुष्पैः संपूज्य
अभिषेकार्थं पात्रे जलगंधपुष्पदुग्धादीनि क्षिप्त्वा ॥ रात्रिसूक्तं (१८२)
शक्रादयः (१८०) श्रीसूक्तम् इत्यादिस्तोत्रैश्चाभिषेकं कुर्यात् ॥

॥ अथ श्रीसूक्तम् ॥

हरिः ॐ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ॥ चन्द्रां हिर-
ण्मयीं लक्ष्मीं जातवेदो ममावह ॥१॥ तां म आवह जातवेदो लक्ष्मी-
मनपगामिनीम् ॥ यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥
अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् ॥ श्रियं देवीमुपह्वये श्रीर्मा देवी
जुषताम् ॥ ३ ॥ कांसोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां

तर्पयन्तीम् ॥ पद्मे स्थितां पद्मवर्णां तामिहोपह्वये श्रियम् ॥४॥ चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ॥ तां पद्मनेमिं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि ॥ ५ ॥ आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ॥ तस्य फलानि तपसा नुदन्तु मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ ६ ॥ उपैतु मां देवसखः कीर्तिश्च मणिना सह ॥ प्रादुर्भूतो सुराष्ट्रेऽस्मिन्कीर्तिमृद्धिं ददातु मे ॥ ७ ॥ क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ॥ अभूतिमसमृद्धिं च सर्वान्निर्णुद मे गृहात् ॥ ८ ॥ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥ मनसः काममाकूतिं वाचः सत्यमशीमहि ॥ पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥ कर्दमेन प्रजा भूता मयि संभ्रम कर्दम ॥ श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥ आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे ॥ नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥ आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् ॥ सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१३॥ आर्द्रां पुष्करिणीं पुष्टिं पिंगलां पद्ममालिनीम् ॥ चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममावह ॥१४॥ तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ॥ यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥ १५ ॥ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ॥ श्रियः पंचदशर्चं च श्रीकामः सततं जपेत् ॥ १६ ॥ इति श्रीसूक्तम् ॥

॥ अथ लक्ष्मीसूक्तम् ॥

इन्द्रउवाच ॥ नमस्ते सर्वलोकानां जननी त्रिगुणात्मिका ॥ श्रेयस्कृता च पद्माक्षी विष्णोर्वक्षःस्थले स्थिता ॥ १ ॥ त्वं सिद्धिस्त्वं

स्वधा स्वाहा सुधा त्वं लोकपावनी ॥ संध्या रात्रिः प्रभा भूमिर्मेधा श्रद्धा सरस्वती ॥ २ ॥ यज्ञविद्या महाविद्या गुह्यविद्या सुशोभना ॥ आत्मविद्या च देवि त्वं विमुक्तिः फलदायिनी ॥ ३ ॥ आन्विक्षिकी त्रयी वार्ता दंडनीतिस्त्वमेव च ॥ सौम्यासौम्यैर्जगत्पूज्ये त्वयैतद्देवि पूरितम् ॥ ४ ॥ कान्त्या त्वया धृतं देवि सर्वयज्ञमयं वपुः ॥ अध्यास्ते देवदेवेशि योगचिन्त्यसदाभृता ॥ ५ ॥ त्वया देवि परित्यक्तं सकलं भुवनत्रयम् ॥ निविष्टमायमभवत् त्वयेदानीं समेधितम् ॥६॥ दाराः पुत्रास्तथा गावः सुरधान्यं धनादिकम् ॥ भवत्येवं महाभागे नित्यं त्वद्विक्षणान्नृणाम् ॥७॥ शरीरारोग्यमैश्वर्यमरिपक्षक्षयः सुखम् ॥ देवि त्वद्दृष्टिदृष्टानां पुरुषाणां तु दुर्लभम् ॥ ८ ॥ त्वं माता सर्वभूतानां देवदेवो हरिः पिता ॥ त्वयैतद्विष्णुना चांब जगद्व्याप्तं चराचरम् ॥ ९ ॥ मा नः कोशं तथा कुप्यं मद्गृहं मत्परिच्छदम् ॥ मां शरीरं कलत्रं च त्यजेथाः सर्वपावनि ॥ १० ॥ मत्पुत्रान् मत्सुहृद्वर्गं मत्पशून् मद्विभूषणम् ॥ मा त्यजेथा हि देवस्य विष्णोर्वक्षःस्थलालये ॥११॥ सत्त्वेन सत्त्वशौचाभ्यां तथा शीलादिभिर्गुणैः ॥ त्यज्यते ते नराः सद्यः संत्यक्ता ये त्वयाऽनघे ॥१२॥ त्वया विलोकिताः सद्यः शीलाद्यैरखिलैर्गुणैः ॥ कुलैश्वर्यैश्च वर्द्धन्ते पुरुषा निर्गुणा ह्यपि ॥१३॥ स श्लाघ्यः स गुणी धन्य स कुलीनः स बुद्धिमान् ॥ स शूरः स त्वविक्रान्तस्त्वया देवि विलोकितः ॥१४॥ सद्यो वैगुण्यमायान्ति शिलाद्याः सकला गुणाः ॥ पराङ्मुखी जगद्धात्री यस्य त्वं विष्णुवल्लभे ॥ १५ ॥ न ते वर्णयितुं शक्ता गुणा वासुकिजिह्वया ॥ प्रसीद देवि पद्माक्षि नास्माभिस्तु कदाचन ॥ १६ ॥ इतिलक्ष्मीसूक्तम् ॥

शुद्धो०स्ना०-उद्गंधैरगरूद्भवैः सुरभिणा कस्तूरिकावारिणा स्फूर्जत्सौरभयक्षकर्दमजलैःकाश्मीरनीलैरपि॥ पुष्पाम्भोभिरशेषतीर्थसलिलैः कर्पूरवासोभरैः स्नानं ते परिकल्पयामि कमले भक्त्या तदंगीकुरु १९॥

वस्त्रम्-बालार्कद्युतिदाडिमीयकुसुमप्रस्पार्धि सर्वोत्तम मातस्त्व परिधेहि दिव्यवसनं भक्त्या मया कल्पितम् ॥ मुक्ताभिर्ग्रथितं च कंचुकमिदं स्वीकृत्य पीतप्रभं तप्तस्वर्णसमानवर्णमतुलं प्रावारमंगीकुरु ॥२०॥

आच०-भूपालदिक्पालकिरीटरत्नमरीचिनीराजितपादपीठे ॥
देवैः समाराधितपादपद्मे श्रीचंडिके स्वाचमनं गृहाण ॥ २१ ॥

पादुके-नवरत्नयुते मयाऽर्पिते कमनीये तपनीयपादुके ॥
सविलासमिदं पदद्वयं कृपया देवि तयोर्निधीयताम् ॥ २२ ॥

केशपाशसंस्करणम्-बहुभिरगरुधूपैः सादरं धूपयित्वा भगवति तव केशान् कंकतैर्मार्जयित्वा ॥ सुरभिभिररविंदैश्चंपकैश्चार्चयित्वा झटिति कनकसूत्रैर्जूटयन्वेष्टयामि ॥ २३ ॥

सौवीरांजनम्-( सुरमो ) सौवीरांजनमिदमंब चक्षुषोस्ते विन्यस्तं कनकशलाकया मया यत् ॥ तन्नून मलिनमपि त्वदक्षिसंगाद् ब्रह्मेन्द्राद्यभिलषणीयतामियाय ॥ २४ ॥

अलं०-मंजीरान्पदयोर्निधाय रुचिरान्विन्यस्य कांचीं कटौ मुक्ताहार मुरोजयोरनुपमां नक्षत्रमालां गले ॥ केयूराणि भुजेषु रत्नवलयश्रेणीः करेषु क्रमात् ताटंके तव कर्णयोर्विनिदधे शीर्षे च चूडामणिम् ॥२५॥

धम्मिल्ले तव देवि हैमकुसुमान्याधाय भालस्थले मुक्ताराजिविराजि हैमतिलकं नासापुटे मौक्तिकम् ॥ मातर्मौक्तिकजालिकां च कुचयोः सर्वांगुलीषूर्मिकाःकट्यां कांचनकिंकिणीर्विनिदधे रत्नावतंसौ श्रुतौ॥२६॥

गंधः—प्रत्यंगं परिमार्जयामि शुचिना वस्त्रेण संप्रोञ्छनं कुर्वे केशकलापमायततरं धूपोत्तमैर्धूपितम् ॥ काश्मीरैरगरुद्रवैर्मलयजैः संघर्ष्य संपादितं भक्तत्राणपरे श्रीकृष्णगृहिणि श्रीचंदनं गृह्यताम् ॥२७॥

कुंकुमम्—भातर्भालतले तवातिविमले काश्मीरकस्तूरिकाकर्पूरागरुभिः करोमि तिलकं देहेंऽगरागं ततः ॥ वक्षोजादिषु यक्षकर्दमरसं सिक्त्वा च पुष्पावृतिं पादौ कुंकुमलेपनादिभिरहः संपूजयामि क्रमात् ॥२८॥

कज्जलम्—चांपेयकर्पूरकचन्दनादिकैर्नानाविधैर्गंधचयैः सुवासितम् ॥ नेत्राञ्जनार्थाय हरिन्मणिप्रभं श्रीचंडिके स्वीकुरु कज्जलं शुभम् ॥२९॥

अक्षताः—रत्नाक्षतैस्त्वां परिपूजयामि मुक्ताफलैर्वा रुचिरैरविद्धैः ॥ अखंडितैर्देवि यवादिभिर्वा काश्मीरपंकांकिततंदुलैर्वा ॥ ३० ॥

अत्तरम्—जननि चंपकतैलमिदं पुरो मृगमदोऽयमयं पटवासकः ॥ सुरभिगंधमिदं च चतुःसमं सपदि सर्वमिदं परिगृह्यताम् ॥३१॥

सिंदूरम्—सीमन्ते ते भगवति मया सादरं न्यस्तमेतत् सिंदूरं ते हृदयकमले हर्षवर्षं तनोतु ॥ बालादित्यद्युतिरिव सदा लोहिता यस्य कान्तिरन्तर्ध्वान्तं हरतु सततं चेतसा चिन्तयामि ॥ ३२ ॥

पुष्पाणि—मंदारकुंदकरवीरलवंगपुष्पैस्त्वां देवि संततमहं परिपूजयामि । जातीजपावकुलचंपककेतकादिनानाविधानि कुसुमानि च तेऽर्पयामि ॥

पुष्पमाला-पुष्पौघैर्योतयन्तैः सततपरिचलत्कान्तिकल्लोलजालैः कुर्वाणा मज्जदन्तःकरणविमलतां शोभितेव त्रिवेणी ॥ मुक्ताभिः पद्मरागैर्मरकतमणिभिर्निर्मिता दीप्यमानैर्नित्यं हारत्रयी त्वं भगवति कमले गृह्यतां कंठमध्ये ॥ त्रिगु० जग० दुर्गा० नमः पुष्पमालां स० ॥ ३४ ॥

अथांगपूजा ॥ वामहस्ते गंधपात्रं गृहीत्वा दक्षिणेनार्चयेत् ॥ ह्रीं दुर्गाय

नमः पादौ पूजयामि ॥ ह्रीं मंगलायै० गुल्फौ पूज० ॥ ह्रीं भगवत्यै० जंघे पूज० ॥ ह्रीं कौमार्यै० जानुनी पूज० ॥ ह्रीं वागीश्वर्यै० उरू पूज० ॥ ह्रीं वरदायै० कटी पूज० ॥ ह्रीं पद्माकरवासिन्यै० स्तनौ पूज० ॥ ह्रीं महिषमर्दिन्यै० कंठं पूज० ॥ ह्रीं उमासुतायै० स्कंधौ पूज० ॥ ह्रीं इन्द्राण्यै० भुजौ पूज० ॥ ह्रीं गौर्यै० हस्तौ पूज० ॥ ह्रीं मोहवत्यै० मुखं पूज० ॥ ह्रीं शिवायै० कर्णौ पूज० ॥ ह्रीं अन्नपूर्णायै० नेत्रे पूज० ॥ ह्रीं कमलायै० ललाटं पूज० ॥ ह्रीं महालक्ष्म्यै० सर्वांगं पूजयामि ॥ देव्या दक्षिणे सिंहं पूजयामि ॥ वामे महिषं पूजयामि ॥

---

## ॥ अथावरणपूजा ॥

प्रथमावरणम्—वामेन तत्त्वमुद्रया तर्पणम् । दक्षिणेन ज्ञानमुद्रया पूजनम् ॥ प्रार्थना—संचिन्मयपरे देवि परामृतचरुप्रिये ॥ अनुज्ञां देहि मे मातः परिवारार्चनाय ते ॥ १ ॥ ( यथा दक्षिणेनाक्षतपुष्पादिना पूजयामीति संपूज्य वामकरधृतार्द्रखण्डेन विशेषार्घजलैस्तर्पयाम्येवं सर्वत्र । ) ह्रीं ऐं ह्रीं क्लीं चामुण्डायै विच्चे साङ्गायै सपरिवारायै सावरणायै सायुधायै सशक्तिकायै श्रीमहाकालीमहालक्ष्मीमहासरस्वत्यै नमः श्रीमहाकालीमहालक्ष्मीमहासरस्वतीश्रीपादुकां पूजयामि तर्पयामि ॥ १ ॥ (ह्रींऐं ह्रीं० विच्चे साङ्गा० सप० साव० सायु० सश० यै श्रीमहाकाल्यै नमः श्रीमहाकालीश्रीपा० ॥ २ ॥ ह्रीं ऐं ह्रीं० विच्चे साङ्गा० सप० साव० सायु० सश० यै श्रीमहालक्ष्म्यै० श्रीमहालक्ष्मीश्रीपा० ॥ ३ ॥ ह्रीं ऐं ह्रीं०

---

१ यदि पात्रासादनं न कृतं चेद् आवरणपूजायां केवलं पूजयामि इत्युक्त्वा पूजनमेव कार्यम् ॥ २ देवतानामान्ते श्रीपादुकां पूजयामि तर्पयामि इति सर्वत्र वक्तव्यम् ॥

विच्चे साङ्गा०सप०साव०सायु० सश०यै श्रीमहासरस्वत्यै०श्रीमहासरस्वतीश्रीपा०॥ ४ ॥) (बिन्दोः परितो गुरुचतुष्टयं पूजयेत्—) ह्रीं गुरवे नमः गुरुशक्तिश्रीपा० ॥५॥ ह्रीं परमगुरवे० परमगुरुशक्तिश्रीपा० ॥६॥ ह्रीं परात्परगुरवे० परात्परगुरुशक्तिश्रीपा० ॥ ७ ॥ ह्रीं परमेष्ठिगुरवे० परमेष्ठिगुरुशक्तिश्रीपा० ॥८॥ (अथ षडङ्गं पूजयेत्—) ह्रीं ऐं हृदयाय० हृदयशक्तिश्रीपा० ॥ ९ ॥ ह्रीं शिरसे नमः शिरःशक्तिश्रीपा० ॥१०॥ ह्रीं क्लीं शिखायै० शिखाशक्तिश्रीपा० ॥११॥ ह्रीं चामुण्डायै कवचाय० कवचशक्तिश्रीपा०॥१२॥ ह्रीं विच्चे नेत्रत्रयाय० नेत्रशक्तिश्रीपा०॥१३॥ मूलेन अस्त्राय० अस्त्रशक्तिश्रीपा० ॥ १४ ॥ प्रथमावरणदेवताभ्यो० सर्वोपचारार्थे गन्धं पुष्पं स० ॥ सामान्यार्घजलमादाय—एताः प्रथमावरणदेवताः साङ्गाः सपरिवाराः सायुधाः सशक्तिकाः पूजितास्तर्पिता. सन्तु ॥ पुष्पाञ्जलिमादाय—अभीष्टसिद्धिं मे देहि शरणागतवत्सले ॥ भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ॥ १ ॥ पुष्पाञ्जलिं दत्वा ॥ अनेन प्रथमावरणदेवतापूजनेन त्रिगुणात्मिका श्रीदुर्गादेवता प्रीयताम् ॥ योनिमुद्रया प्रणमेत् ॥ इति प्रथमावरणम् ॥

अथ द्वितीयावरणम्—(त्रिकोणे स्वाग्रादिमादक्षिण्येन पूजयेत्–) ह्रीं सावित्र्या सह विधात्रे० विधातृशक्तिश्रीपा०॥१५॥ ह्रीं श्रिया सह विष्णवे० विष्णुशक्तिश्रीपा० ॥ १६ ॥ ह्रीं उमया सह शिवाय० शिवशक्तिश्रीपा० ॥ १७ ॥ ह्रीं क्षुं सिंहाय नमः सिंहशक्तिश्रीपा० ॥ १८ ॥ ह्रीं हुं महिषाय नम महिषशक्तिश्रीपा० ॥ १९ ॥ द्वितीयावरणदेवताभ्यो० गंधं पु०स०॥ सामा० जलमादाय–द्वितीयावरणदेवताः सा०सप० सायु० सशक्ति० पू० त० सन्तु । पुष्पा० आदाय–

अभीष्ट० शर०। भक्त्या० द्वितीया० ॥ २ ॥ पुष्पाञ्जलिं दत्त्वा ॥ अनेन द्विती० त्रिगु० दुर्गा० प्री० ॥ योनिमुद्रया प्रणमेत् ॥ इति द्वितीयावरणम् ॥

अथ तृतीयावरणम्—(षट्कोणे अग्नीशासुरवायव्ये मध्ये दिक्षु च पूजयेत्—) ह्रीं ऐं नन्दजायै० नन्दजाशक्तिश्रीपादु० ॥ २० ॥ ह्रीं रक्तदन्तिकायै० रक्तदन्तिकाशक्तिश्रीपा० ॥ २१ ॥ ह्रीं क्लीं शाकम्भर्यै० शाकम्भरीशक्तिश्रीपादु० ॥ २२ ॥ ह्रीं दुं दुर्गायै० दुर्गाशक्तिश्रीपादु० ॥ २३ ॥ ह्रीं हुं भीमायै० भीमाशक्तिश्रीपादु० ॥ २४ ॥ ह्रीं भ्रामर्यै० भ्रामरीशक्तिश्रीपा० ॥२५॥ तृतीयावरणदेवताभ्यो० गंधं पु० स० ॥ सामा० दाय–एतास्तृतीयावरणदेवताः सा०सप०सायु० सश० पू० त० सन्तु ॥ पुष्पाञ्जलिमादाय—अभीष्ट० । भक्त्या० तृतीयावरणार्चनम् ॥ ३ ॥ पुष्पाञ्जलिं दत्त्वा ॥ अनेन तृती० त्रिगु० दुर्गा० प्री० ॥ योनिमुद्रया प्रणमेत् ॥ इति तृतीयावरणम् ॥

अथ चतुर्थावरणम्–(ततोऽष्टपत्रे स्वाग्रादिप्राशादाक्षिण्येन पूजयेत्—) ह्रीं ऐं ब्राह्म्यै० ब्राह्मीशक्तिश्रीपा० ॥ २६ ॥ ह्रीं माहेश्वर्यै० माहेश्वरीशक्तिश्रीपा० ॥२७॥ ह्रीं क्लीं कौमार्यै० कौमारीशक्तिश्रीपा० ॥२८॥ ह्रीं वैष्णव्यै० वैष्णवीशक्तिश्रीपा० ॥ २९ ॥ ह्रीं लं वाराह्यै० वाराहीशक्तिश्रीपा० ॥३०॥ ह्रीं क्ष्रौं नारसिंह्यै० नारसिंहीशक्तिश्रीपा० ॥३१॥ ह्रीं लं ऐन्द्र्यै० ऐन्द्रीशक्तिश्रीपा० ॥३२॥ ह्रीं स्व्यें चामुण्डायै० चामुण्डाशक्तिश्रीपा० ॥ ३३ ॥ ( मध्ये ) ह्रीं लक्ष्म्यै० लक्ष्मीशक्तिश्रीपा० ॥ ३४ ॥ चतुर्थावरणदेवताभ्यो० गंधं पु० स० ॥ सामा० जलमादाय–एताः चतुर्थावरणदेवताः सा० सप० सायु० सश० पू० त० सन्तु ॥ पुष्पाञ्जलिमादाय—अभीष्ट० । भक्त्या० चतुर्थावरणार्च-

नम् ॥ ४ ॥ पुष्पाञ्जलिं दत्त्वा ॥ अनेन चतु० त्रिगु० दुर्गा० प्री० ॥ योनिमुद्रया प्रणमेत् ॥ इति चतुर्थावरणम् ॥

अथ पञ्चमावरणम्—(ततश्चतुर्विंशतिदले स्वाग्रादिमादक्षिण्येन–) ह्रीं विं विष्णुमायायै० विष्णुमायाशक्तिश्रीपा०॥३५॥ ह्रीं चें चेतनायै० चेतनाशक्तिश्रीपा० ॥३६॥ ह्रीं बुं बुद्ध्यै० बुद्धिशक्तिश्रीपा० ॥३७॥ ह्रीं निं निद्रायै० निद्राशक्तिश्रीपा० ॥ ३८ ॥ ह्रीं क्षुं क्षुधायै० क्षुधाशक्तिश्रीपा० ॥३९॥ ह्रीं छां छायायै० छायाशक्तिश्रीपा० ॥४०॥ ह्रीं शं शक्त्यै० शक्तिशक्तिश्रीपा० ॥४१॥ ह्रीं तृं तृष्णायै० तृष्णाशक्तिश्रीपा० ॥४२॥ ह्रीं क्षां क्षान्त्यै० क्षान्तिशक्तिश्रीपा० ॥४३॥ ह्रीं जां जात्यै० जातिशक्तिश्रीपा०॥४४॥ ह्रीं लं लज्जायै०। लज्जाशक्तिश्रीपा० ॥४५॥ ह्रीं शां शान्त्यै० शान्तिशक्तिश्रीपा० ॥ ४६ ॥ ह्रीं श्रं श्रद्धायै० श्रद्धाशक्तिश्रीपा०॥४७॥ ह्रीं कां कान्त्यै० कान्तिशक्तिश्रीपा० ॥४८॥ ह्रीं लं लक्ष्म्यै० लक्ष्मीशक्तिश्रीपा० ॥४९॥ ह्रीं धृं धृत्यै० धृतिशक्तिश्रीपा० ॥५०॥ ह्रीं वृं वृत्त्यै० वृत्तिशक्तिश्रीपा० ॥५१॥ ह्रीं श्रुं श्रुत्यै० श्रुतिशक्तिश्रीपा०॥५२॥ ह्रीं स्मृं स्मृत्यै० स्मृतिशक्तिश्रीपा० ॥५३॥ ह्रीं दं दयायै० दयाशक्तिश्रीपा० ॥५४॥ह्रीं तुं तुष्ट्यै०तुष्टिशक्तिश्रीपा० ॥ ५५ ॥ ह्रीं पुं पुष्ट्यै० पुष्टिशक्तिश्रीपा० ॥ ५६ ॥ ह्रीं मां मातृभ्यो० मातृशक्तिश्रीपा० ॥ ५७ ॥ ह्रीं भ्रां भ्रान्त्यै० भ्रान्तिशक्तिश्रीपा० ॥५८॥ पञ्चमावरणदेवताभ्यो० गंधं पु० सम०॥ सामा० मादाय–एताः पञ्चमावरणदेवताः साङ्गाः स० सायु० सश० पू० त० सन्तु ॥ पुष्पाञ्जलिमादाय—अभीष्ट०। भक्त्या० पञ्चमावरणार्चनम् ॥५॥ पुष्पांजलिं दत्वा ॥ अनेन पञ्च० त्रिगु० दुर्गा० प्री० ॥ योनिमुद्रया प्रणमेत् ॥ इति पञ्चमावरणम् ॥

अथ षष्ठावरणम्—(भूपुरे कोणचतुष्टये आग्नेयादिकोणमारभ्य-) ह्रीं गं गणपतये० गणपतिशक्तिश्रीपा० ॥ ५९ ॥ ह्रीं क्षं क्षेत्रपालाय० क्षेत्रपालशक्तिश्रीपा० ॥ ६० ॥ ह्रीं वं बटुकाय० बटुकशक्तिश्रीपा० ॥६१॥ ह्रीं यां योगिन्यै नमः योगिनीशक्तिश्रीपादुका०पू०त० ॥६२॥ षष्ठावरणदेवताभ्यो० गंधं पु० सम० ॥ सामा० मादाय–एताः षष्ठा वरणदेवताः सा० स० सायु० सश० पू० त० सन्तु ॥ पुष्पाञ्जलिमादाय- अभीष्ट० । भक्त्या० षष्ठावरणार्चनम् ॥६॥ पुष्पाञ्जलिं दत्वा ॥ अनेन षष्ठा० त्रिपु० दुर्गा० मी० ॥ योनिमुद्रया प्रणमेत् ॥ इति षष्ठावरणम् ॥

अथ सप्तमावरणम्—(पूर्वादिदशदिक्षु—) ह्रीं लं इन्द्राय० इन्द्र- शक्तिश्रीपा० ॥ ६३ ॥ ह्रीं रं अग्नये० अग्निशक्तिश्रीपा० ॥ ६४ ॥ ह्रीं यं यमाय० यमशक्तिश्रीपा० ॥ ६५ ॥ ह्रीं क्षं निर्ऋतये० निर्ऋ- तिशक्तिश्रीपा० ॥ ६६ ॥ ह्रीं वं वरुणाय० वरुणशक्तिश्रीपा०॥६७॥ ह्रीं यं वायवे० वायुशक्तिश्रीपा० ॥ ६८ ॥ ह्रीं सं सोमाय० सोम- शक्तिश्रीपा० ॥ ६९ ॥ ह्रीं हं ईशानाय० ईशानशक्तिश्रीपा० ॥ ७० ॥ ह्रीं ब्रं ब्रह्मणे० ब्रह्मशक्तिश्रीपा० ॥ ७१ ॥ ह्रीं अनन्ताय० अन- न्तशक्तिश्रीपा० ॥७२॥ सप्तमावरणदेवताभ्यो० गंधं पु०स० ॥ सामा० मादाय–एताः सप्तमावरणदेवताः सा० सप० सायु० सश० पू० त० सन्तु ॥ पुष्पाञ्जलिमादाय—अभीष्ट० । भक्त्या० सप्तमावरणार्चनम् ॥ ७ ॥ पुष्पाञ्जलिं दत्वा ॥ अनेन सप्ता० त्रिपु० दुर्गा० मी० ॥ योनिमुद्रया प्रणमेत् ॥ इति सप्तमावरणम् ॥

अथाष्टमावरणम्-(तद्बहिः पूर्वादिषु) ह्रीं वं वज्राय० वज्रशक्तिश्रीपा० ॥७३॥ ह्रीं शं शक्त्यै०शक्तिश्रीपा०॥७४॥ ह्रीं दं दण्डाय० दण्डशक्तिश्री- पा० ॥ ७५ ॥ ह्रीं खं खड्गाय० खड्गशक्तिश्रीपा० ॥७६॥ ह्रीं पां

पाशाय० पाशशक्तिश्रीपा० ॥७७॥ ह्रीं अं अङ्कुशाय० अङ्कुशशक्तिश्रीपा० ॥ ७८ ॥ ह्रीं गं गदायै० गदाशक्तिश्रीपा० ॥ ७९ ॥ ह्रीं त्रिं त्रिशूलाय० त्रिशूलशक्तिश्रीपा० ॥ ८० ॥ ह्रीं पं पद्माय० पद्मशक्तिश्रीपा० ८१ ॥ ह्रीं चं चक्राय० चक्रशक्तिश्रीपा० ॥ ८२ ॥ अष्टमावरणदेवताभ्यो०गन्धं पु०स० ॥ सामा० मादाय—एता अष्टमावरण० देवताः सा० सप० सायु० सश० पू० त० सन्तु । पुष्पाञ्जलिमादाय अभीष्ट० । भक्त्या० अष्टमावरणार्चनम् ॥ ८ ॥ पुष्पाञ्जलिं दत्वा ॥ अनेन अष्ट० त्रिगु० दुर्गा० प्री० ॥ योनिमुद्रया प्रणमेत् ॥ इति अष्टमावरणार्चनम् ॥

अथ नवमावरणार्चनम्—(कलशात्पूर्वादिदिक्षु ) ह्रीं वज्रहस्तायै गजारूढायै कादम्बरीदेव्यै० कादम्बरीदेवीशक्तिश्रीपादुकां पूजयामि तर्पयामि ॥ ८३ ॥ शक्तिहस्तायै अजवाहनायै उल्कादेव्यै० उल्कादेवीशक्तिश्रीपा० ॥८४॥ दण्डहस्तायै महिषारूढायै करालीदेव्यै० करालीदेवीशक्तिश्रीपा० ॥८५॥ खड्गहस्तायै शववाहनायै रक्ताक्षीदेव्यै० रक्ताक्षीदेवीशक्तिश्रीपा० ॥ ८६ ॥ पाशहस्तायै मकरवाहनायै श्वेताक्षीदेव्यै० श्वेताक्षीदेवीशक्तिश्रीपा० ॥ ८७ ॥ अङ्कुशहस्तायै मृगवाहनायै हरिताक्षीदेव्यै० हरिताक्षीदेवीशक्तिश्रीपा० ॥ ८८ ॥ गदाहस्तायै सिंहारूढायै यक्षिणीदेव्यै० यक्षिणीदेवीशक्तिश्रीपा० ॥८९॥ शूलहस्तायै वृषभवाहनायै कालीदेव्यै० कालीदेवीशक्तिश्रीपा० ॥९०॥ पद्महस्तायै हंसवाहनायै सुरज्येष्ठादेव्यै० सुरज्येष्ठादेवीशक्तिश्रीपा० ॥ ९१ ॥ चक्रहस्तायै सर्पवाहनायै सर्पराज्ञीदेव्यै० सर्पराज्ञीदेवीशक्तिश्रीपा० ॥९२॥ नवमावरणदेवताभ्यो० गंधं पुष्पं सम० ॥ सामान्या० मादाय—एता नवमावरणदेवताः साङ्ग० सप० सायु० सश० पू० त०

सन्तु ॥ पुष्पाञ्जलिमादाय—अभीष्ट० वत्सले ॥ भक्त्या० नवमा-वरणार्चनम् ॥ ९ ॥ पुष्पाञ्जलिं दत्वा ॥ अनेन नवमा० त्रिशु० दुर्गा०मी०॥ योनिमुद्रया प्रणमेत् ॥ इति नवमावरणम् ॥ इत्यावरणपूजा ॥

ततो देवीसहस्रनामभिर्वा यथाशक्त्यष्टोत्तरशतनामभिर्यथासंभवमि-लितैर्बिल्वपत्रैस्तुलसीदूर्वापुष्पाक्षतादिभिर्वाऽर्चयेत् ॥

अथाष्टोत्तरशतनामानि ॥ माहेश्वर्यै नम । महादेव्यै० । जयन्त्यै० । सर्वमङ्गलायै० । लज्जायै० । भगवत्यै० । वन्द्यायै० । भवान्यै० । पापनाशिन्यै० । चण्डिकायै० । कालरात्र्यै० । भद्रकाल्यै० । अपराजितायै० । महाविद्यायै० । महामेधायै० । महामायायै० । महाबलायै० । कात्यायन्यै० । जयायै० । दुर्गायै० । मन्दारवनवासिन्यै० । आर्यायै० । गिरिसुतायै० । धात्र्यै० । महिषासुरघातिन्यै० । सिद्धिदायै० । बुद्धिदायै० । नित्यायै० । वरदायै० ॥ वरवर्णिन्यै० । अम्बिकायै० । सुखदायै० । सौम्यायै० । जगन्मात्रे० । शिवप्रियायै० । भक्तसंतापसंहर्त्र्यै० । सर्वकामप्रपूरिण्यै० । जगत्क[illegible]यै० । जगद्धात्र्यै० । जगत्पालनतत्परायै० । अ[illegible]यक्तायै० । व्यक्तरूपायै० । [illegible]

दैत्यदर्पनिषूदिन्यै० । बुद्ध्यै० । कान्त्यै० । क्षमायै० । शान्त्यै० । पुष्ट्यै० । तुष्ट्यै० । धृत्यै० । मत्यै० । वरायुधधरायै० । धीरायै० । गौर्यै० । शाकम्भर्यै० । शिवायै० । अष्टसिद्धिप्रदायै० । वामायै० । शिववामाङ्गवासिन्यै० । धर्मदायै० । धनदायै० । श्रीदायै० । कामदायै० । मोक्षदायै० । अपरायै० । चित्स्वरूपायै० । चिदानन्दायै० । जयश्रियै० । जयदायिन्यै० । सर्वमङ्गलमाङ्गल्यायै० । जगत्त्रयहितैषिण्यै० । शर्वाण्यै० । पार्वत्यै० । धन्यायै० । स्कन्दमात्रे० । अखिलेश्वर्यै० । प्रपन्नार्तिहरायै० । देव्यै० । सुभगायै० । कामरूपिण्यै० । निराकारायै० । साकारायै० । महाकाल्यै० । सुरेश्वर्यै० शर्वायै० । श्रद्धायै० । ध्रुवायै० । कृत्यायै० । मृडान्यै० । भक्तवत्सलायै० । ( सर्वशक्तिसमायुक्तायै० । ) शरण्यायै० । सर्वकामदायै० ॥ इति ॥

॥ इत्यष्टोत्तरशतनामानि ॥

॥ श्री ॥

## ॥ अथ देवीसहस्रनामावलिमारंभः ॥

श्रीगणेशाय नमः ॥ अद्याद्य० शुभपुण्यतिथौ अमुकनाम्नो मम ( सपुत्रस्य ) सकलपापनिवृत्तिपूर्वकदीर्घायु पुत्रपौत्राद्यवच्छिन्नसंततिवृद्धिस्थिरलक्ष्मैहिकामुष्मिक्सकलकामनासिद्धिद्वारा धर्मार्थकाममोक्षफलावाप्तये श्रीत्रिगुणात्मिकाजगदम्बिका दुर्गादेवताप्रीत्यर्थं प्रारिप्सितकर्मण साङ्गतासिद्ध्यर्थं श्रीदुर्गादेवतायै देवीसहस्रनामभि अमुक द्रव्य समर्पयिष्ये ॥ अस्य श्रीदेवीसहस्रनामस्तोत्रमंत्रस्य भगवान् महादेव ऋषि आद्याशक्तिः जगदम्बिका दुर्गादेवता अनुष्टुप् छन्द अमुकद्रव्यसमर्पणे विनियोगः ॥ ध्यानम् ॥ या ह्यवा मधुकैटभप्रमथिनी या माहिषोन्मूलिनी या धूम्रेक्षणचंडमुंडदलिनी या रक्तबीजाशिनी ॥ शक्तिः शुंभनिशुंभदैत्यदलिनी या सिद्धलक्ष्मीः परा सा चडी नवकोटिमूर्तिसहिता मां पातु विश्वेश्वरी ॥ १ ॥ उद्यदादित्यसकाशां त्र्यक्षा स्मेरमुखीं भजे ॥ पाशांकुशाभयवरान् दधतीं जगदम्बिकाम् ॥ २ ॥

१ न्हीं महाविद्यायै नमः । जगन्मात्रे० । महालक्ष्म्यै० । शिवप्रियायै० । विष्णुमायायै० । शुभायै० । शान्तायै० । सिद्धायै० । सिद्धसरस्वत्यै० । १० क्षमायै० । कांत्यै० । प्रभायै० । ज्योत्स्नायै० । पार्वत्यै० । सर्वमंगलायै । हिंगुलायै० । चंडिकायै । दांतायै० । पद्मायै० । २० लक्ष्म्यै० ॥ हरिप्रियायै० । त्रिपुरानंदिन्यै० । नंदायै० । सुनंदायै० । सुरवंदितायै० । यज्ञविद्यायै० । महामायायै० । वेदमात्रे० । सुधायै० । ३० धृत्यै० ॥ प्रीत्यै० । प्रियायै० । प्रसिद्धायै० । मृडान्यै० । विंध्यवासिन्यै० । सिद्धविद्यायै० । महाशक्त्यै० । पृथ्व्यै० । नारदसेवितायै० । ४० पुरुहूतप्रियायै० ॥ कांत्यै० । कामिन्यै० । पद्मलोचनायै० । प्रह्लादिन्यै० । महामात्रे० । दुर्गायै० । दुर्गार्तिनाशिन्यै० । ज्वालामुख्यै० । सुगोत्रायै० । ५० ज्योत्यै० ॥ कुमुदवासिन्यै० । दुर्गायै० दुर्लभायै० । विद्यायै० । स्वर्गत्यै० । पुरवासिन्यै० । अपर्णायै० । शांबर्यै० । मायायै० । ६० मदिरायै० ॥ मृदुहासिन्यै० । नारायण्यै० । महानिद्रायै० । योगनिद्रायै० । प्रभावत्यै० । प्रज्ञायै० । अपरिमितायै० । प्राज्ञायै० ।

*

तारायै० । ७० मधुमत्यै० ॥ मघवै० । क्षीरार्णवसुतायै० । धात्रायै०
बालिकायै० । सिंहगामिन्यै० । ओंकारायै० । सुधाकारायै० । चेतनायै०
कोपनायै० । ८० क्षित्यै० ॥ अर्धबिंदुधरायै० । धीरायै० । विश्वमात्रे०
कलावत्यै० । पद्मावत्यै० । सुवस्त्रायै० । प्रबुद्धायै० । सरस्वत्यै० । जित
मात्रे० । ९० जितेंद्रायै० ॥ शारदायै० । हंसवाहनायै० । कुंडासनायै०
जगद्धात्र्यै । बुद्धमात्रे० । अनैश्वर्यै० । राज्यलक्ष्म्यै० । वषट्‌कारायै०
सुधाकारायै० । १०० सुधात्मिकायै० ॥ राजनित्यै० । त्रयीवार्तायै०
दंडनीत्यै० । क्रियावृत्यै० । सद्‌भूत्यै० । तारिण्यै० । श्रद्धायै० । सद्गत्यै० ।
सत्परायणायै० । ११० सिंधवे० ॥ मंदाकिन्यै० । गंगायै० । यमुनायै० ।
सरस्वत्यै० । गोदावर्यै० । विपाशायै० । कावेर्यै० । शतह्रदायै० । शरय्वै० ।
१२० । चन्द्रभागायै० ॥ कौशिक्यै० । गंडक्यै० । शिवायै० । नर्मदायै० ।
कर्मनाशायै० । चर्मण्वत्यै० । वेदिकायै० । वेत्रवत्यै० । वितस्तायै० । १३०
वरदायै० ॥ नरवाहनायै० । सत्यै० । पतिव्रतायै० । साध्व्यै० । सुचक्षुषे० ।
कुंडवासिन्यै० । एकचक्षुषे० । सहस्राक्ष्यै० । सुश्रोण्यै० । १४० भगमा
लिन्यै० ॥ सेनाश्रेण्यै० । पताकायै० । सव्यूहायै० । युद्धकांक्षिण्यै० ।
पताकिन्यै० । दयायै० । रमायै० । विपञ्च्यै० । पंचमप्रियायै० । १५० परायै० ॥
परकलायै० । कान्तायै० । त्रिशक्त्यै० । मोक्षदायिन्यै० । ऐन्द्र्यै० ।
माहेश्वर्यै० । ब्राह्म्यै० । कौमार्यै० । कमलासनायै० । १६० इच्छायै० ॥
भगवत्यै० । धेन्वै० । कामधेन्वै० । कृपावत्यै० । वज्रायुधायै० । वज्र
हस्तायै० । चण्ड्यै० । चंडपराक्रमायै० । गौर्यै० । १७० सुवर्णवर्णायै० ॥
स्थितिसंहारकारिण्यै० । एकायै० । अनेकायै० । महेज्यायै० । शतबाहवे० ।
महाभुजायै० । भुजगभूषणायै० । भूषायै० । षट्‌चक्रक्रमवासिन्यै० ।
१८० षट्‌चक्रभेदि
सुस्मितायै० । सुर
१९० बहुवर्णायै०
श्यामायै० । कृष्णायै० । पीतायै० । कर्बुरायै० । क्षुधायै० । २०० तृष्णायै० ॥
जरायै० । वृद्धायै० । तरुण्यै० । करुणालयायै० । कलायै० । काष्ठायै० ।
मुहूर्तायै० । निमेषायै० । कालरूपिण्यै० । २१० सुवर्णायै० ॥ रसनायै० ।
नासायै० । चक्षुषे० । स्पर्शवत्यै० । रसायै० । गंधप्रियायै० । सुगंधायै० । सुस्प

शायै० । मनोगत्यै० । २२० मृगनाभ्यै०॥ मृगाक्ष्यै० । कर्पूरामोदधारिण्यै० । पद्मयोन्यै० । सुकेश्यै० । सुलिंगायै० । भगरूपिण्यै० । योनिमुद्रायै० । महामुद्रायै० । खेचर्यै० । २३० स्वर्गगामिन्यै०॥ मधुश्रियै० । माधवीवल्ल्यै० । मधुमत्तायै० । मदोद्धतायै० । मातंग्यै० । शुकहस्तायै० । पुष्पबाणायै० । इक्षुचापिण्यै० । रक्ताम्बरधराक्ष्यै० । २४० रक्तपुष्पावतंसिन्यै० ॥ शुभ्रावरधरायै० । आधारायै० । महाश्वेतायै० । वसुप्रियायै० । सुवेण्यै० । पद्महस्तायै० । मुक्ताहारविभूषणायै० । कर्पूरामोदिन्यै० । श्वासायै० । २५० पद्मिन्यै० ॥ पद्ममंदिरायै० । खड्गिन्यै० । चक्रहस्तायै० । भुशुंडी परिघायुधायै० । चापिन्यै० । पाशहस्तायै० । त्रिशूलवरधारिण्यै० । सुबाणायै० । शक्तिहस्तायै० । २६० मयूरवरवाहनायै०॥वरायुधधरायै० । धीरायै० । वीरपानमदोत्कटायै० । वसुधायै० । वसुधारायै० । जयायै० । शाकंभर्यै० । शिवायै० । विजयायै० । २७० जयन्त्यै० ॥ सुस्तन्यै० । शत्रुनाशिन्यै० । कूर्मायै० । सुपर्णायै० । कामाक्ष्यै० । कामवंदितायै० । जालंधरधरायै० । अनंतायै० । कामरूपनिवासिन्यै० । २८० अतर्वेत्न्यै०॥ देवशक्त्यै० । वरदायै० । वरधारिण्यै० । शीतलायै० । सुशीलायै० । बालग्रहविनाशिन्यै० । कामबीजवत्यै० । सत्यायै० । सत्यधर्मपरायणायै० । २९० स्थूलमार्गस्थितायै० ॥ सूक्ष्मायै० । सूक्ष्मबुद्धयै० । प्रबोधिन्यै० । षट्कोणायै० । त्रिकोणायै० । त्र्यक्षायै० । त्रिपुरसुंदर्यै० । वृषप्रियायै० । वृषारूढायै० । ३०० महिषासुरघातिन्यै० ॥ शुंभदर्पहरायै० । दृप्तायै० । दीप्तपावकसंनिभायै० । कपालभूषणायै० । काल्यै० । कपालवरधारिण्यै० । कपालकुंडलायै० । दीर्घायै० । शिवदूत्यै० । ३१० घनस्वन्यै० ॥ सिद्धिदायै० । बुद्धिदायै० । नित्यायै० । सत्यमार्गप्रबोधिन्यै० । मूलाधारायै० । निराकारायै० । वह्निकुंडकृताश्रयायै० । वायुकुंडासनासिन्यै० । निराधारायै० । ३२० निराश्रयायै० ॥ कंबुग्रीवायै० । वसुमत्यै० । छत्रच्छायाकृतालयायै० । कुंडलिन्यै० । जगद्गर्भायै० । भुजगाकारशायिन्यै० । प्रोल्लसत्सप्तपद्मायै० । नाभिनालमृणालिकायै० । वह्नितंतुसमुत्थानायै० । ३३० पङ्सास्वादलोलुपायै०॥श्वासोच्छ्वासगतयै०।जिह्वाग्राहिण्यै०। वनसंश्रयायै० । तपस्विन्यै० । तपसिद्धायै० । तपस्यै० । तपप्रियायै० । तपोनिष्ठायै०।तपोयुक्तायै०।३४० तपससिद्धिदायिन्यै०॥सप्तधातुमयीमूर्त्यै०॥सप्त

घात्वंतराश्रयायै०। देहपुष्ट्यै०। मनस्तुष्ट्यै०। रत्नपुष्ट्यै०। बलोद्धतायै०। ओषध्यै०। वैद्यमात्रे०। द्रव्यशक्त्यै०। ३५० प्रभाविन्यै० ॥ वैद्यविद्यायै०। चिकित्सायै०। सुपथ्यायै०। रोगनाशिन्यै०। मृगयायै०। मृगमांसादायै०। मृगत्वचे०। मृगलोचनायै०। वागुरायै०। ३६० बंधरूपायै०॥ वधरूपायै०। वधोद्यतायै०। वंदिन्यै०। वंदिस्तुताकारायै०। कारावंधविमोचिकायै०। शृंखलायै०। कलहायै०। विद्यायै०। दृढबंधविमोक्षिण्यै०। ३७० अविकायै०॥ अंवालिकायै०। अंबायै०। स्वस्थायै०। साधुजनार्चितायै०। कौलिक्यै०। कुलविद्यायै०। सुकुलायै०। कुलपूजितायै०। कालचक्रभ्रमायै०। ३८० भ्रांतायै० ॥ विभ्रमायै०। भ्रमनाशिन्यै०। वात्याल्यै०। मेघमालायै०। सुवृष्ट्यै०। सस्यवर्धिन्यै०। अकारायै०। इकारायै०। उकारायै०। ३९० एकाररूपिण्यै०॥ ह्रींकारबीजरूपायै०। क्लींकारांबररूपिण्यै०। सर्वाक्षरमयीशक्त्यै०। अक्षरार्णवमालिन्यै०। सिंदूरायै०। अरुणवर्णायै०। सिंदूरतिलकप्रियायै०। वश्यायै०। वश्यबीजायै०। ४०० लोकवश्यविभाविन्यै० ॥ नृपवश्यायै०। नृपसेव्यायै०॥ नृपवश्यकर्यै०। प्रियायै०। महिष्यै०। नृपमान्यायै०। नृपाज्ञायै०। नृपनंदिन्यै०। नृपधर्ममय्यै०। ४१० धन्यायै०॥ धनधान्यविवर्धिन्यै०। चातुर्वर्ण्यमय्यै०। नीत्यै०। चतुर्वर्णैःपूजितायै०। सर्वधर्ममयीशक्त्यै०। चतुराश्रमवासिन्यै०। ब्राह्मण्यै०। क्षत्रियायै०। वैश्यायै०। ४२० शूद्रायै०। आचारवरवर्णजायै०। वेदमार्गरतायै०। यज्ञायै०। वेदविश्वविभाविन्यै०। अस्त्रशस्त्रमयीविद्यायै०। वरशस्त्रास्त्रधारिण्यै०। सुमेधायै०। सत्यमेधायै०। भद्रकाल्यै०। ४३० अपराजितायै० ॥ गायत्र्यै०। सुकृत्यै०। संध्यायै०। सावित्र्यै०। त्रिपदाश्रयायै०। त्रिसंध्यायै०। त्रिपदायै०। धात्र्यै०। सुस्वरायै०। ४४० सामगायिन्यै०॥ पांचाल्यै०। कालिकायै०। बालायै०। बालक्रीडायै०। सनातन्यै०। गर्भाधारायै०। धरायै०। शून्यायै०। गर्भाशयनिवासिन्यै०। ४५० सुरारिघातिन्यै०॥ कृत्यायै०। पूतनायै०। तिलोत्तमायै०। लज्जायै०। रसवत्यै०। नंदायै०। भवान्यै०। पापनाशिन्यै०। पट्टांबरधरायै०। ४६० गीतायै०॥ सुगीत्यै०। गानगोचरायै०। सप्तस्वरमयीतंत्र्यै०। षड्जमध्यमधैवतायै०। मूर्च्छनाग्रामसंस्थायै०। स्वस्थानायै०। स्वस्थलवासिन्यै०। अट्टमार्गायै०। महादेव्यै०। ४७०

वैष्णव्यै०॥ कुलपुत्रिकायै० । अट्टाट्टहासिन्यै० । प्रेतायै० । प्रेतासननिवासिन्यै० । गीतनृत्यप्रियायै० । कामायै० । तुष्टिदायै० । पुष्टिदायै० । क्षमायै० । ४८० निष्ठायै० ॥ सत्यप्रियायै० । प्रज्ञायै० । लोकेशायै० । सुरोत्तमायै० । सविषायै० । ज्वालिन्यै० । ज्वालायै० । विषमोहार्तिनाशिन्यै० । विषापहायै० ४९० नागदमन्यै०॥ कुरुकुल्लायै० । अमृतोद्भवायै० । भूतभीतिहरायै० रक्षायै० । भूतावेशनिवासिन्यै० । रक्षोघ्न्यै० । राक्षस्यै० । रात्र्यै० । दीर्घनिद्रायै० । ५०० दिवागत्यै॥ चन्द्रिकायै० । चन्द्रकान्त्यै० । सूर्यकान्त्यै० । निशाचर्यै० । डाकिन्यै० । शाकिन्यै० । शिक्षायै० । हाकिन्यै० । चक्रवर्तिन्यै० । ५१० शिवायै० ॥ शिवप्रियायै० । स्वाहायै० । सकलायै० । वनदेवतायै० । गुरुरूपधरायै० । गुर्व्यै० । मृत्युमार्यै० । विशारदायै० । महामार्यै० । ५२० विनिद्रायै०॥ तन्द्रायै० । मृत्युविनाशिन्यै० । चन्द्रमण्डलसंकाशायै० । चन्द्रमण्डलवर्तिन्यै० । अणिमादिगुणोपेतायै० । सुस्पृहायै० । कामरूपिण्यै० । अष्टसिद्धिप्रदायै० । प्रौढायै० । ५३० दुष्टदानवघातिन्यै० ॥ अनादिनिधनायै० । पुष्ट्यै० । चतुर्बाह्वे० । चतुर्मुख्यै० । चतुःसमुद्रवसनायै० । चतुर्वर्गफलप्रदायै० । काशपुष्पप्रतीकाशायै० । शरत्कुमुदलोचनायै० । भूतभव्यभविष्यायै० । ५४० शैलजायै०॥ शैलवासिन्यै० । वाममार्गरतायै० । वामायै० । शिववामाङ्गवासिन्यै० । वामाचारप्रियायै० । तुष्ट्यै० । लोपामुद्रायै० । प्रबोधिन्यै० । भूतात्मने० । ५५० परमात्मने० ॥ भूतभावविभाविन्यै० । मङ्गलायै० । सुशीलायै० । परमार्थप्रबोधिन्यै० । दक्षायै० । दक्षिणामूर्त्यै० । सुदक्षायै० । हरिप्रियायै० । योगिन्यै० । ५६० योगनिद्रायै०॥ योगाङ्गध्यानशालिन्यै० । योगपट्टधरायै० । मुक्तायै० । मुक्तानांपरमागतये० । नारसिंह्यै० । सुजन्मने० । त्रिवर्गफलदायिन्यै० । धर्मदायै० । धनदायै० । ५७० कामदायै०॥ मोक्षदायै० । द्युतये० । साक्षिण्यै० । क्षणदायै० । आकाङ्क्षायै० । दक्षजायै० । कोटिरूपिण्यै० । क्रतवे० । कात्यायन्यै० । ५८० स्वस्थायै० ॥ स्वच्छन्दायै० । कविप्रियायै० । सत्यागमायै० । बहिःस्थायै० । काव्यशक्त्यै० । कवित्वदायै० । मेनापुत्र्यै० । सत्यै० । साध्व्यै० । ५९० मैनाकभगिन्यै० ॥ तडिते० । सौदामिन्यै० । सुधामायै० । सुधाम्न्यै० । धामशालिन्यै० । सौभाग्यदायिन्यै० । दिवे० । सुभगायै० । द्युतिवर्धन्यै० । ६०० श्रियै० ॥ ह्रियै० । कृत्तिवसनायै० । कृत्तिकायै० । कालनाशिन्यै० । रक्तबीजवधोद्युक्तायै० । सुतन्तवे० ।

बीजसंतत्यै० । जगज्जीवायै० । जगद्बीजायै० । ६१० जगत्त्रयहितैषिण्यै०॥ चामीकरायै० । चंद्रायै० । साक्षात्षोडशीकलायै० । यत्तत्पदानुबंधायै० । यक्षिण्यै० । धनदार्चितायै० । चित्रिण्यै० । चित्रमायायै० । विचित्रायै० । ६२० भुवनेश्वर्यै० ॥ चामुंडायै० । मुंडहस्तायै० । चंडमुंडवधायै० । अष्टम्यै० । एकादश्यै० । पूर्णायै० । नवम्यै० । चतुर्दश्यै० । उमायै० । ६३० कलशहस्तायै० ॥ पूर्णकुंभधरायै० । धरायै० । अभीरवे० । भैरव्यै० । भीरवे० । भीमायै० । त्रिपुरभैरव्यै० । महाचंडायै० । रौद्रायै० । ६४० महाभैरवपूजितायै० ॥ निर्मुण्डायै० । हस्तिन्यै० । चंडायै० । करालदशनाननायै० । करालायै० । विकरालायै० । घोरघर्घरनादिन्यै० । रक्तदन्तायै० । ऊर्ध्वकेश्यै० । ६५० बन्धूककुसुमारुणायै० ॥ कादंबर्यै० । पलाशायै० । काश्मीरकुंकुमप्रियायै० । क्षांत्यै० । बहुसुवर्णायै० । रत्यै० । बहुसुवर्णदायै० । मातंगिन्यै० । वरारोहायै० । ६६० मत्तमातंगगामिन्यै०॥ हंसायै० । हंसगत्यै० । हंस्यै० । हंसोज्ज्वलशिरोरुहायै० । पूर्णचन्द्रप्रतीकाशायै० । सितास्यायै० । सुकुंडलायै० । मह्यै० । लेखन्यै० । ६७० लेखायै०॥ सुलेखायै० । लेखकप्रियायै० । शंखिन्यै० । शंखहस्तायै० । जलस्थायै० । जलदेवतायै० । कुरुक्षेत्रायै० । वन्यै० । काश्यै० । ६८० मथुरायै० ॥ कांच्यै० । अवंतिकायै० । अयोध्यायै० । द्वारकायै० । मायायै० । तीर्थायै० । तीर्थकर्यै० । प्रियायै० । त्रिपुरायै० । ६९० अप्रमेयायै० ॥ कोशस्थायै० । कोशवासिन्यै० । कौशिक्यै० । कुशावर्तायै० । कौशांब्यै० । कोशवर्धिन्यै० । कोशदायै० । पद्मकोशाक्ष्यै० । कुसुंभकुसुमप्रियायै० । ७०० तोतुलायै० ॥ वर्तुलायै० । कोट्यै० । कोटरस्थायै० । कोटराश्रयायै० । स्वयंभुवे० । स्वरूपायै० । सुरूपायै० । रूपवर्धिन्यै० । तेजस्विन्यै० । ७१० सुदीक्षायै० । बलदायै० । बलदायिन्यै० । महाकोशायै० । महावर्तायै० । बुद्ध्यै० । सदसदात्मिकायै० । महाग्रहहरायै० । सौम्यायै० । विशोकायै० । ७२० लोकनाशिन्यै०॥ सात्त्विकायै० । सत्त्वसंस्थायै० । राजस्यै० । रजोत्तमायै० । तामस्यै० । तमोयुक्तायै० । गुणत्रयविभाविन्यै० । अव्यक्तायै० । व्यक्तरूपायै० । ७३० वेदविद्यायै० ॥ शांभव्यै० । कल्याण्यै० । शंकर्यै० । कन्यायै० । मनःसंकल्पसंतत्यै० । सर्वलोकमयीशक्त्यै० । सर्वश्रवणगोचरायै० । सर्वज्ञानवत्यै० । वांछायै० । ७४० सर्वतत्त्वप्रबोधिन्यै० ॥ जागृत्यै० । सुषुप्त्यै० । स्वप्नावस्थायै० । तुरीयकायै० । त्वरायै० । मदग

तये० । मद्यायै०। मदिरामोदमोदिन्यै० । पानभूम्यै० । ७५० पानपात्रायै० ॥ पानदानकरोद्यतायै०। आघूर्णायै०। अरुणनेत्रायै०। किंचिदव्यक्तभाषिण्यै०। आशापूरायै० । दीक्षायै० । दीक्षादीक्षितपूजितायै० । नागवल्ल्यै० । नागक न्यायै० । ७६० भोगिन्यै०॥ भोगवल्लभायै० । सर्वशास्त्रमय्यै० । सुस्मृत्यै० । धर्मवादिन्यै० । श्रुतिस्मृतिधरायै० । ज्येष्ठायै० । श्रेष्ठायै० । पातालवासिन्यै० । मीमांसायै० । ७७० तर्कविद्यायै०॥ सुभक्त्यै० । भक्तवत्सलायै० । सुनाभ्यै० । यातनायै० । यात्यै० । गंभीरायै० । अभाववर्जितायै० । नागपाशधरामूर्त्यै० । अगाधायै० । ७८० नागकुंडलायै०॥ सुचक्रायै० । चक्रमध्यस्थायै० । चक्रकोणनिवासिन्यै० । सर्वमंत्रमय्यै०। विद्यायै० । सर्वमंत्राक्षरायै० । मधुश्रवसे० । स्रवन्त्यै० । भ्रामर्यै०। भ्रमरालयायै० । ७९० मातृमंडलमध्यस्थायै० ॥ मातृमंडलवासिन्यै० । कुमारजनन्यै० । क्रूरायै० । सुमुख्यै० । ज्वरनाशिन्यै० । अतीतायै० । विद्यमानायै० । भाविन्यै० । प्रीतिमंजर्यै० । ८०० सर्वसौख्यवतीशक्त्यै० ॥ आहारपरिणामिन्यै० । पंचभूतनिदानायै० । भवसागरतारिण्यै० । अक्रूरायै० । ग्रहवत्यै० । विग्रहायै० । ग्रहवर्जितायै० । रोहिणीभूमिगर्भायै० । कालभुवे० । ८१० कालवर्तिन्यै० ॥ कलकरहितायै०। नार्यै० चतु षष्ट्यभिधायिन्यै० । जीर्णायै० । जीर्णवस्त्रायै० । नूतनायै० । नववल्लभायै० । अजरायै० । रतिप्रीत्यै० । ८२० अतिरागविवर्धिन्यै०॥ पंचवातगतिभिन्नायै०। पंचश्लेष्माशयाधरायै०। पंचपित्तवतीशक्त्यै० । पंचस्थानविभाविन्यै० । उदक्यायै० । वृषस्यन्त्यै० । त्र्यह प्रस्रविण्यै० । रजःशुक्रधराशक्त्यै० । जरायुर्गर्भधारिण्यै० । ८३० त्रिकालज्ञायै० ॥ त्रिलिंगायै०। त्रिमूर्तिपुरवासिन्यै० । अरागायै० । शिवतत्त्वायै० । कामतत्त्वायै० । रागिण्यै० । प्राच्यै० । अवाच्यै० । प्रतीच्यै० । ८४० उदीच्यै० ॥ विदिशे० । दिशायै० । अहंकृत्यै० । अहंकारायै० । बालमायायै० । बलिप्रियायै० । स्रुचे० । स्रुवायै० । सामिधेन्यै० । ८५० सुश्रद्धायै० ॥ श्राद्धदेवतायै० । मात्रे० । मातामह्यै० । तृप्त्यै० । पितुमात्रे० । पितामह्यै० । स्नुषायै० । दौहित्रिण्यै० । पुत्र्यै० । ८६० पौत्र्यै० ॥ नप्त्र्यै० । स्वस्रे० । प्रियायै० । स्तनदायै० । स्तनधारायै० । विश्वयोन्यै० । स्तनधय्यै० । शिशूत्संगधरायै० । दोलायै० । ८७० दोलाक्रीडायै० ॥ अभिनन्दिन्यै० । उर्वश्यै० । कदल्यै० । केकायै० । विशिखायै० । शिखिवर्तिन्यै० ।

खट्वाङ्गधारिण्यै० । खड्गबाणपुखानुवर्तिन्यै० । लक्ष्मप्रासिकरायै० । ८८० लक्ष्यै० ॥ सुलक्षायै० । शुभलक्षणायै० । वर्तिन्यै० । सुपथाचारायै० । परिखायै० । खनिर्वृत्यै० । प्राकारवलयायै० । वेलायै० । मर्यादायै० । ८९० महोदध्यै० ॥ पोषण्यै० । शोषणीशक्त्यै० । दीर्घकेश्यै० । सुलोमशायै० । ललितायै० । मांसलायै० । तन्व्यै० । वेदवेदाङ्गधारिण्यै० । नरासृक्पानमत्तायै० । ९०० नरमुण्डास्थिभूषणायै० ॥ अक्षक्रीडारत्यै० । सार्यै० । सारिकाशुकभाषिण्यै० । शाम्बर्यै० । गारुडीविद्यायै० । वारुण्यै० । वरुणार्चितायै० । वाराह्यै० । तुण्डहस्तायै० । ९१० दंष्ट्रोद्धृतवसुधरायै० ॥ मीनमूर्त्यै० । धरामूर्त्यै० । वदान्यायै० । प्रतिमाश्रयायै० । अमूर्त्यै० । निधिरूपायै० । शालग्रामशिलायै० । शुचये० । स्मृतिसंस्काररूपायै० । ९२० सुसंस्कारायै० । संस्कृत्यै० । प्राकृतायै० । वेदभाषायै० । गाथायै० । गीत्यै० । प्रहेलिकायै० । इडायै० । पिंगलायै० । पिंगायै० । ९३० सुषुम्नायै० । सूर्यवाहिन्यै० । शशिश्रवायै० । तालुस्थायै० । काकिन्यै० । मृतजीविन्यै० । अणुरूपायै० । बृहद्रूपायै० । लघुरूपायै० । गुरुस्थिरायै० । ९४० स्थावरायै० । जगमायै देव्यै० । कृतकर्मफलप्रदायै० । विषयायै० । क्रान्तदेहायै० निर्विषायै० । जितेन्द्रियायै० । चित्स्वरूपायै० । चिदानन्दायै० । परब्रह्मावबोधिन्यै० । ९५० निर्विकारायै० ॥ निर्वैरायै० । रत्यै० । सत्यायै० । अधिवर्तिन्यै० । पुरुषायै० । अज्ञानभिन्नायै० । क्षान्त्यै० । कैवल्यदायिन्यै० । विविक्तसेविन्यै० । ९६० प्राज्ञायै० ॥ जनितायै० । बहुश्रुतायै० । निराहारायै० । समस्तैकायै० । सर्वलोकैकसेवितायै० । सेव्यसेव्यायै० । प्रियायै० । सेव्यायै० । सेवाफलविवर्धिन्यै० । ९७० कलौकल्किप्रियायै० ॥ शीलायै० । दुष्टम्लेच्छविनाशिन्यै० । प्रत्यञ्चायै० । धनुषे० । यन्त्र्यै० । खड्गधरायै० । धरारथायै० । अश्वप्लुतायै० । वल्गायै० । ९८० सृण्यै० ॥ मत्तवारणायै० ॥ वीरसुवे० । वेदमात्रे० । वीरश्रियै० । वीरनन्दिन्यै० । जयश्रियै० । जयदीक्षायै० । जयदायै० । जयवर्धिन्यै० । ९९० क्षेमकर्यै० ॥ सिद्धिरूपायै० । सत्कीर्त्यै० । पथिदेवतायै० । सौभाग्यायै० । शुभाकारायै० । सर्वसौभाग्यदायिन्यै० । सर्वतीर्थमयीमूर्त्यै० । सर्वदेवमयीप्रभायै० । सर्वसिद्धिप्रदायैशक्त्यै० । १००० सर्वमंगलसंज्ञितायै० ॥

॥ इति देवीसहस्रनामावलिः समाप्ता ॥

---

एवं तुलस्यादिभिः संपूज्य श्वेतचूर्णादिकं समर्पयेत् । यथा—
श्वेतचूर्णम्—मंदारमल्लीकरवीरसंभवं कर्पूरपाटीरसुवासितं सितम् ।
श्रीश्वेतचूर्णं विधिना समर्पितं प्रीत्या त्वमंगीकुरु विष्णुवल्लभे ॥३५॥
रक्तचू०—भत्यूपकालार्कमयूखसन्निभं जातिफलैलागरुणा सुवासितम् ॥
श्रीरक्तचूर्णं मनसा मयाऽर्पितं प्रीत्या त्वमंगीकुरु विष्णुवल्लभे ॥३६॥
सिंदूरम्-मध्याह्नचंडार्कमरीचिसन्निभं विघ्नेश्वरश्रीहनुमद्धनुप्रियम् ॥
सिंदूरचूर्णं मनसा मयाऽर्पितं प्रीत्या त्वमंगीकुरु विष्णुवल्लभे ॥३७॥
हरिद्रा—हरिद्रुमोत्थामतिपीतवर्णां सुवासितां चंदनपारिजातैः ॥
अनन्यभावेन समर्पितां ते मातर्हरिद्रामुररीकुरुष्व ॥ ३८ ॥
धूपः—लाक्षासंमिलितैः सिताभ्रसहितैः श्रीवाससंमिश्रितैः कर्पूराकलितैः
सितामधुयुतैर्गोसर्पिषाऽऽलोडितैः॥ श्रीखंडागरुगुग्गुलप्रभृतिभिर्ना-
नाविधैर्वस्तुभिर्धूपं ते परिकल्पयामि जननि त्वं धूपमंगीकुरु ॥३९॥
दीपः—रत्नालंकृतहेमपात्रनिहितैर्गोसर्पिषा दीपितैर्दीर्घैर्दीर्घतरान्धकारभि-
दुरैर्बालार्ककोटिप्रभैः ॥ आताम्रज्वलदुज्ज्वलद्गगनवद्रत्नप्रदीपैः सदा
मातस्त्वामहमादरादनुदिनं नीराजयाम्युच्चकैः ॥ ४० ॥
नैवे०—नैवेद्यनिवेदनविधिः ॥ तत्रादौ देव्या अग्रे दक्षिणतो वा जलेन

१ फडिति धूपपात्रं संप्रोक्ष्य मूलेन नमः इति संपूज्य पुरतो निधाय ( रं ) इति वह्निबीजेन अग्निं संस्थाप्य तदुपरि मूलेन दशांग धूपं दत्वा " ह्रीं जय जय ध्वनिमंत्रमातः स्वाहा " इति घंटां संपूज्य वामहस्तेन घंटां वादयन् दक्षिणहस्तेन शंखस्थजलं गृहीत्वा धूपमन्त्रपठनपाठपुरःसरं शंखस्थजलं भूमौ क्षिप्त्वा देवीवामभागे धूपपात्रं निधाय तर्जनीमूल-योरंगुष्ठयोगात्मिका धूपमुद्रां प्रदर्शयेदिति ॥ २ दीपपात्रं गोघृतेनापूर्य मन्त्राक्षरतंतुभिर्वर्ति निक्षिप्य मूलेन प्रज्वाल्य घंटां वादयन् नेत्रादिपादपर्यन्तं दीपं प्रदर्शयेत् ॥ मन्त्रपाठपठनपुरः-सरं देवीदक्षिणभागे दीपं निधाय शंखजलमुत्सृज्य मध्यमे अंगुष्ठमूललग्नं कृत्वा दीपमुद्रां प्रदर्शयेदिति ॥

चतुरस्रं मंडलं कृत्वा । स्वर्णादिनिर्मितं भोजनपात्रं संस्थाप्य । तन्मध्ये षड्रसोपेतं विविधप्रकारकं वा नैवेद्यं निधाय "ह्रीं नमः" इत्यर्घजलेन संप्रोक्ष्य मूलेन संवीक्ष्य । अधोमुखदक्षिणहस्तोपरि तादृशं वामहस्तं निधाय । नैवेद्यमाच्छाद्य (यं) इति वायुबीजं षोडशधा संजप्य वायुना तज्जूतदोषान् संशोष्य ततो दक्षिणकरतले तत्पृष्ठलग्नवामकरतलं कृत्वा नैवेद्यं प्रदर्श्य (रं) इति वह्निबीजं षोडशवारं संजप्य तदुत्पन्नाग्निना। तद्दोषं दग्ध्वा ततो वामकरतले (वं) इति अमृतबीज विचिन्त्य तत्पृष्ठ-लग्नं दक्षिणकरतलं कृत्वा नैवेद्यं प्रदर्श्य (वं) इति सुधाबीजं षोडशवारं संजप्य तदुत्थामृतधारया प्लावितं विभाव्य मूलेन संप्रोक्ष्य धेनुमुद्रां प्रदर्श्य मूलेनाष्टवारमभिमंत्र्य गंधपुष्पाभ्यां संपूज्य देव्या हृद्गतं तेजः स्मृत्वा। वामांगुष्ठेन नैवेद्यपात्रं स्पृष्ट्वा दक्षिणकरेण जलं गृहीत्वा ॥

चतुर्विधान्नं सघृतं सुवर्णपात्रे मया देवि समर्पितं तत् ॥ संवीज्यमानाऽ-मरवृन्दकैस्त्वं जुषस्व मातर्दययाऽवलोकय ॥ ४१ ॥ श्रीमन्महाकाली-महालक्ष्मीमहासरस्वतीदे०भ्यो नमः नैवेद्यं निवे०। इति भूतले देवीदक्षिणे जलं क्षिप्त्वा वामहस्तेन अनामामूलयोरंगुष्ठयोगेन नैवेद्यमुद्रां प्रदर्श्य सपुष्पकराभ्यां पात्रमुद्धरन् ।" भगवति! निवेदितानि हवींषि जुषाण"। इति पठन् ग्रासमुद्रां प्रदर्शयेत् ॥ वामहस्तेन पद्माभां प्राणाद्यां दक्षिणेन तु ॥ यथा ॥ (कनिष्ठिकानामिकांगुष्ठैः) ह्रीं प्राणाय नमः ॥ (तर्जनीमध्यमांगुष्ठैः) ह्रीं अपानाय नमः॥ (तर्जन्यनामामध्य-मांगुष्ठैः) ह्रीं व्यानाय नमः ॥ (अनामामध्यमांगुष्ठैः) ह्रीं उदानाय नमः ॥ (सर्वांगुलिभिः) ह्रीं समानाय नमः ॥ एवं प्राणादिमुद्राः समर्प्य देवीं भुंजानां ध्यात्वा जलं दद्यात् ॥ नमस्ते देवदेवेशि सर्वतृप्तिकरं परम् ॥ अखंडानंदसंपूर्णं गृहाण जलमुत्तमम् ॥ ४२ ॥

श्रीमन्महाकालीमहालक्ष्मीमहासरस्वतीदे०भ्यो नमः जलं सम०॥ इति स्वर्णादिपात्रस्थं कर्पूरादिसुवासितं जलं निवेद्य जनन्या तज्जलं प्राशितमिति भावयन् अन्तःपटं धृत्वा पठेत् ॥ ग्रहेशार्द्धैः सरसमभितः सूपविष्टैः समन्तात्, सिंजद्वालव्यजननिकरैर्वीज्यमाना सखीभिः। नर्मक्रीडाप्रहसनपरान् पंक्तिभोकॄन् हसन्ती, शुद्धे पात्रे कनकघटिते पड्रसान् भुंक्ष्व देवि ॥ ४३ ॥ शालीभक्तं सुपक्वं शिशिरकरसितं पायसापूपसूपं, लेह्यं पेयं च चोष्यं सितममृतफलं घारिकाद्यं सुखाद्यम् ॥ आज्यं प्राज्यं सुभोज्यं नयनरुचिकरं राजिकैलामरीचैः, स्वादीयं शाकराजीपरिकरममृताहारजोषं जुपस्व ॥ ४४॥ इति अंतःपटं दत्वा आचमनीयपात्रादाचमनं दद्यात् ॥

आचमनीयम्—गंगोत्तरीवेगसमुद्भवेन सुशीतलेनातिमनोहरेण ॥

त्वं पद्मपत्राक्षि मयाऽर्पितेन शंखोदकेनाचमनं कुरुष्व ॥ ४५ ॥

पूर्वा०—क्षीरमेतदिदमुत्तमोत्तमं प्राज्यमाज्यमिदमुज्वलं मधु ॥

मातरेतदमृतोपमं त्वया संभ्रमेण परिपीयतां मुहुः ॥ ४६ ॥

जलम्-अतिशीतमुशीरवासितं तपनीयोपत्रने निवेदितम् ॥

पटपूत्रमिदं जितामृतं शुचि गंगामृतमंव पीयताम् ॥ जलं स० ॥४७॥

ततो मूलमंत्रं सप्तवारं पठेत् ॥ जवनिकामपाकृत्य ॥ श्रीमहाकाली० मध्ये पानीयं सम० ॥ ततो भुंजानां देवीं ध्यात्वा नैवेद्यनिवेदनार्थमन्ये मंत्रा वक्तव्याः ॥ मातस्त्वां दधिदुग्धपायसमहाशाल्यन्नसंतालिकासूपापूपसिताघृतैः सवटकैः सक्षौद्ररंभाफलैः ॥ एलाजीरकहिंगुनागरनिशाकौस्तुंबरैः संस्कृतैः शाकैः शाकयुतैः सुधाधिकरसैः संतर्पयाम्यर्पितैः ॥ ४८ ॥ सापूपसूपदधिदुग्धसिताघृतानि सुस्वादुभक्ष्यपरमान्नपुरःसराणि ॥ शाकोल्लसन्मरिचजीरकबाह्लिकानि भक्ष्याणि

भक्त्या जगदंब मयाऽर्पितानि ॥ ४९ ॥

यथाशक्ति मूलमंत्रं प्रजप्य देवी दक्षिणहस्ते जपं समर्पयेत् ॥

उत्तरा०—नीहारहारं घनसारसारं प्रकल्पितानेकसुगंधिभारम् ॥

शीतांबु जंबूनदपात्रवर्ति पीत्वा हि दुर्गेश्वरि प्रीयतां तत् ॥ ५० ॥

करो०—उष्णोदकैः पाणियुगं मुखं च प्रक्षाल्य मातः कलधौतपात्रे ॥

कर्पूरमिश्रेण सकुंकुमेन हस्तौ समुद्वर्तय चन्दनेन ॥ करो० गन्धं स० ॥

तांबूलम्—कर्पूरेण युतैर्लवंगसहितैः कंकोलचूर्णान्वितैः सुस्वादक्रमुकैः

सगौरखदिरैः सुस्निग्धजातिफलैः ॥ मातः केतकपत्रकेन्दुरुचिभि-

स्तांबूलवल्लीदलैः सानंदं मुखमंडनीयमतुलं तांबूलमंगीकुरु ॥५२॥

एलालवंगादिसमन्वितानि कंकोलकर्पूरसुमिश्रितानि ॥

तांबूलवल्लीदलसंयुतानि पूगानि ते देवि समर्पयामि ॥ ५३ ॥

दक्षिणा—अथ बहुमणिमिश्रैर्मौक्तिकैस्त्वां विकीर्य त्रिभुवनकमनीये पूज-

यित्वा च वस्त्रैः ॥ मिलितविविधमुक्तैर्दिव्यलावण्ययुक्तां जननि

कनकवृष्टिं दक्षिणां तेऽर्पयामि ॥ श्रीमहा० दक्षिणां स० ॥ ५४ ॥

प्रदक्षिणा—पदे पदे या परिपूजकेभ्यः सद्योऽश्वमेधादिफलं ददाति ॥

तां सर्वपापक्षयहेतुभूतां प्रदक्षिणां ते परितः करोमि ॥ ५५ ॥

फलानिः—कलिंगकोशातकसंयुतानि जंबीरनारिंगसमन्वितानि ॥

सुनारिकेलानि सदाडिमानि फलानि ते देवि समर्पयामि ॥ ५६ ॥

छत्रम्—मातः कांचनदंडमंडितमिदं पूर्णेन्दुबिंबप्रभं नानारत्नविशोभि हे-

मतिलकं लोकत्रयाह्लादकम् ॥ भास्वन्मौक्तिकजालिकापरिवृतं प्रीत्याऽऽ-

त्महस्ते धृतं छत्रं ते परिकल्पयामि जननि त्वष्ट्रा स्वयं निर्मितम् ॥ ५७ ॥

चामरम्—शरदिन्दुमरीचिगौरवर्णैर्मणिमुक्ताविलसत्सुवर्णदंडैः ॥

जगदंब विचित्रचामरैस्त्वामहमानन्दभरेण वीजयामि ॥ ५८ ॥

व्यजनम्–शतपत्रयुतैः स्वभावशीतैरतिसौरभ्ययुतैः परागपीतैः ॥
भ्रमरीमुखरीकृतैरनन्तैर्व्यजनैस्त्वां जगदंब वीजयामि ॥ ५९ ॥

आदर्शः–मार्तंडमंडलनिभो जगदंब योऽयं भक्त्या मया मणिमयो मुकुरोऽर्पितस्ते ॥ पूर्णेन्दुबिंबरुचिरं वदनं स्वकीयमस्मिन्विलोकय विलोलविलोचने त्वम् ॥ श्रीमहा० आदर्शं दर्शयामि ॥ ६० ॥

तुरंगः–प्रियगतिरतितुंगो रत्नपल्याणयुक्तः कनकमयविभूषः स्निग्धगंभीरघोषः ॥ भगवति कलितोऽयं वाहनार्थे मया ते तुरगशतसमेतो वायुवेगस्तुरंग ॥ श्रीमहा० तुरंगमर्पयामि ॥ ६१ ॥

मातंग –मधुकरव्रतकुंभो न्यस्तसिंदूररेणुः कनककलितघंटाकिंकणीशोभिकंठः ॥ श्रवणयुगलचंचच्चामरो मेघतुल्यो जननि तव मुदे स्तान्मत्तमातंग एषः ॥ श्रीमहा० मातंगमर्पयामि ॥ ६२ ॥

रथः–द्रुततरतुरगैर्विराजमानं मणिमयचक्रचतुष्टयेन युक्तम् ॥
कनकमयममुं वितानयुक्तं भगवति ते हि रथं समर्पयामि ॥ ६३ ॥

सैन्यम्–हयगजरथपत्तिशोभमान दिशि दिशि दुंदुभिमेघनादयुक्तम् ॥
अपिबहुचतुरंगसैन्यमतेद्भगवति भक्तिभरेण तेऽर्पयामि ॥ ६४ ॥

प्राकारः–परिधीकृतसप्तसागर बहुसपत्नसहितं मयाऽम्बिके ॥
विपुल धरणीतलामिध प्रबलं दुर्गममंब तेऽर्पितम् ॥ ६५ ॥

नृत्यम्–भ्रमविलुलितकुन्तलोलतालिविगलितमाल्यविकीर्णरंगभूमिः ।
इयमिति रुचिरानना नटन्ती तव हृदये मुदमातनोतु मातः ॥
डमरुडिंडिमझर्झरझल्लरीमृदुरवार्द्रघटार्द्रघटादयः॥
झटितिझंकृतिभिर्जगदंबिके मृदुरवा हृदयं सुखयन्तु ते ॥ ६७ ॥
ताम्रपात्रे दधिलवणसर्षपदूर्वाक्षताः निक्षिप्य देव्या दृष्टिमुत्तारयेत् ॥

दृष्ट्या प्रदृष्ट्या खलु दृष्टदोपान् संहर्तुमारात्प्रथितप्रकाशा ॥
जनो भवेदिन्द्रपदाय योग्यस्तस्यै तवेदं लवणाक्षिदोपहम् ॥ ६८ ॥

## ॥ अथ देवीपूजांगहोमविधिः ॥

जलमादाय देशकालौ संकीर्त्य ॥ अद्येत्यादि० तिथौ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीत्रिगुणात्मिकादुर्गाप्रीतये पूजांगहोमं करिष्ये॥तत्रादौ देवीदक्षिणे हस्तमात्रस्थंडिले कुंडे वा संस्कारचतुष्टयं कुर्यात्॥ तद्यथा ॥ मूलेनेक्षणम् । फडिति प्रोक्षणम् ॥ फडिति दर्भैश्चतुर्भिस्ताडनम् ॥ हुं इति मुष्टिना अप आसिंच्य ॥ अग्निपात्रमादाय हुं इत्युद्घाट्य नैर्ऋत्ये फडिति क्रव्यादांशं परित्यज्य । पुनः अग्नेः संस्कारचतुष्टयं कुर्यात् ॥ तद्यथा ॥ मूलेनेक्षणम् ॥ फडिति प्रोक्षणम् ॥ फडिति दर्भैश्चतुर्भिस्ताडनम् । हुं इति मुष्टिना अप आसिंच्य ॥ परमात्मानलेनाथ जाठरेणापि वह्निना । ऐक्यं स्मरन् चैतन्यं योजयेत् ॥ ह्रीं इत्यभिमंत्र्य । वमिति धेनुमुद्रया अमृतीकृत्य ॥ फडिति संरक्ष्य । कवचेनावगुंठ्य । त्रिवारं प्रणवं पठन् । कुंडोपरि वा स्थंडिलोपरि वह्निं भ्रामयित्वा। "ह्रीं वह्निचैतन्याय नमः" इति स्थापयेत्॥ "वैश्वानरजातवेद इहावह लोहिताक्ष सर्वकर्माणि साधय नमः" इत्यग्निमभ्यर्च्य । मूलेन निर्वाणमुद्रया प्रधानपीठादग्नौ देवीमावाह्य ॥ आवाहनादिमुद्राः प्रदर्शयेत्॥ (पृ.१३२)॥ आवाहिता भव॥ स्थापिता भव । सन्निहिता भव । सन्निरुद्धा भव ॥ संमुखीकृता भव ॥ षडंगेन सकलीकृता भव ॥ अवगुंठिता भव । अमृतीकृता भव ॥ परमीकृता भव ॥ योनिमुद्रया प्रणमेत् ॥ अग्निं संपूज्य । घृताहुतीर्जुहुयात् ॥ अग्नये स्वाहा। वायवे० सूर्याय० । प्रजापतये० ॥ ४ ॥ मूलेन पंचविंशत्याहुतीर्जुहुयात् ॥ एवं

ह्रींक्लीं चामुंडायै विच्चे० ॥ २५ ॥ षडंगमंत्रैश्च षडाहुतिः ॥ मूलं हृदयाय स्वाहा । शिरसे स्वाहा । शिखायै स्वाहा । कवचाय स्वाहा । नेत्रत्रयाय स्वाहा । अस्त्राय स्वाहा ॥ इति ॥ ६ ॥ पुनः । अग्नये० । वायवे० । सूर्याय० । प्रजापतये० ॥ ४ ॥ ब्रह्मार्पणमंत्रेणैकामाहुतिं घृतेन जुहुयात् ॥ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्नेन यत्कृतं यदुक्तं यत्स्मृतं तत्सर्वं ब्रह्मार्पणं भवतु नमः स्वाहा ॥ संहारमुद्रया देवीं स्वस्थाने संस्थाप्य योनिमुद्रया प्रणमेत् ॥ गच्छ गच्छेत्यग्निं विसर्जयेत् ॥ १ ॥ जलमादाय— अनेन नित्यहोमाख्येन कर्मणा श्रीमहा० त्रिगुणा० जगदम्बिका प्रीयताम् ॥

---

## ॥ अथ देवीपूजांगबलिदानविधिः ॥

१ "वटुकबलिः" देव्या ईशानभागे बिंदुत्रिकोणवृत्तचतुरस्रं मंडलं कृत्वा "मंडलाय नमः" इति संपूज्य ॥ आधारपात्रं निधाय बलिं पूरयित्वा नैवेद्यात् किंचित् बलिमध्ये निक्षिप्य "बलिद्रव्याय नमः" इति संपूज्य । ह्रींवटुकाय एह्येहि देवीपुत्र वटुकनाथ कपिलजटाभारभासुर पिंगलत्रिनेत्र ज्वालामुख सर्वविघ्नान्नाशय नाशय ॥ सर्वोपचारसहितमिमं बलिं गृह्ण गृह्ण नमः ॥ वामांगुष्ठानामिकाभ्यां बलिपात्रामृतेन धारारूपेण जलमुत्सृजेत् ॥ पुष्पांजलिं गृहीत्वा ॥ बलिदानेन संतुष्टो वटुकः

---

१ उक्तं च कुलार्णवे ॥ ऐशाने वटुकं देवमाग्नेये योगिनीबलिम् ॥ नैर्ऋत्ये क्षेत्रपालं च वायव्ये गणनायकम् ॥ १ ॥ उत्तरे सर्वभूतेभ्यो मध्ये च मुख्यदेवताम् ॥ अदत्त्वा वटुकादीनां यः पूजयति चंडिकाम् ॥ पूजा च विफला तस्य देवीशापः प्रजायते ॥ २ ॥

सर्वसिद्धिदः॥ शान्तिं करोतु मे नित्यं भूतवेतालसेवितः ॥ १ ॥ इति ध्यात्वा पुष्पाणि प्रक्षिप्य "एष वलिर्वटुकाय नमम" ॥ योनिमुद्रया प्रणमेत् ॥ इति ॥

२ "अथाग्नेये योगिनीवलिः"—पूर्ववत् मंडलं कृत्वा "मंडलाय नमः" इति संपूज्य आधारपात्रं निधाय तत्र वलिं पूरयित्वा।"यां योगिनी-वलिद्रव्याय नमः" इति संपूज्य॥ जलमादाय॥ ऊर्ध्वं ब्रह्मांडतो वा दिवि गगनतले भूतले निस्तले वा पाताले वा तले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ॥ क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन प्रीता देव्यः सदा नः शुभवलिविधिना पातु वीरेन्द्रवन्द्याः ॥ १ ॥ शुक्लवर्णे त्रिशूलडमरुपाशासिधरे सर्वालंकारभूषिते ससैन्ये सौम्ये चतुःष-ष्टियोगिनीसहिते एह्येहि एह्येहि आगच्छ आगच्छ सर्वयोगिनीभ्यः सर्वभूतेभ्यः सर्वभूताधिपतिभ्यो डाकिनीभ्यः शाकिनीभ्यस्त्रैलोक्यनि-वासिनीभ्यः इमं वलिं गृह्णीत ममेप्सितं कार्यं कुरुत कुरुत नमः ॥ वामांगुष्ठमध्यमानामिकांगुलिभिर्जलमुत्सृजेत् ॥ पुष्पं गृहीत्वा ॥ योगि-न्यो याश्च का रौद्राः सौम्या घोरतराः पराः ॥ खेचरीभूचरीव्योमचर्यः प्रीतास्तु मे सदा ॥ १ ॥ पुष्पं निक्षिप्य ॥ एष "वलिर्योगिनीभ्यो नमम" ॥ योनिमुद्रया प्रणमेत् ॥ इति ॥

३ "अथ नैर्ऋत्ये क्षेत्रपालवलिः"—मंडलं पूर्ववत् कृत्वा ॥ मंडलं संपूज्य तदुपरि आधारे वलिं निधाय ॥ "क्षं क्षेत्रपालवलिद्रव्याय नमः" इति संपूज्य ॥ क्षां क्षीं क्षुं क्षैं क्षौं क्षः एह्येहि देवीपुत्र उच्छिष्टहारिन् मुहुर्मुहुः रक्ष रक्ष क्षं क्षेत्रपाल सर्वविघ्नान्नाशय नाशय सर्वोपचारसहि तमिमं वलिं गृह्ण गृह्ण नमः ॥ वामांगुष्ठतर्जनीभ्यां जलमुत्सृजेत् ॥ पुष्पं गृहीत्वा॥ यं यं यं यक्षरूप दशदिशिवदनं भूमिकंपायमानं सं सं संहारमूर्ति

शिरसि धृतजटाशेखरं चंद्रबिंबम् ॥ दं दं दं दीर्घकायं कृतनरवपुषं ऊर्ध्वरेखाकरालं पं पं पं पापनाशं प्रणमत सततं भैरवं क्षेत्रपालम् ॥१॥ यो यस्मिन् क्षेत्रवासी च क्षेत्रपालः सकिंकरः ॥ प्रीतोऽसौ बलिदानेन सर्वरक्षां करोतु मे ॥ २ ॥ पुष्पं निक्षिप्य ॥ "एष बलिः क्षेत्रपालाय नमम" ॥ योनिमुद्रया प्रणमेत् ॥

४ "अथ वायव्ये गणपतिबलिः"—मंडलं पूर्ववत् कृत्वा ॥ मंडलं संपूज्य तदुपरि आधारे बलिं निधाय ॥ "गणेशबलिद्रव्याय नमः" इति संपूज्य ॥ गां गीं गूं गैं गौं गः श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय इमं बलिं गृह्ण गृह्ण नमः ॥ वाममध्यमया वक्रया जलमुत्सृजेत् ॥ पुष्पं गृहीत्वा ॥ सर्वदा सर्वकार्याणि निर्विघ्नं साधयाम्यहम् ॥ शान्तिं करोतु मे नित्यं विघ्नराज सदा क्रियाम् ॥ १ ॥ पुष्पं निक्षिप्य ॥ "एष बलिर्गणपतये नमम ॥ योनिमुद्रया प्रणमेत्" ॥४॥

५ "अथ उत्तरे सर्वभूतबलिः" मंडलादि पूर्ववत् कृत्वा। मंडलं संपूज्य तदुपरि आधारे बलिं निधाय ॥ "बलिद्रव्याय नमः" इति संपूज्य ॥ ह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हुं फट् इमं बलिं गृह्णीत गृह्णीत नमः ॥ वामकरसर्वांगुलिभिर्जलमुत्सृजेत् ॥ पुष्पं गृहीत्वा ॥ भूता ये विविधाकारा दिव्यभूम्यन्तरिक्षगाः ॥ पातालतलसंस्थाश्च शिवयोगेन भाविताः ॥ १ ॥ क्रूराद्याः शतसंख्याकाः पाखंडाद्या व्यवस्थिताः ॥ तृप्यन्तु प्रीतमनसो भूता गृह्णन्त्विमं बलिम् ॥ २ ॥ नानावर्णकृतैर्वेकैर्नानाभूषांबरायुधैः ॥ नानाभूतगणैर्यूथसर्वभूतेश्वरं भजेत् ॥ ३ ॥ पुष्पं निक्षिप्य ॥ "एष बलिः सर्वभूतेभ्यो नमम ॥ योनिमुद्रया प्रणमेत्" ॥५॥

६ "अथ देव्यग्रे मुख्यबलिः" पूर्ववत् मंडलं कृत्वा संपूज्य आधारं संस्थाप्य तदुपरि बलिं निधाय ॥ " बलिद्रव्याय नमः इति

संपूज्य ॥ मूलं—सांगायै सपरिवारायै श्रीमहाकालीमहालक्ष्मीमहासरस्वतीस्वरूपिणीश्रीत्रिगुणात्मिकादुर्गादेवतायै नम इमं सदीपबलिं गृह्ण गृह्ण नमः॥ देवतीर्थेन जलमुत्सृजेत् ॥ मूलेन पुष्पांजलिं दद्यात् ॥ " एष बलिः श्रीत्रिगुणात्मिकायै दुर्गादेवतायै नमम " ॥ योनिमुद्रया प्रणमेत् ॥ हस्तौ पादौ प्रक्षाल्याचमेत् ॥

" अथ प्रार्थना "—सर्वपीठोपपीठेषु द्वारोपस्तरणेऽपि च ॥ क्षेत्रे क्षेत्रे हि संदेहे सर्वे दिग्भागसंस्थिताः ॥ १ ॥ योगिनीयोगवीरेन्द्राः सर्वे यंत्रसमागताः ॥ नगरे वाथ वा ग्रामे ह्यटव्यां सरितस्तटे ॥ २ ॥ वापीकूपेषु वृक्षेषु श्मशानेषु चतुष्पथे ॥ नानारूपधरा ये च बहुरूपधराश्च ये ॥ ३ ॥ ते सर्वे चैव संतुष्टा बलिं गृह्णन्तु मे सदा ॥ शरणागतोऽस्म्यहं तेषां ते सर्वे मे वसुप्रदाः ॥ ४ ॥ बलिदानेन संतुष्टाः प्रयच्छन्तु ममेप्सितम् ॥ सर्वे कार्याणि कुर्वन्तु दोषांश्च घ्नन्तु मे सदा ॥ ५ ॥ इति संप्रार्थ्य ॥ पुष्पांजलिं गृहीत्वा पठेत् ॥ भूतानि यानीह वसन्ति भूतले बलिं गृहीत्वा विधिवत्प्रयुक्तम् ॥ तानि क्षमन्तामिह वा रमन्तां गच्छन्तु चान्यत्र नमोऽस्तु तेभ्यः ॥ १ ॥ इति पुष्पांजलिं समर्प्य नाराचमुद्रया भूतानि विसृजेत् ॥ तत्र मंत्राः ॥ बलिं गृह्णन्त्विमे देवा आदित्या वसवस्तथा ॥ मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहा ॥ १ ॥ असुरा यातुधानाश्च पिशाचोरगराक्षसाः ॥ डाकिन्यो यक्षवैताला योगिन्यः पूतनाः शिवाः ॥ २ ॥ जृम्भकाः सिद्धगंधर्वा माला विद्याधरा नगाः ॥ दिक्पाला लोकपालाश्च येच विघ्नविनायकाः ॥ ३ ॥ जगतां शान्तिकर्त्तारो ब्रह्माद्याश्च महर्षयः ॥४॥ मा विघ्नं मा च मे पाप मा सन्तु परिपंथिनः सौम्या भवन्तु तृप्ताश्च भूत-

श्रेताः सुखावहाः ॥ ५ ॥ इति पठित्वा नाराचमुद्रया भूतानि विसृज्य ॥ मूलमंत्रेण शुद्धजलेनात्मानमभ्युक्ष्याचामेत् ॥ इति ॥

॥ इति देवीपूजाङ्गबलिदानविधिः ॥

---

॥ नीराजनम् ॥

नीराजनीं प्रज्वाल्य " नीराजन्यै नमः " " ह्रीं श्रीं ह्रीं स्लूं प्लूं ग्लूं म्लूं ह्रीं श्रीं " इति संपूज्य ॥ धेनुमुद्रां योनिमुद्रां च प्रदर्श्य ॥ घंटावादनपूर्वकं समुत्थाय देवीमस्तकादिपादान्तं भ्रामयेत् ॥

इन्द्रादयो नतिनतैर्मुकुटप्रदीपैर्नीराजयन्ति सततं तव पादपीठम् ॥
तस्मादहं तव शरीरमशेषमेतन्नीराजयामि जगदंब सहस्रदीपैः॥६९॥

अथ देवीनीराजनम् ॥ (१) जय देवि जय देवि जयमातस्त्रिपुरे भक्त्यानुग्रहकारिणि दासानुग्रहकारिणि ईश्वरि सुरवरदे ॥ ध्रुव० ॥ दुर्गे दुर्गतिनाशिनि भवसागरतारे । मृगेन्द्रवाहनगिरिजे दानवसंहारे ॥ अष्टादशभुजमूर्ते कंठारूढमाले । सप्तशृंगनिवासिनि रुद्रात्मकशक्ते ॥ जय देवि० ॥ १ ॥ बालार्कारुणशोभितबंधककुसुमाभे । कुंकुमशोभितदेहे दाडिमकुसुमाभे ॥ पादाहतमहिषासुरदेवासुरसर्गे । नानादानवमर्दिनि अलिकुलरिपुवर्गे ॥ जय देवि० ॥ २ ॥ जय त्रिपुरासुरमर्दिनि मर्दय मम दोषान् । तारय तारय मातर्भवजलकूपस्थान् ॥ कामक्रोधादीन्मारय देहस्थान् । करुणादृष्ट्या माता रक्ष सुनिजभक्तान् ॥ जय देवि० ॥३॥ मूले वाधिष्ठाने मणिपूरे चक्रे । हृदयेनाहतचक्रे षोडशदलपद्मे ॥ आज्ञाचक्रे चालय चालय कृतवलये । ब्रह्मस्थाने विहरासि मातः शिवसहिते ॥ जय देवि० ॥ ४ ॥ विधिहरिशंकरवंद्ये पंडितजनवंद्ये । सनकादिकमुनिवंद्ये यक्षासुरवंद्ये ॥ नारदतुंबुरुकिन्नरगीते सुरवंद्ये । अघनाशिनि भव-

शोषिणि मातः सुखसहिते ॥ जय देवि० ॥ इति ॥

(२)आरार्तिक्यम्—[ भवरातीरनिवासिनि निगमप्रतिपाद्ये (२), पारावारविहारिणि (२), नारायणि हृद्ये । जय देवि जय देवि ॥ १ ॥ जय देवि जय देवि जय मोहिनीरूपे (२), मामिह जननि समुद्धर (२), पतितं भवकूपे । जय देवि जय देवि ॥ १ ॥ प्रपञ्चसारे जगदाधारे श्रीविद्ये (२), प्रपन्नपालननिरते (२), मुनिवृन्दाराध्ये । जय देवि जय देवि ॥२॥ दिव्यसुधाकरवदने कुन्दोज्ज्वलरदने (२), पदनखनिर्जितमदने (२), मधुकैटभकदने । जय देवि जय देवि ॥ ३ ॥ विकसितपङ्कजनयने पन्नगपतिशयने (२), खगपतिवहने गहने (२), सङ्कटवनदहने । जयदेवि जयदेवि ॥ ४ ॥ मञ्जीराङ्कितचरणे मणिमुक्ताभरणे (२), कञ्चुकीवस्त्रावरणे (२), वक्त्राम्बुजधरणे । जय देवि जय देवि ॥ ५ ॥ शक्रामयभयहरणे भूसुरसुखकरणे (२), करुणां कुरु मे शरणे (२), गजनक्रोद्धरणे । जय देवि जय देवि ॥ ६ ॥ छित्वा राहुग्रीवां पासि त्वं विबुधान् (२) दत्त्वा सुधामभीष्टां (२), संहरसे दैत्यान् । जय देवि जय देवि ॥ ७ ॥ विहरासि दानवसिद्धे समरे संक्रुद्धा (२), मध्वमुनीश्वरवरदे (२), पालय संसिद्धान् । जय देवि जय देवि ॥ ८ ॥ ]

कर्पूरगौरं करुणावतारं संसारसारं भुजगेन्द्रहारम् । सदा वसन्तं हृदयारविन्दे भवं भवानीसहितं नमामि ॥ कर्पूरपूरेण मनोहरेण सुवर्णपात्रान्तरसंस्थितेन । प्रदीप्तभासा सह सङ्गतेन नीराजनं ते जगदम्ब कुर्वे ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ॥ इति नीराजनं कृत्वा ॥७२॥ मूलम्-ह्रीं ऐं० । श्रीमहाकालीमहालक्ष्मीमहासरस्वतीभ्यो नमः नीराजनं स० ॥

जलेन प्रदक्षिणां कुर्यात् ॥ पुष्पैर्देवताभिवन्दनम् । आत्माभिवन्दनम् । हस्तं प्रक्षाल्य मन्त्रपुष्पाञ्जलिः—विद्युद्दामसम० ॥ ह्रीं मूलम् । श्रीमहाकाली-महालक्ष्मीमहासरस्वतीभ्यो नमः मन्त्रपुष्पाञ्जलिं स० ॥

[ प्रदक्षिणा—पदे पदे या परि० । यानि कानि च पा० । श्रीमहा-कालीमहालक्ष्मीमहासरस्वतीभ्यो नमः प्रदक्षिणां स० ॥ ]

विशेषार्घः—कलिङ्गकोशातकसंयुतानि जंबीरनारिङ्गसमन्वितानि ॥
सुनारिकेलानि सदाडिमानि फलानि ते देवि समर्पयामि ॥ ७३ ॥

---

॥ स्तुतिः ॥

अयि गिरिनंदिनि नंदितमेदिनि विश्वविनोदिनि नंदनुते गिरिवर-विन्ध्यशिरोधिनिवासिनि विष्णुविलासिनि जिष्णुनुते ॥ भगवति हे शितिकंठकुटुंबिनि भूरिकुटुंबिनि भूरिकृते जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ७४ ॥ अयि मयि दीनदयालुतया कृपयैव तया भवितव्यमुमे अयि जगतो जननि कृपयासि ययासि तथाऽनुमितासि रते ॥ यदुचितमत्र भवत्युररीकुरुतादुरुतापमपाकुरुते जय जय हे महिषासुरमर्दिनि रम्यकपर्दिनि शैलसुते ॥ ७५ ॥ इति ॥

नम—रक्तोत्पलारक्ततलप्रभाभ्यां ध्वजोर्ध्वरेखाकुलिशांकिताभ्याम् ॥
अशेषवृन्दारकवंदिताभ्यां नमो भवानीपदपंकजाभ्याम् ॥ ७६ ॥

वासगृ०-अथ मणिमयमंचकाभिरामे द्युतिमति पुष्पवितानराजमाने ॥
प्रसरद्गुरुधूपधूपितेऽस्मिन्भगवतिवासगृहेऽस्तु ते निवासः ॥ ७७ ॥

गंडूपज०—अथ मातरुशीरवासितं निजतांबूलरसेन रंजितम् ॥
तपनीयमये पतद्गृहे सुखगंडूपजलं निधीयताम् ॥ ७८ ॥

पर्यंकः—एतस्मिन्मणिखचिते सुवर्णपात्रे त्रैलोक्याभयदौ निधाय पादौ ॥

विस्तीर्णे मृदुलतरोत्तरच्छदेऽस्मिन् पर्यंके कनकमये निषीद मातः ॥ ७९ ॥

अलक्तकः—तव देवि सरोजचिह्नयोः पदसानिर्जितपद्मरागयोः ॥ अतिरक्ततरैरलक्तकैः पुनरुक्तां रचयामि रक्तताम् ॥ ८० ॥

सुखशय्या-क्षणमथ जगदंब मंचकेऽस्मिन् मृदुतरतुलिकया विराजमाने ॥ अतिरहसि मुदा शिवेन सार्धं सुखशयनं कुरु मां हृदि स्मरन्ती॥८१॥

प्रार्थना—एषा भक्त्या तव विरचिता या मया देवि पूजा स्वीकृत्यैनां सपदि सकलान्मेऽपराधान्क्षमस्व । नूनं यत्तत्तव करुणया पूर्णतामेतु सद्यः सानन्दं मे हृदयकमले तेऽस्तु नित्यं निवासः ॥ ८२ ॥

श्रीमहाका० महाल० महास० देवताभ्यो नमः प्रार्थनापूर्वकनमस्कारान्समर्पयामि ॥

जपः—ह्रीं ऐं ह्रीं क्लीं चामुण्डायै विच्चे ॥ इति मन्त्रेण यथाशक्तिं कुर्यात् ॥ गुह्याति० । इति देव्यै जपं निवेदयेत् ॥

---

## ॥ श्रीदेव्यपराधक्षमापनस्तोत्रम् ॥

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो न चाह्वानं ध्यानं पि च न जाने स्तुतिकथाः ॥ न जाने मुद्रास्ते तदपि च न जाने ।नक्षपनं परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ॥ १ ॥ विधेरज्ञानेन द्रविणविरहेणालसतया विधेयाशक्यत्वात्तव चरणयोर्या च्युतिरभूत् ॥ तदेतत्क्षन्तव्यं जननि सकलोद्धारिणि शिवे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ २ ॥ पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः परं तेषां मध्ये विरलतरलोऽहं तव सुतः ॥ मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे कुपुत्रो जायेत क्वचिदपि कुमाता न

भवति ॥ ३ ॥ जगन्मातर्मातस्तव चरणसेवा न रचिता न वा दत्तं देवि द्रविणमपि भूयस्तव मया ॥ तथापि त्वं स्नेहं मयि निरुपमं यत् प्रकुरुषे कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥ ४ ॥ परित्यक्त्वा देवान् विविधविधसेवाकुलतया मया पञ्चाशीतेरधिकमपनीते तु वयसि ॥ इदानीं चेन्मातस्तव यदि कृपा नापि भविता निरालम्बो लम्बोदरजननि कं यामि शरणम् ॥ ५ ॥ श्वपाको जल्पाको भवति मधुपाकोपमगिरा निरातङ्को रङ्को विहरति चिरं कोटिकनकैः ॥ तवापर्णे कर्णे विशति मनुवर्णे फलमिदं जनः को जानीते जननि जपनीयं जपविधौ ॥ ६ ॥ चिताभस्मालेपो गरलमशनं दिक्पटधरो जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ॥ कपाली भूतेशो भजति जगदीशैकपदवीं भवानि त्वत्पाणिग्रहणपरिपाटीफलमिदम् ॥ ७ ॥ न मोक्षस्याकाङ्क्षा न च विभववाञ्छाऽपि च न मे न विज्ञानापेक्षा शशिमुखि सुखेच्छाऽपि न पुनः ॥ अतस्त्वां सयाचे जननि जननं यातु मम वै मृडानी रुद्राणी शिव शिव भवानीति जपतः ॥ ८ ॥ नाराधिताऽसि विधिना विविधोपचारैः किं रूक्षचिन्तनपरैर्न कृतं वचोभिः ॥ श्यामे त्वमेव यदि किंचन मय्यनाथे धत्से कृपामुचितमम्ब परं तवैव ॥ ९ ॥ आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवेशि ॥ नैतच्छठत्वं मम भावयेथाः क्षुधातृषार्ता जननीं स्मरन्ति ॥१०॥ जगदम्ब विचित्रमत्र किं परिपूर्णा करुणाऽस्ति चेन्मयि ॥ अपराधपरंपरावृतं नहि माता समुपेक्षते सुतम् ॥ ११ ॥ मत्समः पातकी नास्ति पापघ्नी त्वत्समा नहि ॥ एवं ज्ञात्वा महादेवि यथायोग्यं तथा कुरु ॥ १२ ॥

॥ इति श्रीदेव्यपराधक्षमापनस्तोत्रं सपूर्णम् ॥

---

देव्यपराधक्षमापनम्—अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ॥ दासोऽयमिति मां त्वा क्षमस्व परमेश्वरि ॥ १ ॥ आवाहनं न जानामि न जानामि विसर्जनम् ॥ पूजां चैव न जानामि क्षम्यतां परमेश्वरि ॥२॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि ॥ यत्पूजितं मया देवि परिपूर्णं तदस्तु मे ॥ ३ ॥ अपराधशतं कृत्वा जगदम्बेति चोच्चरेत् ॥ यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः ॥ ४ ॥ सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदम्बिके ॥ इदानीमनुकंप्योऽहं यथेच्छसि तथा कुरु ॥५॥ अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम् ॥ तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥ ६ ॥ गतं पापं गतं दुःखं गतं दारिद्र्यमेव च ॥ आगता सुखसंपत्तिः पुण्याच्च तव दर्शनात् ॥ ७ ॥ मंत्रहीनं० ॥ त्वं हि दात्री च भोक्त्री च देवीरूपमिदं जगत् ॥ देवीं जपति सर्वत्र या देवी सोऽहमेव हि ॥ ९ ॥ क्षमस्व देवदेवेशि क्षम्यतां परमेश्वरि । तव पादांबुजे नित्यं निश्चला भक्तिरस्तु मे ॥ १० ॥ इति सम्प्रार्थ्य । अर्पणम्—अनेनावाहनासनपाद्यार्घ्याचमनीयस्नानवस्त्रोपवीतगन्धाक्षतपुष्पधूपदीपनैवेद्यताम्बूलदक्षिणाप्रदक्षिणामन्त्रपुष्परूपै राजोपचारैरन्योपचारैश्च यथाज्ञानेन यथामिलितोपचारद्रव्यैः कृतेन पात्रासादनपूजनपूर्वकविशेषकर्मणा श्रीमहाकालीमहालक्ष्मीमहासरस्वतीदेवतास्वरूपिणी त्रिगुणात्मिका जगदम्बिका प्रीयतां नमम॥ॐ तत्सद्ब्र०॥यस्यस्मृत्या०॥

ततः कुमारीपूजा॥ देशकालौ संकीर्त्य अद्याद्य० नवचंडी (शतचंडी)-कर्मांगत्वेन कुमारीपूजां करिष्ये ॥ इति संकल्प्य मूलेन षडंगं कृत्वा मूलमंत्रमुच्चार्य । मंत्राक्षरमयीं देवीं मातॄणां रूपधारिणीम् ॥ नवदुर्गात्मिकां साक्षात्कन्यामावाहयाम्यहम् ॥ इति कुमारीमावाह्य यथासंभवं पूजयेत् ॥ कुमार्यश्च प्रत्यहं शतं नव एका वा यथाशक्ति वा पूज्याः ॥

प्रत्यहमेकवृद्ध्या वा पूजयेत्॥कुमार्यै यथाशक्ति वस्त्रदक्षिणादिकं दद्यात्॥ ततो ब्राह्मणसुवासिनीपूजा ॥ एवं देवीकुमार्यादिपूजां प्रत्यहं कुर्यात् ॥

॥ इति देवीराजोपचारपूजाप्रयोगः ॥

---

ततः पूर्वं न कृतं चेत् सर्वे विप्राः कृतांगन्यासाः कवचार्गलाकीलकानि शतं नवार्णमंत्रं रात्रिसूक्तं च जप्त्वा सप्तशतीं जप्त्वांऽते देवीसूक्तं नवार्णशतं रहस्यानि च जपेयुः॥ एकस्मिन्दिनेऽनेकावृत्तौ तु कवचादीनां प्रत्यावृत्ति नावृत्तिः ॥ एवमृत्विजः प्रथमदिने एकं द्वितीये द्वे तृतीये त्रीणि चतुर्थे चत्वारि रूपाणीत्येवं सप्तशतीजपं कुर्युः ॥ ऋत्विजां यजमानस्य च प्रत्यहं क्षीरमात्राशनम् अशक्तौ हविष्याशनं वा। प्रत्यहं सहस्रं शतं दश वा ब्राह्मणान् भोजयेत् ॥ पंचमेऽह्नि होमः ॥ नवरात्रे तु नवम्यामेव होमः । केचित्तु अष्टम्यामारभ्य नवम्यां होमं समापयन्ति॥

---

॥ अथ होमविधिः ॥

अथ होमः ॥ हस्ते जलमादाय । देशकालौ संकीर्त्य मया ब्राह्मणद्वारा कृतस्य नवचंडी ( शतचंडी ) जपकर्मणः संपूर्णतासिद्ध्यर्थं जपदशांशेन तिलादिमिश्रपायसद्रव्येण सग्रहमखं होममहं करिष्ये । इति ॥

ततः सग्रहमखनवचंडीजपदशांशहोमं कर्तुं स्थंडिलादि करिष्ये । इति संकल्प्य होमप्रमाणेन स्थंडिलं कुण्डं वा विधाय तत्र दिग्रक्षणादि पञ्चभूसंस्कारादिकं ( १४७-१५० ) कृत्वा कुण्डे सति ( पृ. १४९-१५१ )

---

१ दशांशहोमविचारः—जपान्ते प्रत्यहं मन्त्री होमयेत्तद्दशांशतः ॥ तर्पणं चाभिषेकं च विप्रभोजनमाचरेत् ॥ अथवा सर्वपूर्तौ च होमादिकमथाचरेत् ॥ ( होमाद्यशक्तौ )-यद्यदंगं भवेद्भग्नं तत्संख्याद्विगुणो जपः॥

टिप्पणीस्थकुंडपूजनविधिना कुण्डपूजनं कुर्यात् ॥ ततः तत्र शतमंगलनामानमग्निं प्रतिष्ठाप्य ( १५०-१५२ ) समिध्य ध्यायेत् ॥

ततः ईशान्यां दिशि नवग्रहस्थापनं पूजनं च ( १५३-१५९ ) कृत्वा कुशकंडिकां च ( १५९-१६१ ) कुर्यात् ।

[ततः अग्निसमीपमागत्यान्वाधानं कुर्यात् ॥ यथा-समिद्द्वयमादाय । क्रियमाणे नवचंडी ( शतचंडी ) जपांगहोमे देवतापरिग्रहार्थमन्वाधानं करिष्ये ॥ अस्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी आज्येनेत्यंतमुक्त्वा । आदित्यादिनवग्रहान् प्रतिद्रव्यमष्टाविंशतिभिरष्टाभिर्वा संख्याकाभिः समिच्चरुतिलाज्याहुतिभिः अधिदेवताः प्रत्यधिदेवताश्च तैरेव द्रव्यैः चतुःसंख्याकाभिराहुतिभिः विनायकाद्याः सप्तदेवता इंद्रादिदश लोकपालांश्च तैरेव द्रव्यैः द्वाभ्यां द्वाभ्यामाहुतिभ्यां यक्ष्ये ॥ श्रीमहाकालीमहालक्ष्मीमहासरस्वतीः मूलमंत्रेण शतवारं सप्तशतीमंत्रैः जपदशांशसंख्यया पायसतिलाज्यपलाशपुष्पसर्षपपूगीफललाजादूर्वांकुरयवबिल्वफलरक्तचंदनगुग्गुलद्रव्यैर्यथालाभद्रव्यैर्वा तिलमिश्रपायसेन वा पुनर्मूलमंत्रेण शतवारं च तैरेव द्रव्यैः आधारशक्त्यादिपीठदेवताः महाकाल्याद्यावरणदेवताश्च एकैकयाऽऽहुत्या पायसाज्येन ब्रह्मादि-वास्तु योगिनीभैरवक्षेत्रपाल-देवताश्चाज्येनैकैकयाऽऽहुत्या यक्ष्ये ॥ शेषेण स्विष्टकृतमिति ॥]

ततः आज्यभागांतं (१६१) कृत्वा शतमंगलनामानमग्निं संपूज्य । द्रव्यत्यागसंकल्पं कुर्यात् ॥ यथा-इदं हवनीयद्रव्यं या या यक्ष्यमाणदेवतास्ताभ्यस्ताभ्यो मया परित्यक्तं नमम । यथादैवतमस्तु ॥

ततः "[1]ह्रीं गणपतये नमः स्वाहा इदं गणपतये नमम ( त्यागः )"

---

१ प्रणवविचार —तारो द्विजानां (ॐ) वसुधा ( लं ) च राज्ञां तथा विशां ( श्री ) खलु बीजमेवम् ॥ शूद्रस्य माया ( ह्रीं ) युवतेरनङ्गः ( क्लीं ) पंचप्रकाराः प्रणवा भवन्ति ॥

